ॐ

श्रीकृष्णपरमात्मने नमः

# जात्युपाधिविवेकः

( वैदिकवर्णाश्रमस्वरूपप्रकाशनपरः )

श्रीमत्परमहंसपरिव्राजकाचार्यवर्य-श्रोत्रियब्रह्मनिष्ठ-सर्वतन्त्रस्वतन्त्र-
विरक्तशिरोमणि-श्रीमच्छङ्करचैतन्यभारतीस्वामिशिष्य-
श्रीमन्माधवचैतन्यभारतीस्वामिविरचितः

ऋषीकेशनिवासिश्रीस्वामिनारायणानन्दस्वरस्वती-
श्रीकृष्णचैतन्य-ब्रह्मचारि-संशोधितमुद्रणदोषः

वैदिकवर्णाश्रमस्वरूपप्रबोधकसङ्घद्वारा प्रकाशितश्च



इदानीमस्य मूल्यं द्वादशरूप्यकाणि

श्रीसंवत् २०३४ ( सन् १९७७ ) ( रु० १२.०० )

आन्ध्रप्रदेशीयविशाखपट्टणमण्डलान्तर्गत-नरसीपट्टणसमीपवर्ति-रोलुगुण्ट
ग्राम-निवासि-स्वर्गीयश्रीदक्षिणामूर्तितद्धर्मपत्न्यच्चमाम्बयोर्धनेनेदं मुद्रापितम् ।

ॐ

श्रीकृष्णपरमात्मने नमः

# जात्युपाधिविवेकः

( वैदिकवर्णाश्रमस्वरूपप्रकाशनपरः )

श्रीमत्परमहंसपरिव्राजकाचार्यवर्य-श्रोत्रियब्रह्मनिष्ठ-सर्वतन्त्रस्वतन्त्र-
विरक्तशिरोमणि-श्रीमच्छङ्करचैतन्यभारतीस्वामिशिष्य-
श्रीमन्माधवचैतन्यभारतीस्वामिनिर्मितः

ऋषीकेशनिवासिश्रीस्वामिनारायणानन्दस्वरस्वती-
श्रीकृष्णचैतन्य-ब्रह्मचारि-संशोधितमुद्रणदोषः

वैदिकवर्णाश्रमस्वरूपप्रबोधकसङ्घद्वारा प्रकाशितश्च



इदानीमस्य मूल्यं द्वादशरूप्यकाणि

श्रीसंवत् २०३४ ( सन् १९७७ )

( रु० १२.०० )

न्धप्रदेशीयविशाखपट्टणमण्डलान्तर्गत-नरसीपट्टणसमीपवर्ति-रोलुगुण्ट
म-निवासि-स्वर्गीयश्रीदक्षिणामूर्तितद्धर्मपत्न्यच्चमाम्बयोर्धनेनेदं
ापितम् ।

## प्राक्कथनम्

ग्रन्थेऽस्मिन् जात्युपाध्योः स्वरूपमीषद्दर्शयित्वाऽऽश्रामवद्वर्णा अप्युपाधयो न तु जातय इति, तेषां वैदिकपदार्थत्वेन वैदिकार्थवादैर्यववराहाधिकरणन्यायेन तत्स्वरूपं तेषां स्थितिश्च ज्ञातव्येति, वैदिकेष्वेव कर्मसु ऋत्विगादिवत्तेषामुपयोग इति चोक्तम्। यद्यपीयं वर्ण जाति प्रथा, शास्त्रदृष्ट्याऽतितुच्छा सर्वप्रमाणविरुद्धा च तथाप्युच्चनीच-कार्येषु निर्विवाद जन प्रवृत्तिसिद्धये बहुकालपर्यन्तं जातित्वेनाङ्गीकृता, तद्विश्वासजनक-भ्रामकगाथाभिर्जनहृदये दृढीकृता देहात्मभ्रम वद रपसायितुमतिदुष्करा सती, प्रपूर्वतन-महाविशारदैर्बहुदूषिताऽपि मदर्थमप्यवशिष्टाऽत्रापि च बहुसमाहिताऽपि समाधातुमव-शिष्यते, यावदत्र लिखितं तदप्यार्थिकदौर्बल्येन कृत्स्नशो न मुद्रापितं किन्तु सङ्ग्रहेणैव। वर्तमानमन्वादिस्मृति समालोचनात्मकेऽस्मिन् ग्रन्थे मुद्रापिताः ( २८०० ) श्लोकाः तद पेक्षयाऽत्रधिक संख्याकाः अत्र च वर्णानां गोत्वादिवदाकृतिव्यङ्ग्यत्वाभावेन भ्रातृत्वादि-वज्जन्मसिद्धित्वाभावेन च सज्जनत्वादिवत्स्वाभाविकैःशास्त्र निर्दिष्टगुणैर्व्यवहार-विषयत्वमुक्त्वा, वर्णप्रयुक्तवैदिककर्मप्रसङ्गे तत्कर्तृगृहस्थेष्वेव स्थिति स्तत्रापि पुरुषेष्वेव न तु स्त्रीष्विति (१५५ पृ.) सप्रमाणं सोदाहरणं च प्रतिपादितम्। यदा च सज्जनत्वादिवद्वर्णानां गुणप्रयुक्तत्वं तदा तद्वदेवैतेषामपि स्वगोचरप्रश्न-प्रतिवचने न स्याता मिति चोक्तम्। नहि त्वं सज्जनो दुर्जनो वेति केनापि पृच्छ्यते, नाप्यहं सज्जनो दुर्जन इतिवा प्रत्युच्यते, एवं किंवर्णस्त्वमिति प्रश्नः अहं ब्राह्मणादिक इति प्रतिवचनं वा न युक्तमित्यभिप्रायो दर्शितः। यथा शाकुन्तलादिनाटक-पात्राणां तन्नाटकप्रदर्शनसमये शकुन्तलादिनामभि र्व्यवहारो यथा वा पत्रालयाद्यध्यक्षा-दि (पोष्टमास्टर) राजकीयाधिकाराणां तत्तत्कार्यालयसमय एव व्यवहारस्तथा वर्णा-नामपि वैदिककर्मानुष्ठान समयमात्रे व्यवहार इत्यप्युक्तम्। भाषान्तरानुवादानुकूल-विषय सारल्यसंभवाभिप्रायेण प्रायः श्लोकरूपेण लिखितोऽपि ग्रन्थगौरवनिवारणार्थं न सर्वत्रनुवादः कृतः। विषय सूच्यप्यति संक्षिप्ता च प्रायः श्लोकानुसारिणी वर्तते तत्प्रमाणवाक्यानि चाग्रे प्रदर्शितानि। बहुधा संशोधि तोऽपि मुद्रणाशुद्धिबहुल एव ग्रन्थो दृष्यते शुद्धाशुद्धपत्रेपि येषां शुद्धस्वरूपं पठनमात्रेण न स्मर्यते तेषामेवोल्लेखोऽत्र कृत इत्यलम्।

चैत्रकृष्णैएकादशी, दिनाङ्कः १४–४–७७ इत्थम्

पुस्तक प्राप्तिस्थानम् माधवचैतन्य भारतीस्वामी

श्रीमुक्तेश्वरमन्दिरम्, बी. १७/९९ बी.

तिलभाण्डेश्वरवीथौ, वाराणसी पुर्याम् उत्तर प्रदेशे

## जात्युपाधिविवेके विषय-सूची


जातिभेदभ्रमाद्भेदभावाः २
ततोऽनर्थप्राप्तिः ३
जातिभेदविरोधार्थं मतभेदाः प्रवृद्धाः ४
जातिभेदकलहैर्विदेशीयागमनम् ५
शास्त्रसिद्धान्तह्रासः ६
भारतीयानामन्यमतप्रवेशः ७
वर्णजातिभ्रमादनेकजातिभेदभ्रमाः ८
प्रमाणषट्कम् ९
धर्मबोधकप्रमाणानि १०
श्रुतिमूला लोभाद्यमूला च स्मृतिर्मानम् ११
लोभादिमूलकस्मृतिर प्रमाणम् ,,
अर्धजरतीन्यायः प्रमाणेष्विष्यते १२
शरीरादिप्रमेये तन्नेष्यते १३
न सर्वज्ञमुनिकृतत्वेन स्मृतिप्रामाण्यम् १४
न वा स्मृतेःसर्वज्ञकृतत्वे मानम् १५
असङ्गतस्मृतेर्लोभादि मूलकत्वम् ,,
मतभेदेन जातिलक्षणानि १६
वर्णा जातिलक्षणप्रमाणयोरविषयाः १८
वर्णा न प्रत्यक्षजातयः २०
वर्णजातित्वे व्यंजकाभावो बाधकः
वर्णा नानुमानिकजातयः २१
नापि ते शाब्दिकजातयः २२
पतञ्जलिवर्णलक्षणे दोषद्वयम् २४
मनुष्यत्वादयो जातयः २५
बोद्धत्वादिकं न जातिः २६
ब्राह्मणत्वादिकमपि न जातिः
वर्णाश्रमा वैदिकपदार्थाः २८
वैदिकार्थवादैस्तत्स्वरूपं ज्ञेयम्
यववराहाधिकरणन्यायः २९
ब्रह्मणैव क्षत्रं संश्यती त्यदिना
'जातिनिरासः ३०
ब्राह्मणादिशब्दानां शक्तिविचरः ३३
पूर्वजन्मनि ऋणदातेह पुत्रदि भवेत् ३१

विशेषणत्वेन जातौ शक्ति र्नतु जातित्वेन
विध्युद्देश्यतावच्छेदकवर्णस्य विवक्षित-
त्वेऽविवक्षितत्वे वा न जातिवादः ३४
ऐतरेयवाक्येन जातिवादनिरासः ३५
यज्ञदीक्षायां सर्वेषां ब्राह्मणत्वम् ३६
दीक्षात्यागे पूर्ववर्णः ३७
ब्रह्म भूत्वेत्यस्य सादृश्यार्थदूषणम् ३८
ऐतरेयवाक्यान्तरेण जा० नि० ३९
अत्रापि सायणार्थदूषणम् ४१
अगृहस्थाश्रमिणां श्राद्धादिभोक्तुत्वम् २४
शतपथद्वयवाक्येन जा. नि. ४४
ब्रह्मवर्चसेच्छा ब्राह्मणत्वेच्छैव ४५
आब्रह्मन् ब्राह्मणो इत्यनेन
जातिशङ्का तन्निरासश्च ४५
ब्राह्मणत्वपूर्तिर्द्वाभ्याम् ,,
ब्रह्मवर्नि त्वेत्यादिना ब्राह्मण्यप्रार्थना ४६
पयोव्रतं ब्राह्मणस्येत्यत्राथोक्त्याजा०नि०
श्रुत्यनुसारेण जनको न क्षत्रियः ४९
श्रीयशःकामना क्षत्रियत्वेच्छैव ५०
पश्वादीच्छा वैश्यत्वेच्छैवा ,,
क्षत्रियत्वादिकामस्य ग्रीष्मादावाधानम् ,,
पार्थुरश्मादिसामद्वारेन्द्रेण क्षत्रियत्वादि
प्रदानम् ५१
तदनुसारेण सामविधानम् ५२
अत्र सायणार्थःसमीचीनः ,,
अश्वप्रतिग्रेहष्टिन्यायः ५३
क्षत्रिय शब्दः क्षत्रियत्वार्थि बोधकः ५४
ब्राह्मणत्वकामस्य वसन्ताधानम् ५५
दिवो दासां ब्राह्मन्यं क्षत्रियत्वं
चाप्तवान् ५६
यदा श्रद्धा तदैवाधानम् ५७
अकामस्याधानोक्तिदूषणम् ,,

यावदनाहिताग्निस्तावन्मर्त्यः ५८
कामनैव काम्ये प्रवर्तिका ,,
आधानं न नित्यं ततः प्रागण्डावस्था ५९
वर्णाप्रत्यक्षत्वेऽपि तद्विशिष्टःप्रत्यक्षः ६०
आधानानन्तरं वर्णसिद्धिः ,,
उपनयनकालविधिर्न श्रौतः ,,
क्षत्रिये न: ब्रह्मवर्चसं
ब्राह्मणे न राष्ट्र च रमते ६२
अश्वतरीरथ: क्षत्रियस्य
पशुधान्यादिकं वैश्यस्य च चिन्हम् ६३
ब्रह्म वै ब्राह्मणस्य स्वमित्यनेन जा०नि० ६४
अध्ययनशक्तिहीनस्य न ब्राह्मण्यम्,,(२३८)
ब्राह्मणो हितोपदेष्टाऽतो न जेतव्यः ६५
सङ्गच्छध्वमित्यादिना जा०नि० ६७
जातिवादे न जनैकमत्यम् ६९
सङ्घशैथिल्यमपि ,,
ऋत्विजामेवात्रैकमत्यविधिर्न ६९
जन्मश्रेष्ठत्वं गर्वहेतुः ७१
"नैतदब्राह्मणइत्यादिना जा०नि० ७२
अब्राह्मणत्रयस्यानृतोक्तिःसहजा ७३
विदुरादयो श्रुत्यनुसारेण ब्राह्मणाः
एवंरावणादयोऽब्राह्मणाः ७४
विद्वांसोऽपि रागद्वेषपूर्णाः ,,
सत्योक्त्या जाबालिर्ब्राह्मणत्वेन ज्ञातः ,,
इदानीमपि तथैव ज्ञातव्यम् ,,
एतदर्थं श्रौतगाथा प्रदर्शनम् ७६
पूर्वतनशिष्टसङ्गतिज्ञानार्थं गोत्रप्रश्नः ७७
उपनयनार्थं वर्णःप्रष्टव्यो न गोत्रम् ,,
जबालाया व्यभिचारिणीत्वं सूच्यते ,,
सहज शोकः शूद्रशब्द प्रवृत्ति निमित्तम् ,,
अध्ययनसामर्थ्यं न लौकिकम् ७८
अश्वतरीरथेन क्षत्रियत्वं ज्ञातम् ,,
जातिवादे शूद्रोऽपि दानकर्ताजिज्ञासुश्च ७९
शूद्रशब्दो न निन्दार्थकःस्यात्
गुणपक्षेऽपशूद्राधिकरणं सङ्गतम् ,, (२५०)
अभिप्रतारी क्षत्रियः कथम् ? ८०
यादृशस्येह रेत इत्यनेन जा०नि० ८२
"यावन्न यजते तावदजातः ,,
चतुर्णां श्मशानगर्तभेदेन जा०नि ८३
ब्राह्मणो मुखेन वीर्यं करोत्यादिना जा०नि,,
जातिवादे मुखवीर्यत्वमब्राह्मणेऽपि ,,
शस्त्रधारणे विप्रस्यापि क्षत्रियत्वम् ८४
शूद्रो राज्यं प्राप्तश्चेत् क्षत्रियःस्यात् ,,
मुखवीर्यत्वादिकं न कृतिसाध्यम् ,,
मुखादिजन्मतोमुखादिवीर्यत्वोऽजाव्यादावपि
तत्स्यात् ८५
तच्छब्दस्यात्रपूर्वपरामर्शकत्वं न ८६
तन्मध्यपठितमन्त्रवद्वर्णोत्पत्तिः स्यात् ८७
न हिशब्दान्मुखादिजन्यत्वम्
विरुद्धवेदोत्पत्तिवद्वर्णोत्पत्तिरपि न ८८
असत्यसृष्टि प्रदर्शने प्रयोजनम् ९०
शूद्रस्यानुष्टुप्छन्दसा संवापः ९५
वर्णानां जन्म कुत्रापि न विवक्षितम्
ऋत्विग्जन्मवद्वर्णजन्माप्यर्थवादः ९७
वैराग्योत्पादकत्वेन वेदान्तोक्त-
सृष्टिप्रलयौ विवक्षितौ ९८
सामान्यतो मनुष्यसृष्टिः ९९
अनुमेयाऽपीयमेव १००
आदौवर्णविभागो न ,,
कर्मार्थं तदनन्तरं वर्णविभागः १००
तदर्थमग्निरुत्पादिताऽरणिद्वयेन १०१
अत्रस्थवर्णसृष्टिरपि विभागपरा १०३
संवत्सरमासादिसृष्टिरपि विभगापरैव १०४
गुणकर्मनिबन्धनो वर्णविभागः १०५
वर्णा जातित्वेन ऋत्विक्सम्मताः १०५
ईश्वरसम्मतत्वे परिवर्तनं न स्यात् ,,
मया सृष्टमित्यत्र तृतीया हेतुकर्तरि १०६
सृष्टमित्यस्य च विभक्त त्वमर्थः
अस्मन्मते पदद्वयं मुख्यार्थकम् ,,
पूर्वकाण्डे सृष्टिरन्योन्यविरुद्धा १०७
ऋगादिवेदतो वैश्याद्युत्पत्तिः ११०
युक्ता सृष्टिरेकैव वेष्यते ११३
स्पष्टशब्दोक्ता सृष्टि रविवक्षि-
ता चेत्सुतरामस्पष्टशब्दोक्ता सा ११६
पुरुषसूक्तेऽपि सृष्टिर्नविवक्षिता ११७
तत्र सूर्याद्युत्पत्तिरपि न ११८
निश्छिद्रेन्द्रियेभ्यः सृष्टिर्न १२०
सूर्यादीनां चक्षुरादिस्वरूपत्वम् ,,
प्रतीतार्थग्रहणे तात्पर्यार्थो न स्यात् १२२
सूर्यादिसृष्टिमतेऽपि वर्णोत्पत्तिर्न १२३
पुसूक्तसंक्षेपार्थकथमनम् ,,
पद्भ्यां शूद्र इत्यत्र चतुर्थी १२७
प्रथमार्थे पञ्चमी वा ,,
तत्सूक्तं पुरुषमेधं स्तौति १२९
अयोनिजसृष्टिस्तत्रास्वरसश्च १३२
रमणीपादिचरणेन ब्राह्मणादिषू- १३३
त्पन्नस्यापि ब्राह्मण्यं न जन्मतः ,, (२४४)
गोत्राण्यादौ न जन्मतः १३४
क्षत्रियादयोऽपि गोत्रकाराः १३६ (१६८)
सर्वेषां ब्राह्मण्यं तपस्साधितम् ,,
मेधातिथिभाष्ये मुखोत्पत्तिःखण्डिता १३७
भागवतसुबोधिनी टीकायामपि ,,
संन्यासविधौ ब्राह्मणशब्दो
मनुष्यमात्रपरः १३८
ब्राह्मणमात्रसंन्यासो गुणवादे एव ,,
मुखोत्पत्तिदुराग्रहोऽन्यार्थः १४१
सोऽर्थो मुखजातस्यैव न तु योनिजस्य १४२
दाशरथिरामस्यैव पूजा न तन्नाम्नः ,,
स्वोत्पादकधीशून्यस्य मुखोत्पत्तिधीः कुतः,,
जयचन्द्रेण सपादलक्षविप्राः कृताः ,,
शालिवाहनेनापि बहवस्ते कृताः
जन्मचतुर्वेदा न शास्त्रसिद्धः १४३
शास्त्रसिद्धश्च स न जन्मसिद्धः ,,
एवं जन्मब्राह्मणोऽपि न शास्त्रसिद्धः ,,
शास्त्रसिद्धश्च स न जन्मसिद्धः ,,
एवमेवाचार्य शास्त्र्युपाधयोऽपि ,,
दशविधब्राह्मणोत्पत्तिर्न १४४
श्रुत्युक्तवर्णसन्देह उभयमतेऽपि १४७
जन्मपक्षे न तत्सन्देहनिवृत्तिः १४८
सत्याषाढोक्तस्त्रीरक्षणोपायैर्न तद्रक्षा १४७
स्त्र्यपराधादिसूत्रार्थः १५० (१९४)
श्राद्धे मन्त्रपाठान्न जन्मवर्णसिद्धिः ,,
वर्णा गृहस्थपुरुषेष्वेव १५५
तत्र जैमिनीय सम्मतिः १५७
स्मृत्यनवकाशप्रसङ्गाज्जन्मवर्ण- १५८
श्चेदन्यस्मृत्यनवकाशाद्गौणवर्णः
गुणतो वर्णे प्रमाणम् १६० (७ परि)
अध्यापनविधिभिः जन्मवर्णत्वाभावः १६१
लाक्षणिकजातिशब्दप्रयोगे निमित्तम् १६३
शक्तोपाधिपदत्यागे कारणम् १६४
क्षत्रियादयोऽपि ब्राह्मणा जाताः १६६
*मतङ्गस्य ब्राह्मण्यं क्वचिदिष्टं क्वचिन्न ,,
देहस्य ब्राह्मण्यं भविष्ये दूषितम् १६९
शूद्रस्यमन्त्रोपदेशगुरोर्नरकाप्तिर्बाधिता १७१
द्वैताद्वैतनिन्दा मध्वाचार्यचरित्रं च १७२
वर्णजातित्वे चार्याणांभ्रमःआहार्य-
निश्चयो वा. ,,
जाति प्रथाऽभावेऽपि कर्माणि चलिष्यन्ति १७३
काम्यंकर्म नानिवार्यम् १७४
भाट्टवर्ण प्रत्यक्षप्रक्रिया दूषणम् १७६
द्रुतघृतादिधीरिव न वर्णधीः १७८
अपरा दृष्टविरोध इति भाष्य-
समर्थने भट्टवैदुष्यकलङ्कः १८२
सर्वस्त्रीव्यभिचाराभावे ब्राह्मणैस्सह
व्यभिचारे वा न वर्णजातिः ,,
तस्य शास्त्रदृष्टविरोधित्वं युक्तम् १८७
प्राभाकर सन्ततिविशेषप्रभवत्वनिरासः ,,
वाचस्पत्युक्तयोनिव्यङ्ग्यत्वदूषणम् १८८
शब्दसाधुत्ववन्न वर्ण प्रत्यक्षत्वम् १९०
महापण्डितैरत्रायुक्तोक्तौ हेतुः ,,
नैषधोक्तवर्ण शुद्धि नं युक्ता ,,
अजागर्भतोऽजमर्त्यपिण्डोत्पत्तिः १९२


* ततोऽसौ विप्रतां यातो मतङ्गो लिङ्गदर्शनादि (८४ लिङ्गमा० अ. ५०) ति. १७९ द्र.

विश्वामित्रस्याब्राह्मणत्वोक्तिनिरासः १९३
ब्राह्मण्यहेतुमनुक्त्वा तत्प्रशंसन्ति केचित्,,
अपशूद्राधिकरणार्थविचारे हेतुः १९८
यद्यपि नास्मन्मतशूद्रत्वदूषणम् २००
तथापि राजत्वस्य जातित्वमयुक्तम् २०२
राज्ञोऽपत्यं राजन्यः ब्रह्मणो वेदस्या- २०५
पत्यं ब्राह्मणः अपत्यत्वमत्राज्ञाकारित्वम्
वर्णानामृत्विग्वद् वरणाभावे हेतुः २०६
अब्राह्मणस्य ऋत्विक्त्वम् ,,
शमिता शूद्रोऽपि स्यात् स ऋत्विक् च २०९
द्विजगृहे शूद्रोऽपि पाचकः ,,
रथकाराधानविचारः ,,
राजभृत्यत्वं ब्राह्मण्यनाशकम् २१०
अधिकारानधिकारौ कर्मस्वेव २११
रागप्राप्तनिषिद्धानुष्ठाने एव दोषः ,,
शूद्रस्य यागानुष्ठानं न रागप्राप्तम् २१३
शूद्राधिकारसूत्रार्थवर्णनम् २१४
अत्र बादरिः शूद्रस्यधिकारमिच्छति २१५
शूद्रस्य कर्मस्वनुल्लेकेऽप्यधि-
कारोऽथर्वणवेदप्रामाण्यवत् ,,
यज्ञेऽनवक्लृप्तिरग्निष्टोममात्रे
मेधाविनो यज्ञियाः २२०
शूद्रोऽयज्ञिय इत्यनुदरा कन्येतिवत् ,,
शूद्रस्याप्युपनयनम् २२२
भगवद्भक्ताः शूद्रा न ,,
शूद्रसमापेऽध्ययननिषेधेऽपि सोऽध्येष्यते
श्रावयेच्चतुरो वर्णानित्यस्यार्थविचारः २३१
यज्ञेऽनवक्लृप्ति र्न तु पठने ,,
श्रौतयागनिषेधविषयःश्रौतशूद्र एव ,,
जातिशूद्रनिषेधश्चेद्धीशून्ये तत् सङ्कोचः ,,
जातिशूद्रो विद्वानपि स्यात् ,,
ब्रह्मसूत्रस्थवर्णस्वरूपविचारः २३३
शौद्रयलक्षणादर्शनेऽप्यथर्वणलक्षणदूह्यम् २४०
शोकमात्रं न शूद्रत्वनिमित्तम् २४२
संस्कारपरामर्शादिसूत्रार्थः ,,
वर्तमानभेदहेतुको व्यवहारो
नन्वाद्युपाधिपरम्पराज्ञानेन ,,

आधानमेव वर्णप्रयोजकम् २४९
ब्रह्मसूत्राणां वर्णस्वरूपपरत्वेऽ पूर्वार्थः २५०
अस्याधिकरणत्वमपि तदैव
शूद्रस्याधिकारवारणे चेदं व्यर्थम्
न चेदं भिन्नशास्त्रत्वद्योतनार्थम् २५२
अस्य ग्रन्थस्य प्रयोजनम् २५७
जन्मतो वर्णवादेऽप्रामाण्यत्रयम् २५८
गुणतो वर्णवादे तन्नास्ति
धीतारतम्येन श्रेष्ठत्वतारतम्यम् २६४
स्मृत्युक्त शूद्रनिन्दा ब्राह्मणब्रुव एव २६८
स्त्रीशूद्रै विस्णुसहस्रनामादि पठनीयम्
सम्पाद्यं त्यक्तव्येच स्तुतिनिन्दे युक्ते २६९
सर्वं स्वं विप्रस्येति स्मृतिर्बह्वनर्था २७२
गौणवर्णपक्षे तदपि युक्तमेव स्यात् २७३
हिरण्यगर्भाख्यदाने शूद्रो विप्रो भवेत् ,,
सर्वं स्वमित्यादेः टीकोक्तर्थनिरासः
अनृतभाषणे न विधिः २७८
सर्वे विधयः परिसंख्याबोधकाः २७९
क्रत्वङ्गहिंसाऽपि नरकहेतुः
देवताऽनुग्रहार्थं जन्तुबलिमूर्खतैव २८०
मनुष्यो न मांसाहारी दैवसृष्टौ
विप्रब्रुवस्तुतिः स्मृत्यन्तरविरुद्धा २८२
आपद्धर्मस्तात्कालिकः २८४
महर्षिसाजात्यारोपश्चेद्रावणादि-
साजात्यारोपः कथं न २८७
सूर्यगताविव वर्णजातित्वेऽपिभ्रम एव २८९
मुखादेर्योनित्वोत्पत्तिर्न वर्णजातित्व हेतुः २९०
अर्जुनवर्णसर्करभात्याऽपि न जातिः २९१
व्यासयादवकौरवादयः संकरा एव ,, (२७)
गौणवर्णसमर्थकनामोल्लेखः २९२
जातिप्रथाविरोधिबाहुल्येऽपि
तज्जीवनं न श्रौतत्वगमकम् २९३
अतश्चार्वाकादिमतं न श्रौतम् ,,
जन्मब्राम्हण्यदौर्लभ्यात्तन्नेष्टं चेत्
गौणब्राम्हण्यदौर्लभ्यात्तन्नेष्टंस्यात् ,,
राजप्रथानाशवदेतन्नाशोऽप्यावश्यकः २९५
तन्नाशवदेतन्नाशो न कस्यापि दुःखदः


## शुद्धाशुद्ध सूची

| पृष्ठ० | अशुद्धम् | शुद्धम् | पृ० सं० | अशुद्धम् | अशुद्धम् |
|---|---|---|---|---|---|
| ४ | आदौ जन्मना | आदौ स जन्मना | ४७ | अंशब्दमात्मक | अंशद्वयात्मक |
| ७ | अपश्ययन्तो | अपश्यन्तो | ४८ | सद्ध | सिद्ध |
| ८ | सुरगिरोः | सुरगिरो | ,, | वश्य | वैश्य |
| ९ | जिज्ञाषाया | जिज्ञासाया | ,, | तेजस्वित्यादि | तेजस्वित्वादि |
| १३ | यजमान प्रस्तरः | यजमानः प्रस्तरः | ४९ | वैश्वस्य | वैश्यस्य |
| ,, | परत्वमुक्तम् | परत्वमुक्तम् | ५० | पृष्टि | पुष्टि |
| १४ | तद्विरामिह | तद्गिरामिह | ,, | व्यप्ति | व्याप्ति |
| १५ | भवेदति | भवेदिति | ५१ | गाधा | गाथा |
| ,, | लोभिभः | लोभिभिः | ५२ | इन्दो | इन्द्रो |
| ,, | स्मृतवाक्यानाम् | स्मृतिवाक्यानाम् | २४ | क्षत्रित्यावार्थी | क्षत्रियत्वार्थी |
| १६ | जतिरिति | जातिरिति | ,, | युज्वते | युज्यते |
| ,, | कश्चद | कश्चिद् | ,, | बोद्धयं | बोद्धव्यम् |
| ,, | नैयायकाः | नैयायिकाः | ५४ | द्वार | द्वारा |
| ,, | वेदान्त देशकः | वेदान्तदेशिकः | ६१ | काण्ववात | काण्वशत |
| २१ | उक्वा | उक्त्वा | ६४ | स्वायतत्तो | स्वायत्ती |
| ,, | पितृदेवो भूः | पितृदेवो भव | ७४ | वयसस्मत् | वयमस्मत् |
| २२ | क्रियतो | क्रियते | ७७ | बह्वगं | बह्वहम् |
| ,, | जन्ने | जन्ने ऊ | ७९ | क्षत्रितजान्य | क्षत्रियजन्म |
| २३ | शास्त्राकारः | शास्त्रकारः | ८३ | क्षति | क्षतिः |
| ,, | भक्तीति | भवन्तीति | ८७ | वीर्यादरिति | वीर्यादिरिति |
| ,, | मन्तिकृष्ट | सन्निकृष्ट | ८९ | दर्शित | दर्शितः |
| ,, | अभावात | अभावतः | ,, | ष्ठाधाताः | ष्ठाधातोः |
| २९ | जातिरूपाधिः | जातिरुपाधिः | ९२ | एतादृशापकार्यप | एतादृशोप कार्योपके |
| ३४ | प्रकृति में | प्रकृत में | ९३ | तिष्टुभ | त्रिष्टुभ |
| ३५ | गाधा | गाथा | ९४ | वीर्यश्रययाहु | वीर्याश्रयबाहु |
| ४० | पौत्रा प्रपौत्र | पौत्राः प्रपौत्र | ,, | तत्ताद्वणो | तत्तद्वर्णो |
| ,, | आत्मावरूप | आत्मानुरूप | ९५ | वर्णामां | वर्णानां |
| ,, | श्रुतेर्वच | श्रुतेर्वचः | ,, | प्रजपते उत्तमाङ्ग | प्रजापतेरुत्तमाङ्ग |
| ४१ | उपादेयातेभ्यो | उपादेयास्तेभ्यो | ,, | द्रावणं | द्रविणम् |
| ४२ | आदिक्षब्दानां | आदिशब्दनां | १०१ | श्रुदर्शिता | श्रुतिदर्शिता |
| ४४ | राजधीनत्व | राजाधीनत्व | १०६ | न त्वाश्वरेण | न त्वीश्वरेण |
| ४५ | ब्रह्मणेंन | ब्राह्मणेन | १११ | तत्पौत्रैयु | तत्पौत्रेषु |
| ,, | कहॉ | कहा | ,, | दंश रात्र | दशरात्रादि |
| ,, | श्रयते | श्रूयते | ११३ | व्यायहारिकी | व्यावहारिकी |

| | | | | |
|---|---|---|---|---|
| ११५ | वागान्द्रियाणां | वागादीन्द्रियाणां | ,, जन्यजाति | जन्मजाति |
| ११८ | ब्रह्मणादिक | ब्राह्मणादिक: | ,, मप्यश्रित | मप्याश्रित |
| | षोडषर्चेन | षोडशर्चेन | १६९ कुत्रिम: | कृत्रिम: |
| ,, | असज्ञप्ता: | असंज्ञप्ता: | १७० दुर्जेयत्वं | दुर्ज्ञेयत्वम् |
| १२२ | पुरुषा: | पुरुष: | ,, वर्णाप्सा | वर्णेप्सा |
| ,; | गृह्यतो | गृह्यते | ,, शम्भूक: | शम्बूक: |
| २२५ | मुख्यात्वात् | मुख्यत्वात् | ,, अततुस्तच्छोक | अतस्तच्छोक: |
| १३० | प्रप्स्यन्ते | प्राप्स्यन्ते | १९० समर्थिसश्च | समर्थितश्च |
| १३३ | जातयां | जातायां | १९१ जत्म | जन्म |
| १३४ | तङ्गण | तद्गुण | २०९ किञ्चिद्धायते | किञ्चिद्धीयते |
| | वण | वर्ण | ,, पञ्चस्य | प्रपञ्चस्य |
| १३५ | गौत्र | गोत्र | २१७ यद्यछच्ति | यद्यच्छ्रुति |
| १३६ | गौत्रकारा | गोत्रकारा | २१९ विध | विधि: |
| १३७ | विशेश | विशेष | २२२ सूत्राण्येमे | सूत्राण्येव |
| ,, | कमण्डुलु | कमण्डलु | २२३ केन्नान्यार्थः | चेन्नान्यार्थः |
| १३८ | लौकैषण | लोकैषणा | २२४ आलभेत्यादि | आलभेतेत्यादि |
| १४० | स्नातक: | स्नातक: | २२८ तूणीम् | तूष्णीम् |
| १४५ | ब्राह्मणं | क्षत्रियम् | ,, भिन्नदेशाय | भिन्नदेशीय |
| १४७ | शेमलिफकं | शेफमलिकम् | ,, संस्कृतं | संस्कृतिम् |
| १४८ | सशय | संशय: | ,, याग्यता | योग्यता |
| ,, | संशत: | संशय: | २३४ व्ययवस्था | व्यवस्था |
| १५० | संस्पश | संस्पर्श | ,, स्वरतो | स्वरसतो |
| ,, | लेप | लेप: | २३६ ब्राह्मयं | ब्राह्मण्यम् |
| ,, | यन्माय | यन्मयि | २३८ उत्तमध्य | उत्तममध्यम |
| १५२ | स्कलन | स्खलनम् | २४३ धृवम् | ध्रुवम् |
| १५८ | यजमानस्येत | यजमानस्येति | २४४ सत्वाद्विगुण | सत्वादिगुण |
| ,, | स्मर्मते | स्मृतेर्मते | ,, तस्यार्थ | तस्यार्थो |
| ,, | अदर्शत् | अदर्शनात् | ,, सृष्टिमन्त्र | सृष्टिमात्र |
| १५९ | पुराणांच | पुराणानांच | २४५ ब्राह्मणादिकं | ब्राह्मणत्वादिकम् |
| १६० | अग्रिम | अन्तिम | २४६ परन्नप | परंतप |
| १६१ | वश्य | वैश्य | २४७ दृस्यन्ते | दृश्यन्ते |
| ,, | ताञ्छिदयात् | ताञ्छिष्यात् | २७१ इत्यपक्रम्य | इत्युपक्रम्य |
| १६२ | जाविका | जीविका | ,, समागने | समागमे |
| १६४ | परित्योगा | परित्यागे | २९१ चेन्नव | चेन्नैव |
| ,, | प्रतक्ष्य | प्रतीक्ष्य | ६ वर्णवब्रदह्म | वर्णव द्ब्रह्म |
| १६६ | तपाव्रतः | तपोव्रतैः | ७ सत्याहादिकं | सत्यादिकम् |

श्री परमात्मने नम ः

# जात्युपाधिविवेक:

## उपोद्घात प्रकरणं नाम प्रथमोऽध्याय:

परां शक्ति महादेवीं जगज्जन्मादिकारिण: । नत्वा चैव गुरून् कुर्मो जात्युपाधिविवेचनाम् ॥१॥

महा शक्तिस्वरूपिणी भगवती को जगत्कारण ब्रह्मविष्णुमहेश्वरों को और गुरुजनों को नमस्कार करके हम "जात्युपाधिविवेक" नामक ग्रन्थ लिख रहे हैं।

जातिभेदभ्रमेणाद्य विवदन्तेऽविवेकिन: । वयं हिन्दूजना जात्या मुसलमानाश्च क्रैस्तवा: ॥२॥
इमे शिक्खास्तथा जैना बौद्धाश्चार्यसमाजिन: । द्विजातयो वयं सर्वे शूद्राश्चान्ये विलक्षणा: ॥३॥
तत्रापि च वयं जात्या विप्रक्षत्रादिसंज्ञका: । तैलिङ्गादिप्रभेदेन द्राविडा: पंचजातित: ॥४॥

आज कल के अज्ञानी लोग भ्रान्ति से अपने को हिन्दू जातीय मुसलमान जातीय और क्रैस्तव जातीय समझ कर आपस में जातिनिमित्तक विवाद करते रहते हैं। हिन्दूशब्द यद्यपि संस्कृत शब्द नहीं और निन्द्य भी है, तो भी आज कल लोक में प्रचलित होने का कारण यहाँ उसका अनुवाद मात्र किया गया है। जाति के ये शिक्ख, ये जैन, ये बौद्ध और ये आर्य समाजी हैं और हम द्विजाति हैं और ये शूद्रजाति के हैं। उस में भी हम जाति के विप्र हैं और क्षत्रियादि हैं। उस में भी हम जन्म से पंच द्राविड़ और पंच गौड हैं और उस में भी हम तैलिङ्गादिब्राह्मण और कान्यकुब्जादि ब्राह्मण हैं। ऐसा विवाद करते हैं।

वेदेश्वरविचारादिशून्याश्च कुक्षिहेतवे । [1]म्लेच्छ-भाषां समाश्रित्य नयन्तो भृत्यजीवनम् ॥५॥
शौचाचारविहीनाश्च तुच्छस्वार्थपरा ह्यपि । स्वात्मानं ब्रुवते विप्रं जन्मजात्यभिमानत: ॥६॥

---

१. म्लेच्छ अव्यक्ते शब्दे "इति पाणिनीयधातुपाठात् संस्कृतेतरभाषा: सर्वा अपि म्लेच्छभाषा-शब्देनात्र गृह्यन्ते। "योऽनधीत्य द्विजो वेदमन्यत्र कुरुते श्रमम्। स जीवन्नेव शूद्रत्वमाशु गच्छति सान्वय:" ( मनुस्मृ० ) इति प्रमाणेन अनधीतवेदस्य ब्राह्मणत्वं नास्त्येवेति ज्ञायते, तथाऽप्यद्यतनो जनो ब्राह्मणवंशपरम्परोद्भवत्वमात्मनो मत्वाऽप्रामाणिकमेव ब्राह्मणत्वं ब्रूतेऽहं ब्राह्मण इति।

शास्त्रों का अध्यापन ईश्वरचिन्तन और आचारविचारादि को छोड कर केवल पेट पालने के लिये सामयिक भाषाओं को पढ़कर जीवन बिताने वाले भी अपने को ब्राह्मण बताते हैं। ऐसा बताने में भी जन्मजाति भ्रम ही कारण है।

**भगवद्भक्ति-वैराग्य-तितीक्षोपरतोनपि । निम्नजाति-भ्रमेणाज्ञा नोपसर्पन्ति वन्दितुम् ॥७॥**
**[1]पूज्यपूजा-परित्यागादपूज्यानां च पूजनात् । देशेऽतिवृष्ट्यनावृष्टिविप्लवाः संभवन्त्यपि ॥८॥**

भगवद्भक्ति और वैराग्यादिसुगुणों से विराजमान महापुरुषों को भी वे जाति भेद भ्रमवाले प्रणाम न ही करते हैं। जहाँ पूजनीय व्यक्ति की पूजा नही की जाती और अपूजनीय की पूजा होती है, वहाँ अतिवृष्टि और अनावृष्टि इत्यादि होते रहते हैं।

**यदा यस्याधिकारः स्याद्राष्ट्रकार्यालयादिषु । स्वीयजात्यभिमानेन पक्षपातं करोति सः ॥ ९ ॥**
**केन्द्रप्रान्तगतेषूच्चस्थानेष्वनधिकारिणः । नियुङ्क्ते च स्वकानेव तत्तत्कार्यापटूनपि ॥१०॥**
**विद्यासंस्थासु देशेऽस्मिन्न[2]ग्रजातिदुराग्रहात् ।शास्त्राध्यापनकार्यादावसमर्थान्नियोजयेत्॥११॥**

उच्चस्थान मिल जाने पर ये जातिभ्रम वाले, अपने जातिवालों को ही तत्तत्स्थानों के लिये अयोग्य होने पर भी पक्ष पात से नियुक्त कर देते हैं और विद्यास्थानों में भी अध्यापनादिकार्यों के लिए अकुशल व्यक्तियों को अग्रजाति भ्रम से नियुक्त कर देते हैं।

**आपामरान्मनीष्यन्तं प्रायो भारतवासिनः। जातिभ्रमवशादत्र किं किं दौष्ट्यं न कुर्वते ॥१२॥**

---

१. पूज्येति "प्रतिबध्नाति हि श्रेयः पूज्यपूजाव्यतिक्रमात्" रघुवंशे १म, सर्गे "अपूज्य-पूजने चैव पूज्यानामप्यपूजने । नरः पतनमाप्नोति महद्वै नात्र संशयः" इति कूर्म-पुराणे ( अं० १५-२६ ) चोक्तम् । एतादृशैः प्रमाणैरिदमेव ज्ञायते यत् हितकामिभिः पूज्यानां पूजाऽवश्यं कार्येति । गुणाः पूजास्थानमित्यभियुक्तोक्त्या च सुगुणातिरिक्तं पूजाकारणं नास्त्येवेत्यपि ज्ञायते ।

२. एतद्देशप्रसूतस्य सकाशादग्रजन्मनः । स्वं स्वं चरित्रं शिक्षेरन् पृथिव्यां सर्व-मानवाः" इति मनुस्मृति ( अं० २।२० ) वाक्ये एतद्देशशब्देन कुरुक्षेत्रमत्स्यपांचाल-शूरसेनकाः सूच्यन्ते । तदतिरिक्तदेशजन्मभिरग्रजात्यभिमानिभिरपि वाक्यमिदमप्रमाणं मन्यते । अस्य प्रामाणिकत्वपक्षे त्वयमर्थो वक्तव्यः । अत्रैतद्देशपदमुपलक्षणं सर्वदेशानाम् । अग्र-जन्मनः = अग्रे पूर्वं कालतो जन्म यस्य तस्याग्रजन्मनः सकाशादल्पवयस्काः सर्वे स्वं स्वं चरित्रं शिक्षेरन्निति । यतो हि तुल्यविद्यानां पुरुषाणां मध्ये कालतो ज्येष्ठात् तदवरैः किञ्चिदधिकं शिक्षणीयं वर्तते ।



**एवं कृत्स्नस्य राष्ट्रस्य स्वमतस्यापि मानवाः। जातिभेदपिशाचेन ग्रस्ता द्रोहं प्रकुर्वते ॥१३॥**
**अन्धविश्वासबीजोत्थजातिभ्रमनिमित्ततः । अनादितोऽद्यपर्यन्तं नानामतसमुद्भवः ॥ १४ ॥**

पण्डित से लेकर पामर तक प्रायः सभी भारतीय इस जातिभ्रम के कारण क्या-क्या दुष्टता नहीं करते ? इस प्रकार जाति भेद भ्रम रूप महा-पिशाच से ग्रस्त होकर भारत के सभी नर-नारियाँ अपने राष्ट्र और मत का भी महान् द्रोह करते रहते हैं। अन्धविश्वास से उत्पन्न इस जाति भ्रम के फलरूप में अनादि-काल से आजतक बहुत से मत पैदा हो गये हैं।

**बौद्धार्हताद्यशास्त्रीयसिद्धान्तानां समुद्भवे । भारते जातिपाखण्ड-प्रथैव मूलकारणम् ॥१५॥**
**महात्मा गौतमो बुद्धस्तुच्छस्वार्थपरायणैः। कल्पितां[1] ब्राह्मणत्वादिजातिभेदपरम्पराम् ॥१६॥**
**दृष्ट्वोद्विग्नमना यस्यां जन्मजातिभ्रमादिह । उत्तमाधममर्त्येषु गुणदोषौ न लक्षितौ ॥१७॥**
**दुर्गुणो दुष्क्रियो वाऽपि मदगर्वादि-दूषितः। स्त्रीलम्पटोऽप्यसत्योक्तिमात्र-जीवनयापकः ॥१८॥**
**ब्राह्मणब्रुवपुत्रत्वं ख्यापयन्नेव भूभृताम् । सापराधोऽप्यदण्ड्यश्च पूज्यत्वेनापि लक्षितः ॥१९॥**
**राज्ञां भोजनशालासु भुक्त्वा सम्यङ्मदोद्धतः। महिषादिवत्कलत्रेषु क्रीडन्नप्युत्तमो मतः ॥२०॥**
**वेदविद्याधिकारोऽपि तस्यैवानियतात्मनः। मत्स्यमांसादिदुर्गन्धभोजिनोपि सुसम्मतः ॥२१॥**

बौद्ध और जैन इत्यादि अवैदिकमतों का जन्म होने में यहाँ की पाखण्ड जाति प्रथा ही मुख्य कारण है। स्वार्थ परायणों के द्वारा कल्पित जन्म सिद्ध ब्राह्मणत्वादिजाति परम्परा को देखकर महात्मा बुद्ध बहुत दुःखित हो गये थे। क्यों ? इस प्रथा में गुण दोषों का ग्रहण बिलकुल नहीं और दुर्गुणदुराचारादि से दूषित और झूटमूठ बोलकर जीवन बिताने वाला भी ब्राह्मण पुत्र कहकर अपराध से मुक्त हो जाता था। उसी का भोजनादि प्रदान पूर्वक राज सन्मान होता था, और वेद विद्याधिकार भी उसी आहार विहारादि नियम रहित पुरुष का माना जाता था।

**तद्वैपरीत्यमन्येषु नित्यं भक्तिपरेष्वपि । सत्यसन्धेषु लोकोपकारकार्योद्यमेषु च ॥२२॥**
**ऋषिप्रभुवपुत्रत्वज्ञानादेव दयालुषु । तिरस्कारस्वभावोऽपि क्रियते स्माल्पबुद्धिभिः ॥२३॥**
**क्षुत्पिपासावशाद्दुःखे पतितेष्वपि निर्दयाः। गुणग्राहित्वहीनास्ते राजानो मानवा ह्यपि ॥२४॥**
**वेदविद्याध्यनर्हत्वं नीचकार्यनिमग्नता । तेषामुद्घोषिता साक्षाद्राक्षसैर्भूसुराह्वयैः ॥२५॥**

---

१. कल्पितामिति = अयं ब्राह्मणत्वादिजातिभेदः स्वार्थपरायणैर्याज्ञिकैः द्वापरान्ते कल्पितस्तस्मात् कलियुगे वृद्धिं गत इति भृगुस्मृत्यादावुक्तम् । तथाहि "जन्मनो ब्राह्मणत्वादि-[illegible] गजादिवत् । बोधयद्वाक्यजातं हि याज्ञिकैः परिकल्पितम् ॥ तादृङ्मिथ्या-[illegible] कलौ युगे । तेन जातिप्रथा-भाषामतभेदाः प्रवर्धिताः" ( अ० ४।३८, ११ ) इति । अत्र गतकलियुग-समाचारं भृगुर्मुनिभ्यो जगादेति ज्ञातव्यम् ।

दूसरों के विषय में राजा और सामान्य जनता भी विपरीत दृष्टि रखती थी। दैव भक्ति सत्यवचन और लोक कल्याण गुणवालों को भी, वे अब्राह्मण समझते और तिरस्कार भाव प्रकट करते थे और भूख से मरने वालों को भी वे अब्राह्मण समझकर खाने को कुछ न देते थे। वेदशास्त्र पढ़ने में अनधिकारी मानकर उन्हें नीच कर्मों में नियुक्त करते थे।

सर्वमेतदशास्त्रीयमन्याय्यं लोकविद्विषम् । निर्मूलयितुमत्राविर्भूतो बुद्धो महाप्रभुः ॥२६॥
आदौ जन्मना जातिकुप्रथां पशुहिंसनम् । यागादिव्यपदेशेन क्रियमाणं निवार्य च ॥२७॥
शून्यतत्वं ततस्तेषां व्यामोहायैव रक्षसाम् । अधो निनीषया सम्यङ्महामुनिरुपादिशत् ॥२८॥
तच्च वैदिकसिद्धान्तं ह्रासयामास सर्वथा । तुच्छस्वार्थ-समीहायाः फलमेतन्महाक्षतिः ॥२९॥

उपरोक्त अन्याय और लोककण्ठक आचार विचारों को निर्मूलन करने के लिये भगवान् ने बुद्ध के रूप में पैदा हुए। वे पहले जन्मसिद्ध जाति प्रथा और यज्ञों में जीव हिंसा को निवारण करके, ऐसे जीव हिंसक दानवों को व्यामोह में डालने के लिये शून्य तत्व का भी प्रचार किये थे। वह शून्यवाद धीरे-धीरे वैदिक सिद्धान्त को भी दबा दिया था। तुच्छ और अनुचित कामनाओं का फल यही बड़ा अनर्थ हुआ।

एवमेव महावीरो जैनसिद्धान्तदेशकः । तज्जन्मजातिपाखण्डप्रथया जीवहिंसया ॥३०॥
खिन्नो याज्ञिकसिद्धान्तं दूषयित्वा निरामिषम् । भोजनं जीवकारुण्यं जनानुपदिदेश च ॥३१॥
गुरुनानक् महाभागोऽप्यवश्यां जातिकुप्रथाम् । प्रद्विषन् बोधयामास मानवेषु मतान्तरम् ॥३२॥
एवमार्यमुनिः श्रीमान् दयानन्दसरस्वती । जातिप्रथासमायातबह्वनर्थजिघांसया ॥३३॥
संस्थामार्यसमाजाख्यां वर्णजातिप्रदूषिकाम् । स्थापयामास भ्रातृत्वं मानवेषु परस्परम् ॥३४॥
तदानीं जनता जन्मजातिवादिकिरातकैः । पीडिता क्रैस्तवे मुस्लिममते गन्तुमना ह्यभूत् ॥३५॥
कृत्स्ने शैथिल्यमापन्ने जनसङ्घेऽत्र भारते । पुनस्सङ्घटनायैव सोऽवतीर्णो महामुनिः ॥३६॥

ऐसा ही जैन सिद्धान्त प्रवर्तक महावीर स्वामी भी, उसी जाति प्रथा और जीव हिंसा से खिन्न होकर उनको खण्डन किया और जीव कारुण्य और निरामिष भोजन का प्रचार किये थे। श्री गुरुनानक महाप्रभु भी जातिप्रथा के ऊपर द्वेष से दूसरे मत को प्रचार किये थे। तथा स्वामी दयानन्दसरस्वती जी भी इस जाति प्रथा से आये हुए अनर्थों का रोकने के लिये आर्यसमाज को स्थापित किये जिससे जाति प्रथा का खण्डन और जनता में सोदर भाव का प्रचार हो। उस समय जातिवाद के उच्चनीच भावों से पीडित होकर जनता ईसाई और मुसिलिम मतों में जाती रही थी। इस



प्रकार शिथिलावस्था में रहने वाले जन समुदाय को फिर सङ्घटित करने के लिये उस महात्मा का जन्म हुआ।

मतजातिप्रभेदेन जनेषु सङ्घशः पृथक् । कृतेष्ववान्तराः प्रायः सङ्घर्षाः संभवन्त्यपि ॥३७॥
पारस्परिक-सङ्घर्षवशाद्राष्ट्रजनेष्विह । ऐकमत्यविनाशेन राष्ट्रं परवशं भवेत् ॥३८॥
जातिभेदभ्रमध्वान्तस्थितमानवहेतुना । सहस्रवर्षपर्यन्तं पराधीनं हि भारतम् ॥३९॥

जातिमत भेदों के कारण जनता जहाँ अलग-अलग हो जाती है, वहाँ उनमें कलह भी होते रहेंगे और आपसी कलहों के कारण राष्ट्र पराधीन हो जायगा। प्रकृत में भारतराष्ट्र भी जाति भेद भ्रमपूर्ण मनुष्यों के कारण से ही हजारों साल तक परतन्त्र रहा था।

मुसल्मानाः क्रैस्तवाश्च यावन्तः सन्ति भारते । सम्मताः कण्टकत्वेन वर्णाश्रमक्रियावताम् ॥४०॥
प्रियभारतराष्ट्रस्य तत्पूर्वतनसंस्कृतेः । ते सर्वे जन्मसंसिद्धजातिभेदप्रथा-फलम् ॥४१॥
सैवाप्रामाणिकानन्तमतजातिप्रभेदयोः । संजाता कारणं देशपारतन्त्र्यनिमित्तयोः ॥४२॥

जितने मुसलमान और क्रैस्तव इस समय भारत में हैं, जो भारतीय प्राचीन संस्कृति का कण्टक समझे जाते हैं, वे सब जन्म सिद्ध जाति प्रथा का हीं फल हैं। वही ब्राह्मणत्वादिचतुर्विध जाति भेद, क्रम से असंख्याक मतभेदों का और देश परतन्त्रता का भी कारण हो गया था।

भिद्यमानो जनस्तादृग्भेदैर्देशाद्विनिर्गतः । शत्रुराजवशे गत्वा स्वीयदेशं विनाशयेत् ॥४३॥
ज्येष्ठभ्रातृकृतान्यायाद्रुष्टास्तस्यैव सोदराः । विभीषणवदेवारीन् गत्वा स्युस्तद्गृहान्तकाः ॥४४॥

जब देश की जनता में जातिमत सङ्घर्षों से वैरभाव बढ़ जाता है, तब वह निकटवर्ती शत्रु राजा के वश में जाकर अपने देश को नष्ट करने को तय्यार हो जाती है, जैसे बड़े भाई के अन्यायों से रुष्ट होकर छोटे भाई गण विभीषण की तरह, शत्रुओं से मिल कर अपने घर के भी नाशक बन जाते हैं।

ब्राह्मणब्रुव-निर्दिष्टमार्गगामिक्षितीश्वरैः । क्लेशिता भारता ह्यत्र तुरुष्कांस्ते समाह्वयन् ॥४५॥
कम्युनिष्टा यथाऽत्रस्था चैनीयानाह्वयन्ति हि । जातिप्रथामनिच्छन्तो भारतीयास्तथा पुरा ॥४६॥
तादृक् प्रथाविहीनान् प्राक् काबूलानन्यदेशतः । आह्वयामासुरात्मीयरक्षार्थमित्यपि श्रुतम् ॥४७॥
स्वतो वा युद्धयात्रार्थमागतानत्र भारताः । खिन्नास्तान् रुरुधुर्नापि मन्दिरादिप्रभञ्जकान् ॥४८॥

ब्राह्मण नाम धारी के उपदेशानुसार चलने वाले राजाओं के द्वारा पीडित पूर्वकालिक भारतवासी, आजकल के कम्युनिष्टों की तरह, यहाँ की जाति प्रथा और राजनीति से रुष्ट होकर काबूल आदि विदेशों से मुसल्मानों

को, अपनी रक्षा के लिए बुलाये थे। या तो स्वत ही युद्ध यात्रा के लिए भारत में आये हुए विदेशी लोगों को, प्राणभूत विश्वनाथ मन्दिर आदि तोड़ने पर भी, यहाँ की जनता, जो स्वदेशो राजाओं के अन्यायों से दुःखित रहती थी, रोकी न थी।

एवं शूलायमानानां भारतीयहृदोदृशाम्। भारताक्रमणे तेषां मन्दिरादिप्रभञ्जने ॥४९॥
आङ्ग्लेयानामिहागत्य बहुकाल-प्रशासने। अत्रस्थ-जाति-पाखण्ड-प्रथैव मूलकारणम् ॥५०॥
अद्याप्यमेरिकाचैना-पाकिस्थानादयः पुनः। प्रवेष्टुमत्र वाञ्छन्तीत्यत्रापि सैव कारणम् ॥५१॥
राजनैतिकवादानां कम्यूनिष्ठादिनामभिः। बहूनामत्र निष्पत्तौ सा प्रथा मूल-कारणम् ॥५२॥

इस प्रकार भारतवासियों के हृदय में शूलायमान मुसलमानों के, यहाँ आक्रमण करने में और मन्दिरों को तोड़ने में और अंग्रेजी लोगों के, यहाँ बहुकाल तक शासन करने में और अमेरिकन चैना पाकिस्तान के भी फिर यहाँ आने को सोचने में तथा कम्यूनिष्ट कांग्रेस जनसंघ और रामराज्य परिषद इत्यादि राजनैतिक पार्टियों के जन्म होने में भी वही जातिप्रथा मूल कारण है।

शास्त्रसिद्धान्तविद्वेषे नास्तिक्यादिप्रवर्धने। धर्मादिनैरपेक्ष्येण सर्वकारप्रवर्तने ॥ ५३ ॥
दिव्यभाषापरित्यागे म्लेच्छभाषा-समाश्रये। अत्रस्थजातिपाखण्ड-प्रथैव मूलकारणम् ॥५४॥

शास्त्रीय सिद्धान्तों पर द्वेष और नास्तिक वाद की उत्पत्ति धर्म से निरपेक्ष सरकार बनने में और पवित्र भाषा को छोड़कर देशभाषाओं के आश्रय लेने में यहाँ की जाति प्रथा ही मुख्य कारण है।

प्रान्तीयताज्वरध्वंसे भारतीयत्वसाधने। मुख्यसाधनभूतस्य ब्रह्मवद्व्यापकस्य च ॥ ५५ ॥
चौर्योत्कोचमृषाकर्त्रे पापभीति-प्रदस्य च। स्वाश्रितास्तिकलोकेभ्यो भुक्तिमुक्ति-प्रदायिनः॥५६॥
आत्मवत्सर्वभूतानां जगत्सर्वगिरामपि। कारणस्यान्यगीर्नाशेऽप्यात्मवज्जीवधारिणः ॥५७॥
स्वस्मिन् पाण्डित्यलाभेन भिन्नभाषाप्रवीणताम्। विनाप्यात्मनि पूर्णत्वमनीषोत्पादकस्य च॥५८॥
भिन्नभाषासु पाण्डित्यलाभेऽपि स्वमजानताम्। किञ्चिज्ज्ञत्वमति द्वारा न्यूनताऽऽपादकस्य च५९॥
विश्वमानवकल्याणकारिणः संस्कृतस्य हि। भारतेऽराष्ट्रभाषात्वे सा प्रथा मूलकारणम् ॥६०॥
सर्वमेतत्संस्कृतार्तनादविज्ञापनाशत-त्रये निरूपितं सम्यक् तत एवावगम्यताम् ॥६१॥

चोरी करने वालों को घूस लेने वालों को और झूठ बोलने वालों को पाप भीति कराने वाले स्वाश्रित आस्तिक लोगों को भुक्ति और मुक्ति देने वाले, समस्त भूतों के लिए ब्रह्मा की तरह, सर्व भाषाओं का कारणी भूत, दूसरी भाषायें नष्ट होने पर भी जीवित रहने वाले, अपने में विद्वत्ता प्राप्त



करने वालों को अन्य भाषा का ज्ञान न होने पर भी, पूर्णत्व बुद्धि पैदा करने वाले और अन्य भाषाओं में विद्वत्ता प्राप्त करने पर भी अपना ज्ञान न होगा तो हृदय में न्यूनता पैदा कराने वाले और विश्व मानव समुदाय का कल्याण करने वाले संस्कृत को भारत में राष्ट्रभषा न बनाने में भी वही जाति प्रथा मुख्य कारण है। यह सब हमने संस्कृतवाणीसार्तनादविज्ञापना-त्रिशती में ठीक निरूपित किया है। अतः उसको उसीसे लोग समझ लें।

मतमार्यं विहायान्यमते भारतवासिनाम्। प्रवेशे जातिपाखण्ड-प्रथाऽत्रस्थैव कारणम् ॥६२॥
विहाय श्रौतसिद्धान्तं भारता बहवोऽपि च। बौद्धजैनमुसल्मानक्रैस्तवेष्वनया गताः ॥६३॥
मतमन्यद्विहायार्यमते भिन्ननृणामपि। अप्रवेशे प्रथा सैव मुख्यं कारणमुच्यते ॥६४॥
सर्वानर्थनिदानस्य जातिभेदभ्रमस्य हि। जात्युपाधिविवेकोऽयं वारणाय निरूप्यते ॥६५॥

अपने आर्यमत को छोड़कर दूसरे मत में भारतीयों के चले जाने में यही प्रथा कारण है। बहुत से भारतवासी अपना वैदिक सिद्धान्त छोड़कर इस जाति प्रथा के कारण बौद्ध जैन मुसलिम और ईसाई मतों में चले गये हैं दूसरे लोग भी अपना मत छोड़कर आर्यमत में नहीं आने में भी यही प्रथा मुख्य कारण है। सब प्रकार के अनर्थों का कारण जो जाति प्रथा है उसी का निर्मूलन करने के लिये यह जात्युपाधिविवेक नामक ग्रन्थ लिखा जारहा है।

तत्रापि ब्राह्मणत्वादि-जातिविभ्रममूलकाः। सर्वमानवजात्यन्तर्गतावान्तरतद्भ्रमाः ॥६६॥
यथा[1] सम्प्रति विश्वीयविभिन्नमतविभ्रमाः। अनादिवेदसिद्धान्तविषयविभ्रममूलकाः ॥६७॥

---

१. भारते सर्वप्रान्तेषु असंख्याका ये जातिभेदा मनुष्येषु श्रूयन्ते तेषामुत्पत्तौ मुख्यं कारणं इदमेव यत् ब्राह्मणत्वादि चतुर्षु-धर्मेषु-जातित्वभ्रमः। यथा द्वैताद्वैतादि-नाना-विध-वैदिकमतानां बौद्धार्हताद्यवैदिकमतानां चोत्पत्तौ मूलकारणं वेदतात्पर्यार्थविषयकभ्रम एव। केचिद्वेदानां कर्मस्वेव तात्पर्यमिति जानन्ति, केचिच्च ब्रह्मण्येवेति तत्रापि केचित् द्वैतब्रह्मण्येव वेदतात्पर्यमिति बुध्यन्ते। केचिच्चाद्वैतब्रह्मणीति। तत्रैकमेव मतं सत्यमन्यत्सर्वं भ्रान्तमित्यवश्यमङ्गीकार्यं भवति। एवं वैदिकमतावलम्बिषु भ्रमेण परस्परं विवदमानेषु, अपरे बौद्धार्हतयवनादयः वैदिकमतेऽपि सौष्ठवमपश्यन्तोऽन्यमेव कंचन स्वाभीष्टं सिद्धान्तं वेदनैरपेक्ष्येणाङ्गीकृतवन्तः। इत्थं च सर्वाणि मतानि साक्षात्परम्परया वा वेदार्थभ्रममूलकान्येव। यथा वा वर्तमान-प्रान्तीयभाषाः भ्रमप्रयुक्तात्संस्कृतभाषोच्चारणा देवोत्पन्नाः, तथा भूतले साम्प्रतं श्रूयमाणाः मनुष्येष्ववान्तर-जातिभेदाः ब्राह्मणत्वादि-चतुष्टये कर्ममीमांसकोत्पादित-जातिचतुष्टय-भ्रमवशादेवोत्पन्नाः। संस्कृतभाषोच्चारणभ्रम-[illegible] प्रान्तभाषास्वित्थमभवत्। एकेन वृद्धरोगि-पण्डितेन "पानीयं देहीति स्वपुत्रादिकं [illegible] असामर्थ्यात् पानी दे इत्युक्तम्। तच्छ्रुत्वा स च संस्कृतज्ञः पुत्रादि

यथैवापभ्रंशा भुवि सकलभाषाः सुरगिरोः समुत्पन्नास्तत्तत्पुरुषरसनोत्थभ्रमवशात् ।
तथैवाद्याप्युर्वी-जनविविध-जातिभ्रमरुजः चतुर्वर्णेष्वादौ बुधजनित-जातिभ्रमवशात् ॥६८॥

जैसा आजकल विश्व भर में रहने वाले नाना प्रकार के मतभेद, अपौरुषेय वैदिक सिद्धान्तों को ठीक न समझने के कारण उत्पन्न हुए हैं और नाना प्रकार के प्रान्तीय भाषायें भी संस्कृत-भाषाको शुद्ध न बोलने के कारण, उत्पन्न हुई हैं, वैसा ही वर्तमान मनुष्यों में प्रचलित असंख्य जाति भेद रूप विषरोग भी, ब्राह्मणत्वादि चारु वर्णों में वैदिक पण्डितों के द्वारा पैदा किये गये जाति भ्रम से ही उत्पन्न हुए हैं ।

तस्मादत्र विशिष्यैतद्वर्ण-जाति भ्रमापहः । करिष्यते महान् यत्नो येनान्ये स्युर्निवारिताः ॥६९॥

अतः हम यहाँ ब्राह्मणत्वादि में होने वाले जातिभ्रम को निवारण करने के लिये महान् यत्न करेंगे जिस से तन्मूलक अनन्त जाति भ्रम भी निवारित हों ।

## प्रमाणप्रकरणं नाम द्वितीयोऽध्यायः

प्रमाणतो लक्षणतश्च वस्तुनः सिद्धिर्भवेदित्यभियुक्तभाषितम् ।
द्वयोरभावे हि यतो न साध्यतो निरूपणं कार्यमिहापि सङ्ग्रहात् ॥ १ ॥

लक्षण और प्रमाण से ही वस्तु की सिद्धि होती है और जहाँ उन दोनों का अभाव होगा उस वस्तु की सिद्धि भी नहीं होगी । ऐसा शास्त्रज्ञों का मत है । अतः यहाँ लक्षण और प्रमाण का भी संग्रह निरूपण आवश्यक है ।

---

स्वपित्रभिप्रायानुसारेण पानीयं देहीति वाक्यं स्मृत्वा पानीयमानीय पित्रे दत्तवान् । तदेतत्सर्वं पश्यन्तः तटस्था जनाः पानीशब्दस्य जले, दे इत्यस्य च दानेऽर्थं भ्रमेण जानन्तः स्वकीय-पुत्रपौत्रादिकं प्रत्यपि जलाहरणाभिप्रायेण पानी दे इत्यादि वाक्यं प्रयुञ्जाना आसन् । एवं गौरिति शब्दात् गोवु इति, द्वेत्रीणि चत्वारीत्यादि-शब्देभ्यः, दो तीन चार इत्यादि शब्दाः भ्रमवशादादावुत्पन्नाः क्रमशो व्यवहारे प्रचुरं प्रयुज्यन्ते । एवं च सर्वाः प्रान्तभाषाः भ्रमहेतुका एव । एतद्विषयविस्तारस्तु गङ्गेशोपाध्यायादिभिः तत्वचिन्तामण्यादौ शब्द-शक्तावस्माभिश्च कृत इति स तत एव जिज्ञासुभिः ज्ञातव्यः । चतुर्वर्णेषु जातित्वभ्रमोत्पादने पण्डितानामभिप्रायोऽग्रे वक्ष्यते ।



[1]सद्वस्तुज्ञापकानीति धर्मादि ज्ञापकानि च । प्रमाणानि द्विधा लोके बुधैरङ्गीकृतानि हि ॥२॥

विद्वानों के द्वारा प्रमाण दो प्रकार के माने गये हैं । उनमें कुछ प्रमाण सत्य वस्तु का बोध कराने वाले और दूसरे धर्म और अधर्म का बोध कराने वाले हैं ।

[2]प्रत्यक्षस्यानुमानस्य तथा शब्दोपमानयोः । वस्तु-ज्ञापकमानत्वमर्थापत्यादिकस्य च ॥३॥
काचकामल-रोगादि-दोषशून्य-नरस्य हि । चक्षुरादीन्द्रियं तत्र प्रत्यक्षं मानमुच्यते ॥ ४ ॥

प्रत्यक्ष, अनुमान, उपमान, शब्द, अर्थापत्ति और अनुपलब्धि ये ६ प्रमाण वस्तु ज्ञापक माने जाते है । काच कामल रोगादि दोष जिसका नहीं है, ऐसे पुरुष के नेत्रादि ज्ञानेन्द्रिय प्रत्यक्ष प्रमाण कहलाते हैं ।

[3]व्यभिचारविरोधादि-हेत्वाभास-विवर्जितः । हेतुरेवानुमानाख्य-प्रमाणमिति चोच्यते ॥ ५ ॥

व्यभिचार विरोध सत्प्रतिपक्ष असिद्धि और बाध ये पाँच हेत्वाभास कहलाते हैं । इन दोषों से शून्य हेतु ही अनुमान प्रमाण माना जाता है ।

शब्दोपमानयोरेवमाकाङ्[4]क्षादि-मतोरिह । प्रमाणत्वं बुधैरिष्टमनुन्मत्त-प्रयुक्तयोः ॥ ६ ॥
अनुपलब्ध्यर्थापत्त्योरनुन्मत्त-प्रयुक्तयोः । इष्यते च प्रमाणत्वं भाट्टप्राभाकरादिभिः ॥ ७ ॥
[5]प्रत्यक्षादित्रयं तत्र प्रमाणं मुख्य-मुच्यते । सर्वमानव पश्वादि-व्यवहारोपयोगतः ॥ ८ ॥

---

१ मिथ्याभूत-शुक्तिरूप्यादिबोधजनकानां प्रामाण्यमेव नेष्यते । अत उक्तं सद्वस्त्विति । प्रदीपादिवत् प्रमाणान्यात्मीय-वस्तुनो ज्ञापकान्येव न तु दण्डचक्रादिवत् कारकाणीत्यतो ज्ञापकानीत्युक्तम् । यद्यपि प्रयुक्तानि प्रमाणानि अज्ञानावृत-पदार्थानामावरणभङ्गमेव कुर्वन्तीति अद्वैतवेदान्तिमते कारकत्वमपि प्रमाणानां संभवत्येव तथापि तन्न सर्वशास्त्र-साधारण-मित्यतोऽत्र ज्ञापकत्वमुक्तम् । कानि तानि, कतिविधानि इति च जिज्ञासायामुच्यते ।

२. आदितश्चत्वारिमानानि नैयायिकानाम् । अर्थापत्या सह पञ्च प्राभाकराणाम् । अनुपलब्ध्या सह षट् भाट्टानाम् । तत्र प्रत्यक्षादि प्रमाणं किमित्युक्तावुच्यते ।

३. पञ्चानां हेत्वाभासानां निष्कृष्ट-स्वरूपादिकं तत्त्वचिन्तामणि तद्व्याख्यानादौ विस्तरशः प्रतिपादितमतः तज्जिज्ञासुभिस्तत एव ज्ञातव्यम् ।

४. आकांक्षादि सहितस्यापि शब्दस्योन्मत्तपुरुष-प्रयुक्तत्वे प्रामाण्यं नेष्यते । अत उक्तमनुन्मत्तेति ।

५. तदुक्तं देवीभागवतेऽपि "त्रीण्येव हि प्रमाणानि पठितानि सुपण्डितैः । प्रत्यक्षमनुमानं च शब्दश्चेति तृतीयकम् ( १ स्कन्धे, ८ अ० २३२ श्लोकः ) इति । अतोऽत्रापि तत्प्रमाणत्रयस्यैवाधिकतरमुपयोगः ।

आकाङ्क्षा, योग्यता सन्निधि सहित शब्द ही शब्दप्रमाण और सादृश्यादि विशिष्ट वस्तु उपमान प्रमाण कहलाते हैं। भाट्ट और प्राभाकरादि मीमांसक अर्थापत्ति और अनुपलब्धि को भी प्रमाण मानते हैं। सर्व मानव और पशु पक्ष्यादि व्यवहारोपयोगी होने के कारण प्रत्यक्ष, अनुमान और शब्द ये तीन प्रमाण सबसे मुख्य माने जाते हैं।

तथा [1]चत्वारिमानानि धर्मादिज्ञापकान्यपि। वेदः स्मृतिः सदाचारः संयतात्मरुचिस्त्विति ॥९॥

वेद, स्मृति, सदाचार और संयमी पुरुषों की आत्मप्रीति ये चार प्रमाण धर्म और अधर्म का बोध कराते हैं।

वेदस्त्व-पौरुषेयो वागृग्वेदादि-चतुष्टयम्। सर्वज्ञब्रह्म[2]निश्वासात्सर्गादौ निस्सृतं बहिः ॥१०॥
[3]तत्रस्थासङ्गतार्थायाः कथावृत्तान्त-संहतेः। विध्यादिस्तावकत्वेन ह्यर्थवादत्वमिष्यते ॥११॥

अपौरुषेय वाक्य समुदाय ही वेद कहा जाता है। वह चार प्रकार का है ऋग्वेद, यजुर्वेद, सामवेद और अथर्वणवेद। वे चारों वेद परमात्मा के मुख से निश्वास के रूप में निकले थे। वेद में रहने वाला असङ्गत कथा भाग सब अर्थवाद माने जाते हैं।

---

१. एषु प्रमाणेषु पूर्वंपूर्वंप्रमाण-मूलकत्वेन तदविरोधेन वोत्तरोत्तरस्य प्रामाण्यमिष्यते न्यायविद्भिः।

२. वेदस्य परब्रह्मनिश्वासात्मकत्वे बृहदारण्यश्रुतिः प्रमाणम्। "अस्य महतो भूतस्य निश्वसितमेतद्यदृग्वेदो यजुर्वेदः, सामवेदो अथर्वाङ्गिरस इतिहासः पुराणविद्या उपनिषदः श्लोकाः सूत्राण्यनुव्याख्यानानि व्याख्यानान्यस्यैवैतानि निश्वसितानि" इति २.४.१०। अत्रेतिहास-पुराणादि-शब्दैः वेदान्तर्गत 'उर्वशी ह्यप्सरा' असद्वा इदमग्र आसीत्। तस्माद्वा एतस्मादात्मन आकाशः सम्भूत' इत्यादि-पुरावृत्त सृष्ट्यादिप्रतिपादकाष्टविधब्राह्मणभागः ग्राह्यः। दर्शितं चैतदेतद्वाक्य शाङ्करभाष्ये ऋग्वेदीय-सायणभाष्यभूमिकायां च।

३. वेदेषु स्तुति-निन्दाबोधनार्थमसत्यवृत्तान्ता बहवः प्रवृत्ताः। तद्यथा प्रजापति मुखाद्यवयवेभ्यो ब्राह्मणादीनां त्रिवृदादिस्तोमानां रथन्तरादिसाम्नां चोत्पत्तिः तैं० सं० ७ काण्डादौ प्रतिपादिता। एवं बृहदारण्यके प्राणादि-संवादः परस्पर श्रेष्ठत्वद्योतनाय प्रतिपादितः। एवमसंसृष्ट-होम-प्रकरणे प्रातः, सूर्ये अग्नेः प्रवेशः, सायं सूर्यस्याग्नौ च प्रवेश उच्यते। एतादृशानामसत्यगाथानां तत्तत्प्रकरण-पठित कर्मोपासनादि-स्तुतिनिन्दा-प्रतिपादकत्वमेव प्रयोजनं न तु तथाविधवृत्तान्तसद्भावे। सङ्गतार्थानांतु देवासुरयुद्ध योनिज प्राणि सृष्टि व्योमाद्युत्पत्ति प्रतिपादकभागानां भाविनीं वृत्तिमाश्रित्य स्वप्रतिपाद्यविषय-सत्यत्व संभवात्प्रामाण्यमेवेष्यते।



स्मृतयो मनुभृग्वादि-महर्ष्युक्ता ह्यनेकशः। वेद-मूलक वेदार्थाविरुद्धास्ताः प्रमापकाः ॥१२॥
वेदाविरोधसद्भावे सत्यप्यार्षकृतिष्विह। लोभमूलक-वाक्यानामप्रमाणत्वमिष्यते ॥१३॥

मनु, भृगु और याज्ञवल्क्य आदि महर्षियों के द्वारा रचित स्मृतियाँ बहुत सी हैं। वेद मूलकता और वेदाविरोध होने पर ही वे प्रमाण माने जाते हैं। वेद विरोध न होने पर भी लोभादि मूलक स्मृत्यादि की प्रमाणता नहीं मानी जाती।

[1]तच्चोक्तं पूर्वमीमांसा भाष्यादौ शाबरादिके। हेतु-दर्शन-सूत्राधिकरणेऽतिस्फुटोक्तिभिः ॥१४॥

---

१. पूर्वमीमांसा-प्रथमाध्याये तृतीयपादे हि "औदुम्बरी सर्वा वेष्टयितव्येति स्मृति वाक्यस्य "औदुम्बरीं स्पृष्ट्वोद्गायेदिति' श्रुति विहित स्पर्शप्रतिकूल सर्ववेष्टन-विधायकत्वात् अप्रामाण्यमुक्त्वाऽग्रे तादृश प्रतिकूलार्थविधायकत्वाभाववतोऽपि "वैसर्जनहोमीयं वासोऽध्वर्युः परिगृह्णाति इति स्मृति वाक्यस्याप्यप्रामाण्यमुक्तम्। तत्र च कारणमिदं दर्शितं जैमिनीयन्यायमालायाम् यत् कदाचित्कश्चिदध्वर्युःलोभादेतद्वासो जग्राह। तन्मूला ( लोभमूला ) एवैषा स्मृतिरित्यपि कल्पना संभवति दृष्टानुसारिणी चैषा कल्पना ( असत्यमपि भाषित्वाऽन्यान्वञ्चयन्ति प्रायो जनाः। धनादिकं च तेभ्यो गृह्णन्तीति सर्वत्र लोके प्रसिद्धम्। एवं कश्चिदध्वर्युरपि एतद्वस्त्रग्रहणलोभेनेदं वाक्यं विलिख्य महर्षि-प्रणीतस्मृतिवाक्यानां मध्ये योजितवानिति कथने इयं कल्पना दृष्टानुसारिणी भवतीति भावः ) दक्षिणया परिक्रीतानां ऋत्विजां लोभदर्शनात्। तथा सत्यस्याः स्मृतेरन्यथाप्युपपत्तौ अष्टकादिस्मृतिवत् न मूलश्रुतिः कल्पयितुं शक्यते। अतो बाधाभावेऽपि ( श्रुतिविरोधाभावेपि ) मूलवेदाभावान्नेयं स्मृतिः प्रमाणमिति। कुमारिलभट्टस्तु एतदधिकरण-तन्त्रवार्तिके एतादृश मिथ्या स्मृति-वाक्य-कल्पनस्य करणान्तरमपि दर्शयति। तद्यथा 'क्वचिद्भ्रान्तिः क्वचिल्लोभः क्वचिद्युक्तिविकल्पनम्' प्रतिमाकारणत्वेन निराकर्तुं न शक्यते। उपपन्नतरं चैतद्वेदवाक्यानुमानतः। दृष्टे हि सत्यदृष्टस्य कल्पना निष्प्रमाणिका इति। एतादृश-स्मृतिवाक्यानां वेदमूलकत्वकल्पनापेक्षया लोभ भ्रान्त्यादि-मूलकत्व कल्पने युक्ततरं भवतीति तदर्थः। एतेनेदमपि ज्ञायते यत् सर्वेऽपि ब्राह्मणाः श्रेष्ठाः पूजनीयाः सदैव हि। स्तेयादिदोषतस्ता ये ब्राह्मणा ब्राह्मणोत्तमाः अनाचारा द्विजा पूज्या नतु शूद्रा जितेन्द्रियाः ( पाद्मे पञ्चमभागे वियायोग सारखण्डे अ० २। श्लोक ६.७ ) इत्यादयो मनुष्येषु जन्मना ब्राह्मणाद्युच्चनीच जाति समर्थकश्लोकाः सर्वेऽपि स्वस्वकीय-परम्परोत्कर्षकामिभिः विप्रब्रुवैः कल्पिताः सन्तः तत्तत्स्मृतिपुराणादौ योजिता इति। तत्र बीजमपि स्वात्म-स्वात्मीय-श्रेष्ठत्व-साधने रागः तदन्योपरि द्वेषश्च संभवतीति न तेषां श्रुति मूलकत्वं कल्प्यते। दृश्येते खलु सदैव एतादृश राग द्वेषौ जनेषु। अतो दृष्टरागद्वेष-मूलत्वकल्पनेनैव तेषमस्तित्वोपपत्तौ श्रुतिमूलकत्वं नैव कल्प्यते। अतः तादृशानां श्लोकानां अप्रामाण्यमेवेति सिद्धं भवति ॥ १४ ॥

लोभ राग द्वेषादि मूलक स्मृत्यादि वाक्य प्रमाण नहीं है। यह बात पूर्व मीमांसा शास्त्र के १ अध्याय के ३ पाद में लोभादि मूलकाधिकरण में बताया गया है।

[1]न चार्धजरती-न्यायापत्तिरित्यत्र चोच्यताम्। इष्टापत्तेः प्रमाणेषु स न्यायो विद्यते यतः ॥१५॥
प्रमाणावगतं किञ्चित्क्वचित्सत्यं भवत्यपि। कुत्रचित्तच्च मिथ्यैव मानवैरनुभूयते ॥१६॥
चक्षुरादीन्द्रियैर्ज्ञातं रूप्यकं शुक्तिकादि च। तथ्यमेव भवत्यर्थक्रियाकारि-त्वयोगतः ॥१७॥
क्वचित्तैरेव विज्ञातं शुक्तिरूप्यादिकं मृषा। तण्डुलादिक्रियाद्यर्थ-साधनं तद्यतो नहि ॥१८॥

यहाँ अर्ध जरती न्यायापत्ति नहीं हो सकती अर्थात् जैसे लोक में स्त्री या मुर्गी इत्यादि, आधी युवति और आधी वृद्धा नहीं हो सकती यदि ऐसी मानी जाती है तो वह अर्ध जरती न्याय कहा जाता है। वैसा ही स्मृति पुराणादि में रहने वाले श्लोक सभी प्रमाण या सभी अप्रमाण हो सकते हैं न कि कुछ प्रमाण और कुछ अप्रमाण। यदि ऐसा माने जायंगे तो वह आपत्ति यहां भी होगी तो भी यहाँ वह अनिष्ट कारक नहीं है। क्योंकि प्रत्यक्षानुमान शब्दादि प्रमाणों में कुछ प्रमापक होने पर भी कुछ अप्रमापक भी होते हैं। इसलिए चक्षुरादि प्रमाणों से देखा हुआ शुक्ति (सीपि) और रूप्यक आदि वस्तु ठीक ही रहते और कहीं-कहीं उन्हीं प्रमाणों से ज्ञात शुक्तिरूप्यक आदि मिथ्या ही होते है। अत एव वे किसी काम के लिए उपयुक्त नहीं होते हैं।

प्रमाणेनैकमुत्पन्नं विज्ञानमपि कुत्रचित्। सत्यमेव क्वचिन्मिथ्या भ्रमप्रमाप्रभेदतः ॥१९॥
विशेष्य-निष्ठधर्मो हि यत्र ज्ञाने प्रभासते। विशेषणतया तद्धि विज्ञानं सत्यमुच्यते ॥२०॥
अन्यधर्मिण्यतद्धर्मो विशेषणतया धियि। यस्यां विभासते सा धीर्मिथ्याज्ञान मितीर्यते ॥२१॥

चक्षुरादि प्रमाणों के द्वारा उत्पन्न ज्ञान भी कहीं सत्य और कहीं मिथ्या भी होता है। विशेष्य निष्ठ धर्म जिस ज्ञान में विशेषण के रूप में भासता है वह ज्ञान सत्य कहलाता है और उसके विपरीत जिस ज्ञान में रजतादि भिन्न वस्तु निष्ठ धर्म शुक्ति कादि विशेष्य में विशेषण के रूप में प्रतीत होता है वह ज्ञान मिथ्या कहलाता है।

---

२. प्रमाणेष्वर्धंजरतीन्यायः अनिष्ठापत्तिकारको न भवति, तस्य तेष्विष्टत्वात्। न ह्यर्धंजरतीन्यायापत्तिभिया चक्षुरादीन्द्रियैर्विज्ञातं सर्वं सत्यमिति वा मिथ्येति वा वक्तुं कश्चित् शक्नुयात्, किन्त्वर्थ-क्रियाकारित्वानुसारेण किञ्चित्सत्यं किञ्चिच्च मिथ्येत्येव वक्तव्यं भवति।



शरीरादि प्रमेयो हि जीर्णो वा स्याद्युवाऽपि वा। अर्धं जीर्णो युवा चार्धं न भवेदेकदा भुवि ॥२२॥
तस्मादर्धंजरन्न्यायः प्रमेयेष्वेव नेष्यते। प्रमाणेष्विष्यते यस्मादतः सर्वं परीक्ष्यताम्[1] ॥२३॥

प्राणियों का शरीर कभी वृद्धावस्थापन्न और कभी युवावस्थापन्न होता हैं न कि आधा वृद्ध और आधा युवा। अतः वह अर्ध जरती न्याय शरीरादि प्रमेयों में ही नहीं माना जाता किन्तु प्रमाणों में सर्वत्र वह रहता ही है। अतः एव प्रमाणों की परीक्षा करके उनसे ज्ञात विषय का सत्यत्व या मिथ्यात्व समझना चाहिए।

खादिरो यूप इत्यादौ प्रतीतार्थो विवक्ष्यते। आदित्यो[2]यूप इत्यादौ तद्विवक्षा च नेष्यते ॥२४॥
न चैवार्धजरन्न्यायापत्तिभीत्या समन्ततः। गौण मुख्यार्थयोरन्यतर एवेष्यते बुधैः ॥२५॥

खादिरो यूपो भवति यह वेद वाक्य मुख्यार्थक और आदित्यो यूप (सूर्य की तरह यूप प्रकाशमान है) यह वेद वाक्य गौणार्थक ऐसा माना जाता है, न कि सभी गौणार्थक या सभी मुख्यार्थक।

[3]स्मृतिष्वेवं पुराणेतिहासवाक्येष्वपीदृशी। मर्यादैवेष्यते मानमेयज्ञैरिह सर्वतः ॥ २६ ॥

---

१. परीक्ष्यतामिति। अत एवोक्तं महाभारते युधिष्ठिरं प्रति भीष्मेण 'तलवद्दृश्यते व्योम खद्योतो हव्यवाडिव। न तलं विद्यते व्योम्नि न खद्योतो हुताशनः। तस्मात्प्रत्यक्षदृष्टेऽपि युक्तमर्थं परीक्षितुम् ॥ परीक्ष्य ज्ञापयन्नर्थान्न धर्मात्परिहीयते" इति ॥ अतएव च न्याय मीमांसादि शास्त्रेषु प्रमाण परीक्षा कृता। वेदेऽपि गौणमुख्यार्थादिविचारः क्रियते न तु सर्वो मुख्यार्थकः गौणार्थक इति वोच्यते। तदेवाग्रे उच्यते।

२. आदित्यो यूप इति यजमान प्रस्तरः (तै० सं० २. ६. ५. ३) अन्नं प्राणा (तै० सं० २. ३. ४) इत्यादौ (मी० द० अ० १ पा० ४ सूत्र २३) इति सूत्रेण यजमानादित्यादि-शब्दानां गौण्या वृत्त्या यजमान-कार्यकारित्वात्तज्जन्यत्वादित्यसादृश्यादि-निमित्तैः प्रस्तर-यूपादिपरत्वमुक्तम्। एतदतिरिक्तस्थलेषु च मुख्यार्थ-परत्वमेव प्रायः सर्व-वैदिकवाक्यानामङ्गीक्रियते नत्वर्धंजरती-न्यायापत्ति-भयात्सर्वं गौणार्थकं मुख्यार्थकं वेष्यते।

३. दर्शित लोभादिमूलक मीमांसाधिकरण-न्यायेन स्मृतिषु पुराणेतिहासादिषु चोपलभ्यमानानां सर्वेषामपि श्लोकानामप्रामाण्यमेव सिद्धं भवति। येषु तथाविधरागादिकं श्रुतिविरोधो वा न प्रतीयते तेषां प्रामाण्यमिष्यते नान्येषाम्। अतो जन्म सिद्धोच्चनीचभेद-प्रतिपादकवाक्यजातं ग्रन्थतो निष्कासनीयमित्युक्तं भृगुस्मृतौ चतुर्थाध्याये "भवन्तोऽपि सदा गृह्णन्तु [illegible]तुकम्। वाक्यजातं परित्यज्य गृह्णन्तु मुनिभाषितम् ॥ यथा व्रीह्यादि [illegible] तृणानि हि। बहिर्निष्कास्य सस्यानि वर्धयन्ति कृषीवलाः ॥ यथाऽऽपणात् [illegible] तण्डुलादिषु। व्यापारिमिश्रितानल्पग्राव्णो निष्कास्य भुञ्जते।

तथा मन्वादि स्मृतियों अष्टादश पुराणों और रामायण महाभारतादि इतिहास ग्रन्थ में भी जहाँ-जहाँ लोभ राग द्वेषादि मूलक श्लोक जितने ही उपलब्ध हो उन सबका उक्त मीमांसादर्शन के अनुसार अप्रामाण्य सिद्ध होता है। आप लोग भी तुच्छ स्वार्थ के लोभ से कल्पित वाक्यों को छोड़ कर मन्वादि महर्षियों के द्वारा रचित सर्व कल्याण कारक और निष्पक्ष वाक्यों को ग्रहण करें। जैसे धान के फसलों में बढ़ने वाले घास को बाहर निकाल कर किसान फसलों को पोषण करते हैं और जैसे दुकान से खरीदे हुए चावल आदि में व्यापारी के द्वारा मिलाये हुए कंकड़ों को निकाल कर लोग भोजन बनवाते, हैं वैसा ही वेदादि शास्त्रों में कहीं भी, जन्म से किसी की पूज्यता और किसी का सेवकत्व और नीचत्व बताने वाले वाक्यों को उन ग्रन्थों से बाहर कर देना चाहिए। नहीं तो अपने वाले और दूसरों को भी अनिष्ट हो जायगा। जैसे उस घास को न निकालने पर फसल क्षीण हो जाते हैं और कंकड़ न निकालने पर गले में लग जायँगे, वैसे ही उन कल्पित वाक्यों को बाहर न निकालने पर असल महर्षि रचित वाक्यों का भी अर्थ विपरीत हो जाता है। जैसे घास और कंकड़ का ज्ञान प्रत्यक्ष से हो जाता है वैसा ही, ये वाक्य कल्पित और ये असल मुनियों के हैं, यह बात भी लोभादि हेतु से और उसके अभाव से भी मालूम हो जाता है।

ननु सर्वज्ञमन्वादि महर्ष्युक्त-वचस्स्वपि। किञ्चित्प्रमाणमन्यच्च कथं नेतीति चेच्छृणु ॥२७॥
न सर्वज्ञ-प्रणीतत्व हेतुना तद्गिरामिह प्रामाण्यमिष्यते किन्तु वेद मूलकतादिना ॥२८॥
सर्वज्ञत्वमपि प्राज्ञैः पूर्वमीमांसकोत्तमैः। कस्यापि नेष्यते विश्वकर्तुरप्यन्ततो भुवि ॥२९॥
तत्कर्तृकत्व-सिद्धे वा विषं[1] भुङ्क्ष्वेतिवाक्यवत् तेषामन्यत्र तात्पर्यं न त्वसङ्गत-वस्तुनि ॥३०॥

इस पर भी यह शंका नहीं की जा सकती कि मन्वादि महर्षियों के रचित ग्रन्थों में कुछ प्रमाण और कुछ अप्रामाण कैसे माने

---

तथा वेदादि शास्त्रेषु केषाञ्चित् सेव्यता तथा। सेवकत्वं तदन्येषांजातिबुद्या यदीरितम् ॥
तत्सर्वं च परित्याज्यमैहिकामुष्यिकार्थिभिः। अन्यथाऽनर्थ-प्राप्तिः स्यात्स्वस्वकीयपरात्मनाम् ॥
तृणानामबहिष्कारे सस्यानां क्षीणता यथा। तद्ग्राव्णां चाबहिष्कारे मृत्युस्तण्डुलभोजिनाम् ॥
तथा कल्पितवाक्यानामनिष्कास-पुरस्सरम्। ग्रहे मूलवाक्यानामप्यनर्थार्थशक्यता ॥
इदं तृणमयं ग्रावेत्यत्र प्रत्यक्षतः प्रमा। तथेदं कल्पितं तन्नेत्यत्र लोभादि-लिङ्गतः" इति।

१. विषं भुङ्क्ष्वेति। पित्रादि-प्रोक्तस्य विषं भुङ्क्ष्वेति वाक्यस्य यथा श्रुतार्थं त्यक्त्वा वक्तुराप्तत्व-रक्षणार्थं शत्रुगृह-भोजन-परित्यागे तात्पर्यं वर्णयन्ति शब्दार्थमर्यादाविदस्तथा प्रकृतेऽपि ज्ञातव्यम्।



जायँगे? उत्तर यह है कि सर्वज्ञ मुनियों के रचित होने से वे स्मृतियाँ प्रमाण नहीं मानी गयीं किन्तु वेद मूलक होने से वेदाविरुद्ध होने से और लोभादि मूलक न होने से प्रमाण मानी जाती हैं। पूर्वमीमांसक लोग, जो सभी धर्मशास्त्रों का अर्थ निर्णय करते हैं, किसी को भी सर्वज्ञ मानते नहीं। यदि कोई पुरुष उन असङ्गतार्थक वाक्यों को भी सर्वज्ञ-मुनि प्रणीतत्व सिद्ध करेगा तो भी उनका तात्पर्य किसी सङ्गतार्थ में ही माना जायगा न कि असङ्गत यथाश्रुतार्थ में।

तेषां महर्षि-प्रोक्तत्वे प्रमाणं नास्ति किञ्चन। अन्धविश्वासप्रामाण्यं येनाज्ञानां भवेदति ॥३१॥
तुच्छस्वार्थवशीभूतैः जीर्णोद्धारादिनामतः। मुद्रणादिप्रसङ्गे च बहुधा परिवर्तिते ॥३२॥
ग्रन्थजाते महर्ष्युक्तिर्नास्त्येवापरिवर्तिता। श्रुतिस्मृतिपुराणादौ पाठभेदो महानतः ॥३३॥
व्यासेनापि[1] स्पष्टमुक्तं द्वापरान्ते श्रुतेरपि। अन्यथा रचनं स्वार्थं लोभिभिः क्रियते त्विति ॥३४॥
तस्माल्लोभादिमूलत्व मात्रेणाप्यात्मलाभता। दर्शितस्मृतवाक्यानामतो न श्रुतिमूलता ॥३५॥

असङ्गतार्थक स्मृत्यादि वाक्य भी महर्षियों के द्वारा बनाये गये, इस विषय में कुछ प्रमाण नहीं है जिससे उनका भी अन्धविश्वास से प्रामाण्य मान लिया जाय। तुच्छ स्वार्थी पण्डितों के द्वारा जीर्णोद्धार के बहाने से और पुनर्मुद्रणादि प्रसङ्ग से बहुत परिवर्तित वर्तमान स्मृत्यादि ग्रन्थों में अपरिवर्तित महर्षिवाक्य कुछ नहीं रह गये। अत एव उनमें बहुत पाठभेद देखे जाते हैं। श्री वेदव्यासजी भी मत्स्यादि पुराणादि में कहे हैं कि लोभी लोग द्वापरान्त में और कलियुग में वेदशास्त्रों का भी परिवर्तन करते रहते

---

१. व्यासेनेति "ततः प्रवर्तते तासां प्रजानां द्वापरे पुनः। लोभो धृतिर्वणिग्युद्धं तत्त्वानामविनिश्चयः" द्वेषमुत्पद्यते चैव युगे तस्मिन् श्रुतिस्मृतौ। द्विधा श्रुतिः स्मृतिश्चैव निश्चयो नाधिगम्यते" वेदशास्त्र प्रणयनं वर्णानां सङ्करस्तथा। वर्णाश्रमपरिध्वंसः कामद्वेषौ तथैव च" "( मत्स्ये अ० १४३ श्लो० ३.७.२६ ) इति। एवं देवी भागवतेऽप्युक्तम् "वैखानसाश्च मुनयो निस्सङ्गा निष्परिग्रहाः। सत्ययुक्ता भवन्त्यत्र वीतरागा गततृषः अन्यत्सर्वं शबलितं गुणैरेभिस्त्रिभिर्नृप। नैकं वाक्यं पुराणेषु वेदेषु नृपसत्तम धर्मशास्त्रेषु चाङ्गेषु सगुणैः रचितेष्विह" ( ४.४.२७.२९ ) इति। अत्रायमभिप्रायः। वैखानसादि मुनिभिः यत्स्मृत्यादिकं विरचितं तत्प्रामाणिकमेव। तेषां वीतरागत्वात्। किन्तु रागद्वेषादिगुणशबलितैः यद्विरच्य स्मृतिपुराणादिषु योजितं तदप्रमाणम्। नातः सर्वत्रानास्था-प्रसङ्गः। एतादृशप्रामाण्याप्रामाण्यनिश्चयश्च दर्शितमीमांसान्यायैः कर्तुं शक्यः। एतद्रहस्यगोपनार्थमेव शूद्रैरेतत्सर्वं नाध्येतव्यमिति ब्राह्मणेतराः सर्वे शूद्रा इति चोक्तम्।

हैं। अतः सब श्रुत्यादि वाक्यों की मीमांसान्यायों से परीक्षा करके कल्पितत्व और अकल्पितत्व का निर्णय करना चाहिए।

## जातिलक्षणप्रकरणं नाम तृतीयोऽध्यायः

**जातेश्च लक्षणान्याहुर्गौतमाद्या महर्षयः। नव्य-न्यायादि-शास्त्रज्ञाः स्वीय-रुच्यनुसारतः ॥१॥**

गौतम आदि महर्षि और नवीन न्यायशास्त्रादि में विशेषज्ञ लोग अपनी-अपनी रुचि के अनुसार जाति के लक्षण बताये थे।

**समान-प्रसवात्मत्व-माकृतेर्व्यंङ्ग्यताऽपि वा। नित्यत्वे सत्यनेकेषु समवेतत्वमित्यपि ॥२॥**
**तुल्यातुल्याकृति-व्यक्ति-व्यावृत्त्यन्वितप्रत्ययः। यया भवति सैवात्र जतिरित्युच्यते परैः ॥३॥**

जिसके द्वारा पशुपक्षिमनुष्यादियों में समानाकारक बुद्धि होती है, वही जाति है जो नित्य और अनेक पदार्थों में समवाय सम्बन्ध से रहती हो वही जाति है। समाना कारक पिण्डों में अनुगत बुद्धि, असमानाकारक पिण्डों से व्यावृत्ति, जिसके द्वारा होती है वही जाति हैं। इस प्रकार प्राचीन नवीन नैयायिकों ने जाति के लक्षण बताये हैं।

१. समान-प्रसवात्मिका जातिरिति गौतमो न्यायदर्शने ( अ० २, आ० २ सू० ६८ ) समानाकारकबुद्धिजननयोग्यत्वं जातेर्लक्षणमिति तदभिप्रायः। आकृतिव्यङ्ग्यत्वमपि जातेर्लक्षणं केचिद्वदन्ति। तत्र आकृत्या समानाकारकावयवसन्निवेशेन सह जातेः प्रत्यक्षत्वमङ्गीकुर्वन्ति। न्यायसूत्रवार्तिक कारस्तु आकृत्याऽनुमेयत्वं जातेर्मनुते। अत्र एवोक्तं तेन 'आकृतिर्जातिलिङ्गाख्या" इति न्यायसूत्रव्याख्यानावसरे नियतव्यूहाः सत्वावयवा आकृतिः जातिमनु मापयति। तत्तात्पर्यटीकाकारश्च वाचस्पतिमिश्रो जातेः प्रत्यक्षत्वमेवाङ्गीकरोति न त्वाकृत्यनुमेयत्वम्। उक्तं च तेन तत्सूत्रवार्तिकटीकायां "यद्यपि गोत्वं प्रत्यक्षमेव नाकृतिव्यङ्ग्यं तथापि विप्रतिपद्यमानं प्रत्युच्यतेऽनुमिन्वन्तीति" इति। गोत्वादिजातेः प्रत्यक्षत्वप्रकारश्च इत्थमवगन्तव्यः। तद्यथाऽदृष्टगोजातायः कश्चद् गां दृष्ट्वा दृष्ट-तज्जातीयं पुरुषं प्रत्येवं ब्रूते "अदृष्ट पूर्वोऽयं जन्तुरिहास्ति तं पश्येति। एवमुक्तश्चापरो ब्रवीति "दृष्टपूर्व एवायं मया नादृष्टपूर्वं इति। अयं च प्रत्यक्षानुभव एतत्पिण्डगत-गोत्वजातेरेव प्रत्यक्षत्वे उपपद्यते नान्यथा। कुतः तत्र दृश्यमान-व्यक्तेर-पूर्वत्वेन दृष्टपूर्वत्वाभावात्। एतद्विषयेऽधिकजिज्ञासुभिः वेदान्त-देशककृत-न्यायकुलिशे नवम वादे द्रष्टव्यम्। नित्यत्वे सत्यनेकसमवेतत्वं जातित्वमिति नवीन-नैयायकाः। तत्र समवेतत्वं च समवायसम्बन्धेन वृत्तित्वम्। प्रशस्तपादमते जातिलक्षणं तु समाना-कारकपिण्डेष्वनुवृत्ति प्रत्ययजनकत्वे सत्यसमानाकारकपिण्डेभ्यो व्यावृत्तिप्रत्ययजनकत्वम्। अत उक्तं तुल्यातुल्येति।



**अद्वितीयात्मसत्तैव[1] सास्नाद्याकृति भेदतः। गोत्वादिजातिसंज्ञाभागिति केचि द्वदन्ति हि ॥४॥**

कुछ लोग कहते हैं कि सर्वव्यापक परमात्मा ही तत्तदाकृतिके भेद से गोत्वादिजाति कहा जाता है।

**[2]सुसदृशं गवाश्वादौ संस्थानं यत्प्रदृश्यते। तदेव तत्र गोत्वादिजातिरित्युच्यतेऽपरैः ॥५॥**

सब गायों और मे अश्वादि में रहने वाले अत्यन्त सदृश अवयव सन्निवेश जो देखा जाता है, वही सन्निवेश गोत्व और अश्वत्वादि जाति है। ऐसा भी कुछ लोगों का मत है।

**साऽतद्व्यावृत्तिरूपैव न तु वस्त्वन्तरं भुवि। विकल्पाऽसहमानत्वादिति बौद्धा प्रचक्षते ॥६॥**

बौद्ध कहते हैं कि गोत्वादि जाति-माने गवादि भिन्न भेद ही है। उससे अतिरिक्त जाति नामक वस्तु कोई नहीं है।

बौद्धमते जातिरपोहशब्दाभिधेयाऽतद्व्यावृत्तिरूपैव न ततो अतिरिक्ता। जातिपक्षेविकल्पासहत्वात् तथाहि साजातिः किमद्योत्पन्नायां गवि अन्यत आयाति उत ततः पूर्वमेव तत्र वर्तते। नाद्यः पक्षः निष्क्रियत्वव्याकोपात्। न द्वितीयः अप्रतीयमान-त्वात्। न च पिण्डैः सहोत्पद्य विनश्यति। तस्या नित्यत्वाङ्गीकारात् नह्यंशेनागताअंशेन च तत्र स्थितेति वक्तुं युक्तम्। निरंशत्वात्! नापि पूर्वतन-गवादि व्यक्ति विहाय नूतन व्यक्तौ प्रविष्टा सेति वक्तुं शक्यम्। पूर्वव्यक्तेः जातिशून्यत्वापत्ते रिति बौद्धोक्ता विकल्पाः। तेषां संङ्ग्राहकश्चायं श्लोकः प्रकरणपञ्चकादौ प्रदर्शितः। "नायाति न च तत्रासीदस्ति पश्चान्न चांशवत्। जहाति पूर्वं नाधारमहो व्यसनसन्ततिः" इति। तद्विकल्प-परिहारार्थं जातेः व्यापकत्वमुच्यते। तथाहि

१. केचिद्वैयाकरणा भर्तृहरिप्रभृतयो वेदान्तिनश्च गवाद्यवयवसंस्थानावाच्छिन्ना-भिन्नात्म-सत्तैव गोत्वादिजातिरिति वदन्ति। तथाचोक्तं भर्तृहरिणा वाक्यपदीये जातिवाद-प्रकरणे "सम्बन्धभेदात्सत्तैव भिद्यमाना गवादिषु। जातिरित्युच्यते तस्यां सर्वे शब्दा व्यवस्थिताः" सा नित्या सा महानात्मा तामाहुस्त्वतलादयः तां प्रातिपदिकार्थं च धात्वर्थं च प्रचक्षते ( ३३-३४ ) इति। सम्बन्धभेदादुपाधिभेदात्। सा चोपाधिरत्रावयवसंस्थान-रूपाकृतिरेव। एवं खण्डनखण्डखाद्यस्य जातिवादशारदा–टीकायामस्मद्गुरुवर्यैरप्युक्तम् "वेदान्तिनां तु जातिमात्रस्य ब्रह्मरूपत्वं वाऽविद्यारूपत्वं वाऽविद्याकार्यान्तर्गतत्वं वेति।

२. विशिष्टाद्वैतिनो हि अवयवसंस्थानातिरिक्तां जातिं नाङ्गीकुर्वन्ति। तदुक्तं न्यायकुलिशे "संस्थानं सदृशात्मकम्। सुसदृशानि संस्थानानि परस्परस्मृति समर्पण-क्षमाणि। ज्ञानमेकमवगाहमानमनुरुध्य तद्गोचरत्वेनैकोपाधिना प्रतिसन्धीयते। तथाहि [illegible] वक्तुम्। समानानां हि भावः सामान्यम्। तदेव च जातिः। समानानि संस्थानानि [illegible] चेत्यादि।

सर्वव्यापकता सर्व-जातेरात्मवदिष्यते । अन्यथा बौद्धसम्प्रोक्त-दूषणापरिहार्यता ॥ ७ ॥

जैसे आत्मा सर्वव्यापक है वैसे ही सभी जातियाँ सर्व व्यापक मानी जाती हैं । ऐसा न मानने पर बौद्धों के द्वारा दिये गये दूषण अपरिहार्य हो जायेंगे ।

सर्वाणि तानि दूषणानि जातेः सर्वव्यापकत्वमङ्गीकृत्यैव परिहृतानि नैयायिकादिभिः । तथाचोक्तं जयन्तभट्टेन न्यायमञ्जर्याम् "सर्वसर्वगता जातिरिति तावदुपेयताम् । सर्वत्राग्रहणं तस्या व्यञ्जकव्यक्त्यसन्निधेः" व्यक्तिर्व्यञ्जकतामेति जातेर्दृष्टैव नान्यथा व्यक्तेरन्यत्र तत्सत्वे किं प्रमाणं तदुच्यते । इहाप्यानीयमनायां गवि गोत्वोपलम्भनम्" गोपिण्डेन सहैतस्या न चागमनसंभवः देहेनेवात्मनस्तस्मादिहाप्यस्तित्वमिष्यताम् । अभिव्यक्तिस्तु तत्काला यत्कालं व्यक्तिदर्शनम्" इति ।

व्यापकत्वं स्वरूपेण सर्वत्रास्तित्वमेव हि । स्वाश्रये समवायेन जातिमात्रस्य सम्मतम् ॥८॥
नातो व्यङ्ग्यत्वमन्यत्र गवादावाश्रये पुनः । गोत्वादिजातिराकृत्या व्यज्यते समवायतः ॥९॥

गोत्वादि जाति स्वरूपसम्बन्ध से सर्वत्र रहती है और अपने आश्रय में सास्नाद्याकृति के द्वारा समवाय सम्बन्ध से व्यक्त होती है ।

गोत्वादि-जातिः सर्व-वस्तुषु विद्यमानाऽपि तदभिव्यञ्जकावयव-संस्थानाभावेन नोपलभ्यते । गवादौ च तदभिव्यञ्जक-सद्भावेन सा व्यज्यते । एतावता जातिस्वरूपमुक्त्वाऽथेदानीमुपाधिस्वरूपमुच्यते ।

उपाधिर्जाति-वैधर्म्याज्ज्ञेयस्तत्तद्गुणादिभिः । यत्नेन लभ्यते कश्चित्संसर्गात्तद्वतां नृणाम् ॥१०॥

उपाधि नाना प्रकार की होती है । कुछ आकाशत्वादि रूप उपाधि नित्य और पाचकत्व ब्राह्मणत्व पण्डित्वादिरूप उपाधियाँ अनित्य और वृद्धिक्षय वाली होती हैं । अतः उसका एक अनुगतरूप न होने से लक्षण न ही बन सकता, किन्तु जाति के जैसा-जैसा स्वरूप बताया गया उससे विपरीत धर्मवाली को उपाधि समझना चाहिये ।

## ब्राह्मणत्वादौ जाति लक्षण प्रमाणाविषयत्वप्रदर्शकः चतुर्थोऽध्यायः

येन मानेन यद्वस्तुज्ञानमुत्पद्यते नृणाम् । तेनैव च प्रमाणेन तज्जातितदभावयोः ॥ १ ॥

जिस प्रमाण से जिस वस्तु का ज्ञान होता है उसी प्रमाण से उस वस्तु में रहने वाली जाति और उसका अभाव का भी ज्ञान होता है ।



वस्तु ज्ञापकप्रमाणस्यैव तन्निष्ठजात्यादि-ज्ञापकत्वम् । अतो न तत्र प्रमाणान्तरं मृग्यते । यत्तु नैयायिकैः "येनेन्द्रियेण या व्यक्तिर्गृह्यते तेनैवेन्द्रियेण तन्निष्ठा जातिस्तदभावश्च गृह्यते" इति नियमस्वरूपमिष्यते तत्र इन्द्रियपदमप्रयोजकम् । वस्तुग्राहक प्रमाणमात्रस्यैव जात्यादिज्ञापकत्वसम्भवात् । तदेवाग्रे स्पष्टीक्रियते ।

चक्षुर्मात्रेण गृह्यन्ते वस्तूनि कानिचित्त्वचा । उभाभ्यामपि शक्यन्ते बहूनि ज्ञातुमञ्जसा ॥२॥
सूर्यचन्द्रादयस्त्वक्षणा स्वशिखादिस्त्वचैव हि । गोमनुष्यादयः सर्वे ज्ञेया द्वाभ्यामपि क्षितौ ॥३॥

सूर्य और चन्द्रादि सभी ऊपर के पदार्थ, आँखों से प्रत्यक्ष होते हैं । अपने शिर में रहने वाली शिखा त्वगिन्द्रिय से ( हाथ से स्पर्श करने पर ) प्रत्यक्ष होती है और मनुष्य और पशु पक्ष्यादि सब उन दोनों इन्द्रियों से प्रत्यक्ष होते हैं ।

"वाय्वादिस्त्वनुमानेन देवेन्द्रादिश्च शब्दतः । ज्ञेयः श्रुतिपुराणदौ विद्यमानादिति स्थितिः
अतः सूर्यत्वजात्यादौ प्रमाणं चक्षुरादिकम् । वायुत्वादिकजातौ स्यादनुमानादिकं भुवि" ॥४॥

वायु और चक्षुरादीन्द्रिय अनुमान प्रमाण से और देवेन्द्रादिशास्त्रगोचर पदार्थ श्रुतिस्मृत्यादि प्रमाणों से विदित होते हैं। अतः सूर्यत्वचन्द्रत्व शिखात्वगोत्वमनुष्यत्ववायुत्वदेवेन्द्रत्वादि के और तत्तदभावों के रहने में चक्षुस्त्वगनुमानवेदादिशब्द ही प्रमाण होते हैं ।

वाय्वादीति—अत्रादि शब्देन चक्षुरादीन्द्रियं गृह्यते । इन्द्रियस्यातीन्द्रियत्वात् । देवेन्द्रादीति अत्रादिशब्देन लोकान्तरस्थपदार्थानां ग्रहणम् । यथा वाय्वादि सद्भावेऽनुमानादिकं प्रमाणं तथा वायुत्वादिजाति-तदभाव-सद्भावेऽपि अनुमानादिकमेव प्रमाणम् । इदानीं ब्राह्मणत्वादि वर्णानां जातित्वे प्रत्यक्षादिप्रमाणाभावः प्रदर्श्यते ।

ब्राह्मणत्वादयो वर्णा नैव प्रत्यक्षजातयः । न चानुमानशब्दादि-मानवेद्या हि जातयः ॥५॥
प्रत्यक्षादि-प्रमाणेन यदि ज्ञेया भवन्ति ते । ब्राह्मणोऽयं न वेत्यादि-संशयो नोपपद्यते ॥६॥
अक्ष्यादि-मान-दृष्टेऽर्थे यो धर्मो विचिकित्स्यते । जातित्वं तस्य केनापि नैवाङ्गीक्रियते क्वचित् ॥७
ज्ञाता जातिर्मनुष्यादौ प्रत्यक्षादि-प्रमाणतः । नानुन्मत्तेन केनापि कुत्रचिद्विचिकित्स्यते ॥८॥
तस्मात्सन्दिह्यमानेऽस्मिन् ब्राह्मणत्वादिके सदा । प्रत्यक्षगम्य-जातित्वं नैव धीमद्भिरिष्यते ॥९॥

ब्राह्मणत्वादि वर्ण न तो प्रत्यक्ष जातियाँ और न अनुमानादिगम्य जातियाँ हैं । यदि वे प्रत्यक्ष जातियाँ होती हैं तो अपरिचित व्यक्ति को॥ देखते ही यह किस वर्ण का है ऐसा सन्देह न ही हो सकता । प्रमाणों से ज्ञानवस्तुओं में जिस धर्मका सन्देह होता है वह कभी जाति न ही हो सकती । मनुष्यादि में जाति का ज्ञान सन्देहात्मक नहीं किन्तु प्रत्यक्ष निश्चयात्मक ही है । अतः वह जाति है।

संशयानुपपत्त्यैव प्रमात्वं ज्ञानहेतुभिः । न ग्राह्यमिति विद्वद्भिर्गौतमीयैर्यथोच्यते ॥ १० ॥
तथैव ब्राह्मणत्वादि संशयानुपपत्तितः । प्रत्यक्षगोचरं जातु भवितुं नार्हति क्वचित् ॥११॥
स्वतः प्राभाण्यवादेऽपि ब्राह्मत्वादयो नहि । प्रत्यक्षगोचरा यस्मादादावेव ह्यनिश्चिताः ॥१२॥
पिण्डस्य प्रथमाध्यक्षे किं वर्णोऽयं भवेदिति । संशयो जायते पश्चादाप्तवाक्याद्विनिश्चयः ॥१३॥
स्वतः प्रामाण्यवादित्वमप्येवं वर्णनिश्चयम् । स्वीकुर्वतां मते नष्टमिष्टं स्यात्परतो हि तत् ॥१४॥
भाट्टमीमांसक-प्रोक्ता वर्णप्रत्यक्षप्रक्रिया । लोकवेदविरुद्धत्वादग्रे निराकरिष्यते ॥१५॥

जैसे नैयायिक कहते हैं कि ज्ञाननिष्ठ प्रमात्व ज्ञानकरणों से गृहीत नहीं होता है उसमें हेतु यही है कि उत्पन्न ज्ञान में प्रमात्व का संशयः, वैसा ही वर्ण भी प्रत्यक्ष सिद्ध जातियाँ नहीं हैं । इसमें भी हेतु प्रत्यक्ष मनुष्य में वर्ण का सन्देह । स्वतः प्रामाण्य मानने वाले मीमांसक मत में भो वर्ण प्रत्यक्ष नहीं हो यकते । क्यों आदमी को देखते ही उनको वर्ण का सन्देह ही पहला होता है और बाद में किसी आप्त के यह ब्राह्मण है ऐसे वाक्य से मोमांसक उसको ब्राह्मण समझते हैं । इससे उनका स्वतः प्रामाण्यवाद भी नष्ट होकर परतः प्रामाण्यवाद हो सिद्ध होगा । भाट्ट मीमांसकों ने वर्णों की जो प्रत्यक्ष प्रक्रिया बताया था उसको हम आगे खण्डन करेंगे ।

गौतमीयैरिति = प्रमात्वं न स्वतो ग्राह्यं संशयानुपपत्तितः "इति न्यायसिद्धान्त-मुक्तावल्यामुक्तम् । नन्वस्तु परतः प्रामाण्यवादि-नैयायिकमते इयमापत्तिः, स्वतःप्रामाण्य-वादिमीमांसकमते नेयं भवितुमर्हतीति वदन्तं प्रत्युक्तम् "स्वतः प्रामाण्येति ।"

यदि गोत्वादिवद्वर्णो जातिश्चेत्सृष्टिकृन्मते । जातिव्यञ्जक भिन्नाङ्गमवश्यं स सृजेदपि ॥१६॥
भूतानि भूत लस्थानि चराणि स्थावराणि च । परस्परोपकृत्यै स जनयत्यादिकालतः ॥१७॥
भेदेन व्यवहाराय तानि सर्वेश्वरो मिथः । भिन्नावयवसंस्थानैर्निष्पादयति सर्वदा ॥१८॥
अन्यथा गोमनुष्याश्वगर्दभाजगजादिषु । न स्यात्परस्परं भेदव्यवहारो नृणामिह ॥१९॥
तदभावे तत्प्रयुक्ता विधयश्च निषेधकाः । वैदिका लौकिकाश्चैव भवेयुर्निष्प्रयोजनाः ॥२०॥
स्त्रीत्वपुंस्त्व-विवेकार्थं भिन्नाङ्गं प्रतिजात्यपि । सृजत्येवान्यथा न स्यात् स्त्रीपुंव्यक्तिविनिर्णयः२१
प्रतिजात्यप्यनन्तासु व्यक्तिष्वन्योन्य-भेदकम्। भिन्नरूपमनन्तं प्राक् सृष्टिकालादपोश्वरः ॥२२॥
अद्यपर्यन्तमुत्पाद्य सोऽग्रे चाप्रलयावधि । संज्ञाव्यावृत्तिसिद्ध्यर्थं सदा निष्पादयिष्यते ॥२३॥
अन्यथाऽयं ममाचार्यः पिता माता स्वसा च मे । भार्या सुता स्नुषेत्यादि व्यवहारो न संभवेत् ।२४।
तदभावे भवाचार्य-देवश्च पितृदैवतः । ऋतौ भार्या सदोपेया स्वसा सत्क्रियतामिति ॥२५॥
मातृदेवो भवाभ्यर्थि-देवो मा गाः परस्त्रियम् । इत्यादयश्च व्यर्थाः स्युः रूपमेकविधं यदि ॥२६ ॥

ब्राह्मणत्वादि चार वर्ग ईश्वर की दृष्टि में गोत्वादि का तरह यदि चार जातियाँ हों तब वह गोमहिषादि की तरह इन चार वर्णों का भी सूचित करने के लिए, चार अवयव भेदों को भी अवश्य पैदा किया होता । भगवान् चराचर प्राणि कोटि को परस्पर उपकार के भिन्न-२ अङ्गों से पैदा करते रहते हैं । यदि ऐसा नहीं किया होता तब यह गौः यह मनुष्य इत्यादि व्यवहार और गौः पूजनीया और गौर्नपदा स्प्रष्टव्या इत्यादि विधि और निषेध भी नहीं चल सकेंगे । तत्तज्जाति के स्त्री-पुरुष ज्ञान के लिये भी वह उनमें अङ्ग भेद का निर्माण करता है । गोमनुष्यादि जाति के अन्तर्गत जितने गोमनुष्यादि व्यक्तियाँ हैं उन सबमें भी वह भिन्न-२ रूप आदि सृष्टि से अब तक पैदा करता है और आगे भी ऐसा करता रहेगा जिससे यह हमारा गौः वह दूसरे का और ये हमारे आचार्य और पिता यह भार्या और वह भगिनी इत्यादि ज्ञान हो सके और उससे भी "आचार्य देवो भव पितृदेवो भव" और "ऋतौ भार्योपेया" "न परदारान् गच्छेत्" इत्यादि विधिनिषेधों का पालन हो सके । यदि सभी को एक ही प्रकार का रूप बनाया गया हो, तो वे सब विधि और निषेध व्यर्थ हो जाते थे ।

एवं लोके मनुष्येषु ब्राह्मणः क्षत्रियस्त्वसौ । वैश्यश्च शूद्र इत्यादि व्यवहारोऽपि वर्तते ॥२७॥
तत्प्रयुक्ताश्च श्रेष्ठत्वकनिष्ठत्वादिहष्टयः । पूज्यपूजकभावाश्च सन्ति शास्त्र-प्रचोदिताः ॥२८॥
यदि स व्यवहारोऽपि जन्मनेश्वरसम्मतः । तदा तत्सर्वनिर्वाहं सम्यक्कारयितुं प्रभुः ॥२९॥
प्रतिवर्णमसामान्य संस्थानं रूपमेव वा । अस्रक्ष्यत्तदभावेन न ते वर्णा हि जातयः ॥३०॥
न चैतद्युज्यते वक्तुं यज्जाति-व्यञ्जकाकृतेः । अनन्त-व्यक्तिरूपस्य सृष्टौ शक्तोऽत्र नाशकत्॥३१॥

ऐसा ही मनुष्यों में चार वर्णभेद और उसके अनुरूप पूज्यपूजक-भाव भी शास्त्रों में दोखता है । यदि वह वर्ण भेद भी ईश्वरदृष्टि में जन्म से हो तब ईश्वर प्रत्येक वर्ण में असाधारण ( खास ) अङ्गभेद या रूपभेद अवश्य उत्पन्न किया होता । ऐसा न करने का कारण वे वर्ण जन्म सिद्ध जातियाँ नहीं हैं । यहाँ ऐसा भी कहना उचित न हो कि अनन्तजाति भेदक अङ्गों की और अनन्त व्यक्ति भेदक रूपों की सृष्टि करने में समर्थ परमेश्वर केवल चार वर्णों में चार रूप भेद बनवाने में असमर्थ हो गया ।

एतावता ब्राह्मणत्वादयो गोत्वादिवत्प्रत्यक्षजातयो न भवन्तीत्युक्त्वा इदानीं [illegible]शार्षपतैलत्वादिवदानुमानिकजातयोऽपि न भवन्तीत्युच्यते ।

[illegible]लसार्षपादितैलत्वादिकजातिवत् । ब्राह्मणत्वादयो धर्मा ह्यानुमानिकजातयः ॥३२॥
[illegible]दिनिष्ठेन तत्तद्गन्धादिहेतुना । तैलत्वादिकजातिस्तु तस्मिन्नेवानुमीयते ॥३३॥
न [illegible] ब्राह्मणेष्वस्ति क्षत्रियादि-विलक्षणः । गन्धः स्वरः स्वभावो वा येन तज्जातिरूह्यताम्।३४॥

तिलतैलत्व और सार्षपतैलत्वादि जाति की तरह ये ब्राह्मणत्वादि वर्ण अनुमान प्रमाण गम्य जातियाँ भी नहीं हैं। क्योंकि तिल्ली के तेल में सरसों के तेल से विलक्षण गन्ध है। अतः उस गन्ध से यह तिल्ली का तेल है ऐसा अनुमान किया जाता है। वैसा ही ब्राह्मणों में क्षत्रियादि से विलक्षण गन्ध स्वर या स्वभाव नहीं है जिससे उनमें ब्राह्मणत्वादि जातिका अनुमान हो सके।

तिलतैलत्वादीनामानुमानिकजातित्वं वाचस्पतिमिश्रेणाप्युक्तं न्यायवार्तिकतात्पर्यटीकायां जातिसूत्र-व्याख्यानावसरे। एतेन कुमारिलभट्टोक्तं प्रत्युक्तं भवति। तेन हि तन्त्रवार्तिके इत्थमुक्तम्। "तस्मात्सत्यपि सारूप्ये यथा केनचिन्निमित्तेन स्त्रीपुंस्कोकिलादिविभागज्ञानं तथैव दर्शनस्मरणपारम्पर्यानुगृहीत-प्रत्यक्षगम्यानि ब्राह्मणत्वादीनीति। तत्र प्रत्यक्षीकृत विभिन्न धर्मनिमित्तेनैव स्त्रीपुंस्कोकिलादिविभागज्ञानं भवति वर्णविभागज्ञाने च तादृशनिमित्तं नास्तीति वैरूप्यम्। तदेवोक्तं" नचैवमित्यादिना।

शाब्दिक व्यवहारोऽपि जातिलिङ्गप्रयोजितः। प्रमाणं जातिसद्भावे नातल्लिङ्गस्तु कर्हिचित् ३५॥
गवादिव्यवहारो हि तत्तज्जाति-प्रभेदकैः। असाधारणसंस्थानैः प्रयुक्तत्वात्प्रमापकः ॥३६॥
गोत्रेण गृहनाम्ना वा तिर्यक्पुण्ड्रादिनाऽपि वा। स्कन्धे यज्ञोपवीतेन कल्पितेनाप्यनीश्वरात् ॥३७
जन्मब्राह्मणक्षत्रादिव्यवहारस्तु सर्वथा। अन्धविश्वाससङ्केत-मात्रेणैव प्रवर्तते ॥३८॥
तस्मादयं ब्राह्मणादौ क्षत्रियाद्यन्यवर्णतः। व्यावर्तकपृथग्जातिं नैव साधयितुं क्षमः ॥३९॥
किन्तु शिष्टत्व-दुष्टत्व-व्यवहारादिवन्नृषु। सोऽपि चात्मगुणैरेव भेदकोपाधिमूहयेत् ॥४०॥

गवादि विषयक शाब्दिकव्यवहार तो गोत्वादि द्योतक आकारादि भेद से किया जाता है। अतः वह गोत्वादि जाति साधक हो सकता है। ब्राह्मणादिविषयक शाब्दिक व्यवहार है तो कहीं गोत्र और गृहनाम से और ललाट में ऊर्ध्वतिर्यक् पुण्ड्रादि से भुज में जन्ने, से जो ईश्वर निर्मित नहीं, प्रायः किया जाता है। अतः वह ब्राह्मणों में क्षत्रियादिभिन्न जाति का साधक नहीं हो सकता किन्तु सज्जन दुर्जनादि की तरह यह ब्राह्मणादि-व्यवहार भी आत्मगुणों से उपाधि का साधक है।

शाब्दिकव्यवहारेति। अस्मिन् ग्रामे पूर्वं गवां महिषादीनां च बाहुल्यमासीदित्या कारको व्यवहारः। अयं गोत्वादिद्योतक-सास्नाद्यवयव-ज्ञानेनैव क्रियते। गवां महीषादीनां च समानाकारकत्वे तादृशशाब्दिकव्यवहारस्याप्यसंभवात्। अतः सः तत्तज्जातिबोधमपि जनयत्येव। एवं अस्मिन् ग्रामे बहवो ब्राह्मणाः वैश्याश्च पूर्वमासन्नित्यादिकः शाब्दिकव्यवहारोऽपि क्रियतो किन्तु अयं पारस्परिकावयवभेदेन न क्रियते किन्तु यज्ञो-



पवीतादि पुरुषकल्पितबाह्यचिन्हैरेव। अतः सजन्मसिद्ध-ब्राह्मणत्वादिजातिं साधयितुं-न शक्नोतीति भावः।

प्रमाणत्रयमेतद्धि प्रसिद्धं जातिसाधने। तस्यैव चेदसामर्थ्यं वर्णे जातित्वसाधने ॥४१॥
प्रत्यक्षाद्युपजीव्यानामर्थापत्त्यादि संज्ञिनाम्। किं वक्तव्यमसामर्थ्यं तत्र जातित्वसाधने ॥४२॥

प्रत्यक्ष अनुमान और शब्द ये तीन ही प्रमाण लोकप्रसिद्ध जाति को सिद्ध करने में समर्थ हैं। यहाँ इन तीन प्रमाणों से भी ब्राह्मणत्वादि में जातित्व की सिद्धि न हो हा सकती है तो अतिरिक्त अर्थापत्ति आदि प्रमाणों से कैसे वह सिद्ध हो सकता है। अभी तक जातिसाधक प्रमाणाभाव कहा गया और आगे लक्षणाभाव भी कहा जाता है।

यान्येव जातिसामान्य लक्षणानि मनीषिभिः। संप्रोक्तान्येकमप्यत्र न समन्वेति लक्षणम् ॥४३॥

शास्त्राकार अपने-अपने रुचि के अनुसार जाति के जितने लक्षण बताये थे उनमें से एक भी लक्षण ब्राह्मणत्वादि वर्णों में लगता नहीं है। अर्थात् किसी जाति-लक्षण का भी ये वर्ण लक्ष्य नहीं होते हैं। अत एव ये जातियाँ नहीं हैं।

दर्शितलक्षणानां मध्ये एकस्यापि वर्णा लक्ष्या न भवन्तीति क्रमशः अग्रे प्रदर्श्यते।

यथा दर्शनमात्रेण गोत्वादिः सर्वगोष्वपि। गौरयं गौरयं चेति समानाकारिकां धियम् ॥४४॥
न तथा बहुधा दृष्टमपि विप्रत्वमत्र हि। जनयत्येव विप्रेषु सर्वेष्वेकविधां धियम् ॥४५॥

जैसे सन्निकृष्ट गवादि में एक बार गोत्वादि का दर्शन होने पर वह सब गायों का नमूना विदित करवा देता है, वैसा ये वर्ण कितने बार ज्ञात होने पर भी सब विप्रों का नमूना दिखा नहीं सकते। यहाँ गौतमोक्त-जातिलक्षण का वर्ण अलक्ष्य बताये गये हैं।

यथा स्वाश्रयसंस्थानसकृद्दर्शनमात्रतः। गोत्वादिर्व्यंज्यते तद्वद्ब्राह्मण्यं व्यज्यते नहि ॥४६॥

गवादि के अवयवसन्निवेश का एक बार दर्शन करने पर सकल-गोनिष्ठजातिका ज्ञान हो जाता है वैसा ब्राह्मणादि के दर्शन से ब्राह्मणत्व का बोध नहीं होता है। यहाँ आकृति-व्यङ्ग्यत्वरूप लक्षण का वर्ण अलक्ष्य बताये गये।

विप्रादौ क्षत्रियादिभ्यो विभिन्नाकृत्यभावत। व्यावृत्त्यन्वितबुद्धेस्तज्जनकं सुतरां नहि ॥४७॥

ब्राह्मणादि में क्षत्रियादि से आकारतः भेद नहीं है। अतः तीसरा लक्षण का भी वर्ण लक्ष्य नहीं होते। यहाँ प्रशस्तपादोक्त-लक्षण का अलक्ष्यत्व वर्णों में बताया गया है।

अत एवाद्वितीयात्मसत्तां जातिं प्रजल्पताम्। न किञ्चिद्‍ब्राह्मणत्वादिव्यवहारप्रयोजकम् ॥४८॥

आकार में भेद न होने का कारण, वैयाकरण और वेदान्तियों का जाति लक्षण वर्णों में लगता नहीं है।

गवादौ महिषादिविलक्षणाकृतेः सत्वात्सास्नाद्यवच्छिन्नाद्वितीयात्मैव गोत्वादिजातिरिति तत्र वक्तुं शक्यते। ब्राह्मणत्वादिवर्णेषु तु परस्परविलक्षणाकृतेरभावात् अवच्छेदक भेदाभावेनावच्छेद्यस्याप्यभिन्नत्वेन भेदो दुर्ज्ञेय एवेति तल्लक्षणस्याप्यलक्ष्या एव वर्णाः।

ये सुसदृशसंस्थानं जातिं जल्पन्ति तन्मते। ब्राह्मणत्वादिकं नैवं जातिकोटौ पतिष्यति ॥४९॥

सुसदृशसंस्थान को ही जाति माननेवाले वैष्णव सिद्धान्त में ये चार वर्ण जातिकोटि में आते नहीं हैं।

अतद्व्यावृत्तिरूपातिरिक्तं किञ्चिन्न ये विदुः। तन्मते जातिवार्तैव नास्तीत्यत्र तु सा कुतः ॥५०॥

बौद्धमत के अनुसार सर्वप्रत्यक्षसिद्ध गोत्वादि भी जाति नहीं है तो ब्राह्मणत्वादि जाति कैसा होगा।

नित्यत्वे सत्यनेकेषु समवेतत्वलक्षणम्। नात्रेष्टं ब्राह्मणत्वादेर्जातित्वे ह्यप्रमाणतः ॥५१॥
जाति-मानविहीनेऽपि चेत्तल्लक्षणमात्रतः। तत्सिद्धौ पाचकत्वादेर्जातित्वं सम्प्रसज्यते ॥५२॥

ब्राह्मणत्वादि में जातित्व साधक प्रमाण यदि होता, तब इस लक्षण का समन्वय वर्णों में हो सकता था, किन्तु वह नहीं है। प्रमाण के बिना भी लक्षणमात्र से जाति सिद्ध होगी तो पाचकत्वादि भी इस लक्षण से जातियाँ हो जायेंगे।

प्रमाणेन वस्तुसिद्धौ परप्रत्यायनार्थं लक्षणमुच्यते न तु लक्षणमात्रेण वस्तुसिद्धिः। अतएव सांख्यैः "प्रमेयसिद्धिः प्रमाणाद्धि" इत्युच्यते। एतदर्थद्योतनार्थमेव "प्रमाणप्रमेयसंशयप्रयोजने"त्यादिन्यायसूत्रे प्रमाणस्य प्रथमत उल्लेखः।

एतेन सकृदाख्याननिर्ग्राह्याऽसर्वलिङ्गभाक्। ब्राह्मणत्वादिजातेर्हि प्रत्युक्तं भाष्यलक्षणम् ॥५३॥

इससे महाभाष्यकार पतञ्जलि का बताया हुआ जो ब्राह्मणत्वादि जातिलक्षण है उसका भी समाधान हो जाता है।

एतेन = प्रमाणाभावेन लक्षणसत्वेऽपि लक्ष्यासिद्धेः श्लोकनिर्दिष्टलक्षणं प्रत्युक्तमिति भावः। एतावन्मात्रमेव न किन्तु तल्लक्षणेऽतिव्याप्तिरव्याप्तिश्चेति दोषद्वयसत्वेन तल्लक्षणमपि न सम्यगित्यग्रे उच्यते।

तद्धि गोत्रगृहाख्यादावतिव्याप्तं तु लक्षणम्। अव्याप्तं तदसम्बन्धि-जने तज्जातिमत्यपि ॥५४॥



गोत्र और घर के नामों (जो तैलिङ्गदेश में प्रसिद्ध हैं) में उस लक्षण की अतिव्याप्ति होती है। अर्थात् यह वशिष्ट गोत्र है ऐसा एक बार कहने पर, उसके सब पुत्रपौत्रादि में और पितृपितामहादि में गोत्र न बताने पर भी उस गोत्र का ग्रहण (बोध) हो जाता है किन्तु वह गोत्र जाति नहीं है। एवं इसका गृहनाम "कोलाचल" ऐसा एक बार बोलने पर प्रसिद्ध मल्लिनाथ के पुत्रपौत्रादि में और पितृपितामहादि में भी उस नाम का बोध हो जाता है किन्तु वह भी जाति नहीं है। अतः अलक्ष्य गोत्रादि में जाति लक्षण के रहने से यहाँ अतिव्याप्ति नामक लक्षण दोष है। और दूसरे प्रान्त के ब्राह्मणादि में वह लक्षण अव्याप्त भी है। भाव यह है कि यह ब्राह्मण है ऐसा एक बार कहने पर उसके सम्बन्धि (बन्धु) यों को ब्राह्मण नहीं कहने पर भी ब्राह्मणत्व का बोध हो जाता है किन्तु दूसरे प्रान्त के ब्राह्मणों में (जहाँ विवाह भोजनादि सम्बन्ध भी निषिद्ध है) ब्राह्मणत्व का बोध नहीं हो सकता। अतः उस लक्षण की अन्य प्रान्त के ब्राह्मणादि में और असम्बन्धि स्वप्रान्त ब्राह्मणों में अव्याप्ति है।

एवं कस्यापि मानस्य लक्षणस्यापि कस्यचित्। मर्त्येष्ववान्तरो भेदो विषयत्वं न गच्छति ॥५५॥
तस्माद्वर्णेषु जातित्वसाधका भावहेतुना। ब्राह्मणत्वादयो वर्णा भवेयु नैव जातयः ॥५६॥

जातिसाधक मान का और लक्षण का भी मनुष्यों में अवान्तर विभाग विषय नहीं है। अतः वर्णों में जातित्व साधक प्रमाण के न रहने से वे जातियाँ नहीं हैं।

गोत्वाश्वत्वमनुष्यत्वस्त्रीत्वपुंस्त्वादयो भुवि। जातिलक्षणमानाभ्यां सिद्धत्वादेव जातयः ॥५७॥

गोत्व और अश्वत्वादि जितने व्यावर्तक धर्म है वे जाति-लक्षण और जातिसाधक प्रमाणों के विषय होते हैं। अतः वे जातियाँ हैं।

भारतीयत्वबौद्धत्वमुसल्मानत्वजैनताः। क्रैस्तवत्वार्यसङ्घित्व शिक्खत्वादय आत्मसु ॥५८॥
द्विजत्वब्राह्मणत्वादिधर्माः सर्वेह्युपाधयः जातिलक्षणमानाभ्यां शून्यत्वात्ते ह्यजातयः ॥५९॥

भारतीयत्व और बौद्धत्वादि, द्विजत्व और ब्राह्मणत्वादि जितने आत्मनिष्ठ धर्म हैं वे सब जातियाँ नहीं किन्तु उपाधियाँ हैं।

आनेजात्यन्तरत्वेन परिणामः कदापि हि। क्वापि केनापि वा कर्तुमशक्यः पृथिवीतले ॥६०॥
नागादयः क्रियन्ते हि केनाप्यश्वादयो भुवि। नानुन्मत्तेन वा तेषामश्वत्वं स्वीकरिष्यते ॥६१॥
गाग्यश्वायां मदोन्मत्ताः कदापि गोगजादयः। प्रवर्तन्ते प्रसङ्गेऽपि मैथुनादिक्रियादिषु ॥६२॥
स्वजातिनियमं त्यक्त्वा प्रवृत्तावपि कुत्रचित्। गर्भादिधारणं नैव दृश्यते श्रूयतेऽपि वा ॥६३॥

यदि तन्नियमस्यापि बाधकं दृश्यते क्वचित्। स्वभिन्नजातिवीर्येण गर्भमन्याऽपि धारयेत् ॥६४॥
तदाऽपि तत्प्रसूतस्य जातिर्नोत्पादकान्वयात्। किन्तु निश्चीयते स्वीयशरीराकृतिभेदत: ॥६५॥
अश्वायां गर्दभादश्वतरो नाम प्रजायताम्। किन्तु तज्जातिराकृत्या भिन्नाऽध्यक्षेण गृह्यते ॥६६॥
तज्जातिपिण्डं प्रसमीक्ष्य चैकदा कालान्तरे दूरविदेशगं नर: ।
पिण्डान्तरं वीक्ष्य पुनर्न संशयं प्राप्नोतिकोऽसाविति जातिगोचरम् ॥ ६७ ॥

एक जाति को दूसरी जाति कोई भी बनवा नहीं सकता, भेड़, बकरियाँ कभी भी अश्वादि बनाई नहीं जाती। यदि कोई पागल "मैं बकरी को, घोडा बना दिया" कह दें तो भी अच्छा आदमी उसको मानेगा नहीं। बैल आदि भी घोड़ों में कभी प्रवृत्त नहीं होते। यदि प्रवृत्त हों, तो भी गर्भधारण नहीं होता। यद्यपि उक्त नियम का खच्चर में बाध देखा देखा जाता है क्योंकि वह गधा के वीर्य से घोड़ी में पैदा होता है, तथापि उसका अश्वतरत्व (खच्चरत्व) जाति प्रत्यक्षप्रमाणसे ज्ञात होती है। एक बार एक देश में खच्चर को समझने के बाद कालान्तर में और भिन्न देश में दूसरे खच्चर को देखने पर "यह खच्चर है या नहीं" ऐसा सन्देह नहीं होता किन्तु यह खच्चर ही है ऐसा निश्चय हो जाता है। सभी जातियाँ इसी प्रकार की होती हैं।

तस्माद्गवाश्वमार्जाल मर्त्यं स्त्रीपुरुषादय:। अन्योन्यभिन्नजातीया: संस्थानादि प्रभेदत: ॥६८॥
किन्तु मानवजात्यन्तर्गतेषु क्रैस्तवादिषु। द्विजादिषु च पूर्वोक्ताद्वैपरीत्यं प्रदृश्यते ॥६९॥

इसलिए गौ अश्व और स्त्री पुरुषादि परस्पर भिन्न जाति के हैं। किन्तु मानव जाति के अन्तर्गत क्रैस्तवादि और द्विजत्वादि में आकृति भेद भी नहीं और आपस में परस्पर बदल भी जाते हैं।

भारतीयजना बौद्धा जाता बुद्ध-प्रभावत:। पुनस्ते शङ्कराचार्यादिचातुर्याद्धारता अपि ॥७०॥
मुसल्मानास्ततस्तेऽपि संजाता: क्रैस्तवादय:। कियन्तोऽद्यापि विप्राद्या: क्रियन्ते क्रैस्तवादय: ।७१
इतिहासपुराणेषु ब्राह्मणक्षत्रियादय:। मिथ: परिणतत्वेन श्रूयन्ते बहव: पुरा ॥७२॥
शिष्टा स्तत्क्रैस्तवत्वादि स्वीकुर्वन्त्यपि सर्वदा। जातित्वे च द्विजत्वादे: परिणाम: कथं भवेत्।७३।

भारतीय कभी बुद्ध के प्रभाव से बौद्ध हो गये थे और वे फिर शंकराचार्यादि के चातुर्य से आर्य हो गये थे। वे ही दूसरे समय में मुसलमान और क्रैस्तव भी हो गये और अब भी कितने ही ब्राह्मण आदि वर्ण क्रैस्तव बना दिये जाते हैं। महाभारत आदि इतिहास और पुराणों में यह सुना जाता है कि क्षत्रियादिवर्ण अपने गुणकर्मों के प्रभाव से ब्राह्मण हो गये और ब्राह्मण भी स्वाभाविक गुणकर्मों से क्षत्रियादि भी बन गये थे। इन



सब परिणामों को शिष्ट लोग भी मान लेते हैं। यदि वे जातियाँ हो तो वैसा परिणाम कभी न हो सकता।

क्वचिद्विप्रादितो जात: क्षत्रियादिषु योनिषु। उत्पादकान्वयाद्भिन्नवर्णो निर्णीयते स्मृतौ ॥७४॥
एवं विप्रादियोषित्सु जातस्य क्षत्रियादिभि:। ततोऽपिभिन्नवर्णत्वं विनाऽप्याकृतिभिन्नताम्॥७५॥
ब्राह्मणात्क्षत्रकन्यायामुत्पन्नो ब्राह्मण: क्वचित्। क्वचिद्वंशक्षये प्राप्ते क्षत्रियोऽपि तथाविध:।७६॥
मत्स्यगन्धी क्षत्रकन्या ब्राह्मणस्तु पराशर:। समुत्पन्नस्तयोर्व्यासो ब्राह्मण: समभूद्भुवि ॥७७॥
व्यासेन तेन सञ्जातो धृतराष्ट्रस्तु पार्थिव:। अम्बिकायां महाराजकन्यायामिति गीयते ॥७८॥
नह्यश्वजातिनाशस्य देशकालानुसारत:। प्रसक्तावश्वकार्यार्थं गवादेस्तत्वमिष्यते ॥७९॥
सवर्णेभ्य: सवर्णासु जातानां व्यभिचारत:। नेष्यते हि सवर्णत्वं किन्तु कुण्डादिवर्णता॥८०॥
तत्रापि चौर्यतो जन्ये जातिरन्या निगद्यते। सर्ववेद्यत्वरूपेण जन्ये जातिरथापरा ॥८१॥
एतादृश्यव्यवस्था हि जाते: क्वापि न दृश्यते। सा सर्वत्रैकरूपेण गृह्यतेऽक्ष्यादिमानत: ॥८२॥
वस्तुग्राहकमानेन तत्तद्वस्तुषु जातय:। ज्ञायन्ते न तु शास्त्रोक्तिबलात्कल्प्या भवन्ति हि ॥८३॥

कहीं विप्रादि से क्षत्रियादिस्त्रियों में पैदा होने वाले इन दोनों से भिन्न जाति (अनुलोमसंकरजाति) स्मृतियों में कहे गये हैं। एवं क्षत्रियादि स्त्रियों में पैदा होने वाले प्रतिलोमजाति कही गयी हैं। कहीं ब्राह्मण से (पराशर) क्षत्रिय कान्या में (मत्स्यगन्धि) पैदा हुआ व्यास ब्राह्मण माने गये और उसी युग में नष्ट होने वाले क्षत्रिय वंश को रक्षा करने के लिए ब्राह्मण से (व्यास) अम्बिका में (क्षत्रियकन्या) उत्पन्न धृतराष्ट्रादि क्षत्रिय माने गये हैं। लोक में ऐसी बात प्रसिद्ध जातियों में कहीं भी देखी नहीं जाती, कालानुसार अश्वजाति का नाश हो जायगा तो भी गोजाति अश्वजाति मानी नहीं जाती। और ब्राह्मणादि पुरुषों से ब्राह्मणादि स्त्रियों में भी चोरी (व्यभिचार) से पैदा होने वाले इन दोनों से दूसरी जाति और प्रकाश रूप से रखवाली के द्वारा उन दोनों से पैदा होने वाले तीसरी प्रकार की जाति बताये गये हैं। ऐसा अव्यवस्था प्रसिद्ध जातियों में कहीं नहीं जो मनुष्य जाति में ही मनमानी से बहुत प्रकार की मानी गयी है।

संस्कारादिवशात्प्राप्यं द्विजत्वं तदभावत:। व्रात्यत्वमिति सिद्धान्ते जातिवादो न सेत्स्यति॥८४॥
वर्णाश्रमोभये तुल्य: संस्कारात्तु समुद्भव:। तत्राश्रमो न जातिश्चेद्वर्णो जाति: कथं भवेत् ॥८५॥
संस्कारतो द्विजत्वस्य सिद्धिश्चेत्तदवान्तर:। ब्राह्मणत्वादिको धर्मो जन्मसिद्धो भवेत्कथम् ॥८६॥
पश्चाद्व्यापकधर्मस्य सिद्धि:संस्कारतो यदि। व्याप्यधर्मस्य संसिद्धिस्तत्पूर्वं जन्मना कथम्।८७॥

उपनयनादि संस्कार से द्विजत्व आता है और संस्कार न होने पर व्रात्यत्व ही आदमी में रह जाता है। ऐसा सिद्धान्त जिनका है उनके मत

में जन्म सिद्ध जातिवाद नहीं हो सकता। वर्ण और आश्रम ये दोनों संस्कार के बाद ही शुरू होते हैं। इनमें आश्रम जाति नहीं है तो वर्ण जाति कैसा होगा। द्विजत्व संस्कार से सिद्ध होता है तो उसके अवान्तर ब्राह्मणत्वादि वर्ण जन्मसिद्ध कैसे होंगे। व्यापक धर्म की सिद्धि संस्कार से बाद में ही होती है तो व्याप्यधर्म की सिद्धि उससे पहले ही जन्म से कैसे होगी।

## श्रौतप्रकरणं नाम पञ्चमोऽध्यायः

ननु लोकप्रसिद्धार्थ-सिद्धिर्लौकिकमानतः। तदभावे न तत्सिद्धिर्नत्वेतच्छ्रौत-वस्तुनः ॥१॥
वैदिकस्य पदार्थस्य सिध्यसिद्धी पुनर्भुवि। वक्तव्ये वेदवाक्यानां सदसद्भावमात्रतः ॥२॥
ब्राह्मणत्वादयो वर्णा ऋत्विगादिपदार्थवत्। वेदशास्त्र प्रसिद्धा हि लौकिका न गवादिवत् ॥३॥
तस्माद्वर्णेषु जातित्वं तदभावोऽपि वा स्फुटम्। साध्यतां वेदशास्त्रोक्ति प्रमाणेनेति चेच्छृणु ॥४॥

यदि कोई कहे कि लोक प्रसिद्ध वस्तुओं की सिद्धि लौकिक प्रमाणों के रहने पर ही होगी नहीं तो नहीं। यह बात वैदिक पदार्थों के लिये नहीं। इनकी सिद्धि या असिद्ध वैदवाक्यों से ही होती है। ब्राह्मणत्वादि वर्ण तो ऋत्विगादि की तरह शास्त्र प्रसिद्ध पदार्थ हैं न कि गाय भैंस आदि की तरह लोक प्रसिद्ध। अतः उन वर्णों में जातित्व या तदभाव, वेदवाक्यों के द्वारा ही सिद्ध करना चाहिये। इस प्रश्न का उत्तर वैदवाक्यों के द्वारा यहाँ दिया जाता है।

लोके पदार्था द्विविधाः सन्ति, लौकिका वैदिकाश्चेति। तत्र ये स्वराष्ट्रे परराष्ट्रेषु चोपलभ्यन्तेऽथ च वैदिकैरवदिकै रास्तिकैर्नास्तिकैश्च तुल्यरूपेण समान-कार्यार्थमुपयुज्यन्ते, ते घटपट-गोगजादयो लौकिकपादार्थाः कथ्यन्ते। न हि घटपटादयो गोगजादयश्च वैदिकैरन्यकार्यार्थमवैदिकेस्तदन्यकार्यार्थमुपयुज्यन्ते। ये च स्वकीय-भारतराष्ट्र एव, तत्रापि वेदादिशास्त्र-प्रामाण्यमङ्गीकुर्वतामेव समुदाये उपलभ्यन्ते, तैरैव च तदुचितकार्यानुष्ठान-प्रसङ्गे, देशकालसङ्कीर्तनात्मकसङ्कल्पादौ स्मर्यन्ते, ते वर्णा आश्रमाश्च वैदिकपदार्था इत्युच्यन्ते। लौकिक पदार्थानां स्वरूप-स्थित्यादिनिर्णये लोकव्यवहार एव प्रमाणम्। वैदिकपदार्थस्वरूपस्थित्यादिनिर्णये च वेदशास्त्राण्येव प्रमाणम्। एतद्विषयविस्तारश्चाग्रेऽपि सप्रमाणं वक्ष्यते।

धर्मबोधकवेदस्तु वर्णाश्रमचतुष्टयम्। बोधयन्नपि जातित्वं नास्य बोधयति क्वचित् ॥५॥
श्रुतिप्रोक्तपदार्थत्वाद्वर्णानां श्रुतिगोचरैः। स्वरूपादिकमप्यर्थवादैर्निश्चीयते बुधैः ॥६॥
यथा श्रुत्युक्तयागोपयोगिवस्तुविनिर्णयः। श्रौतार्थवादवाक्यैश्च मीमांसादर्शनादिषु ॥७॥



कृतो यववराहादिशब्दानामर्थनिर्णयः। यत्राप्यन्यौषधिम्लाने मोदमानस्त्वनन्त्यमी ॥८॥
इत्याद्यर्थोक्तिभिर्दीर्घशूकादौ क्रियते बुधैः। त्यक्त्वा म्लेच्छ प्रसद्धार्थं प्रियङ्ग्वादिकमार्यकैः ॥९॥
तथैव ब्राह्मणत्वादिवर्णानां श्रौतकर्मसु। ऋत्विगादिवदाम्नानान्निर्णयोऽप्यर्थवादतः ॥१०॥

धर्म और अधर्म का बोधन करने वाला वेद चार वर्णों और चार आश्रमों का अस्तित्व और उनका कर्तव्य भी बताता है, न कि उनमें जातित्व। वेदोक्त पदार्थ होने का कारण चार वर्णों का स्वरूप और उनको स्थिति भी वेदवाक्यों से ही निश्चित किये जाते हैं। जैसे श्रौत यागोपयोगि यव और वराहादि शब्दों का अर्थ, उस प्रकरण में रहने वाले अर्थवाद वाक्यों के द्वारा ही मीमांसादर्शन में निश्चित किया गया है, वैसा ही यागोपयोगि चार वर्णों का भी निर्णय किया जायगा।

स्वरूपादिकमिति। आदिशब्देनात्र स्थितिर्गृह्यते। स्वरूपं = ब्राह्मणत्वादिकं जातिरूपाधिर्वेति। स्थितिः = कस्मिन्नाश्रमे वर्णानां स्थितिरिति। वक्ष्यते चाग्रे गृहस्था-श्रमे एव वर्णा न तदन्याश्रमेष्विति। यववराहादीति (८) "यवमयश्चरुर्भवति" इति विधिसन्निधौ "यत्रान्या ओषधयो म्लायन्ते अथैते मोदमाना इवोत्तिष्ठन्ति" (शत० ब्रा० ३.६.१.१०) इत्यर्थवादः श्रूयते। अन्यौषधिम्लानेऽपि मोदमानत्वं दीर्घशूके एव प्रत्यक्षतो दृश्यते न तु म्लेच्छप्रसिद्धे प्रियङ्गौ। अतोऽत्र वैदिकार्थवादबलेन दीर्घशूक एव यव-शब्दार्थत्वेन गृहीतो न तु प्रियङ्गुः। एवं "वाराही उपानहावुपमुञ्चत" इति विधौ श्रूयमाण वराहशब्दस्यापि "वराहं गावोऽनुधावन्ती"त्यर्थवादबलेन सूकर एव अर्थत्वेन गृहीतो न तु म्लेच्छप्रसिद्धः कृष्णशकुनिः। अयं च विषयो मीमांसादर्शने (अ० १. पा० ३ अधि० ५) दर्शितः। उक्तं च कुमारिलेन "शास्त्रस्था प्रतिपत्तिर्या सैवात्र ज्यायसी भवेत्। धर्मस्य तन्निमित्तत्वात्ससाधनफलात्मनः, गौणो वा यदि वा मुख्यो वेदेनाऽऽश्रीयते हि यः। स धर्मसाधनत्वेन पदार्थोऽध्यवसीयते इति। यथा वा "ता आप ऐक्षन्त बह्व्यः स्याम प्रजायेमहीति ता अन्नमसृजन्त" (छ० ३०६.२.४) इत्यत्रान्नशब्दस्य प्रकरणान्तरश्रुतवाक्यशेषानुसारेण पृथिवीपरत्वमुक्तं ब्रह्मसूत्रभाष्ये (अ० २. पा० ३. सू० १२) वाक्यशेषो हि प्रकरणान्तरे श्रूयते यत्कृष्णं तदन्नमिति। तत्र कृष्णत्वं पृथिव्यामेवोपलभ्यते न तु प्रसिद्धान्ने। अतः तस्य प्रसिद्धार्थं परित्यागेनार्थान्तरत्वमाश्रितम्। एवं प्रकृतवर्णविषयेऽपि वाक्यशेषश्रुतमुखवीयत्वादिकं यत्र यत्र दृश्यते तस्यैव ब्राह्मणत्वादिकमपीति शास्त्रमात्रनिर्भरैरङ्गीकार्यम्। जन्मजातिप्रथा च रागद्वेषनिबन्धनैव। ते च वाक्यशेषा अत्रैव वक्ष्यन्तेऽनुपदमेव।

क्षत्रियो ब्राह्मणेनैव संश्यति ब्राह्मणः पुनः। संश्यति क्षत्रियेणैव तस्मात्संयोगतस्तयोः ॥११॥
राजन्यवान्ब्राह्मणोऽन्यमत्येति ब्राह्मणं तथा। सब्राह्मणोऽपि राजन्योऽत्येति राजन्यमन्यकम् ॥१२॥

इत्युक्तं ब्राह्मणे कृष्णयजुषस्तैत्तिरीयके। संहितान्तर्गते स्पष्टं पञ्चमाद्यप्रपाठके ॥१३॥

कृष्ण यजुर्वेद की तैत्तिरीय संहिता में बताया गया है कि ब्राह्मण से ही क्षत्रिय स्वकार्य कुशल होता है और क्षत्रिय से ही ब्राह्मण भी स्वकार्य तत्पर होता है। अत: क्षत्रिय से युक्त ब्राह्मण दूसरे ब्राह्मण को और ब्राह्मण से युक्त क्षत्रिय दूसरे क्षत्रियको पराजित करता है।

तैत्तिरीयसंहितान्तर्गतब्राह्मणे हि श्रूयते "ब्रह्मणैव क्षत्रं संश्यति क्षत्रेण ब्रह्म, तस्माद् ब्राह्मणो राजन्यवानत्यन्यं ब्राह्मणं, तस्माद्राजन्योब्राह्मणवानत्यन्यं राजन्यम्" ( ५.१.१० ) इति। तदर्थश्च ब्रह्मणैव = ब्राह्मणेनैव बुद्धिशक्तिमता, क्षत्रं = क्षत्रियो वर्ण: देहशक्त्यादिमान्, संश्यति = तीक्ष्णीक्रियते, प्रजापालनादि स्वकर्तव्यं सम्यगुपदिष्ट-स्तत्रोत्साही क्रियते। एवं क्षत्रेण = शरीरबलादिमता क्षत्रियवर्णेन ब्रह्म = बुद्धिबलादि-मान् ब्राह्मणो वर्ण: स्वकर्तव्यनित्यनैमित्तिकादिकर्मसु सम्यङ्नियन्त्रित: निवारितबहि रुपद्रवो वा सन्, संश्यति = तीक्ष्णीक्रियते = प्रत्यवायादिदोषरहित: क्रियते। दोषरहितो हि ब्राह्मण: प्रत्युत्पन्नमति: सन् प्रजापालनतत्परं क्षत्रियवर्णं सम्यगुपदेष्टुमर्हति। तादृश-नियन्त्रणाभावे उपद्रवग्रस्तत्वे वा कदाचिदालस्यादिवशान्नित्यकर्मसु प्रमादी सन् स्वकर्तव्यो-पदेशेऽपि प्रमादमृच्छेत्। एवं सामान्यत: ब्राह्मणक्षत्रिययो: स्वस्वरूपानुसारि-परस्परोप-कार्योपकारकभावमुक्त्वा तमर्थं राजपुरोहितविषयेऽपि निगमयति तस्मादित्यादिना। यस्माद्ब्राह्मणवर्ण: बुद्धिशक्त्यादियुक्त: क्षत्रियवर्णश्च देहशक्त्यादियुक्तो भवति, तस्मात्-पुरोहितो ब्राह्मण: राज्ञा क्षत्रियेण युक्त: सन्, अन्यं = तादृशनियन्तृक्षत्रियराजरहितं ब्राह्मणं अत्येति पराजयते। एवं राजविषयेऽपि ज्ञातव्यम्। जनेषु क्षत्रियस्य बलीयस्त्व-मुक्तं काण्वशतपथे "विशो वा क्षत्रियो बलीयान् ( ५.३.४ ) इति।

तेनेदं ज्ञायते सम्यग् बुद्धिदेहबलान्वितौ। सहजैस्तत्समानाधिकरणात्मगुणैर्युतौ ॥१४॥
ब्राह्मणक्षत्रियौ स्यातां यस्य कस्यचिदात्मजौ। यत्र कुत्रचिदुत्पन्नौ कुले वर्णचतुष्टये ॥१५॥

इससे यह विदित होता है कि बुद्धि बल और सहजशमादिगुणों से युक्त पुरुष ही ब्राह्मण और देहबल और सहज-शौर्यधैर्यादि युक्त पुरुष ही क्षत्रिय होता है, चाहे वे किसी कुल में किसी के भी पुत्र हों।

बुद्ध्याद्यात्मगुणैर्युक्ता: केचिच्छारीरकैर्बलै:। सर्ववर्णेषु जायन्ते ऋणसम्बन्धहेतुना ॥१६॥
प्रोक्तं पद्मपुराणादौ ऋणदाता भवेत्सुत:। तद्ग्रहीता पिता चेति तच्चेत्थ्नैव निर्वाततम् ॥१७॥

बुद्धिबल शमदमादिगुण वाले और शरीरबल और शौर्यधैर्यादि वाले सभी वर्णों में ऋणसम्बन्ध हेतु से उत्पन्न होते हैं। पद्म पुराण में बताया गया है कि पूर्व जन्म में कोई किसी से ऋण लेकर उसे फिर लौटाया नहीं हो,



वे दोनों इस जन्म में पिता और पुत्र होते हैं। उनमें जो ऋण लिया था वह पिता और ऋण दाता पुत्र होता है।

ऋण सम्बन्धेति। पाद्मे भूमिखण्डे द्वादशाध्याये उक्तम् "ऋणसम्बन्धिनं पुत्रं प्रवक्ष्यामि तवाग्रत:। ऋणं यस्य गृहीत्वा य: प्रयाति मरणं किल॥ अर्थदाता सुतो भूत्वा भ्राता चाथ पिता प्रिया। मित्ररूपेण वर्तेत अतिदुष्ट: सदैव स:॥ गृहद्रव्यं बलाद्भुङ्क्ते वार्यमाण: स कुप्यति। पितरं मातरं चैव कुत्सते च दिने दिने॥ रिपुं पुत्रं प्रवक्ष्यामि तवाग्रे द्विजपुङ्गव बाल्ये वयसि सम्प्राप्ते रिपुत्वे वर्तते सदा॥ पितरं मातरं चैव क्रीड-मानो हि ताडयेत्। ताडयित्वा प्रयात्येव प्रहस्यैव पुन: पुन:॥ पितरं मारयित्वा च मातरं च तत: पुन: प्रयात्येव स दुष्टात्मा पूर्ववैरानुभावत:॥ अथात: सम्प्रवक्ष्यामि यस्माल्लभ्यं भवेत्प्रियम्। जातमात्र: प्रियं कुर्याद्बाल्ये लालनक्रीडनै:॥ भक्त्या सन्तोषयेन्नित्यं तावुभौ परितोषयेत्। स्नेहेन वचसा चैव प्रियसंभाषणेन च॥ तवाग्रे कथितं सर्वं पुत्राणां गतिरी-दृशी। यथा पुत्रस्तथा भार्या पिता-माताऽथ बान्धवा:॥ भृत्याश्चान्ये समाख्याता: पशवस्तुरगास्तथा। गजा महिष्यो दासाश्च ऋणसम्बन्धिनस्त्वमी ( श्लो० १-१० ) इति। अत्र भ्रातृमित्रबन्धुत्वादि सम्बन्धस्यापि ऋणनिमित्तकत्वमुक्तम् किन्तु पितृपालित-त्वंतत्सर्वस्वापहरणं च पुत्रे एव लोके प्रायो दृश्यत इति पुत्रोऽवश्यं ऋणनिमित्तक एवेति निश्चीयते।

शूद्रादिर्ब्राह्मणादेर्वा शूद्रादेर्ब्राह्मणादिक:। मृतश्चेदृणमादाय पिता जन्मान्तरे भवेत् ॥१८॥
ऋणानुबन्धरूपेण पशुपत्नीसुतादय:। ऋणक्षये प्रणश्येयुरित्येषा नीतिशास्त्रगी: ॥१९॥
न ह्ययं त्वर्थवादो वा सुखप्रत्यायिका कथा। किन्तु तत्कृत-भोगार्थमिदमीश्वरशासनम् ॥२०॥

ब्राह्मणादि वर्णों से शूद्रादि या शूद्रादि वर्णों से ब्रह्मणादि गत जन्म में ऋण लेकर मर गये हों तो वे जन्मान्तर में पिता पुत्रादि सम्बन्ध में आ जाते हैं। नीतिशास्त्र में भी कहा गया है कि पिता माता और पति पत्नी पुत्रादि सब, ऋण-सम्बन्ध से ही एक घर में एकत्रित होते हैं। और उस ऋण सम्बन्ध का नाश होने पर वे अलग होते हैं। ये सब वाक्य अर्थवाद न ही और सुगमता से विषय बोध कराने वाली गाथा भी नहीं किन्तु प्राणिकृत कर्मोंका भोग कराने वाला ईश्वर शासन हैं।

अर्थवाद: "वायुर्वाक्षेपिष्ठा देवता" इत्यादि। सुखप्रत्यायिका कथा = उपनिषत्-प्रोक्तो वागादीन्द्रियकलह:। तयोश्च यथाश्रुतार्थे तात्पर्यमेव न संभवति। ऋणसम्बन्ध-हेतुकजन्मान्तर-बोधकवाक्यानि च प्राणिकृत कर्मफल भोगार्थमीश्वरशासनान्येव। अतो मुख्यार्थकानि।

पिता पुत्रं ह्यतिप्रेम्णा दूषितस्ताडितोऽपि वा। भोजयन् पालयँश्चापि प्रागृणं क्षपयिष्यति ॥२१॥

ब्राह्मण: क्षत्रियागारे क्षत्रियो विप्रवेश्मनि । प्रदर्शितनिमित्तेन जातौ स्यातां पुनर्भवे ॥२२॥
ब्राह्मण: पूर्वसंस्कारात्क्षत्रियस्य सुतोऽपि सन् । शमादिगुणशील: स्यात्तपोध्यानपरायण: ।२३॥
एवं प्राक्तनसंस्काराद्राजन्यो ब्राह्मणात्मज: । देहशक्तिप्रधान: सन् क्षात्रं कर्म समाश्रयेत् ॥२४॥

पूर्व जन्म में ऋणी होने के कारण पिता पुत्र को बड़े प्रेम से देखता है और भोजनादि के द्वारा पालन पोषण करता है और अन्त में अपना सर्वस्व पुत्र को देकर पूर्व ऋण चुकाता है। पूर्व जन्म में ब्राह्मण भी, ऋण निमित्त से दूसरे जन्म में क्षत्रयादि घरों में पैदा होते हैं और पूर्व संस्कार से वे क्षत्रियादि घरों में भी शमदमादिगुणशील और वेदविद्या में निपुण होते हैं। एवं पूर्व जन्म में क्षत्रिय भी ऋण निमित्त से दूसरे जन्म में ब्राह्मणादि घरों में उत्पन्न होते हैं और पूर्वसंस्कार के कारण वे ब्राह्मणादि घरों में भी शौर्यधर्यादि वाले होते हैं।

लोकेऽपि तादृशाभ्यां हि परराजपराजय: । स्वकीयकार्यसिद्धिश्च सम्यक् सम्पाद्यतेऽञ्जसा ।२५॥
स हि लोकप्रसिद्धार्थो वेदेनापि प्रदर्शित: । जातिवादिमते सोऽर्थ: कथं संगच्छते भुवि ॥२६॥

लोक में भी ऐसे लोगों के द्वारा ही शत्रु का पराजय और स्वकार्यपूर्ति की जाती हैं वही लोकप्रसिद्ध विषय दर्शित वेदवाक्यों में बताया गया है।

बलिनो बुद्धिहीनाश्च जायन्ते ब्राह्मणेष्वपि। राजन्यान्वयसंभूता बहव: सूक्ष्मबुद्धय: ॥२७॥
तादृग्राजन्यवान्विप्रो नातीयादन्यबाडबम् । किन्तु राजन्यमेवान्यमिति श्रुतेरपार्थता ॥२८॥

देहबली और बुद्धिहीन पुरुष भी ब्राह्मणों के घरों में पैदा होते हैं और क्षत्रिय कुलोत्पन्न भी सूक्ष्मबुद्धिवाले होते हैं। जातिवादि मत में सूक्ष्म-बुद्धिवाला क्षत्रिय और देहबली ब्राह्मण समझे जायेंगे। ऐसे क्षयित्र से युक्त देहबली ब्राह्मण, दूसरे ब्राह्मण को पराजित नहीं कर सकेगा किन्तु वह दूसरे क्षत्रिय को ही जीत सकेगा। यह श्रुत्यभिप्राय का विरुद्ध है।

इति श्रुतेरपार्थतेति ( २८ ) पूर्वजन्मनि क्षत्रिय: सन् ऋणसम्बन्धवशात् ब्राह्मण-गृहे जायमान: शास्त्रकौशल्यहीन: शस्त्रविद्याकुशलश्च भवत्येव। एवं पूर्वजन्मनि ब्राह्मण: सन् ऋणवशात्क्षत्रियगृहे जायमान: पूर्वसंस्कारवशाच्छास्त्रविद्याकुशल: शस्त्रविद्याहीनश्च स्यादेव। जातिवादिभिश्च प्रथमो ब्राह्मणत्वेन द्वितीय: क्षत्रियत्वेन च गृह्येयाताम्, किन्त्वेतादृशजातिब्राह्मणेन युक्तो दर्शितजाति-क्षत्रियोऽन्यं क्षत्रियं जेतुं न शक्नुयात् किन्तु ब्राह्मणमेव। श्रुत्यर्थश्चेदानीं न सङ्गच्छते। गुणवादानुसारेण यदि प्रथम: क्षत्रियत्वेन द्वितीयो ब्राह्मणत्वेन गृह्येयातां तदा तादृशक्षत्रियेण युक्तो ब्राह्मणोऽन्यं ब्राह्मणं जेतुं शक्ष्यत इति श्रुत्यर्थं इदानीमुपपद्यते। अत: श्रुतिसम्मतो गुणवाद एव न तु जातिवाद:।



न हि विप्रसुतोधीमान् क्षत्रवंशजशुष्मिणा । युक्तोऽत्येत्यपरं विप्रमिति वक्तुं च युज्यते ॥२९॥
यत: श्रुतौ ब्राह्मणत्वावच्छिन्नस्य प्रदर्शनम् । तथा राजन्यमात्रस्य न तु व्यक्तिविशेषत: ॥३०॥
धर्मे विशेषणीभूते शब्दानां शक्तिरिष्यते । स चास्ति कुत्रचिज्जातिरुपाधिरपि च क्वचित् ॥३१॥

यहाँ उक्त श्रुति के अर्थ में ऐसा संकोच नहीं हो सकता कि जो ब्राह्मण कुल में उत्पन्न हो और बुद्धिशक्ति भान भी हो वह, क्षत्रियकुल में उत्पन्न देहबली से मिलकर दूसरे ब्राह्मण को पराजित करेगा। क्योंकि उक्त श्रुतिवाक्य में ब्राह्मणशब्द ब्रह्मणत्वावच्छिन्न ( सभी ब्राह्मणों को ) को और राजन्यशब्द क्षत्रियत्वावच्छिन्न को बताते हैं न कि व्यक्तिविशेष को, शास्त्रज्ञ लोग विशेषणी भूतधर्म में ही सब शब्दों की शक्ति मानते हैं। वह धर्म कहीं जातिरूप हो जाता है और कहीं उपाधिरूप।

ननु जातावेव शक्ति: शब्दानामिष्यते बुधै: : भवता धर्ममात्रे सा वैरूप्यमिति चेच्छृणु ॥३२॥
विशेष्यनिष्ठधर्मे सा तत्त्वेनैवेष्यते बुधै: । न तु जातित्वरूपेण कुतो वैरूप्यविभ्रम: ॥३३॥

यदि कोई ऐसा कहे कि मीमांसक लोग जाति में ही सब शब्दों की शक्ति मानते हैं, यहाँ तो विशेषणीभूत धर्म में। उसका उत्तर यह है कि मीमांसक भी विशेषणीभूत धर्म में ही तादृशधर्मत्वरूप से शक्ति मानते हैं न कि जातित्वरूप से। अत: यहाँ कोई ऐसी विपरीत बात नहीं है।

अतोदण्डयादिशब्दानां दण्डमात्रे विशङ्क्य ताम् । गवादिशब्दवैरूप्यान्न सा तत्रेति तेऽब्रुवन् ।३४।
अयं मीमांसकन्यायो "नागृहीतविशेषणा" । अक्षादिमानजा "बुद्धिर्विशेष्यमुपधावति" ॥३५॥
पदार्थत्वेऽपि धर्मस्य भवेल्लाभस्तु धर्मिण: । आक्षेपतो लक्षणातो वेति मीमांसकाशय: ॥३६॥
एवं च न्यायसूत्रेऽपि यद् "व्यक्त्याकृतिजातय: । पदार्थ" इति तत्रापि भवेज्जातिर्विशेषणम् ३७॥

अतएव दण्डी कुण्डलीत्यादि शब्दों की भी शक्ति दण्ड मात्र में होगी ऐसी शंका करके वे उसे दण्डमात्र में नही माने हैं। इसमें कारण यह है कि जातिवाचक गवादि शब्दों से ये दण्डयादि शब्द विलक्षण है। यदि वे जाति-मात्र में शक्ति मानते हैं तो यहाँ यह शंका ही नहीं हो सकती। क्यों ? दण्ड तो जाति नही है। यह तो मीमांसकोंका न्याय है कि "नागृहीत विशेषणा बुद्धिर्विशेष्यमुपधावति" ( विशेषण ज्ञान होने पर ही तद्विशिष्ट का बोध होता है ) पद का अर्थ विशेषण होने पर भी आक्षेप से विशिष्ट व्यक्ति का भी भान होता है। यही मीमांसक सिद्धान्त है। "व्यक्त्याकृतिजातय: पदार्थ:" इस न्याय सूत्र में भी जाति शब्द विशेषणवाचक माना जाता है।

दण्डयादीति = जातिवाचक-गवादिशब्दवैलक्षण्याद् दण्डयादिशब्दा न दण्डमात्र-वाचका इत्यभिहितं मीमांसकै:। तथाहि तदीयं शाबरभाष्यम् "ननु च दण्डीति, न

तावद् दण्डिशब्देन दण्डोऽभिधीयते। अथ च दण्डविशिष्टोऽवगम्यते। एवमिहापि न तावदाकृतिरभिधीयते। अथ चाकृतिविशिष्टा व्यक्तिर्गम्येतेति। नैतत्साधु, उच्यते। सत्यं दण्डिशब्देन दण्डो नाभिधीयते। न त्वप्रतीते दण्डे दण्डिप्रत्ययोऽस्ति। अस्ति तु दण्डिशब्दैकदेशभूतो दण्डशब्दो येन दण्डः प्रत्यायितः। न तु गोशब्दावयवः कश्चिदाकृतेः प्रत्यायकः (१.३.९) इत्यादि। यदि मीमांसका जातिमात्रे शक्तिमङ्गीकुर्युस्तदा दण्डस्य जातित्वाभावेनेयं शङ्कैव न स्यात्।

सर्वमेतच्छब्दशक्तावस्माभिः प्राक् प्रपञ्चितम्। तत एव विजानन्तु विशेषेण बुभुत्सवः ॥३८॥

यह सब हमारे "शब्द शक्ति" नामक ग्रन्थ में भी विशेष रूप से बताया गया है। अतः विशेष जिज्ञासु उसी से समझ लें।

प्रकृतेऽपि च वर्णानामुपाधित्वेऽन्यथाऽपि वा, ब्राह्मणादिपदानां सा युक्ता शक्तिर्विशेषणे ॥३९॥

प्रकृति में वर्ण उपाधि रूप हो या जातिरूप हों, ब्राह्मणादि शब्दों का शक्यार्थ ब्राह्मण त्वादि धर्म ही है।

त्वन्मते विप्रजो मूर्खो दुर्बलः क्षत्रियात्मजः। तूष्णींभूतौ भवेतां तौ न किञ्चित्कर्तुमर्हतः ॥४०॥
ब्राह्मणत्वाभिमानेन विधर्मत्वभ्रमेण वा। न तस्य सम्प्रवृत्तिः स्यादन्यवर्णस्य कर्मणि ॥४१॥
ब्रह्मकर्मसु मूर्खत्वादशक्तः स्यात्प्रवर्तितुम्। एवं दुर्बलराजन्यश्चातो भ्रष्टावितस्ततः ॥४२॥
जातिपक्षे त्वनौचित्यमुक्तं चोपाधिरिष्यताम्। स ह्यन्यवर्णजेऽपीति जातिवादो विरम्यताम् ॥४३॥

तुम्हारे मत में, ब्राह्मण भी मूर्ख और क्षत्रिय भी दुर्बल होते हैं। ये दोनों, लोक में शास्त्रानुसार कुछ नहीं कर सकेंगे यद्यपि शूद्रोचित सेवादि-कार्य वह मूर्ख ब्राह्मण कर सकता था, किन्तु जातिवाद में वह कर्म उसका विधर्म होने से वह नहीं करेगा और ब्राह्मणत्वाभिमान रहने से भी वह उसे नहीं करेगा। ब्रह्मणोचित यागादि कार्यों में मूर्ख की प्रवृत्ति होना ही असम्भव है। ऐसा ही दुर्बल और बुद्धिमान क्षत्रियादि भी ब्राह्मणोचित कर्मों में स्वयं समर्थ होने पर भी निषेध बुद्धि से वह उन्हें नहीं करेगा और अशक्त होने से क्षत्रियोचित युद्धादिकर्मों में भी उसकी प्रवृत्ति नहीं होगी। अन्त में वे इतो भ्रष्टास्ततो भ्रष्टा हो जायेंगे। जातिवाद में अनौचित्य कहा गया। अतः उपाधि पक्ष को मानकर जातिवाद छोड़ दो।

शास्त्रेषु ब्राह्मणाद्युद्देश्येन विहितानि कर्माणि तैरेव कर्तव्यानि अन्यथाऽनर्थो भविष्यतीत्येव यदि शास्त्राणामभिप्रायस्तदा दर्शितरीत्याऽनौचित्यसद्भावेन वक्ष्यमाणरीत्या च वर्णानां दुर्ज्ञेयत्वेन जातिवादः सुतरां न सङ्गच्छते। यदि सर्वाणि कार्याणि सर्वैरपि कर्तुं शक्यन्त इति शास्त्राभिप्रायस्तदा वर्णवार्तैवानावश्यकी। अथेदानीं वर्णानां जातित्वाभावेऽर्थवादान्तराण्यपि प्रमाणत्वेन क्रमशः प्रदर्श्यन्ते।



अपि च क्षत्रियो वैश्यः स्वात्मसंयमकारणे। दीक्षायां ब्राह्मणौ स्यातामित्युक्तं चैतरेयके ॥४४॥
ब्राह्मणे तत्र सप्तम्यां पञ्चिकायां चतुर्थके। अध्याये प्रथमे खण्डे गाथाकश्चिन्निशम्यते ॥४५॥
सा चेह सायणाचार्य-सम्मतार्थानुसारतः। प्रदर्श्यते यथा श्रोतृगणकर्ण-सुखावहा ॥४६॥

क्षत्रिय और वैश्य जब आत्म संयम की कारणी भूत यज्ञ दीक्षाका ग्रहण करते हैं उस समय वे शमदमादि गुणवाले हो जाने का कारण वे ब्राह्मण माने जाते हैं। यह विषय ऐतरेय ब्राह्मण में सप्तम पञ्चिका के चौथे अध्याय प्रथम खण्डिका में गाथा रूप से बनाया गया है। वह गाथा सायण-भाष्यानुसारि अर्थ के अनुसार यहाँ दी जाती हैं।

प्रजापतिः प्रजा-यज्ञौ सृष्टेरादौ हि सृष्टवान्। ब्रह्मक्षत्रादिरूपाभ्यस्ताभ्यो यज्ञः पलायितः ॥४७॥
प्रथमं क्षत्रियो यज्ञं गच्छन्तमनुधावितः। ग्रहीतुमायुधैर्युक्तः स्वकीयैर्धनुरादिभिः ॥४८॥
भीतो यज्ञस्तु तं दृष्ट्वा ततो दूरेऽव्यवर्तत। क्षत्रयोऽपि हतोत्साहो विससर्जानुधावनम् ॥४९॥
ब्राह्मणस्तु ततो यज्ञं स्वकीयैः स्फ्यादिभिः सह। युक्तो यज्ञायुधैः शीघ्रं गत्वा जग्राह कोमलः ॥५०॥
ततस्तमुपसङ्गम्य क्षत्रियस्त्वेवमब्रवीत्। मामनुगृह्य यज्ञेन ब्रह्मन् संयोजयेति च ॥५१॥
ब्राह्मणस्तु तथेत्युक्त्वा क्षत्रियं चैवमुक्तवान्। हे क्षत्रिय स्वकीयं तद्धनुराद्यायुधं त्यज ॥५२॥
शौर्यक्रौर्यादिकं क्षत्र-स्वभावं च भयङ्करम्। तद्रजोगुण बाहुल्यकार्यजातं परित्यज ॥५३॥
ब्राह्मणस्यायुधैर्युक्तो गुणैश्च ब्राह्मणोचितैः। स्वयं च ब्राह्मणो भूत्वा यज्ञदेशमुपव्रज ॥५४॥
सत्वङ्गीकृत्य तत्सर्वं तथा कृत्वा च सत्वरम्। स्वयं च ब्राह्मणो भूत्वा तं यज्ञमुपलब्धवान् ॥५५॥

प्रजाप्रति ने प्रजा और यज्ञ की सृष्टि की थी और क्षत्रियादि प्रजाओं से अलग होकर वह यज्ञ भाग रहा था। उसे पकड़ने के लिये पहले क्षत्रिय उसके पीछे दौड़ा था। क्षत्रिय के धनुर्बाणादि को देख कर यज्ञ डर गया और दूर भाग गया। क्षत्रिय को उसे पकड़ने की आशा न रह गयी। अतः वह रुक गया था। कोमल रूप वाला ब्राह्मण अपने यज्ञायुधों के साथ यज्ञ के पीछे दौड़ा और वह उसे पकड़ लिया था। क्षत्रिय ब्राह्मण के पास जाकर मांगा था कि हे ब्राह्मण मुझे यज्ञ से मिलाओ। ब्राह्मण क्षत्रिय से कहा कि हे क्षत्रिय तुम अपने भयङ्कर धनुर्बाणादि को और भीषण क्षत्रिय स्वभाव को (क्षत्रियत्व को) छोड़ दो और ब्राह्मण के आयुधों और ब्राह्मणोचित शमदमादि गुणों को धारण करो और स्वयं ब्राह्मण होकर यज्ञ के पास जाओ। क्षत्रिय तो उन सब बातों को मान कर ऐसा ही किया और स्वयं ब्राह्मण हो कर यज्ञ से मिला था।

तदा स ब्राह्मणस्यैव बन्धुर्जातोऽग्निदैवतः। त्रिवृत्स्तोमश्च गायत्रीच्छन्दस्कः समजायत ॥५६॥
तत्राऽत्र संशयो जातः किं दीक्षावेदनं पुनः। ब्राह्मणस्येव कर्तव्यं क्षत्रियस्याथवा पृथक् ॥५७॥

प्रकृतिस्थाग्निशब्दस्य स्थाने सूर्यपदस्य हि। विकृतावूह इत्युक्तं तथाऽत्रापि भवेन्न वा ॥५८॥
स्याच्चेत्क्षत्रियदीक्षायामूहः क्षत्रपदस्य हि । न चेद्ब्राह्मणशब्देन दीक्षावेदनमस्य तु ॥५९॥
इति सन्दिह्य निर्णीतं क्षत्रियो दीक्षितो यतः । ततः स ब्राह्मणस्तस्माद्ब्राह्मणस्येव तत्त्विति ।६०॥
अतो ब्राह्मणशब्देन दीक्षावेदनमिष्टिषु । ब्राह्मणोऽयमदीक्षिष्ट इत्येव क्षत्रवैश्ययोः ॥६१॥
काण्वे शतपथे माध्यन्दिनेऽप्येतत्प्रदर्शितम् । यो दीक्षते स देवानामेकः स्याद्ब्राह्मणोऽपि च ॥६२॥
यो यज्ञाज्जायते सोऽपि ब्राह्मणो भवतीत्यतः । न सवनकृतं हन्यादेनस्वी जायते ततः ॥६३॥
ब्राह्मणत्वं च दीक्षायां भवेत्क्षत्रियवैश्ययोः । तदभावे यथापूर्वं क्षत्रियत्वादिकं त्विति ॥६४॥
अत एवोक्तमन्यत्र यागकाले यतोऽखिलः । ब्राह्मणः स्याद्वसन्तेऽतो यजेतार्वािति श्रुतौ ॥६५॥

इसके बाद वह क्षत्रिय ब्राह्मण का बन्धु हो गया अग्नि उसकी देवता हो गयी और त्रिवृत्स्तोम और गायत्री छन्द जो ब्राह्मण के है, उसके भी हो गये थे । उसके बाद दीक्षावेदन के बारे में यह सन्देह हो गया कि क्षत्रिय का दीक्षावेदन ब्राह्मण की तरह होना चाहिये या दूसरी तरह । जैसे प्रकृति याग से विकृतियागमें अतिदेश प्राप्त अग्नि शब्द के स्थान पर सूर्य शब्द का ऊह कहा गया है वैसा ही यहाँ ब्राह्मण शब्द के स्थान पर क्षत्रिय शब्द का ऊह होना चाहिये या नहीं ? इस प्रकार सन्देह करके अन्त में यह निर्णय किया गया कि दीक्षा के बाद क्षत्रिय और वैश्य भी ब्राह्मण हो जाते हैं । अतः उनका भी दीक्षावेदन ब्राह्मण की तरह ब्राह्मण शब्द से ही अर्थात "अदीक्षिष्टायं ब्राह्मणः" होना चाहिये ( ऐसा तीन बार देवताओं को सुनाना चाहिये ) । यह विषय काण्व और माध्यन्दिन शतपथ ब्राह्मणों में भी कहा गया है । जो दीक्षा लेता है वह देवताओं में एक और ब्राह्मण भी हो जाता है । अतः यागादि करने वालों को नही मारना चाहिये । अत एव ब्राह्मणो न हन्तव्य यह कहा गया है । जो उसे मारेगा वह पापी हो जायगा । क्षत्रिय और वैश्य दीक्षा समय में ब्राह्मण बन जाते हैं और दीक्षा छोड़ देने के बाद पहले की तरह क्षत्रिय और वैश्य ही रह जाते हैं । उसी ब्राह्मण के दूसरे प्रकरण में कहा गया है कि यागकाल में सब ब्राह्मण हो जाते हैं । अतः वसन्त ऋतु में ही सभी याग करें ।

इदं सर्वं श्रौत सूत्रकारैः कात्यायनादिभिः । प्रायस्त्वङ्गीकृतं स्वीयग्रन्थेषु स्पष्टशब्दतः ॥६६॥
एतैर्वाक्यैः श्रुतेर्भावो ज्ञायते वर्णगोचरः । स जन्मब्राह्मणत्वादि-जातिवाद-निरासकः ॥६७॥
तच्छ्रौतवाक्यसन्दर्भो दर्शितोऽधोऽस्य पाठकैः । वर्णेषु वेदतात्पर्यं ज्ञायेतेति मनीषया ॥६८॥

इन विषयों को सब श्रौतसूत्रकारोंने अपने-अपने ग्रन्थों में स्पष्ट शब्दों से कहे हैं । इन वाक्यों से चार वर्णों के विषय में श्रुति का जन्म-



जातिवाद-निरासक भाव भी मालूम हो जाता है । उपरोक्त सब विषयों के प्रमाण भूत श्रुति वाक्य भी नीचे दिये जाते हैं जिससे पाठक जनता श्रुति का भाव जान सकें ।

प्रजापतिरिति "प्रजापतिर्यज्ञमसृजत यज्ञं सृष्टमनु ब्रह्मक्षत्रे असृज्येतां ब्रह्मक्षत्रे अनु द्वय्यः प्रजा असृज्यन्त, हुतादश्चाहुतादश्च, ब्रह्मैवानु हुतादः । एता वै प्रजा हुतादो यद्ब्राह्मणाः । अथैता अहुतादो यद्राजन्यो वैश्यः शूद्र इति ॥ ताभ्यो यज्ञ उदक्रामत् । तं ब्रह्मक्षत्रे अन्वेताम् ( पश्चादगच्छताम् ) । यान्यैव ब्रह्मण आयुधानि तैर्ब्रह्मान्वैत् । यानि क्षत्रस्य तैः क्षत्रम् । एतानि वा ब्रह्मण आयुधानि यद्यज्ञायुधानि । अथैतानि क्षत्रस्यायुधानि यदश्वरथः कवच इषुधन्व इति । तं क्षत्रमनन्वाप्य ( अनुगमनेनालब्ध्वा ) न्यवर्तत, आयुधेभ्यो ह स्मास्य विजमानः ( भीतः ) पराङेवैति ( यज्ञः पलाय्य दूरे गतः ) अथैनं ब्रह्मान्वैत्, तमाप्नोत्, तमाप्त्वा परस्तान्निरुध्यातिष्ठत् ( यज्ञगमनं प्रतिबध्य अतिष्ठत् ) स आप्तः परस्तान्निरुद्धस्तिष्ठन् ज्ञात्वा स्वान्यायुधानि ब्रह्मोपावर्तत, तस्माद्धाप्येतर्हि यज्ञो ब्रह्मण्येव ब्राह्मणेषु प्रतिष्ठितः इति अथैनत् ( ब्रह्म ) क्षत्रमन्वागच्छत्, तदब्रवीदुप माऽस्मिन् यज्ञे ह्वयस्वेति ( उपह्वयस्व = अनुजानीहि, मामाहूय यज्ञेन संयोजयेत्यर्थः ) तथेत्यब्रवीत् तद्वै निधाय ( परित्यज्य ) स्वान्यायुधानि, ब्रह्मण एवायुधैः ब्रह्मणो रूपेण ब्रह्म भूत्वा यज्ञमुपावर्तस्वेति, तथेति तत्क्षत्रं निधाय स्वान्यायुधानि, ब्रह्मण एवायुधैः ब्रह्मणो रूपेण ( शमदमादिगुणोपेतप्रशान्तरूपेण ) ब्रह्म भूत्वा ( ब्राह्मणसदृशो भूत्वा, इयमपि सायणोक्तिरेव ) यज्ञमुपावर्तत इति । अथैन्द्रो वै देवतया क्षत्रियो भवति, त्रैष्टुभः छन्दसा पञ्चदशस्तोमेन सोमो राज्येन राजन्यो बन्धुना ( दीक्षाग्रहणात्पूर्वमेतत्सर्वम् ) स ह दीक्षमाणः एव ब्रह्मतामभ्युपैति ( ब्राह्मणत्वं प्राप्नोति ) यत्कृष्णाजिनमध्यूहति तद्दीक्षितव्रतं चरति यदेनं ब्राह्मणा अभिसङ्गच्छन्ते तस्य दीक्षमाणस्येन्द्र एवेन्द्रियमादत्ते ( इन्द्रः दीक्षानन्तरं क्षत्रियादिन्द्रियं पराक्रमं अपहरति ) तिष्टुब्वीर्यं ( क्षात्रं वीर्यं ) पञ्चदशस्तोम आयुः सोमो राज्यं पितरो यशस्कीर्तिं अन्यो वाऽयमस्याद्भवति ब्रह्म वा अयं भवति ब्रह्म वा अयमुपावर्तते इति ( क्षत्रियत्वावस्थायां यद्यदासीत्तत्सर्वं नष्टं भवति ब्राह्मणत्वं चायाति ) अथाग्नेयो वै देवतया क्षत्रियो दीक्षितो भवति गायत्रश्छन्दसा त्रिवृत्स्तोमेन ब्राह्मणो बन्धुना इत्यादि ( एतानि सर्वाणि ब्राह्मणस्यैव स्वतो वर्तन्ते किन्तु दीक्षानन्तरं क्षत्रियास्यापि, ब्राह्मण्य-प्राप्त्या, जातानि ) स होदवस्यन्नेव ( दीक्षां परित्यजन्नेव ) क्षत्रतामभ्युपैति, तस्य होदवस्यतोऽग्निरेव तेजः ( ब्राह्मणसम्बन्धि ब्रह्मवर्चसम् ) आदत्ते ( अपहरति ) गायत्री वीर्यं त्रिवृत्स्तोम आयुः ब्राह्मणाः ब्रह्मयशस्कीर्तिं अन्यो वा अयमस्माद्भवति क्षत्रं अयमुपावर्तत इति वदन्तः ।" अथातो दीक्षाया आवेदनस्यैव तदाहुः यद्ब्राह्मणस्य दीक्षितस्य ब्राह्मणोऽदीक्षिष्टेति दीक्षामावेदयति कथं क्षत्रियस्यावेद-

येदिति। यथैवैतद्ब्राह्मणस्य दीक्षितस्य" ब्राह्मणोऽदीक्षिष्टेति दीक्षामावेदयन्त्येवमेवैतत्क्षत्रियस्यावेदयेत् पुरोहितस्यार्षेयेणेति ( दीक्षासमये क्षत्रियस्य ब्राह्मणत्वप्राप्त्या गोत्रप्रवरादिकमपि पुरोहित-सम्बन्ध्येव वक्तव्यमिति भावः ) ( ऐ० ब्रा० ७.४.१.७ ) इति।

काण्वशतपथे चैवं श्रूयते "देवान् ह्येष उपावर्तते यो दीक्षते स देवानामेको, भवति, अथैतर्हि ब्रह्मणो जायते यज्ञाच्छन्दोभ्यस्तस्माद्यद्यप्यब्राह्मणो दीक्षते राजन्यो वा वैश्यो वा ब्राह्मण इत्येवैनमाहुः एतर्हि ब्रह्मणो जायते तस्मादाहुर्न सवनकृद्धन्तव्य इत्येनस्व्येव स जायते इति ( ४.२.२ ) अपि च श्रूयते तत्रैव "तद्वै वसन्त एवाभ्यारभेत वसन्तो वै ब्राह्मस्यर्तुः यउवै कश्च यजते ब्राह्मणोभूयैव यजते, तस्माद्वसन्त एवाभ्यारभेत ( १५.४.१ ) इति। "ब्राह्मण इत्येव वैश्यराजन्ययोरपि श्रुतेः ( का० श्रौ० सू० ७.४.१२. इति। क्षत्रियवैश्यावपि अदीक्षिष्टायं ब्राह्मण इत्येव ब्रूयात्" ( वै० श्रौ० सू० १२.१० ) इति। अत्रैतरेये, ब्राह्मणस्य हुतादत्वं तदन्येषामहुतादत्वं च यदुक्तं तद्ब्राह्मणप्रशंसार्थम् तस्यैव प्रथमतो यज्ञप्राप्तेः श्रुतत्वात्। क्षत्रिय वैश्यशूद्राणामपि हुतशेषभक्षणमस्त्येव। तदग्रे दर्शयिष्यते न्यग्रोधफलरसदधिजलभक्षणस्य तेषामप्यग्रे दर्शितत्वात्। यत्र च देवानां प्रशंसा वक्तव्या, तत्र देवाएव हुतादो ब्राह्मणाश्चाहुताद इत्यप्युच्यते। तदुक्तं गोपथब्राह्मणे उत्तरभागे "द्वया वै देवा यजमानस्य गृहमागच्छन्ति, सोमपा अन्येऽसोमपा अन्ये, हुतादोऽन्ये अहुतादोऽन्ये, एते वै देवा अहुतादो यद्ब्राह्मणाः ( १ प्र० ६ ) इति।

दीक्षासमये क्षत्रियवैश्ययोः ब्राह्मणत्वलाभे निमित्तमिदमेव प्रतीयते यत्तौ तदानीं शमदमादि-ब्राह्मणगुणान् व्रतनियमत्वेनावलम्बेते न तु स्वाभाविकराजसादिगुणान्। दीक्षात्यागे च यथापूर्वं नैजगुणवन्तौ भवतः। अतस्तदानीं क्षत्रियत्वादिकमेव तयोर्भवति। यस्य तु ते सात्त्विकगुणाः शमादयः स्वाभाविकत्वेन सदा वर्तन्ते स सर्वदा ब्राह्मण एव। एतेनेदं स्पष्टं भवति यत्स्वाभाविकात्मगुणा एव ब्राह्मणत्वादिवर्णसिद्धौ श्रुतिसम्मतं निमित्तमिति॥ वर्णानां जातित्वे जातेर्जात्यन्तरत्वेन परिणामस्यासंभवेन गाधेयमसङ्गतार्था स्यात्।

ब्रह्म भूत्वेति वाक्यस्य भूत्वा ब्राह्मणसन्निभः। इत्यर्थः सायणेनोक्तस्तत्र हेतुश्च को भवेत्॥६९॥
जातिप्रथास्थापनादिरागादन्यो न दृश्यते। अनेनैवायमन्यत्राप्यन्याय्यं महदुक्तवान्॥७०॥
एकत्र सदृशार्थत्वे तत्र बह्वीषु वाक्ष्वपि। ब्राह्मणो बन्धुनेत्यत्र त्रिवृत्स्तोमाग्निदैवतः॥७१॥
अदीक्षिष्ट ब्राह्मणोऽयं गायत्रम्छन्दसेह च। सादृश्यार्थः प्रवक्तव्यो भवेत्तच्चासमञ्जसम्॥७२॥
जातिप्रथारागपूर्त्यै सर्ववेदार्थविप्लवम्। चिकीर्षतः सायणस्य दुस्साहसमहो महत्॥७३॥

ब्रह्म भूत्वा ( ब्राह्मण होकर ) इसका अर्थ, सायण ने, ब्राह्मण सदृश होकर ऐसा कहा था उनके ऐसे कहने में कारण भी जातिप्रथा रक्षणा



भिप्राय ही है। इसीअभिप्राय से ही उन्होंने दूसरे-दूसरे स्थलों में भी बहुत अयुक्त बातें कहा था। एक वाक्य में सादृश्यार्थ कहने पर "ब्राह्मणो बन्धुना" इसका अर्थ ब्राह्मण बन्धु सदृश हुआ न कि बन्धु, "त्रिवृत्स्तोमेन" इसका त्रिवृत् स्तोमसदृश हुआ, "आग्नेयो देवतया" इसका अग्नि, देवता शदृश हुआ, "गायत्रश्छन्दसा" इसका भी अर्थ गायत्री उस क्षत्रिय को छन्दस्सदृशी हुई, "ब्राह्मणोऽयमदीक्षिष्ट" इसका अर्थ यह ब्राह्मणसदृश दीक्षालिया, कहना होगा। यह तो बहुत ही असमञ्जस होगा। जातिप्रथा को स्थिर रखने के राग से सायण ने सब वेद वाक्यों के अर्थ बदलाने की जो चेष्टा की थी वह बड़ा दुस्साहस ही है।

यदि स्याद्ब्राह्मणत्वादिर्जातिः प्रत्यक्षगोचरा। तदा तद्बाधरोधार्थं सादृश्यं सम्मतं भवेत्॥७४॥
आदित्यो यूप इत्यादौ प्रत्यक्षार्तिनिवृत्तये। आदित्यसदृशो यूप इत्यर्थोऽङ्गीकृतो बुधैः॥७५॥
वर्णे प्रत्यक्षजातित्वं साक्षाद्देवगुरोरपि। क्लृप्तप्रमाणैर्दुस्साध्यं सायणादेः किमुच्यते॥७६॥
न चेदं शक्यते वक्तुं तात्पर्यं स न बुद्धवान्। किन्तु ज्ञात्वैव तत्सर्वमेवमत्रोक्तवानसौ॥७७॥
यत्प्रयोजनमुद्दिश्य चादौ मीमांसकैरियम्। प्रथा प्रवर्तिता पश्चादाचार्यैरपि सम्मता॥७८॥
तदेव सायणस्यापि बाधितार्थ-प्रजल्पने। प्रयोजनं न चैवान्यदित्यग्रेऽत्रैव वक्ष्यते॥७९॥

ब्राह्मणत्वादि वर्ण यदि प्रत्यक्ष जाति हों तब प्रत्यक्षबाध वारण के लिये सादृश्यार्थ सम्मत हो सकता था, जैसे आदित्यो यूप इत्यादि स्थलों में आदित्य सदृशो यूप ऐसा कहना पड़ा। प्रकृत में ऐसी आवश्यकता नही है। बृहस्पति भी सर्वमान्य प्रमाणों के द्वारा वर्णों में प्रत्यक्षजातित्व सिद्ध नहीं कर सकेगा तो सायणादि पण्डितों के विषय में क्या कहना होगा। यहाँ यह नही कहा जा सकता कि सायण उसका तात्पर्य नहीं समझा, किन्तु समझ बूझकर ही उसने ऐसा कहा था। जिस प्रयोजन के लिये मीमांसकों न वर्णों को जाति माना और बाद में आचार्यों ने भी उसको मान लिया था, वही प्रयोजन सायण का भी था। वह प्रयोजन क्या है इस बात को हम आगे इसी ग्रन्थ में कहेंगे।

तद्ब्राह्मणेऽग्रे सप्तम्यां पञ्चकायां तु पञ्चमे। अध्याये खण्डिकायां तु तृतीयस्यामपि श्रुतम्॥८०॥
सोमोऽम्बु दधि च ग्रस्यं विप्रशूद्रविशां क्रतौ। तद्यदि क्षत्रियश्चाद्यात्तस्य विप्रादयः सुताः॥८१॥
भवेयुर्नैजतो यज्ञयाजनाद्यर्हमानसाः। कृषिवाणिज्यसेवादि - परप्रेष्यत्वलक्षणाः॥८२॥

उसी ऐतरेय ब्राह्मण ( पं० ७। अ० ५। खं० ३ ) में कहा गया है कि याग में ब्राह्मण का भक्ष्य सोम, क्षत्रिय का न्यग्रोध ( वट ) फल रस, वैश्य का दहि, शूद्र का जल भक्ष्य होते हैं। यदि क्षत्रिय अपने भक्ष्य को

छोड़कर ब्राह्मणादि के भक्ष्य को खायेगा तो उसके पुत्र ब्राह्मणादि होंगे। यदि ब्राह्मण पुत्र पैदा होगा तो वह यजन याजनादि स्वभाव वाला होगा, वैश्य पुत्र हो तो कृषिवाणिज्यादि स्वभाव वाला और शूद्र पुत्र हो तो वह दूसरों की सेवादि करने का स्वभाव वाला होगा। इसी का विवरण नीचे दिया जाता है।

यज्ञे दीक्षितराजन्यं प्रत्यज्ञानवशाद्यदि । सोमं चेहत्विजो दद्युस्तंराजन्योऽपि भक्षयेत् ॥८३॥
तदा ब्राह्मणभक्ष्यस्य भक्षणात्क्षत्रियस्य हि। पुत्रा, ब्राह्मणकल्पाः स्युर्यज्ञे सोमादिपीतिनः ॥८४॥
तस्य पौत्रा प्रपौत्रास्तु प्राप्तुं ब्राह्मण्यमीशते। ते च ब्राह्मणवृत्त्यैव जीविष्यन्तीति विश्रुतम्॥८५॥
तथैव वैश्यभक्ष्यस्य दध्नः क्षत्रियभक्षणे । तत्पुत्रा वैश्यकल्पाः स्युर्वैश्यवृत्तिधृतासवः ॥८६॥
तस्य पौत्रप्रपौत्राश्च प्राप्तुमर्हन्ति वैश्यताम् । शूद्रभक्ष्याम्बुजग्धौ च स्यादेव शूद्रसन्ततिः ॥८७॥
अत्र ज्ञातव्यमेतावद्यत्तद्भक्षणमात्रतः । तत्तद्वर्णस्य वा तत्तद्वर्णकल्पस्य संभवः ॥८८॥
न मुख्यश्चार्थवादोक्तिबोधितत्वेन हेतुना । किन्तु तादृग्वचोभङ्ग्या श्रुतिरन्यद्विवक्षति ॥८९॥
जातिवादिभिरप्येतदङ्गीकर्तव्यमन्यथा । जातिवादित्वमेवात्र नष्टप्रायं भविष्यति ॥९०॥
तस्यैतावद्धि तात्पर्यं यस्य यद्विहितंश्रुतौ । तत्तेनैव प्रभोक्तव्यमन्यथाऽनिष्टसंभवः ॥९१॥

यज्ञ में ऋत्विक् लोग भ्रान्ति से क्षत्रिय को यदि सोमरस देंगे और क्षत्रिय भी उसे भक्षण करेगा तो उसके पुत्र ब्राह्मण कल्प होंगे और उसके पौत्र और प्रपौत्र ब्राह्मण हो जायँगे और वे यज्ञादि में सोमादि का पान करते रहेंगे। वैसा ही वह यदि दही का भक्षण करेगा तो उसके पुत्र वैश्य कल्प होंगे और उसके पौत्र और प्रपौत्र वैश्य हो जायँगे और वे कृषिवाणिज्यादि स्वभाव वाले होंगे। एवं वह यदि शूद्र भक्ष्य जल को भक्षण करेगा तो उसके पुत्र शूद्रकल्प होंगे और उसके पौत्र और प्रपौत्र शूद्र होंगे। यहाँ इतना ही ज्ञातव्य विषय है कि जिसका जो भक्ष्य विहित है वही उसको खावे नहीं तो अनिष्ट होगा। अविहित वस्तु का भक्षण करने पर अनिष्ट सन्तति का जो जन्म कहा गया है वह अर्थवादमात्र है। यह जातिवादियों को भी मान्य ही होगा, नहीं तो उनका जातिवादित्व ही नष्ट हो जायगा।

स्वात्मानरूपपुत्रादि सन्ततिः काम्यते बुधैः। भिन्नस्वभावतत्प्राप्तौ प्रत्यहं कलहो गृहे ॥९२॥
तद्गृहस्थैर्महानिष्टं मन्यतेऽदः श्रुतेर्वचः। तद्भयं दर्शयित्वाऽत्र तान्वारयत्यचोदितात् ॥९३॥
किन्त्वत्र ब्राह्मणादीनां स्वभावत्वेन ये गुणाः। दर्शितास्ते ह्युपादेया तेभ्यो वर्णविभाजनम्॥९४॥
तत्रादायीति शब्देन दक्षिणा ग्रहणे रुचिः। आपायीत्युक्तशब्देन सोमपानरुचिस्तथा ॥९५॥
आवसायीपदेनोक्ता मनीषा निश्चयात्मिका। यथाकामप्रयाप्यत्वमनायासेन लभ्यता ॥९६॥
एतदर्थकवेदोक्तवाक्यजातं प्रदर्श्यते येनास्मद्दर्शितार्थे स्याद्बुद्धिः प्रामाणिकी नृणाम् ॥९७॥



प्रायः लोग अपने स्वभाव वाले पुत्रों को चाहते हैं। भिन्नस्वभाव वाले पुत्र पैदा होंगे तो प्रतिदिन घर में कलह होता रहेगा। वह गृहस्थों के लिये बहुत ही अनिष्टकारक होगा। अतः श्रुति ऐसा अनिष्ट को दिखाती हुई लोगों को अविहित भक्षण से वारण करती है। इन वाक्यों से यही सिद्ध होता है कि क्षत्रिय से उत्पन्न ब्राह्मणादि वर्णों के जो जो स्वाभाविक गुण बताये गये हैं उन्हीं के द्वारा वर्णों को पहचानना चाहिये। वहाँ के आदायी शब्द का अर्थ है कि यागादि में दक्षिणा लेने की रूचिवाला, आपायी शब्द का सोमरस पीने की रूचिवाला, आवसायी शब्द का निश्चियात्मक ज्ञानवाला, और यथाकामप्रायप्य शब्द का आसानी से लोगों के द्वारा प्राप्तव्य, अर्थ होते हैं और ये ही ब्राह्मण के लक्षण हैं। इन विषयों को बताने वाले ब्राह्मण वाक्य नीचे दिये जाते हैं जिनसे लोगों को उन अर्थों में प्रामाण्य बुद्धि हो सके।

एतदर्थकेति = ऐतरेये ( ७.५.३ ) इदमाम्नायते, "त्रयाणां भक्षाणामेकमाहरिष्यन्ति ( अज्ञा भ्रान्ताः ऋत्वजः कर्तारः, क्षत्रियं प्रति ) सोमं वा दधि वाऽऽपो वा, स ( ऋत्विक् ) यदि सोमं ( तव क्षत्रियस्य कृते आहरिष्यतीति शेषः ) ब्राह्मणानां स भक्षः ब्राह्मणांस्तेन भक्षेण जिन्विष्यसि ( प्रीणयिष्यसि ) ब्राह्मणकल्पस्ते प्रजायामाजनिष्यते, आदाय्यापाय्यावसाय्यौ यथा कामप्रयाप्यो यदा वै क्षत्रियाय पापं भवति ब्राह्मणकल्पोऽस्य प्रजायामाजायते। ईश्वरो हास्माद् द्वितीयो वा तृतीयो वा ब्राह्मणतामभ्युयैतोः स ब्रह्मबन्धुत्वेन जिज्यूषितः। ( जीवितुमिष्टो भवति ) अथ यदि दधि ( स आहरिष्यतीति शेषः ) वैश्यानां स भक्षः वैश्यांस्तेन भक्षेण जिन्विष्यसि, वैश्यकल्पस्ते प्रजायामाजनिष्यतेऽन्यस्य बलिकृदन्यस्याद्यो यथाकामज्येयो यदा क्षत्रियाय पापं भवति वैश्यकल्पोऽस्य प्रजायामाजायते, ईश्वरो हास्माद् द्वितीयो वा तृतीयो वा वैश्यतामभ्युपैतोः स वैश्यतां जिज्यूषितः। अथ यद्यपः शूद्राणां स भक्षः शूद्राँस्तेन भक्षेण जिन्विष्यसि, शूद्रकल्पस्ते प्रजायामाजनिष्यतेऽन्यस्य प्रेष्यः कामोत्थाप्यो यथाकामवध्यो यदा वै क्षत्रियाय पापं भवति शूद्रकल्पोऽस्य प्रजायामाजायते, ईश्वरो हास्माद् द्वितीयो वा तृतीयो वा शूद्रतामभ्युपैतोः स शूद्रतया जिज्यूषितः" इति। एतद्वाक्यानामर्थाः सङ्ग्रहेणोपरितनश्लोकेष्वेव सायणभाष्यानुसारेण दर्शिताः। तत्र येषां पदानां भाष्ये अर्थभेदो दृश्यते तदनूद्य समाधीयते सायणश्चेत्यादिना।

सायणश्चाब्रवीदर्थ-मेतेषां च यथाक्रमम्। प्रतिग्रहं सोमपानं परवेश्मान्नयाचनम् ॥९८॥
निष्कास्यत्वं बहिः स्वीयाद्गेहादस्यान्यवर्णजैः। यथेष्टं ब्राह्मणस्यैते स्वाभाविकगुणास्त्विति ९९॥

सायणाचार्य ने उन शब्दों के अर्थ यथाक्रम इस प्रकार बताया था कि आदायी = प्रतिग्रह करने वाला, आवसायी = दूसरों के घरों में अन्न

मांगने वाला, और यथाकाम प्रयाप्य=दूसरे वर्णों के द्वारा घर से बाहर निकाल दिया जाने वाला।

आदाय्यापाय्यादिशब्दानामस्मदिष्टार्थाः ९५+९६ श्लोकयोरत्रैव दर्शिताः। सायणाभिप्रेतार्थाश्चेमे। आदानं प्रतिग्रहः तच्छीलः आदायी, प्रतिग्रहश्च ब्राह्मणगुणः। ऋत्विग्भूत्वा सोमं आसमन्तात्पाययतीति आपायी, तदेतद्याजनमपि ब्राह्मणगुणः। अवसमन्नं तस्य सम्बन्धि याचनमावसः तमावसमेति प्राप्नोति आवसायी परगृहे सदा भोजनयाचनमपि ब्राह्मणगुणः। काममिच्छामनतिक्रम्य यथाकामं तदनुसारेण प्रयाप्यः= निर्वासयितुं शक्यः। क्षत्रियवैश्यादिवत् शौर्यधनाद्यभावात् यः कोऽप्यागत्य दुर्बलं ब्राह्मणं तद्गृहात्तदीयग्रामाद्वा निष्कासयितुमिच्छति, तदानीमयं ब्राह्मणो दुर्बलत्वात्तेन निस्सारयितुं शक्यते। एवमेते चत्वारो धर्मा ब्राह्मणगुणाः। इति। एतदुपर्यस्माभिरुच्यते यत्

तन्न युक्तं यतो वृत्तिविहीनाश्रमकर्तृकः। प्रतिग्रहो भृगुस्मृत्यामुक्तो न गृहिकर्तृकः ॥१००॥<br>
गृहिणां वृत्तयः सन्ति याजनाध्यापनादयः। तैरेव जीवितव्यास्ते प्रत्यवायोऽन्यथा भवेत् ॥१०१<br>
ब्राह्मणत्वादयो वर्णा गृहस्थाश्रममात्रगाः। नान्याश्रमेषु तत्रापि पुंस्वेवेति श्रुतेर्वचः ॥१०२॥<br>
तदेतत्पुस्तकस्यान्ते स्पष्टं श्रुतिप्रमाणतः। निरूपयिष्यते तावन्मनो निगृह्यतां स्वकम् ॥१०३॥<br>
तदन्याश्रमिणां नित्यं यमादिव्रतचारिणाम्। वृत्तयो नैव युक्तास्ताः तस्मात्तत्कर्तृको हि सः १०४॥<br>
प्रतिग्रहपरो गेही वृत्तिं त्यक्त्वा बहिर्मुखः। दातृभ्योऽपि महच्चैनो दत्वाऽऽत्मानमधो नयेत् १०५॥<br>
अन्ये प्रतिग्रहप्राप्त दातृपापप्रणाशकाः। उभयोरपि कल्याणं प्रापयिष्यन्ति निर्मलाः ॥१०६॥<br>
स्नातकव्रतमारभ्य परवेश्मान्नयाचनम्। निषिध्यते श्रुतिस्मृत्योर्गृहस्थस्य तु तत्कथम् ॥१०७॥<br>
सायणः स्वयमाचष्ट वेदभाष्ये प्रसङ्गतः। गृहस्थस्यान्यदीयान्नं निषिद्धमितरस्य न ॥१०८॥<br>
कुक्कुरादिवदात्मीय-गृहान्निष्कास्यता बलात्। अयुक्ता मर्त्यमात्रस्य सुतरां ब्राह्मणस्य सा १०९॥

यहाँ कुछ शब्दों के सायणो का अर्थ ठीक नही। क्योंकि जीविका वृत्ति रहित आश्रमियों का ही धर्म है प्रतिग्रह करना (दान लेना) न कि गृहस्थ का। गृहस्थों के लिये तो जीविका चलाने के लिये अध्यापनादि वृत्तियाँ हैं। उसके अलावा प्रतिग्रह करने पर गृहस्थों के लिये दोष लग जायगा। ये ब्राह्मणत्वादि चार वर्ण भी गृहस्थों में ही रहते हैं और उनमें भी पुरुषों में ही हैं न कि स्त्रियों में। इसको हम आगे कहेंगे। ब्रह्मचारी वानप्रस्थ और संन्यासी हमेशा व्रत नियमों में रहने वाले हैं। अतः उनके लिये अध्यापनादि वृत्ति उचित नहीं। इसलिये प्रतिग्रह करना उन तीन आश्रमियों के लिये है। गृहस्थ प्रतिग्रह करेगा तो उससे आने वाला दोषों को वह हटा नहीं सकेगा। हमेशा प्रतिग्रह परायण होकर अपनी वृत्ति को भी छोड देगा और विक्षिप्त चित्त होकर वह दान देने वालों को और अपने



को भी बहुत अनिष्ट में डाल देगा। गृहस्थेतर आश्रम वाले तो प्रतिग्रह से आने वाले दातृदोषों को नष्ट करके अपने को भलाई करेंगे। "न ह वै स्नात्वा भिक्षेत" इत्यादि शतपथ ब्राह्मणादि वाक्यों से भिक्षाटन स्नातकव्रत से ही निषिद्ध हो जाता है तो वह, गृहस्थ का धर्म कैसा होगा। सायण भी ऋग्वेद भाष्यभूमिका में कहा था कि परान्नभोजन गृहस्थ का निषिद्ध है। कुत्ते की तरह अपने घर से निकाल दिया जाना मनुष्य मात्र के लिये भी उचित नहीं है तो ब्राह्मण कैसा निकाल दिया जायगा। इन्हीं कारणों से उन शब्दों का सायणोक्त अर्थ ठीक नहीं है।

भृगुस्मृत्यामिति ॥ १०० ॥ तत्र हि स्मृतावेवमुक्तम्।

गृहस्थान्याश्रमस्थानां श्राद्धादौ भोजनार्हता। दक्षिणादानपात्रत्वमपि तेषां प्रशस्यते ॥<br>
श्राद्धादौ गृहिणः सम्यग्भुक्त्वा रात्रौ स्वभार्यया। गच्छेयुर्यदि तच्छ्राद्धं पितृदुःखावहं भवेत् ॥<br>
भार्यापुत्र-समुत्कर्ष-व्यग्रचित्ता भवन्त्यतः। मायामयं गृहस्थानां मनस्तस्मान्न पात्रता ॥<br>
कुटुम्बकलहेनाशापूर्ति - प्रतिहतत्वतः। हर्षशोकात्मकं तेषां सर्वदाऽप्यस्थिरं मनः ॥<br>
व्यापृता बहुगार्हस्थ्यकार्येष्वेते निरन्तरम्। तस्मादशान्तचित्तास्ते न प्रतिग्रहभागिनः ॥<br>
मायामेव न जानन्ति सततं ब्रह्मचारिणः। संन्यासिनो वनस्थाश्च त्यक्तमाया भवन्ति हि ॥<br>
तपः स्वाध्याययोगात्मध्याननिष्ठापरायणाः। पवित्राः स्युस्सदा ते हि ग्राम्यधर्माद्यभावतः ॥<br>
जीविकावृत्तिहीना हि ब्रह्मचार्यादयस्त्रयः। तस्मात्तेभ्यः प्रदातव्यं यद्यद्देयं गृहाश्रमैः ॥<br>
पाणिग्रहादिसंस्कारसर्वकार्येषु सर्वदा। गृहस्थैर्भोजनीयास्ते ब्रह्मचार्यादयस्त्रयः ॥

( अं ७.१४-२१ ) इति। एवमस्मिन्नेवाध्यायेऽग्रेउक्तम्।

गृहस्थो दानकर्तैव न प्रतिग्रहकृद्भवेत्। स च शुद्धमनस्कानां कार्यं दात्रे च पुण्यदम् ॥<br>
याजनेऽध्यापने चैव यद्धि प्रायः प्रदीयते। तदेव शुभदं तस्मै तदन्यद्भ्रंशकारणम् ॥<br>
परप्रतिग्राद्दोषः संभवेदुभयोरपि। दातुः प्रतिग्रहीतुश्च तस्मात्तां वर्जयेद्गृही ॥<br>
गृही विप्रब्रुवः कश्चित्प्रतिगृह्यान्यतो धनम्। पुत्रहानिं वयस्यल्पे प्राप्तवानिति नः श्रुतम् ॥

( ४८.५१ ) इति। मनावप्युक्तम् "उपासते ये गृहस्थाः परपाकमबुद्धयः। तेन ते प्रेत्य पशुतां व्रजन्त्यन्नादिदायिनाम् ॥ (३.१०४) इति। एवं यतिधर्म-निर्णयेऽप्युक्तम्" सिद्धमन्नं गृहस्थाय वनस्थाय च गोरसम्। यतये काञ्चनं दत्वा रौरवं नरकं व्रजेत् ( २८४ पृष्ठे ) इति। तस्मादादाय्यादिशब्दानामस्मद्दर्शितार्था एव समीचीनाः। आदायी=याजनाध्यापनादि द्वारा दक्षिणा ग्रहणशीलः यज्ञदीक्षाग्रहणशीलो वा न तु प्रतिग्रहशीलः। प्रतिग्रहो हि पुण्यबुद्ध्या दीयमानस्य स्वीकरणम्। न तद्गृहस्थकार्यम्. [illegible] धनसम्पादनस्यैव तत्कार्यत्वात्। आपायीत्यस्य भाष्योक्तार्थो युक्त एव। आवसायी=ईश्वरपरलोकास्तित्ववादौ अध्यवसायी निश्चयात्मकज्ञानवान्। एतज्ज्ञानं

ब्राह्मणस्य यथा भवति न तथा क्षत्रियादीनामितिभावः। परगृहान्नयाचनपक्षे दोषो दर्शित एव। "न स्नात्वा भिक्षेत" ( शत० ब्रा० ) इति निषेधात्। यथाकामप्रयाप्यः = अल्पदक्षिणादिनाऽपि क्षत्रियादिभिर्यथेष्टं प्राप्तुं शक्यः। "असन्तुष्टोद्विजोनष्ट" इति न्यायमनुस्मृत्य क्षत्रियादिप्रार्थनानुसारेण देवपूजादिषु विवाहादिसंस्कारेषु च तद्गृहं गत्वा तदिच्छां पूरयतीत्यर्थः। क्षत्रियादयश्च शासनादिराष्ट्रकार्येषु व्यापृताः सन्तो नाल्पयत्नेन प्राप्तुं शक्यन्ते। यश्च भाष्योक्तोऽर्थः गृहान्निष्कास्यत्वं स सर्वथाऽप्ययुक्त एव।

दधिभक्षणदोषेण जातवैश्यप्रवृत्तयः। राजधीनत्वभोग्यत्व कराद्यर्पणशीलताः ॥११०॥
एवमब्जग्धदोषेण जातशूद्रप्रवृत्तयः। द्विजतोषणप्रेष्यत्वस्वोत्तमाज्ञानुवर्तिताः ॥१११॥

दधि भक्षण दोष से क्षत्रिय के कुल में उत्पन्न वैश्य की वृत्तियाँ हमेशा राजाधीन रहना और उसे भूमि कर आदि देते रहना। तथा जल भक्षण दोष से उत्पन्न शूद्र की वृत्ति द्विजों के आज्ञानुवर्त्ती रहना।

एतद्ब्राह्मणवाक्यैश्च सम्यगेतद्धि वेद्यते। यद्गजत्वादिवद्वर्णा न सन्ति जातयस्त्विति ॥११२॥
जातिश्चेद्ब्राह्मणत्वादिः क्षत्रियात्मजवर्तिनी। न भविष्यति केनापि स्वीकर्तुं वाऽत्र शक्यते ११३॥
यदि स्युर्जातयो वर्णाः श्रुतिदर्शिततद्गुणैः। स्वतो युक्ताः प्रदृश्येरन् गोव्याघ्रादीव तद्गुणैः ११४
न ते ब्राह्मण सन्ताने नापि क्षत्रियसन्ततौ। न वा विट्शूद्रसन्ताने संदृश्यन्ते श्रुता गुणाः ॥११५॥
अतो वक्तव्यमेते हि गुणा येषु नृषु स्वतः। समीक्ष्यन्ते त एवेष्टास्तत्तद्वर्णतया त्विति ॥११६॥

इन ऐतरेयवाक्यों से यही विदित होता है कि गजत्वादि की तरह ब्राह्मणत्वादि वर्ण जातियाँ नहीं हैं। यदि वे जातियाँ होती हो तो क्षत्रियादि के पुत्रपौत्रादि में रहेंगी ही नहीं और दूसरे लोग भी उनको ऐसा स्वीकार नहीं कर सकेंगे। यदि वर्ण जातियाँ होती है तो ब्राह्मणादि के पुत्र सभी दर्शित श्रौतगुण वाले अवश्य होते, जैसे गोव्याघ्रादि सन्तान में तत्तज्जाति के गुण दीखते हैं, वैसा ही ब्राह्मणादि सन्तान में भी उन गुणों का रहना आवश्यक होता था। अतः यह कहना होगा कि ये गुण जिन में सहजतः होंगे वे ही श्रुति की दृष्टि में तत्तद्वर्ण हैं।

अपिचान्यदपि प्रोक्तं सम्यक् शतपथद्वये। ब्राह्मणेनैषितव्यं तद्यदहं ब्रह्मवर्चसी ॥११७॥
भूयासमिति वाक्येन ज्ञायते विधिरूपिणा। स्वरूपं ब्राह्मणस्येह श्रुतीष्टं कीदृशंत्विति ॥११८॥

शत पथद्वये = काण्वशतपथे माध्यन्दिनशतपथे च। तत्र प्रथमे "अहं ब्रवीमीति होवाच याज्ञवल्क्यस्तद्धि ब्राह्मणेनेष्टव्यं यद्ब्रह्मवर्चसमिति ( २।८।४।१० ) इति द्वितीये च "अहं ब्रवीमि इति स्माह याज्ञवल्क्यः" "तद्ध्येव ब्राह्मणेनेष्टव्यं यद्ब्रह्मवर्चसी स्यामिति" ( १।७।४ ) इति। अनेन वाक्यद्वयेन श्रुतिसम्मतं ब्राह्मण स्वरूपं कीदृशमिति स्पष्टं ज्ञायते। तदेवाग्रे विव्रियते।



ब्रह्मवर्चसवाञ्छा हि विधेया न भवेदतः। तत्कामिनो ब्राह्मणत्वं श्रुत्यभिप्रेतमुच्यते ॥११९॥
कुर्वन्नेवेह कर्माणि जिजीविषेदिति श्रुतेः। जिजीविषंश्च कर्माणि कुर्यादिति खलूच्यते ॥१२०॥
ब्राह्मण्यकामनैवात्र ब्रह्मवर्चसकामना। इत्याह सायणः स्वीयभाष्ये तद्वाक्यगोचरे ॥१२१॥
ब्रह्मवर्चस ब्राह्मण्य साहचर्यं तु ताण्ड्यके। ब्राह्मणे ज्ञायते स्पष्टमतः साध्वत्र तद्वचः ॥१२२॥

इच्छा विधेय नहीं होती। अतः यहाँ ब्रह्मवर्चस की इच्छा विहित नहीं है। इसलिये यहाँ ऐसा कहना होगा कि जो ब्रह्मवर्चस काम है वहीं ब्राह्मण है। जैसा ईशावास्योपनिषद् के "कुर्वन्नेवेह कर्माणि जिजीविषेच्छतं समाः" श्लोक का अर्थ जो शतवर्ष तक जीवित रहना चाहता हैं वह कर्मों को करता रहे, ऐसा बताया गया, वैसा ही यहाँ भी कहना होगा। सायणाचार्य ने भी इस वाक्य के भाष्य में कहा था कि "ब्रह्मणेन तदेवेष्टव्यं यदहं ब्राह्मण्ययुक्तः स्यामिति। ब्राह्मवर्चस और ब्राह्मणत्व का समनियतत्व, ताण्डमब्राह्मण से मालूम होता है। अतः इस वाक्य का ऐसा अर्थ कहना ठीक ही है।

ब्राह्मण्यब्रह्मवर्चसयोः साहचर्यमग्रे प्रदर्शयिष्यते।

न न्वत्रैवोक्तमा ब्राह्मन् ब्राह्मणो ब्रह्मवर्चसी। आराष्ट्रे क्षत्रियः शूर इषव्यो जायतामिति॥१२३॥
प्राग्ब्रह्मवर्चसप्राप्तेः ब्राह्मण्यं ज्ञायते स्फुटम्। अन्योन्यनियतत्वं च कुत्र संदृश्यते तयोः ॥१२४॥

यदि कोई कहे कि इन ब्राह्मणों में यह भी कहा गया है कि ब्राह्मण ब्रह्मवर्चसी हो और राष्ट्र में क्षत्रिय शूर इषव्य और अतिव्याधी हो, ऐसी प्रार्थना की जाती है। इससे यह मालूम पड़ता है कि ब्राह्मणत्व, ब्रह्मवर्चस के पहले ही सिद्ध है और क्षत्रियत्व भी बाहु बल के पहले ही सिद्ध हैं : अतः ब्राह्मणत्व और ब्रह्मवर्चस इन दोनों का अन्योन्य समनियतत्व कहाँ है।

अत्रैवेति = शतपथद्वये इत्यर्थः। तदुक्तम् "आब्रह्मन् ब्राह्मणो ब्रह्मवर्चसी जायताम् ब्राह्मण एव ब्रह्मवर्चसं दधाति ( काण्वे० १४.१.९ ) एवं 'आब्रह्मन् ब्राह्मणो ब्रह्मवर्चसी जायताम्" ( मा० १३.१.९.१ ) इत्यादिः। एवं तत्रैव आ राष्ट्रे राजन्यः शूर इषव्योऽतिव्याधि महारथी जायताम्। राजन्य एव शौर्यं महिमानं दधाति" इत्यादिकं श्रूयते एतच्च ब्राह्मण्य ब्रह्मवर्चसादीनां समनियतत्वेऽनुपपन्नमिति चेदुच्यते।

शृणु शमादिसम्पत्या सहापि ब्रह्मवर्चसम्। यद्येकात्मनि विद्येत ब्राह्मण्यं तत्र पुष्कलम् ॥१२५॥
वृत्तस्वाध्यायसञ्जातः प्रकाशः ख्यातिरुच्यते। त्वग्व्यापकः प्रकाशः स ब्रह्मवर्चसमित्यपि।१२६।
कीर्तितं तैत्तिरीयोपनिषद्भाष्यस्य वार्तिके। तट्टीकायामपि स्पष्टमानन्दगिरिणाऽपिच॥१२७॥
तत्रान्यतरसम्प्राप्तिः पूर्वपुण्यवशाद्भवेत्। तत्र चाप्राप्तसम्प्राप्त्यै प्रार्थना क्रियते जनैः ॥१२८॥
[illegible]गुणयुक्तेन प्रकृते ब्रह्मवर्चसम्। पूर्णब्राह्मण्यलाभाय क्रियतेऽभ्यर्थना त्विह ॥१२९॥

एवं शौर्यादिमत्यन्य-शूरत्वेषव्यते पुनः । याच्येते क्षत्रियत्वस्य पूर्णताया इतीर्यते ॥१३०॥
यथाऽऽयुश्चक्षुरादीनां पुष्कलत्वाय याचना । आयुर्दाऽग्ने हि चक्षुर्दा मह्यं देह्यायुरादिकम् १३१॥
तथाऽल्पवर्चसे पुंसे याच्ञाऽल्पशूरतावते । तत्पूर्णत्वाय ऋत्विग्भिः क्रियतेऽस्त्येव तत्तयोः ॥१३२
एवं ब्रह्मवनि क्षत्रवनि त्वौदम्बरिह्यहम् । पर्यूहामीति वाक्येऽपि स्पष्टा ब्राह्मण्ययाचना ॥१३३॥

सुनो, शमादि गुण और ब्रह्मवर्चस ये दोनों जिसमें हों उसमें पूर्ण ब्राह्मणत्व रहेगा । सर्ववेदाध्ययन और तदुक्तानुष्ठान से उत्पन्न प्रकाश ही ख्याति कहलाती है । जव वह प्रकाश शरीरव्यापी होकर बाहर दीखने लगता है तो वह ब्रह्मवर्चस कहलाता है । यह विषय तै० उपनिषद्भाष्य वार्तिक में और उसकी आनन्दगिरि टीका में भी कहा गया हैं । उन दोनों में से एक किसी में पूर्वजन्म संस्कार से रहेगा तो दूसरे के लिए प्रार्थना की जाती है । उक्त श्रुतिवाक्योंसे शमादि गुण विशिष्ट पुरुष में ब्राह्मणत्व की पूर्ति के लिये ब्रह्मवर्चस की प्रार्थना की जाती है । एवं स्वाभाविक धैर्य-साहस पराक्रमादि गुण और इषव्यातिव्याधित्व जिसमें हैं उसमें पूर्ण क्षत्रियत्व रहेगा । इन दोनों में से एक किसी में पूर्व-संस्कार के कारण रहेगा तो दूसरे के लिये प्रार्थना की जाती है । उक्त श्रुतिवाक्य में स्वाभाविक धैर्य साहसादि युक्त पुरुष में क्षत्रियत्व की पूर्ति के लिये इषव्यत्वाति व्याधि-त्वादि की प्रार्थना की जाती है । अर्थात् आंशिक ब्राह्मणत्वादि वाले पुरुष में पूर्ण ब्राह्मणत्वादि के लिये प्रार्थना श्रुति में दिखायी गयी है । जैसे अर्धायुर्व-र्चश्चक्षुरादि वाला पुरुष आयुरादिपूर्ति के लिये "आयुर्दा अग्ने आयुर्मे देहि वर्चो दा अग्ने वर्चो मे देहि" ( तै० सं० १.५.५ ) "आयुर्मे दाः प्रजां मे दाः चक्षुर्मे दाः वाचं मे दाः ब्रह्म मे दाः मे दाः क्षेत्रं" ( मै० सं० ४.९.३ ) इस तरह प्रार्थना करता है, वैसा ही शमादिगुण और अल्पब्रह्मवर्चसवाले ब्राह्मण में पूर्णब्रह्मवर्चस के लिये ऋत्विक लोग प्रार्थना करते हैं । और ब्रह्मवनि त्वा क्षत्रवनि त्वा पर्यूहामि" ( तै० सं० १.३.६ ) इस वाक्य में तो ब्राह्मणत्व और क्षत्रियत्व की याचना की जाती है ।

यत्रान्यतरेति ( १२८ ) ब्राह्मण्यब्रह्मवर्चसयोरन्यतरस्य प्राप्तिः । पूर्वपुण्यवशेन येन पुंसा शमादिगुणनिमित्तकं ब्राह्मण्यं प्राप्तं वृत्तस्वाध्यायजप्रकाशश्च न प्राप्ता, तस्मै ऋत्विजः तादृशं प्रकाशं प्रार्थयन्ति । "आ ब्रह्मन् ब्राह्मणो ब्रह्मवर्चसो जायमिति । ये च पूर्व संस्कारवशात्तादृशं ब्रह्म-वर्चसं प्राप्तं, शमादिगुणहेतुकं ब्राह्मण्यं न प्राप्तं तेन पुंसा ब्राह्मण्यमेव "ब्रह्मवनि त्वा क्षत्रवनित्वा पर्यूहमि" ( तै० सं० १.३.६ ) इत्यादिना प्रार्थ्यते । ब्रह्म = ब्राह्मणत्वं वनति भजतीति ब्रह्मवनिः एवं क्षत्रवनिरपि ज्ञेयः हे



औदुम्बरि ब्राह्मण्यादि प्रदां त्वां परितः मृत्तिकां प्रक्षिपामीति तदर्थः । यतस्त्वं ब्राह्मण्यादि-प्रदा अतस्त्वां पर्यूहामीत्यनेन ब्राह्मण्यादिप्रार्थनैव कृता भवति । ब्राह्मणत्वं ह्यंशद्वयात्मकम् । तत्रैकोंऽशः शमाद्यात्मगुणाः अपरश्चांशो ब्रह्मवर्चसम् । येन योंऽशः प्राप्तस्तेनापरांशाय प्रार्थना क्रियते । एवं क्षत्रियत्वमप्यंशद्वमात्मकम् । तत्र शौर्यधैर्यादिय एकोऽशः, शूरत्वेष-व्यत्वादिकं चापरः । अत्राप्येकांशप्राप्तिमताऽपरांशप्राप्त्यै याचना क्रियते । न चैतावता याच्यमानस्यांशस्य सुतरामभावः किन्तु तस्याप्यंशतस्सत्वमस्त्येव यस्य पूर्णत्वाय प्रार्थना क्रियते । तदेतदुच्यते दृष्टान्तपुरस्सरम् यथाऽऽयुरित्यादिना । यथाहि "आयुर्दा अग्ने आयुर्मे देहि वर्चो दा अग्ने वर्चो मे देहि ( तै० सं० १.५.५ ) इत्यादिना "आयुर्मे दाः प्रजां मे दाः चक्षुर्मे दाः श्रोत्रं मे दाः वाचं मे दाः ब्रह्म ( ब्राह्मणत्वं ) मे दाः, क्षत्रं ( क्षत्रियत्वं ) मेदाः ( मैं० सं० ४.९.३ ) इत्यादिना च आयुर्वर्चश्चक्षुरादिमतैव तत्तत्पूर्णत्वाय प्रार्थना क्रियते न तु सुतरां चक्षुरादिशून्येन तथा प्रकृतेऽपि ज्ञातव्यम् । तस्मादस्त्येव ब्राह्मण्यब्रह्मवर्चसयोः समन्वैयत्यम् । तत्तयो = तत् समानधिकरण्य तयोः ब्राह्मण्यब्रह्मचर्यसयोः ( १३२ ) अथवा आब्रह्मन् ब्राह्मणो ब्रह्मवर्चसी जायताम्, आ राष्ट्रे राजन्यः शूरः इषव्योऽतिव्याधी महारथी जायताम्" इत्यादिवाक्यस्येयमपरा व्याख्या । आब्रह्मन् = ब्रह्मणि = यज्ञे ब्रह्मवर्चसी ब्राह्मणो जायतां = भवतु । यः ब्रह्मवर्चसी भवति स सर्वत्र यज्ञे ब्राह्मणत्वेन स्वीक्रियतामित्यर्थः कुत एवमित्युक्तावग्रे उच्यते, ब्राह्मण एव ब्रह्मवर्चसं दधाति । तस्मात्पुरा ब्राह्मणो ब्रह्मवर्चसी जज्ञे" इत्यादिः । पूर्वमपि ब्रह्मवर्चसी एव ब्राह्मणो जज्ञे बभूव ब्राह्मणत्वेनेष्टः तस्मादिदानीमपि तादृश एव ब्राह्मणो भवतु ब्राह्मणत्वेनेष्यतामिति । दर्शितस्वरूपं ब्रह्मवर्चसं हि प्रत्यक्षं भवति, तेन प्रत्यक्ष-धर्मेणाऽप्रत्यक्षं ब्राह्मण्यं ज्ञात्वा "ब्राह्मणो बृहस्पतिसवेन यजेत" इत्यादिविधियु ब्राह्मण-त्वेन स्वीक्रियतामिति भावः । ब्राह्मणत्वादिवर्णानां शास्त्रीयपदार्थत्वेन शास्त्रीय कर्मसु यत्र तत्र तेषामुद्देश्यत्वं तत्र तत्रैव तेषामुपयोग इत्यग्रे वक्ष्यते । न ह्यश्वत्वादिवत् ब्राह्मण-त्वादयः प्रत्यक्षजातयः येनैतादृशार्थवर्णनस्यावश्यकतैव न स्यात् । वर्णानां जातित्वाभावः बहुधा दर्शितो दर्शयिष्यते च । न च प्रत्यक्षजातीनां पूर्णत्वं दृढत्वादिकं वा याच्यते । याच्यते चेह तदपि ।

तथैव ब्रह्म क्षत्रं च दृँह इत्यादिवाक्यतः । दृढत्वं ब्राह्मणत्वेऽपि क्षत्रियत्ये च याच्यते ॥१३४॥
सामान्यतः स्थितस्यात्र दृढत्वार्था हि याचना । उपाधावुपपन्ना स्यान्नतु जातौ कदाचन ॥१३५॥
मनुष्यत्वादिका जातिः सदा तेषु दृढैव सा । दृढत्वाद्दृढताबुद्धिर्न कस्याप्यत्र जायते ॥१३६॥
उत्पत्त्यनन्तरं यो हि प्रयत्नैरेव लभ्यते । स चोपाधिर्दृढत्वादि प्रार्थना तत्र संभवेत् ॥१३७॥

वैसा ही "ब्रह्म दृँह क्षत्रं दृँह' ( तै० सं० १.३.६ ) अर्थ हे दण्ड हमारे ब्राह्मणत्व और क्षत्रित्व को तुम दृढ़ करो ) इस मन्त्र से ब्राह्मणत्वादि में दृढत्व की प्रार्थना की जाती है । सामान्य रूप से वर्तमान धर्म में ही

दृढत्व की याचना उचित होती है। मनुष्यादि में मनुष्यत्वादि जाति स्वतः दृढ़ ही है और उसमें दृढत्वादृढत्वादि बुद्धि नहीं होती। उत्पत्ति के बाद जो चीज पुरुष प्रयत्नों से पायी जाती हैं उसी में दृढत्वादृढत्वादि व्यवहार होता है न कि जन्म से सद्ध वस्तु में।

तथैव ब्रह्मेति ( १३४ ) "ब्रह्मदृँह क्षत्रं दृँह" ( तै० सं० १।३।६ ) इत्यादिना शमादिगुणैर्वा ब्रह्मवर्चसादिना वा सामान्यतः स्थिते ब्राह्मणत्वादिके तदन्यतरपूरणद्वारा दृढत्वं प्रार्थ्यते। हे दण्ड त्वमस्माकं ब्राह्मणत्वं क्षत्रियत्वं च दृढी कुरु इति। वैश्यत्वदृढीकरणस्योपलक्षणमेतत्। न चैवं शूद्रत्वदृढीकरण याचना संभवति। तस्य स्वतः सिद्धत्वेन अवाञ्छनीयत्वेन चायाच्यत्वात्। संस्कारयोग्यता-शून्यत्वं हि शूद्रत्वम्।

पयो व्रतं ब्राह्मणस्य तेजस्वित्वादद्वयोरपि। राजन्यस्य यवागूः स्यात्क्रूरत्वादेव च द्वयोः॥१३८॥
स्यात्पुष्टिहेतुरामिक्षा तदर्थिनो विशो व्रतम्। मस्तु व्रतं तु शूद्रस्य मूल्यशून्यौ यतश्च तौ॥१३९॥
वाक्यैरेतैस्तैत्तिरीयसंहितान्तर्गतैरपि। विज्ञायते तदेवात्र नैयत्यं प्राक् प्रदर्शितम्॥१४०॥
तेजस्वित्यादिकं येषु दृश्यते च स्वभावतः। त एव ब्राह्मणाः प्रोक्ताः नान्ये निस्तेजसो नराः॥१४१॥
एवं स्वशत्रुसंहारयोग्यक्रौर्यादिकं नृषु। येषु संदृश्यते ते च क्षत्रिया न तु साधवः॥१४२॥
धनपुष्ट्यादिकामा ये ते वैश्याः श्रुतिसम्मताः। विद्याहीनतया सार शून्याः शूद्राः श्रुतेर्मताः॥१४३॥
तादृशाश्चोपलभ्यन्ते सर्ववर्णेष्वपि क्षितौ। तस्मात्तव जातिवादो वेदशास्त्रैर्न सम्मतः॥१४४॥

दूध और ब्राह्मण ये दोनों तेजस्वी हैं। अतः दूध ही ब्राह्मण का व्रत होना चाहिये। यवागू और क्षत्रिय क्रूर हैं। अतः यवागूः ( गञ्जि ) क्षत्रिय का व्रत हो। वश्य धन-धान्यादि से पुष्ट होना चाहते हैं। अतः पुष्टिहेतु आमिक्षा ( दही के ऊपर मलायी ) वैश्य का व्रत हो और विद्याहीन होने का कारण शूद्र महत्वशून्य होता है। अतः उसके लिये सार शून्य मस्तु ( दही का पानी ) व्रत हो। इन तैत्तिरीय संहिता के वाक्यों से भी पहले कहा हुआ समनियतत्व ही मालूम होता है। तेजस्विता = विज्ञान प्रकाश जिनमें स्वभावतः है वे ही ब्राह्मण होते हैं न कि तेजो रहित। ऐसा ही शत्रुओं और दुष्टों को मारने की योग्य क्रूरता जिनमें सहजतः रहती है वे ही क्षत्रिय हैं न कि साधुस्वभाव वाले। धनधान्यादि समृद्धि काम ही वेद सम्मत वैश्य और मन्दबुद्धि और पशुतुल्य मनुष्य ही श्रुति सम्मत शूद्र है। ऐसे लोक सब, सब वर्णों में मिलते ही है। अतः जातिवाद वेदशास्त्र सम्मत नहीं है।

राजन्यस्य यवागूरिति "यवागू राजन्यस्य व्रतम्। क्रूरेव वै यवागूः क्रूर इव राजन्यो वज्रस्य रूपं समृद्धा, अमिक्षा वैश्यस्य पाक यज्ञस्य रूपं पुष्ट्यै। पयो ब्राह्मणस्य



तेजो वै ब्राह्मणस्तेजः पय स्तेजसैव तेजः पय आत्मन् धत्ते" ( तै० सं० ६.२.५ ) इति। शौर्यं धैर्यादि रजोगुणयुक्तत्वेन क्षत्रियः क्रूर इव प्रतीयते, यवागूश्च तादृशरजोगुणवर्धिका सती क्रूरेव प्रतीयते। अतो व्रतसमये यवागूभक्षणेन क्षत्रियस्य स्वीयगुणवृद्धिर्भवति। एवमामिक्षायाः पुष्टिहेतोः व्रतसमये भक्षणेन पुष्ट्यर्थिनो वैश्वस्य स्वाभीष्टं सिद्ध्यति। शमादिसात्विकगुणयुक्तत्वेन ब्राह्मणस्तेजस्वी भवति। पयोऽपि तादृश गुणवर्धकम्। अतो व्रते तद्भक्षणेन ब्राह्मणस्य स्वकीयगुणवृद्धिः स्यात्। एवं "मस्तु शूद्रस्ये" ति वाक्यं वर्तते। "मस्तु = जलं मूल्यरहितं वस्तु, एवं शूद्रोऽपि। अतो व्रतसमये तस्य तद्भक्षणं विहितम्। यद्यपि मस्तु शूद्रस्येति पाठो वर्तमानमुद्रितवेदग्रन्थेषु नोपलभ्यते तथापि अपशूद्राधिकरणशाबर भाष्ये तस्याप्युद्धृतत्वेन सोऽपि क्वचिदमुद्रित ग्रन्थे स्यादित्यनुमीयते। जातिवादिभिः शूद्रस्य व्रतादिकं नेष्यते। अतस्तैः तद्वाक्यं बहिर्निष्कासितमिति ज्ञातव्यम्। एवं "जन्मना जायते शूद्र इति श्लोकमपि प्रामाणिकाः स्वस्वग्रन्थेषूदाहृतवन्तः। तत्र प्रदर्शित स्मृत्यध्याय-संख्यानुसारेणेदानीमवलोकने सति "जन्मना ब्राह्मणो ज्ञेय इति वाक्यमुपलभ्यते। एतदप्यर्वाचीनजातिवादिकृत्यमेव। अस्तु जन्मना शुद्रत्वं वा ब्राह्मणत्वं वा सेत्स्यतीत्यग्रेऽपि विचारयिष्यामः शूद्रस्य हुतशेषजलभक्षणं विहितमैतरेयके। दर्शितं चात्रैव श्लो० ८७। यागविध्यपेक्षित-ब्राह्मणत्वादिकं दर्शितार्थवादैः यवादिस्वरूपमिव ज्ञातव्यं भवतीति न जातिवादस्य मनागप्यवकाशः।

क्व दृष्टमद्य वेदोक्ततेजस्वित्वादिकं नृषु। जन्मब्राह्मण्यगर्वेण क्रूरकर्मरतेष्विह॥१४५॥
अर्थवादानुसारेण यवागूर्यदि तद्व्रतम्। गत स्तव जातिवादो गुणवादे समागमः॥१४६॥
जाति-प्रथारक्षणादिदुराग्रहवशेन चेत्। पयो व्रतं भवेत्तेषामर्थवादो निरर्थकः॥१४७॥
जनको यदि राजन्यः क्रूरताऽस्य क्व च श्रुता। क्व दृष्टा चाद्य सर्वेषु क्षत्रियत्वभिमानिषु॥१४८॥
यवागूर्वा पयो वैषां व्रतं स्याद्वद साम्प्रतम्। श्रुतिर्वा प्रबलाऽऽहोस्वित्त्वदीयो वा दुराग्रहः॥१४९॥
त्वद्दुराग्रहप्राबल्ये यवागूर्व्रतमिष्यते। श्रुतिप्राबल्यपक्षे च पय एव भविष्यति॥१५०॥
एवं धनप्रलोभेन वाणिज्यादि प्रकुर्वताम्। किं ब्राह्मणब्रुवाणां स्यादामिक्षा वा पयो व्रतम्॥१५१॥
राष्ट्रभृत्याः परप्रेष्या नीचकर्मरताश्च वा। किं ब्राह्मणब्रुवाः कुर्युर्जलेन पयसा व्रतम्॥१५२॥
श्रौतार्थवादप्राबल्ये जलं तेषां व्रतं भवेत्। त्वद्दुराग्रह प्राबल्ये पयः स्यात्किन्त्वनर्थकम्॥१५३॥
एवं क्षत्रियवैश्यादावुक्तरीत्या विकल्पने। श्रौतं व्रतं भवेदन्यत्त्वदिष्टं चान्यदेव हि॥१५४॥
अश्रौतमार्गमाश्रित्य गर्तेऽन्यान्न निपातय। तेजस्वित्वादिमत्येव ब्राह्मण्यादिमवेहि भोः॥१५५॥

जन्म से अपने को ब्राह्मण समझ कर क्रूरकर्म करने वालों में वेदोक्त तेजस्विता कहाँ दीखती है। अर्थवाद के अनुसार उनको क्षत्रियोचित यवागू यदि व्रत मानोगे तो तुम्हारा जातिवाद नष्ट हो जाता हैं और गुणवाद में आना भी हो जाता है। तुम्हारे दुराग्रह से उनको यदि पय ( दूध )

ही व्रत मानोगे तो श्रौतार्थवाद निरर्थक हो जाता है। जनक को तुम क्षत्रिय मानोगे तो उसकी क्रूरता कहाँ सुनी जाती है ? और आजकल के क्षत्रियत्वभिमानी सभी में वह कहाँ देखती है ? उनको तुम यवागू व्रत मानोगे या पय, और यह भी बताओ श्रुति प्रबल है या तुम्हारा दुराग्रह। तेरा दुराग्रह प्रवल होगा तो उनको यवागू ही व्रत होगा, नहीं तो पय होगा। ऐसा ही धन धान्यादि सम्पत्ति के लोभ से वाणिज्यादि करने वाले ब्राह्मण ब्रुवों को तुम आभिक्षा व्रत मानोगे या पय और नौकरी चपरासी और नीच कर्म करने वाले जन्म ब्राह्मण, क्या तुम्हारे मत में जल से व्रत करेंगे या दूध से। यहाँ भी श्रौतार्थवाद प्रवल होगा तो जल ही होगा नहीं तो दूध होगा। ऐसा ही जन्म से वैश्य और शूद्र माननेवालों के विषय में भी ऊपर की तरह विकल्प करने पर श्रौत व्रत दूसरा और तुम्हारे मत का व्रत दूसरा ही सिद्ध होता है। अवैदिक मार्ग को लेकर तुम दूसरों को गड्ढे में मत गिराओ और वेदवाक्यों के अनुसार तेजस्वित्वादि वालों में ही ब्राह्मणत्वादि को समझ लो।

तथैव श्रीक्षत्रियत्व सामानाधिकरण्यत:। श्रीयश: कामनाऽप्यत्र क्षत्रियत्वस्य कामना ॥१५६॥
पश्वन्नपृष्टि वैश्यत्व समव्यप्ति:श्रुतीरिता। तस्मात्पश्वादिकामित्वं वैश्यत्वस्यैव कामना॥१५७॥
अत:श्रुत्युक्तमाधानं ग्रीष्मे क्षत्रियतार्थिने। वर्षतावपि वैश्यत्वकामिने विहितं हि तत् ॥१५८॥

वैसा ही राज्यश्री और क्षत्रियत्व का समानाधिकरण्य (एकत्रस्थिति) रहता है। अत: आधान प्रकरण में कही गयी श्रीयश: कामना क्षत्रियत्व कामना ही है। एवं पशु अन्नादि-सम्पत्ति और वैश्यत्व का सामाधिकरण्य श्रुति से भी मालूम होता है। अत: आधान प्रकरण में पशुकाम के लिए भिन्न ऋतु में जो आधान बताया गया है वह वैश्यत्वकाम के लिये ही है।

श्रीक्षत्रियत्वेति १५६। "अप वा एतस्माच्छ्री: राष्ट्रं क्रामति योऽश्वमेधेन यजते" (तै० ब्रा० ३।९।१४) इति। अस्य च सा० भाष्यम्" नियमं स्वीकृतवतो राज्ञश्चिरकालं राजोपचाराभावेन श्री: राष्ट्रं चास्मादपगच्छति। क्रतुसमाप्तिपर्यन्तमध्वर्योरेव राजत्वात्" इति। क्रतु दीक्षासमये हि क्षत्रियस्य ब्राह्मणत्वमायातीति दर्शितमेव पूर्वम्। क्षत्रियत्वाभावादेवास्माच्छ्री: राष्ट्रं चापक्रामति। ब्राह्मणे च न श्री रमते न वा राष्ट्रं रमते इत्यपि तत्रैवोक्तम् "न वै ब्राह्मणे श्री रमते" "न वै ब्राह्मणे राष्ट्रं रमते" इति। "नवै ब्राह्मणो राज्यायालम्" (शत० ब्र ५।१।१) इति च। राजत्वमपि क्षत्रियस्यैव। "राजा वै राजसूयेनेष्ट्वा भवति वाजपेयेनेष्ट्वा सम्राट् भवति" इति तत्रैवोक्तत्वात् श्रीक्षत्रियत्वयो: सामानाधिकरण्यम्। बलवता खलु श्री: राष्ट्रं च स्वायत्तीक्रियते। बलं



च क्षत्रिये एव "तस्माद्राजा बाहुबली भावुक:" (काण्वशत० ब्रा० १५।२।२) इत्युक्तत्वात्। "अत: श्रुत्युक्तमाधानमिति १५८।" श्रुत्युक्तमाधानमग्रे वक्ष्यते।

इत्थं ताण्ड्यश्रुतावुक्तमिन्द्र: प्रायच्छदालसान्। यतीन् सालावृकेभ्यो ये त्रयस्तेष्ववशेषिता:।१५९
तत्राद्य: पृथुरश्मिर्हिद्वितीयस्तु बृहद्गिरि:। राजो वाजस्तृतीयश्च तेऽयाचन्त वरत्रयम् ॥१६०॥
क्षत्र माद्यस्त्वयाचिष्ट द्वितीयो ब्रह्मवर्चसम्। तृतीयश्च पशूनिन्द्रमयाचिष्ट हितं वरम् ॥१६१॥

ताण्ड्य ब्राह्मण में यह गाथा आती है कि इन्द्र ने यतियों को शृगालों को दे दिया था। उनमें से तीन बच गये थे पृथुरश्मि बृहद्गिरि: रोजोवाज। ये तीन इन्द्र से पूछे थे कि हमारी रक्षा कौन करेगा। इन्द्र ने उत्तर दिया मैं ही करूँगा। तुम को जो जो वर चाहिये उसे माँग लो। तब पृथुरश्मि ने माँगा कि क्षत्रयत्व मुझे दो, बृहद्गिरि ने ब्रह्मवर्चस और राजोवाज ने पशुओं को।

ताण्ड्ये प्रोक्ता वाक्यानुपूर्वी अग्रे दर्शयिष्यते। यतीनीति = यतयो हि कर्मसंन्यासिन इन्द्रादिदेवान् न पूजयन्ति 'अतस्ते देवा यतिद्वेषिण: सन्ति। उक्तं बृहदारण्यके "तस्मादेषां तन्न प्रियं यदेतन्मनुष्या विद्यु:" इति। अतएव ते यतिनियमेषु विघ्नमपि कुर्वन्तीत्यन्यत्र श्रूयते। सालावृकेभ्यो दत्तानां मध्ये येऽवशिष्टा: त्रयो यतय: ते देवता-पूजार्हं वर्णत्रयमयाचन्त। यतस्ते यागादिरूपामिन्द्रादिपूजां विना प्राणै: स्थातुमेव नार्हन्ति। एतेन यतिषु वर्णा न सन्तीत्यपि ज्ञायते। तत्र पृथुरश्मि: क्षत्रियत्वं बृहद्गिरि: ब्रह्मवर्चसमर्थात्ब्राह्मणत्वम् राजोवाज: पशून् = वैश्यत्वं चायाचिषु:।

क्षत्रं हि पार्थुरश्मेन ब्रह्मसाम्ना शचीपति:। याचतेऽयच्छदाद्याय परस्मै ब्रह्मवर्चसम् ॥१६२॥
ब्राहंद्गिरेण साम्ना च, तृतीयस्मै पशून् प्रभु:। राजोवाजीयसाम्ना तु ददाविन्द्रो यथाक्रमम्।१६३
तस्मात्तदिच्छव: सर्वे स्तुवीरंस्तैस्तु सामभि:। एवमुक्त्वा ततोऽग्रेऽपि विदधाति स्वयं श्रुति:१६४

उनकी इच्छा के अनुसार इन्द्रने पार्थरश्मिब्रह्म साम से पृथुरश्मि को क्षत्रियत्व, बार्हद्गिरब्रह्मसाम से बृहद्गिरि को ब्रह्मवर्चस = ब्राह्मणत्व दिया और राजोवाजीय ब्रह्मसाम से राजोवाज को पशुओं को अर्थात् वैश्यत्व दिया था। अत: आगे भी कहा गया था कि जोजो जिस जिस वर्ण को चाहता हो वह उसका हेतूभूत साम से स्तुति करे: इतना कहकर श्रुति ब्राह्मणादिवर्णो के लिये तत्तत्साम का विधान करती है।

पार्थुरश्म ब्रह्म साम राजन्याय विधीयताम्। बार्हद्गिरं ब्राह्मणाय राजोवाजीयमार्यके १६५॥
तत्तत्साम च स्वेनैव रूपेण क्षत्रियं तथा। समर्थयत्यभीष्टेन ब्राह्मणं वैश्यमञ्जसा ॥१६६॥

ऋत्विक लोग क्षत्रिय के लिये पार्थुरश्म, ब्राह्मण के लिये बार्हद्गिर

और वैश्य के लिये राजोवाजीय नामक साम यथा क्रम बोले और वे साम क्षत्रिय ब्राह्मण और वैश्य को अपने अपने अभीष्ट समृद्धि करवायेंगे।

ताण्ड्ये श्रूयते "इन्द्रो यतीन् सालावृकेभ्यः प्रायच्छत्। तेषां त्रय उदशिष्यन्त (अवशिष्टाः) पृथुरश्मिर्बृहद्गिरिः राजोवाजीयः। तेऽब्रुवन् को न (अस्मान्) इमान् पुत्रान् भरिष्यतीति। अहमिन्द्रोऽब्रवीत् (अहमितीन्द्रोऽब्रवीत्) तानधिनिधाय (रथे उपवेश्य) परिचर्यं चरद्वर्धयंस्तान् वर्धयित्वाऽब्रवीत् (इन्द्रः) कुमारका वरान् वृणीध्वमिति। क्षत्रं मह्यमित्यब्रवीत्पृथुरश्मिः। तस्मा एतेन पार्थुरश्मेन क्षत्रं प्रायच्छत्। क्षत्रकाम एतेन स्तुवीत, क्षत्रस्यैवास्य प्रकाशो भवति। ब्रह्मवर्चसं मह्यमित्यब्रवीद्बृहद्गिरिः। तस्मा एतेन बार्हद्गिरेण ब्रह्मवर्चसं प्रायच्छत्, ब्रह्मवर्चसकाम एतेन स्तुवीत। ब्रह्मवर्चसी भवति। पशून् मह्यमित्यब्रवीद्राजोवाजीयः। तस्मा एतेन राजोवाजीयेन पशून प्रायच्छत्। पशुकाम एतेन स्तुवीत पशुमान् भवति" (१३।४। ७) इति। एतां गाथामुक्त्वाऽग्रे विदधाति श्रुतिः "पार्थुरश्म राजन्याय ब्रह्मसाम कुर्यात्। बार्हद्गिरं ब्राह्मणाय, राजोवाजीयं वैश्याय, स्वेनैवैतान् तद्रूपेण समर्धयति साम" इति। अस्य सा० भाष्यं चेत्थं वर्तते—"राजन्याय = क्षत्रियाय पार्थुरश्म ब्रह्मसाम कुर्यात्। एवमुत्तरत्रापि योजना। क्षत्रियस्य हि स्वकीयं रूपं क्षत्रं ब्राह्मणस्य ब्रह्मवर्चसम्, वैश्यस्य पशवः पशुपाल्यं च तस्य कर्म। एतानि त्रीणि सामानि एतत्त्रितय-साधनानीत्युक्तम्। तथा सति स्वेन स्वकीयेन नियतेनैव रूपेण एतान् राजन्यादीन् समर्द्धयति = समृद्धान् करोति" इति। क्षत्रियस्य हि स्वकीयं रूपं क्षत्रियत्वमेव नान्यदित्यवगन्तव्यम्। एवं ब्राह्मणस्य स्वीयं रूपं ब्राह्मणत्वं यदत्र ब्रह्मवर्चसशब्देनोक्तम्। वैश्यस्य च स्वकीयं रूपं यद्वैश्यत्वं तदत्र पशुशब्देन उक्तम्।

श्रुत्युक्त क्षत्रशब्दस्य बलमर्थं इतीरितम्। सायणेन स्वभाष्ये तत्तथैवास्त्वत्र साम्प्रतम् ॥१६७॥
बलकामित्वनैयत्यं राजन्यत्वे नचेद्यदि। बलप्रदायकं साम राजन्यायेति तत्कुतः ॥१६८॥
ब्रह्मवर्चसकामत्वं ब्राह्मण्यनियतं न चेत्। तदा कुतो ब्राह्मणाय तद्वर्चो-हेतुरुच्यताम् ॥१६९॥
एवं वैश्यत्वपश्वादिकामित्वसहचारिता। न चेत्तदा विशे साम पशुहेतुः कुतो भवेत् ॥१७०॥

पहले वर में जो क्षत्र शब्द आया है उसका अर्थ सायण ने जो बल बताया था वह तुष्यतु दुर्जन—न्याय से वहाँ वैसा ही रहे किन्तु यहाँ विचारणीय विषय यह है कि बलकामना और क्षत्रयत्व का समनियतत्व यदि न होता तब बल देनेवाला साम क्षत्रिय के लिये क्यों बोला जाय उन दोनों का समनियतत्व मानने पर यह अर्थ होगा कि क्षत्रिय बलार्थी ही है। अतः बलहेतु साम उसके लिये बोलना चाहिये। अब उसका विधान करनेवाला श्रौत विधि भी इष्ट साधक होगा। जातिवाद में राजन्य



ब्रह्मवर्चस कामी या पशु कामी भी हो सकता है। उसके लिये बल हेतु साम बोला जायगा यह आपत्ति भी आ जायगी कि वहाँ के विधि का अर्थ इष्टसाधनत्व नहीं किन्तु अनिष्टसाधनत्व ही होगा। अतः इस आपत्ति को हठाने के लिये उन दोनों का समनियतत्व मानना ही चाहिये। ऐसा ही ब्रह्मवर्चसकामना और ब्राह्मणत्व का, तथा पशुकामना और वैशत्व का भी समनियत्व मानना ही होगा। नहीं तो राजन्य के विषय में जो आपत्ति दी गयी वह यहाँ भी आ जायगी।

केचिदत्र ब्रुवन्त्येवं राजन्यपदमत्र हि। क्षत्रियत्वार्थिनं ब्रूते पूर्ववाक्यैकवाक्यतः ॥१७१॥
एवं ब्राह्मणशब्दोऽपि ब्रह्मवर्चसकामिनम्। पश्वर्थिनं वैश्यपदं ब्रूते न्यायादधस्तनात् ॥१७२॥

कुछ लोग यहाँ ऐसा कहते हैं कि उन विधिवाक्यों में राजन्य पद क्षत्रयत्वार्थी को ब्राह्मण पद ब्रह्मवर्चसार्थी को और वैश्य पद पशुकामी को बताते हैं। ऐसा कहने पर निम्नलिखित न्याय से विधि और अर्थवाद वाक्यों की एकवाक्यता भी सिद्ध हो जाती है।

अत्र हीति (१७१) अत्र = पार्थुरश्म राजन्याय ब्रह्मसाम कुर्यादित्यादिविधिस्थले। अधस्तनात् न्यायात् = अधोनिर्दिष्टाश्वप्रतिग्रहेष्टिन्यायेनेत्यर्थः।

अश्वप्रतिग्रहेष्ट्यादिन्यायेनात्रैकवाक्यता। विध्यर्थवादयोरङ्गीकार्या श्रुतिसमादरैः ॥१७३॥
तत्रेष्टौ प्रतिगृह्णीयाद्यावतोऽश्वाँश्च तावतः। वारुणान्निर्वपेदुक्तं कपालान् चतुरस्त्विति ॥१७४॥
प्रतिपूर्वकगृह्णातिधात्वर्थोऽस्ति प्रतिग्रहः। तथापीहार्थवादानुसारेण दानमुच्यते ॥१७५॥
अर्थवादस्तु तत्रस्थो वारुणाय प्रजापतिः। दत्वाऽश्वं रोगमेवाप्तः स जलोदरनामकम् ॥१७६॥
ततश्चतुष्कपालस्थ पुरोडाशेन वारुणम्। यागं कृत्वा विमुक्तोऽभूत्स तद्रोगादिति श्रुतम् ॥१७७॥
तस्माद्यो यावतश्चाश्वान् दद्यात्स वारुणानपि। तावतो निर्वपेदेव कपालान् चतुरस्त्विति॥१७८॥

अश्व प्रतिग्रहेष्टिन्याय से यहाँ भी विधि और अर्थवादों की एकवाक्यता माननी होगी। उस इष्टि में जितने अश्वों का प्रतिग्रह करें उतने वरुणदेवताक चतुष्कपालपुरोडाश का निर्वाप करना चाहिये ऐसा विधि है। प्रति ग्रह शब्द का अर्थ है लेना किन्तु वहाँ के अर्थवाद के अनुसार उसका दान अर्थ बताया गया है। वह अर्थवाद नीचे दिया गया है उसका अर्थ है कि पहले प्रजापति ने वरुण को अश्व दिया था और वह वरुण उसे जलोदररोग के रूप में पकड़ा था। उसके निवारण के लिये प्रजापति ने वरुणदेवताका याग किया था और उससे वह मुक्त हो गया था। अतः आगे भी जो अश्व का दान देता है वह भी वरुणदेवताक याग करें नहीं तो वह रोग पकड़ेगा।

अश्वप्रतिग्रहेति "यावतोऽश्वान् प्रतिगृह्णीयात्तावतो वारुणान् चतुष्कपालान्निर्वपेत्" ( तै० सं० २.३.१३ ) इति विधिस्थलेऽर्थवादः श्रूयते "प्रजापतिर्वरुणायाश्वमनयत् स स्वां देवतामार्च्छत्, स पर्यदीर्यत स एतं वारुणं चतुष्कपालमपश्यत् । तन्निरवपत्, ततो वै स वरुणपाशादमुच्यत, वरुणो वा एनं गृह्णाति योऽश्वं प्रतिगृह्णाति" इति । तत्र प्रतिगृह्णातेः प्रतिग्रहार्थकत्वेऽपि अर्थवादानुसारेण दानमर्थो निर्णीतो मीमांसादर्शने (३.४.१४)

एवं प्रकृतविध्यर्थवादयोरेकवाक्यताम् । इच्छद्भिर्धर्मिशक्तं तद्धर्मार्थिपरमुच्यते ॥१७९॥
क्षत्रियत्वार्थिने पार्थुरश्म साम वदेदिति । ब्रह्मवर्चसकामाय बार्हदिगरं ब्रवीत च ॥१८०॥
राजोवाजीयमप्यत्र ब्रूयात्पश्वर्थिने त्विति । प्रोक्ते विध्यर्थवादोक्त्योरत्र स्यादेकवाक्यता १८१

उसी प्रकार प्रकृतविधि और अर्थवादों की एकवाक्यता माननेवाले राजन्य पद का क्षत्रियत्वार्थी ब्राह्मण पदका ब्रह्मवर्चसार्थी और वैश्य पद का पशुकामी अर्थ बताते हैं।

नन्वर्थवादेऽप्यत्रस्थे "क्षत्रकाम एतेन स्तुवीत ब्रह्मवर्चसकाम एतेन स्तुवीत पशुकाम एतेन स्तुवीत" इति वर्तते । अग्रिमविधिवाक्यानामपि स एवार्थो यद्युच्येत तर्हि पौनरुक्त्यं प्रसज्येतेति चेदुच्यते । अर्थवादे हि क्षत्रादि कामं नरं प्रति साक्षाद्विदधाति श्रुतिः । विधिषु च क्षत्रयत्वाद्यर्थिभ्यः तत्तसाम ब्रूयादिति ऋत्विजं प्रति । अतो न पौनरुक्त्यम् ।

क्षत्रार्थी यदि राजन्यो नियमेन भवेत्तदा । क्षत्रप्रदं पार्थुरश्म तस्मै वक्तुं च युज्यते ॥१८२॥
अन्यथाऽनिष्टसम्प्राप्त्यै तद्धि साम कृतं भवेत् । तद्विधायकशास्त्रस्याप्यप्रामाण्यं प्रसज्यते १८३॥
जातिपक्षे बलार्थित्वं ब्राह्मणेष्वपि दृश्यते । ब्रह्मवर्चसकामत्वं क्षत्रियादावपीक्ष्यते ॥१८४॥
एवं चात्र पार्थुरश्म राजन्याय बलप्रदम् । बार्हदगिरं ब्राह्मणाय ब्रह्मवर्चसदायकम् ॥१८५॥
ब्रूयादिति विधिः स्वार्थशून्यो भवेद्यतो विधेः । इष्टसाधनतैवार्थः शास्त्रकृद्भिर्विनिश्चितः॥१८६॥
तस्मादत्र प्रवक्तव्यं पार्थुरश्मादि साधनैः । बलं श्रियं च यः प्राप्तः स एव क्षत्रियस्त्विति॥१८७॥
बार्हदगिरादिभिर्यो वा वसन्ताधानतश्च यः । ब्रह्मवर्चसमाप्तः स्यात्स एव ब्राह्मणस्त्विति १८८॥
एवं वैश्येऽपि बोद्धव्यं वेदशास्त्रैकनिर्भरैः । प्रत्यक्षत्वाद्बलादीनां तद्द्वारा सहचारिधीः॥१८९॥
यथा दर्शित मीमांसा न्यायाद्यवस्वरूपधीः । तथा प्रत्यक्षबाह्वादि वीर्यात्क्षात्रादिनिर्णयः॥१९०॥

क्षत्रार्थी ही राजन्य हो तब क्षत्रप्रद ( क्षत्रियत्व देनेवाला ) साम राजन्य के लिये बोलना उचित होगा नहीं तो विधि अनर्थकारी हो जायगा। उससे शास्त्र में अप्रमाण्य बुद्धि होगी। जातिवादी के पक्ष में ब्राह्मण में भी बलार्थित्व देखा जाता है और ब्रह्मवर्चस की इच्छा क्षत्रियादि में भी देखी जाती हैं। जातिवादी अपने हठ से क्षत्रार्थी ( बलार्थी ) को ब्राह्मण और ब्रह्मवर्चसार्थी को क्षत्रिय समझकर यथाक्रम बार्हद्गिर और पार्थुरश्म साम बोलेगा तो वहाँ का विधि स्वार्थशून्य हो जायगा। शास्त्रकारों ने विधि का अर्थ ईष्टसाधनत्व मान लिया था किन्तु जातिवादि मत में वह न ही रहेगा। अतः यह अवश्य कहना होगा कि जो पार्थुरश्मिादि साम और ग्रीष्म ऋतु में आधानादि के द्वारा बल और राज्यश्री को प्राप्त करेगा वही क्षत्रिय है और उसी को क्षत्रियोचित कर्मों में अधिकार है। और बार्हद्गिरादि साम और वसन्ताधानादि से जो ब्रह्मवर्चसादि को प्राप्त कर लिया हो वही ब्राह्मणोचित श्रौतकर्मों का अधिकारी है। वैसा ही वैश्य के विषय में भी समझना चाहिये। अर्थात् जो राजोवाजीयादि साम और वर्षा या ( शाखा भेद से ) शरदृतु में आधान के द्वारा पशु सम्पत्ति और धान्यादि का संग्रह कर लिया हो वही वैश्योचित श्रौत कर्मों का अधिकारी है। बाहु-बल और ब्रह्मवर्चसादि गुण प्रत्यक्ष होते हैं। अतः इन गुणों के द्वार उनके समनियत क्षत्रियत्व ब्राह्मणत्वादि धर्मों का निर्णय कर लेना चाहिये जसे मोदमानत्वरूप प्रत्यक्षधर्म के द्वारा अज्ञात यवपदार्थ का निर्णय मीमांसाशास्त्र में बताया गया वैसा ही वर्णों का भी निर्णय कर लेना चाहिये।



ब्रह्मवर्चसकामस्य यदाधानमपि श्रुतौ । वसन्ते विहितं तच्च ब्राह्मणत्वं हि वाञ्छतः ॥१९१॥
श्रीयशः कामिने ग्रीष्मे यदाधानं श्रुतौ श्रुतम् । क्षत्रियत्वार्थिनस्तद्धि प्रोक्तं शतपथद्वये ॥१९२॥
प्रजापश्वर्थिनो यच्च वर्षास्वाधानमीरितम् । तत्तु वैश्यत्वकामस्य कर्तव्यत्वेन चोदितम् ॥१९३॥
शूद्रोचितार्यसेवादिरनभीष्टो नृणामतः । तत्कामकर्तृकत्वेन नाधानं विहितं श्रुतौ ॥१९४॥
शूद्रेणापि हि सेवादिः स्वतो नैवाभिलष्यते । किन्त्वगत्या देहयात्राहेतोस्तत्र प्रवर्तते ॥१९५॥

दोनों शतपथ ब्राह्मणों में ब्रह्मवर्चस काम का वसन्त ऋतु में जो आधान बताया गया है वह ब्राह्मणत्व काम के लिये ही है। श्री और यशस्काम का ग्रीष्म ऋतु में जो आधान बताया गया वह क्षत्रियत्वार्थी के लिये है और पश्वादि काम का वर्षा ऋतु में जो आधान बताया गया था वह भी वैश्यत्वार्थी के लिये है। शूद्रोचित सेवा कार्य किसी का अभीष्ट न होने से तदर्थी का आधान श्रुति में बताया नहीं गया। शूद्र भी सेवा कार्य स्वेच्छा से नहीं करता है किन्तु शरीर निर्वाह के लिये अगत्या।

माध्यन्दिनशतपथे ह्येवमाम्नातम्, स यः कामयेत ब्रह्मवर्चसी स्यामिति वसन्ते स आदधीत ब्रह्म वै वसन्तो ब्रह्मवर्चसी हैव भवति । अथ यः कामयेत क्षत्रंश्रिया यशसा स्यामिति ग्रीष्मे स आदधीत, क्षत्रं वै ग्रीष्मः क्षत्रं हैव श्रिया यशसा भवति । अथ यः कामयेत बहु प्रजया पशुभिः स्यामिति वर्षासु स आदधीत विड्वै वर्षा अन्नं विशः । बहुर्वै प्रजया पशुभिर्भवति" ( २।१।६-८ ) इति । अत्रापि ब्रह्मवर्चसादिकामत्वं

ब्राह्मणत्वादि-कामत्वमेव । प्रागप्येतत् ( १३८-१४० ) प्रदर्शितमेव । काण्वशतपथे तु "ब्राह्मणो यदि कामयेत ब्रह्मवर्चसी स्यामिति वसन्त आदधीत स यदि कामयेत क्षत्रस्य प्रतिमा स्यां श्रिया यशसेति ग्रीष्म आदधीत यदि प्रतिष्ठाकामः स्याद्वर्षास्वादधीत" ( १।३।८ ) इति । अत्र ब्राह्मणपदं "जायमानो वै ब्राह्मणः त्रिभिर्ऋणवा जायते" ( तै० ६।३।१० ) इत्यत्रेव मनुष्यमात्रपरम् । ब्राह्मणस्य "तध्येव ब्राह्मणेनैष्टव्यं यद्ब्रह्मवर्चसी स्यादि" त्यादिना इच्छान्तरस्य निषिद्धत्वात् । उक्तं च ब्राह्मणे श्रियोऽरमणम् । यदा ब्राह्मणे श्रीः न रमते तदा तदर्थित्वमपि तस्यायुक्तमेव । अतोऽत्र ब्राह्मणशब्दो मनुष्यमात्रबोधकः । तथा च यो ब्रह्मवर्चसद्वारा ब्राह्मण्यं, श्रीयशःप्राप्तिद्वारा क्षत्रियत्वं पश्वादिप्राप्तिद्वारा वैश्यत्वं वा वाञ्छति स वसन्तादौ अग्निमादधीतेत्यर्थः सम्पद्यते । क्वचिद्ब्राह्मणत्व ब्रह्मवर्चसयोरभेदोऽपि ज्ञायते । तद्यथा श्रीमद्भागवते" गाधेरभून्महातेजाः समिद्ध इव पावकः । तपसा क्षत्रमुत्सृज्य यो लेभे ब्रह्मवर्चसम्" ( ९।१६। २८ ) इति । विश्वामित्रः क्षत्रं = क्षत्रियत्वं त्यक्त्वा तपोबलेन ब्रह्मवर्चसं = ब्राह्मणत्वं प्राप्तवानिति तदर्थः । अतश्चाधानप्रकरणोक्तः ब्रह्मवर्चसकामः ब्राह्मणत्वकाम एव ।

अपि च दिवोदासः वृषभाख्यसाम्ना ब्राह्मणत्वं क्षत्रियत्वं च प्राप्तवानित्यपि तलवकार ब्राह्मणे श्रूयते । तथाहि "दिवो दासो ह वै वाध्र्यश्विरकामयत, उभयं ब्रह्म च क्षत्रं चावरुन्धीय राजा सन् ऋषिः स्यामिति । स एतत्सामापश्यत्, तेनास्तुवत, ततो वै स उभयं ब्रह्म च क्षत्रं चावारुन्ध राजा सन् ऋषिरभवत् ( १।२२२ ) इति । एतत्साम = वृषभाख्यसाम "अभित्वा वृषभा सुते इत्यार्षभम्" इत्यादिकम् । ननु कामना प्रयुक्तमेव सर्वत्राधानं तर्हि "ब्राह्मणो वसन्त आदधीत" इत्यादि विधीनां का गतिरिति चेदुच्यते ।

यत्तु तत्रैव सम्प्रोक्तं वसन्ते ब्राह्मणोऽनलम् । आदधीत च राजन्यो ग्रीष्मे वर्षासु चार्यकः ॥१९६
तच्चानुवादकं ब्रह्मवर्चसाद्यर्थियत्नतः । तदाधानस्य सिद्धत्वान्न विधायकमुच्यते ॥१९७॥
समयोऽपि वसन्तादिः प्रोक्तः सामान्यतस्त्विह । वस्तुतस्तु यदा श्रद्धा तदैवाधानमिष्यते ॥१९८॥
अग्न्याधानादिसम्प्राप्त ब्राह्मण्यादेरधिक्रिया । उत्तरक्रतुषु प्रोक्ता गृहस्थाश्रमिणो बुधैः ॥१९९॥

उसी आधान प्रकरण में जो बताया गया कि ब्राह्मण वसन्त में क्षत्रिय ग्रीष्म में और वैश्य वर्षा ऋतु में आधान करें, वह तो कामश्रुतिसिद्ध आधान का अनुवाद मात्र है न कि विधायक । वहाँ वसन्तादि समय भी सामान्य रूप से कहा गया है वास्तव में आधान के लिये कोई विशेष समय नहीं किन्तु जब पुरुष की श्रद्धा होगी उसी समय, वैराग्य होने पर संन्यास की तरह, आधान कर सकता है । आधानादि के द्वारा ब्राह्मणत्वादि की प्राप्ति होने पर उत्तर क्रतुविधियों में पुरुष अधिकारी होगा ।

तत्रैवेति (१९६) आधान प्रकरण इत्यर्थः । तत्र हि इदमपि श्रूयते "ब्रह्म वै वसन्तः



क्षत्रं ग्रीष्मो विडेव वर्षा तस्माद्ब्राह्मणो वसन्त आदधीत ब्रह्म हि वसन्तः, तस्मात्क्षत्रियो ग्रीष्म आदधीत, क्षत्रं हि ग्रीष्मः, तस्माद्वैश्यो वर्षास्वादधीत विड्ढि वर्षा" इति । एते न विधयः किन्तु कामश्रुतिप्राप्ताधानस्यानुवादकाः । आधानस्य प्रकारान्तरेण प्राप्तत्वेन पुनर्विधानासंभवात् । अप्राप्ते हि शास्त्रमर्थवदिति न्यायः । वस्तुतस्त्विति (१९८) श्रूयते हि "यदैवैनं यज्ञ उपनमेदथाग्नीनादधीत न श्वः श्वमुपासीत, को हि मनुष्यस्य श्वो वेद" ( शत० ब्रा० २।१।३ ) इति । शाबरभाष्ये च "यदैवैनं श्रद्धोपनमेदथादधीत" इति पाठः उद्धृतः । एतद्भाष्योद्धृतपाठानुसारेण दर्शितब्राह्मणवाक्यस्थ यज्ञशब्दोऽपि श्रद्धापरक एव । यज्ञस्य स्वत उपनमनासंभवात् । यज्ञहेतुत्वाच्च श्रद्धाया यज्ञशब्देनोपस्थितिः लक्षणया भवति । यत्तु सायणभाष्येऽस्य "यस्मिन् कस्मिँश्चिद्दतौ सोमयागमभिगच्छेत् अथ = अनन्तरमेवाग्न्याधानं कुर्यात् । श्वः श्वः करवाणीत्येवं कालान्तरप्रतीक्षां न कुर्यात् "इत्यर्थो वर्णितः, स न युक्तः । यतः स विशेषार्थः "सोमेन यक्ष्यमाणो नर्तुं सूक्ष्येत् न नक्षत्रमिति" विशेषवाक्येनैव प्राप्यते न त्वाधानप्रकरणस्थेन । तेन च श्रद्धोदयसमकालमेवाधानं, वैराग्योदयसमकालं संन्यास इव कर्तव्यत्वेन विधीयते । ननु श्रौतसूत्रटीकाकारादिभिः "तस्माद्ब्राह्मणो वसन्त आदधीत" इत्यादिविधिषु निष्काम ब्राह्मणादिकर्तृकमाधानं, "यः कामयेते "त्यादिविधिषु सकामब्राह्मणादि-कर्तृकं चाधानमङ्गीकृतम् । अत्र च सकामविधीनामेवाधानविधायकत्व मन्येषामनुवादकत्वं चेष्यते । तत्र कारणं किमिति चेदुच्यते यत्त्वित्यादिना ।

यत्त्वकामसकामादिकर्तव्यं च श्रुतौ श्रुतम् । आधानं हि वसन्ततर्विति कल्पेषु वर्णितम् ॥२००॥
एवं श्रीकामनिष्काम राजन्यद्वयकर्तृकम् । ग्रीष्मे वर्षासु निष्कामवैश्यपश्वर्थिनोरिति ॥२०१॥
तदयुक्तं यतो लोके निष्कामत्वं च दुर्लभम् । सर्वो वाञ्छति निर्दिष्टं तद्ब्रह्मवर्चसादिकम् ॥२०२॥
तस्मान्मनुस्मृतावुक्तं कामना न प्रशस्यते । किन्तु निष्कामता नास्ति निष्कामस्य क्रियैव न ॥२०३
वेदस्याध्ययनं काम्यं काम्या हि वैदिकाः क्रियाः। काम्यान्येव च सर्वाणि व्रतादीनीति निश्चितम् २०

कात्यायन श्रौतसूत्र टीकाकार ने कहा है कि निष्काम और ब्रह्मवर्चसकाम ब्राह्मण के लिये वसन्त में आधान विहित है, निष्काम और श्रीकाम क्षत्रिय के लिये ग्रीष्म में और निष्काम और पशुकाम वैश्य के लिये वर्षा में आधान विहित है। किन्तु यह ठीक नहीं क्यों ? निष्काम पुरुष लोक में दुर्लभ है । सभी पुरुष ब्रह्मवर्चस श्री यश और पशुधनादि फलों में से किसी न किसी को चाहते ही हैं । अतः मनुस्मृति में भी कहा गया है निष्काम पुरुष लोक में दुर्लभ है । यदि कोई ऐसा पुरुष होगा तो उसका कुछ कर्तव्य ही नहीं है । वेदाध्ययन तदुक्त कर्म और व्रत उपासनादि सब काम्य ही हैं ।

यत्त्वकामसकामादीति (२००) कात्यायनश्रौतसूत्रे उक्तम् "वसन्ते ब्राह्मणब्रह्मवर्चस-

कामयोः'' ( ४.७.१५ ) इति तद्व्याख्याकारेण च "निष्कामस्य ब्राह्मणस्य ब्रह्मवर्चसकामस्यापि ब्राह्मणस्य वसन्ततुंराधानकाल इत्युक्तम् । एवमेव क्षत्रियवैश्ययोरपि ज्ञेयम् । निष्कामस्याधानकर्तुरसंभवात्तदयुक्तमेव ।, सकामकर्तृकाधानवाक्यार्थः सायणेनैवमुक्तः "एवं नित्यपक्षमभिधाय काम्यपक्षमाह स य इति । ब्रह्मवर्चसी हैवेति । ब्राह्मणजात्यात्मके वसन्ते आधानात् क्षत्रियादिरपि ब्रह्मतेजससम्पन्नो भवतीत्यर्थः । एवमुत्तरत्रापि योज्यम्'' इति । तदपि न युक्तम् "न वै क्षत्रे ब्रह्मवर्चसं रमते, न वै ब्रह्मणि क्षत्रं रमते'' ( शत. ब्रा. १३.१.५ ) इति श्रुतिव्याकोपापत्तेः । "इन्द्रियकामः खलु राजन्यो यजते, पशुकाम. खलु-वैश्यो यजते ( तै० सं० २.५.१० ) इत्युक्तेश्च । य इन्द्रियकामनयैव यजते स यागयोग्यतासम्पादकमाधानं ब्रह्मवर्चसकामनया कथं कुर्यात् । अथ यद्युच्येत ब्रह्मवर्चसकामनयाऽऽदधानः क्षत्रियो ब्रह्मवर्चसं प्राप्नुयादिति तर्ह्यायातमाधानाद्वर्णसिद्धिर्न तु जन्मत इति । ब्रह्मवर्चसं च ब्राह्मण्यं तत्समनियतो वा धर्म इति पूर्वमेव बहुधा प्रपञ्चितम् ।

कामनैवहि मर्त्यानां काम्यकर्मनियोजिका । तदभावे त्वकामस्य प्रवृत्तिर्नैव संभवेत् ॥२०५॥
तस्मात्प्राभाकरैरुक्तं नियोज्यालाभहेतुना । स्वाध्यायोऽध्येय इत्येतन्नैवाध्ययनचोदकम् ॥२०६॥
किन्त्वाचार्यककामोऽत्र नियोज्यः संभवेदिति । अध्यापनं विधेयं तच्चैवाध्ययनमाक्षिपेत् ॥२०७॥
दुराग्रहवशात्कश्चिद्यदि निष्कामकर्तृकम् । इच्छेदाधानमप्यत्र ब्राह्मणादिपदं तदा ॥२०८॥
भाविब्राह्मणबोधाय विधावाधानगोचरे । गृहस्थः सदृशीं भार्यामुपेयादितिवद्भवेत् ॥२०९॥
अनाहिताग्निर्यावत्स्यात्तावद्भवति मानवः । इति शातपथोक्त्या स्युराधानाद्ब्राह्मणादयः २१०
यदुच्यते ब्राह्मणस्य भूदेवत्वमपि क्वचित् । तदप्याधानतो ज्ञेयमिति बौधायनं मतम् ॥२११॥

कामना ही काम्यकर्मों में पुरुषों को प्रवृत्त करवाती है । यदि वह न रही तो प्रवृत्ति ही कि ी को नहीं होती । अतः प्रभाकर मामांस कहते हैं कि अध्ययन विधि अध्ययन का विधान नहीं कर सकता, क्यों उसमें नियोज्य पुरुष नहीं है । किन्तु अध्यापनविधि से ही अध्ययन का लाभ होगा, इस विधि में आचार्यत्व काम पुरुष नियोज्य मिल सकता है । यदि कोई दुराग्रह से निष्काम कर्तृक आधान का भी वहाँ विधान मानेगा तो वहाँ के ब्राह्मण क्षत्रिय और वैश्य शब्द भावि ब्राह्मणादि को बतानेवाले होंगे । जैसे गृहस्थ अपने को योग्य कन्या से शादी करे, इस विधि में गृहस्थ शब्द भावि गृहस्थ को बताता है । क्यों ? शादी के बाद ही गृहस्थ होता है । ऐसा बताने में शतपथ वाक्य भी प्रमाण है जिसमें बताया गया कि जब तक आदमी आधान नहीं करेगा तब तक मनुष्यत्वमात्र हो रहेगा न कि ब्राह्मणत्वादि । बोधायन महर्षि ने बताया है कि ब्राह्मण में भूदेवत्व भी आधान के बाद ही आता है ।



कामनैव होति = काम्यकर्मसु कामनैव जनान् प्रवर्तयति । आधानं च काम्यमेव
न तु नित्यम् । काम्यकर्मानुष्ठानयोग्यतारूपत्वात्तस्य । काम्यत्वादेव निष्कामैस्तन्न क्रियतेऽपि ।
अतएवोक्तं परमहंसपरिव्राजकोपनिषदि "अथ पुनरव्रती वा व्रती वा स्नातको वाऽस्ना-
तको वा उत्सन्नाग्निरनग्निको वा यदहरेव विरजेत्तदहरेव प्रव्रजेदिति । तत्र यद्याधानं नित्यं
तदा अनग्निकोऽप्रसिद्ध एव स्यात् । अनित्यत्वे तु कश्चिदनग्निकोऽपि स्यादेव ।
तस्मात्प्राभाकरैरिति (२०६) "स्वाध्यायोऽध्येतव्य'' इति विधिरध्ययनं विधातु-
नार्हति । तत्र फलाश्रवणेन तत्कामनियोज्यप्राप्तेरभावात्, किन्तु "अष्टवर्षं ब्राह्मणमुप-
नयीत तमध्यापयीत'' इत्यध्यापनविधिनैव तदध्ययनमपि सिध्यति । अत्र चाचार्यत्वकामो
नियोज्यः संभवतीत्यध्यापनमेव विधेयमिति । अयं विषयः प्रकरणपञ्चकादौ सिद्धान्तरूपेण
न्यायरत्नमालादौ पूर्वपक्षरूपेण च सम्यक्-प्रदर्शित एव । दुराग्रहवशादिति = यदि कश्चित्
"तस्माद्ब्राह्मणो वसन्त आदधीत'' इत्यादावपि आधानविधित्वमङ्गीकुर्यात्तदा तत्रस्थं
ब्राह्मणादिपदं आधानानन्तर भाविब्राह्मण्यं बोधयतीत्यङ्गीकार्यम्'' सन्ति हि तादृशाः भावि
प्रयोगाः लोके वेदे च भूयांसः । "गृहस्थ'' इति = न गृहं गृहमित्याहुर्गृहिणी गृहमुच्यते ।
गृहिणीसम्बन्धानन्तरमेव गृहस्थ इत्युच्यते लोके । तथाप्यत्र तत् सम्बन्धात्पूर्वमेव भावि-
गृहस्थाभिप्रायेण गृहस्थपदं प्रयुक्तम् तद्वदत्रापि ब्राह्मणादि-पदानि बोद्धव्यानि । आधाना-
नन्तरं ब्राह्मणत्वादिसिद्धिश्च शतपथे स्पष्ट मुक्तैव "मानुषो हवै तावद्भवति यावदनाहि
ताग्निः'' ( २.७.४ ) इति । आधानं च गृहस्थस्यैव विधीयते "जातपुत्रः कृष्ण-
केशोऽग्नीनादधीत'' इत्यादिश्रुतेः । तस्माद्वर्णाः गृहस्थाश्रमे एव तिष्ठन्तीति स्पष्टमेव
विज्ञायते । प्रपञ्चयिष्यते चाग्रेऽप्ययं विषयः । जैमिन्युपनिषद् ब्राह्मणे च "अजातो
वै तावत्पुरुषो यावन्न यजते स यज्ञेनैव जायते, स यथाऽण्डं प्रथमनिर्भिण्णमेवमेव''
( ३.३ ) इत्युक्तम् । अत्राप्याधानमेव यज्ञशब्देनोच्यते प्रयोज्यप्रयोजकयोरभेदेन । आधाना-
त्पूर्वमण्डावस्थैव पुरुषस्योक्ता । पक्षिणोऽप्यण्डाद्बहिरागत्यैव द्विजा भवन्ति । द्वितीयवारं
जातत्वात् । एवं मनुष्या अपि ! एवं "अनाहिताग्निता स्तेयमिति सत्याषाढः । स्तेयं
दस्युत्वमित्यर्थः । ऋग्वेदे हि आर्यत्वेन दस्युत्वेन च द्वेधा विभागो मनुष्याणां कृतः ।
तत्रानाहिताग्नित्वं दस्युत्व माहिताग्नित्वं चार्यत्वमित्युक्तं भवति । आर्यत्वं द्विजत्वमेव ।
तदुक्तं "नहि देवाः सर्वेणेव संवदन्त आर्येणेव, ब्राह्मणेन वा क्षत्रियेण वा वैश्येन वा''
( काण्व शत० ब्रा० ४.१.१.६ ) इति । तस्मादाधानात्पूर्वं ब्राह्मणत्वं नास्त्येव । यदुच्यत
इति ( २११ ) । तदुक्तम् "विज्ञायते च देवानां वा एषोऽन्यतमो य आहिताग्निः''
( बोधा० श्रौ० ३.२.७ ) इति । शतपथे तु "अथ ये ब्राह्मणाः शुश्रुवांसोऽनूचानास्ते
मनुष्यदेवाः'' ( १.६ ) इत्युक्तम् । शुश्रुवांसः = बहुश्रुताः, अनूचानाः साङ्गवेदाध्ययनेन
ज्ञातार्थानुष्ठानपराः । एते मनुष्यरूपा देवाः'' इति सा० भाष्यम् । एतादृशान् प्रत्येव
तैत्तिरीयकेऽप्युक्तम् "एते वै देवाः प्रत्यक्षं यद्ब्राह्मणा इति । तत्र तत्पुत्रत्वादेरिव

ब्राह्मणत्वाद्युपाधेरप्रत्यक्षत्वेऽपि तद्विशिष्टस्य प्रत्यक्षत्वमस्त्येव । सज्जनत्वाद्युपाधीनामप्रत्यक्षत्वेऽपि तद्विशिष्टस्य प्रत्यक्षत्वानुभवात् । जीवस्याप्रत्यक्षत्वेऽपि तद्विशिष्टदेहस्य प्रत्यक्षत्वाच्च । आत्माभिन्नस्य तस्याप्रत्यक्षत्वादेव तद्विषये वादिनां विप्रतिपत्तयो भवन्ति प्रत्यक्षविषये घटादौ तासामभावादिति बृहदारण्यकशाङ्करभाष्यम् ।

एतादृक्साधनप्राप्तब्राह्मण्यापूर्तिशङ्कया । कर्मस्थले संशयोऽपि जायते वर्णगोचरः ॥२१२॥
अन्यथाऽऽधानकाले स्याद्ब्राह्मणोऽहं न वेति च। संशयो, ब्राह्मणत्वादिः प्रागाधानाद्भवेद्यदि२१३

इन आधानादि साधनों से प्राप्त जो ब्राह्मणत्वादि है उसमें पूर्णता के संशय से ही आगे कर्म प्रकरण मे ब्राह्मणत्वादि का संशय होता है । नहीं तो आधान के समय में ही वह संशय होना चाहिये ।

एतादृगिति = मैत्रायणीयसंहितायां यजमानब्राह्मणे प्रोक्तम् "न वा तद्विद्मो वयं ब्राह्मणा वा स्मोऽब्राह्मणा वा" ( १।४।११ ) इति । एवं गोपथब्राह्मणेऽप्युक्तम् "न वयं विद्मो यदि ब्राह्मणाः स्म यद्यब्राह्मणाः स्म" ( ५।२१ ) इति । शाबरभाष्ये च "न चैतद्विद्मो वयं ब्राह्मणा वा स्मोऽब्राह्मणा वा" ( १।२।१ ) इति पाठ उद्धृत उपलभ्यते । अत्र ब्राह्मणशब्दो वर्णचतुष्टयपरः । अयं 'च संशय आधानादुत्तरं कर्म प्रकरणे श्रूयते न त्वाधानप्रकरणे । स्वप्रयत्नसम्पादिते हि पण्डितत्वादिरूपे वस्तुनि तत्पूर्णत्वापूर्णत्वविषयकः संशयो भवति न तु जन्मतः सिद्धे मनुष्यत्वादौ । अत एवोक्तम् "बलवदपि शिक्षितानामात्मन्यप्रत्ययं चेतः ( शा० नाटके १ अंक ) इति । आधानोत्तरं ब्राह्मणत्वादि संशयश्रवणेनापीदं स्पष्टं भवति यद्ब्राह्मणत्वादिकं आधानसाध्यमिति । यद्याधानात्पूर्वमेव ब्राह्मणत्वादिकं सिद्धमिष्यते तदा तद्विषयकसंशयोऽग्रे श्रूयमाण आदावेवाधानात्पूर्वं श्रूयेत, यत आधानवाक्येऽपि "तस्माद्ब्राह्मणो वसन्त आदधीत" इत्यत्र ब्राह्मण शब्द श्रूयते, परमते वसन्तकालाधाननिमित्तत्वं च ब्राह्मणत्वस्य ज्ञायते । तैश्च ब्राह्मणत्वादिकं पित्रादि परम्परासिद्धमिष्यते । अथाग्रे निष्पत्स्यमानसंशयनिमित्तमपि पित्रादिवीर्यपरम्पराविच्छेदशङ्कैवेत्यपि तैरिष्यते । तादृशपरम्पराविच्छेदशङ्कारूपनिमित्तस्याधानात्पूर्वमपि सत्वात्कुतस्तदा न संशयो दर्शितः । न चास्माकं मते इयमापत्तिः परैर्दातुं शक्यते । आधानात्पूर्वमस्माभिः ब्राह्मणत्वाद्यनङ्गीकारात्, यत्र च वर्णोद्देशेन कर्माणि विधीयन्ते तत्र स्वकीयवर्णज्ञानस्यावश्यकत्वाद्ब्राह्मणत्वादिवर्णानां च स्वप्रयत्नसाध्यगुणकर्मसिद्धत्वाद्भवत्येव संशयः । स एव श्रुत्याऽपि दर्शितः कर्मप्रकरणे ।

यत्तूक्तं शबरस्वामिना "अपिवा वेदनिर्देशादपशूद्राणां प्रतीयेत" (६।१।३३ ) इत्यपशूद्राधिकरण-मीमांसाभाष्ये "वसन्ते ब्राह्मणमुपनयीत ग्रीष्मे राजन्यं, शरदि वैश्यमिति वेदे त्रयाणां निर्देशात् शूद्रस्य तदभावादसमर्थः शूद्र इति । पश्चादपि माधवचार्यादिभिः जैमिनि न्यायमालायामिमानि वाक्यानि वेदस्थत्वेनोदाहृतानि । तत्सर्व-



मयुक्तम् । उपलभ्यमानवेदभागेषु संहिताब्राह्मणारण्यकाख्येषु कुत्रापि तादृशवाक्यानामदर्शनात् । स्मार्ता हि उपनयनाध्यापनादिविधयो न श्रौताः । गर्भाष्टमादिवयस्कानां त्रैवर्णिकबालकानां तैरुपनयनं विधीयते । न चैतावताऽवेदमूला उपनयन विधय इति वक्तुं शक्यम् । तस्माद्यज्ञोपवीत्येवाधीयीत याजयेद्यजेत वा यज्ञस्य प्रसृत्यै, अजिनं वासो वा दक्षिणत उपवीय" ( तै० आरण्य० २।१ ) इत्येतेषां मूलत्वात् । तत्र वसन्तादिकालब्राह्मणत्वादि-वर्णगर्भाष्टमादयो नियमाः न सन्त्येव । तस्मात्तत्सूत्रं जातिवादिभिरेवं व्याख्येयम् "अपि वा वेदनिर्देशादपशूद्राणां प्रतीयेत" वेदनिर्देशादपि वा = वेदे त्रैवर्णिकानामेव यज्ञसम्बन्धित्वेन निर्देशात् अपशूद्राणां शूद्रेतराणामधिकारः प्रतीयेत = ज्ञातव्य इति । यज्ञसम्बन्धित्वेन त्रैवर्णिक निर्देशश्च "न हि देवाः सर्वेणेव सङ्गच्छन्ते आर्य एव 'ब्राह्मणो वा क्षत्रियो वा वैश्यो वा, एते हि यज्ञियाः" ( काण्व शत० ब्रा० ३।१।१।६ ) इति । शूद्रस्यायज्ञसम्बन्धोऽप्यत्र दर्शितः । तद्यथा 'तस्मात् शूद्र उत बहुपशुरयज्ञियः" ( ताण्ड्य ब्रा० ६।१।७ ) इति । तत्र ब्राह्मणत्वादिकं कीदृशं विवक्षित मिति जिज्ञासायां तन्निर्धारणार्थं एतद्ग्रन्थारम्भः । वसन्ते ब्राह्मणमुपनयीत इत्यादीनि हि आपस्तम्बधर्मसूत्राणि ( १।१।१।१९–२१ ) न तु वेदवाक्यानीति सर्वदा न विस्मर्तव्यम् ॥

प्रवरोच्चारकाले हि वर्णसन्देह आगतः । देवाः पितर इत्यादिमन्त्रोच्चारणहेतवे ॥२१४॥
प्रवरश्चेष्टिश्राद्धादौ यथोच्चार्यतयोच्यते । तथाऽधानादिकालेऽपि वक्तव्यत्वेन चोद्यते ॥२१५॥
स्मृतौ सर्वत्र सङ्कल्पः कर्मस्वादौ प्रकीर्त्यते । सङ्कल्पसहभावश्च प्रवरस्य प्रदृश्यते ॥२१६॥
आधानमपि कर्मैव कार्यं सङ्कल्पपूर्वकम् । प्रवरस्य प्रसङ्गोऽपि तत्रास्त्यैवानिवार्यतः ॥२१७॥

प्रवरबोलते समय में देवाः पितर इत्यादिमन्त्र बोलने के वास्ते ब्राह्मणत्वादि वर्ण का सन्देह किया जाता है । प्रवर तो यागों और श्रद्धादि में जैसे बोला जाता है वैसा आधान समय मे भी बोला जाता है । सभी कर्मों के प्रारम्भ में देश कालादि सङ्कीर्तनात्मक सङ्कल्प करने का विधान स्मृतियों में बताया गया है । आधान भी सङ्कल्पपूर्वक कर्मों में एक है । अतः प्रवर बोलने की आवश्यकता आधान में भी है ।

आधानमपाति (२१७) आधानादावपि प्रवरोच्चारणं शूद्राचारशिरोमणौ दर्शितम् । तथाहि "आधानादिषु प्रवरातिदेशात्तत्र गोत्रमप्यतिदिश्यते । यतोऽमुकगोत्राणाममुकप्रवराणामिति गोत्रमुपलक्षणी कृत्य प्रवरा भवन्तीति ( ५० पृष्ठे ) । नन्वाधानादौ भवन्मते प्रवरातिदेशसहभावेन वर्णसन्देहस्याप्यतिदेशः कुतो नास्ति चेदुच्यते । आधानादौ स्मृतिवाक्यबलात् सामान्यतो देशकालपित्रादिस्मरणात्मक-प्रवरस्यातिदेशेऽपि न ब्राह्मण्यसन्देहो नापि तद्वारणाय देवाः पितर इत्यादिमन्त्रश्चातिदिश्यते । यत्र ब्राह्मण्य-

मावश्यकं तत्रैव स सन्देहः तद्वारकमन्त्रश्च श्रुतावुक्तौ। ब्राह्मणत्वादिकं चाधानोत्तर भावीति दर्शितमेवास्माभिः। स्नानदानादावपि सामान्यतः प्रवर उच्चार्यते किन्तु न तत्रापि ब्राह्मण्यसन्देहः क्रियते। तथाविध शिष्टाचाराभावात्। यज्ञादि श्रौतकर्माणि हि ब्राह्मणत्वादि वर्णोद्देशेन पृथग्वेदे विहितानि। अतस्तत्र ब्राह्मणत्वादेरावश्यकत्वात् तत् स्वस्मिन्नस्ति न वेति सन्देह तदनुष्ठातुर्भवति। स एव श्रुतावनूदितस्तत्परिहार-प्रदर्शनाय पत्नीव्यभिचारप्रश्नवत्। चातुर्मास्यान्तर्गतवरुणप्रघासाख्ये द्वितीयपर्वणि यज्ञसभायां प्रतिप्रस्थाता पत्नीं पृच्छति "पत्नि कस्ते जार इति। यदि जारोऽस्ति चेत् "असौ मे जार इति पत्नी निर्दिशेत्। तद्विषये तैत्तिरीयब्राह्मणे प्रोक्तम् "यज्जारं सन्तं न ब्रूयात् प्रियं ज्ञातिं रुन्ध्यात्। असौ मे जार इति निर्दिशेत्। निर्दिश्यैवैनं वरुणपासेन ग्राह्यति (का० १.६.५) इति। तत्रैव कर्मणि पत्नीव्यभिचारस्य वैगुण्यापादकत्वात्तन्निवारणार्थं प्रश्नः कृतः। अन्यत्र तदभावात्तत्प्रश्नोऽपि शास्त्रेषु न दर्शितः। एवं प्रकृते प्रवरोच्चारणस्य सर्वत्र समानत्वेऽपि तत्र सर्वत्र ब्राह्मणत्वादेरनावश्यकत्वान्न तद्विषयकसन्देहः श्रुतौ दर्शितः। तत्सन्देहश्रुत्याऽपीदं ज्ञायते यद्ब्राह्मणत्वादिवर्णा यज्ञातिरिक्तकर्मस्वनावश्यकता इति। आधानं तु यज्ञानुष्ठानयोग्यता-सम्पादकम्। साग्नेरेवोत्तरकर्मस्वधिकारात्।

राष्ट्रं श्रीरपि राजन्यादपक्रामेद्यदा ह्यसौ। यजतेऽत्राश्वमेधेन यज्ञदीक्षात्मसयमैः ॥२१८॥
संत्यक्तायां च दीक्षायां तस्मिन् राष्ट्रंश्रिया वसेत्। न क्वापि क्षत्रिये ब्रह्मवर्चसं रमते भुवि॥२१९॥
न वा श्रीर्ब्राह्मणे राष्ट्रं रमते नाप्यसावलम्। राज्याय, ब्राह्मणो धत्ते ब्रह्मवर्चसमेव हि॥२२०
इन्द्रियं कामयन्नत्र राजन्यो यजतेऽपि च। पशुकामेन वैश्यश्च पशवस्तस्य लक्षणम् ॥२२१॥
वाक्यैरेतैरपि स्पष्टा प्रागुक्ता सहचारिता। ब्रह्मवर्चसब्राह्मण्य श्रीराजन्यत्वयुग्मयोः ॥२२२॥
श्रुत्वाऽप्येतद्वाक्यजातं जातिवादं करोति यः। स निर्लज्जो भवेन्नूनमुपेक्ष्यश्च सदा नृभिः ॥२२३॥

जब क्षत्रिय अश्वमेधादियागों में दीक्षा लेता है तब उससे 'राजश्री हट जाती है। ऐसा क्यों? उस समय क्षत्रिय उपवासादि नियमों से रहता है। अतः उसमें क्षत्रिय स्वभाव नष्ट होकर शमदमादि ब्राह्मण गुण आ जाते हैं। अतएव वह ब्राह्मण भी हो जाता है। जब वह दीक्षा छोड़ देता है उसमें शौर्यादि क्षत्रिय गुण और श्री भी आ जाती हैं। क्षत्रिय में ब्रह्मवर्चस रहता नहीं और श्री ब्राह्मण में रहती नहीं और ब्राह्मण राज्य करने का योग्य नहीं। ब्राह्मण ही ब्रह्मवर्चस का धारण कर सकता है। इन्द्रिय (पराक्रम) की कामना से क्षत्रिय और पशुकामना से वैश्य याग करते हैं। इस अर्थवाले वेदवाक्यों से, ब्रह्मवचर्चस और ब्रह्मणत्व, राज्यश्री और क्षत्रियत्व का साहचर्य स्पष्ट हो जाता है। इन सब वाक्यों को सुन करके भी जो जातिवाद करता है वह निर्लज्ज है। अतएव वह उपेक्षणीय है।



राष्ट्रं श्रीरिति = "अप वा एतस्माच्छ्रीः राष्ट्रं क्रामति, योऽश्वमेधेन यजते (तै० ब्रा० ३।२।१४) इति, एवं तत्रैवाग्रे" न वै ब्राह्मणे श्री रमते" "न वै ब्राह्मणे राष्ट्रं रमते" इति चोक्तम्। काण्व-शतपथे च "न वै क्षत्रे ब्रह्मवर्चसं रमते" राजन्य एव शौर्यं महिमानं दधाति" "ब्राह्मण एव ब्रह्मवर्चसं दधाति" (१४।१।५) इत्युक्तम्। एवं तत्रैव "बाह्वोरेव सबलं धत्ते, तस्माद्राजा बाहुबली भावुकः" (१५।२।२) इत्याद्युक्तम्। एवं माध्यन्दिनशतपथेऽपि "न वै ब्राह्मणो राज्यायालम् (५।१।१) "न वै क्षत्रे ब्रह्मवर्चसं रमते" न वै ब्राह्मणे क्षत्रं रमते "ब्राह्मण एव ब्रह्मवर्चसं दधाति" (१३।१।५) इत्युक्तम्। "इन्द्रिय-(पराक्रम) कामः खलु राजन्यो यजते" "पशुकामः खलु वै वैश्यो यजते" (तै० सं० २।५।१०) इति चोक्तम्। "पशुकामो वैश्यस्तोमेन यजेत" वैश्यो वैश्यस्तोमेन यजेत "(जै० ब्रा० १।१६३) इत्यादिभिर्वाक्यैः ब्राह्मण क्षत्रियवैश्यानां स्वभावः प्रदर्शितो भवति। न चायं जातिवादे सङ्गच्छते। तत्र जन्मब्राह्मणत्वाभिमानिनोऽपि बलपराक्रमादिसंभवेन राज्यशासनकर्तृत्वसंभवात्, एवं तादृशक्षत्रियत्वाभिमानिनोऽपि च तपः शान्तिशमदमादिगुणसंभवेन ब्रह्मवर्चसंनिलयत्वसंभवाच्च दर्शितश्रौत वाक्यजातमसङ्गतार्थकं भवेत्। गुणवादे च नैषाऽऽपत्तिर्भवति। यः स्वाभाविकशमादिमान् भवति तस्यैव ब्राह्मणत्वेन तत्र ब्रह्मवर्चसस्यापि बाधाभावात्। एवं क्षत्रियेऽपि ज्ञातव्यम्।

शिल्पान्येतानि वै क्षत्रेरुक्मश्चाश्वतरीरथः। हस्तिनिष्कश्चाश्वरथो भवन्तीति प्रदर्शितम्।२२४॥
एतानि वैश्यशिल्पानि पशुधान्यधनानि हि। पुष्टिश्चेत्यपि सम्प्रोक्तं जैमिनिब्राह्मणे स्फुटम्।२२५॥
जातिवादे हि चैतानि शूद्रत्वव्यपदेशगे। भवेयुरिति वेदोक्तेरतिव्याप्तिर्भविष्यति ॥२२६॥

जैमिनी ब्राह्मण में बताया गया है कि सोने के आभरण कच्चर का रथ, हाथी और अश्वरथ ये सब क्षत्रिय के चिह्न होते हैं और वैश्य के लिये पशु धन धान्य और पुष्टि चिह्न होते हैं। जातिवाद में ये सब शूद्र समझे जाने वालों में भी रह सकते हैं। ऐसी परिस्थिति में श्रुतिवाक्यों के द्वारा कथित लक्षण शूद्र में अतिव्याप्त होगा। अतः जातिवाद श्रुतिसम्मत नहीं है।

शिल्पानीति = "एतानि वै क्षत्रेशिल्पानि (चिन्हानि) हस्तिनिष्कोऽश्वतरीरथोऽश्वरथो रुक्मः" "एतानि वै विशि शिल्पानि गोऽश्वं हस्तिहिरण्यमजाविकं व्रीहि यवाः तिलमाषाः सर्पिः क्षीरं रयिः पुष्टिः" (जै० ब्रा० १।१६३) इति।

ब्रह्मवर्चसकामत्वं समव्याप्तं शमादिभिः। तस्माच्छमादिमान्विप्रो न त्वन्यः श्रुतिसम्मतः।२२७॥
श्रीयशः कामनाव्याप्तिः शौर्यादिष्वेव वर्तते।तस्माच्छौर्यादिमान् मर्त्यः क्षत्रियस्त्विति बुध्यताम्२८
धनपश्वादिकामत्वं कृषिवाणिज्यशीलता। समव्याप्ते ह्यतो वैश्यो भवेत्कृष्यादिशीलवान्॥२२९॥
ब्रह्मवर्चसिनः श्रुत्या ब्राह्मण्यं सम्मतं ह्यतः। शमादिगुणवत्येव ब्राह्मण्यं श्रुतिसम्मतम् ॥२३०॥

एवं राजन्यवैश्यादौ विज्ञाय श्रुतिसम्मतिम् । जातिवादं जनस्त्यक्त्वा गुणवादं समाश्रयेत् २३१॥
एतच्छ्रुतिमतं ज्ञात्वा श्रीमद्भागवतादिषु प्रोक्तानि ब्राह्मणादीनां लक्षणानि महर्षिभिः ॥२३२॥

ब्रह्मवर्चस कामना जिस आत्मा में है उसमें शमदमादिगुण भी रहते हैं। अर्थात् शमादिब्राह्मण गुणवाला ही ब्रह्मवर्चस कामी होता है। एवं शौर्यादि क्षत्रिय गुण वाला ही श्रीयशः कामी होता है। तथा कृषिवाणिज्यादि शाल पुरुष ही धनपश्वादि कामी होता है। ब्रह्मवर्चसी को ब्राह्मण कहने वाला श्रुतिवाक्य शमादिगुणवालों को ही ब्राह्मण मानता है दूसरे को नहीं। ऐसा ही क्षत्रियादि के बारे में भी समझ लेना चाहिये और जातिवाद को छोड़कर गुणवाद में सभी आ जाना चाहिये। इन श्रुतिवाक्यों के अभिप्राय के अनुसार ही श्रीमद्भागवत आदि ग्रन्थों में महर्षियों ने ब्राह्मणादिवर्णों के लक्षण बताये थे।

ब्रह्म वै ब्राह्मणस्य स्वमिति वैदिकवाक्यतः। सम्यग्विज्ञायते श्रौतब्राह्मण्यं कीदृशं त्विति॥२३३॥
यस्य यद्वस्तु स्वायत्तौ करणे शक्तिरुत्कटा। तस्यैव पुंसस्तद्वस्तु न्यायसिद्धं स्वमुच्यते ॥२३४॥
ब्रह्म वेदस्तन्मुखस्थी करणे यस्य धीमतः। शक्ति स्तस्यैव तत्स्वं स्यान्नैवान्यस्य कदाचन॥२३५॥
तादृक् शक्तिश्च नैकत्र कुले सर्वेश्वरेण हि। नियन्त्रिताऽपितु प्रत्ता सर्वत्रैव कुले क्वचित् ॥२३६॥
सर्वत्रापि क्वचिन्नास्ति कुले शक्तिर्हि तादृशी। यस्य नास्ति कथं वेदस्तस्य स्वं संभविष्यति२३७॥
किञ्चित्स्वामित्व सम्बन्धात्स्वं किञ्चित्समवायतः। कस्मिँश्चित्पुरुषे क्वापि तिष्ठत्संदृश्यते नरैः२३८
विद्यारूपो हि वेदस्तु धारणाशक्ति वर्जिते। जातिवादिसुते केन सम्बन्धेनोपतिष्ठताम् ॥२३९॥
पित्राद्यार्जितगेहादि तदन्ते स्वं सुतस्य हि। पित्राद्यधीतवेदस्तु मूर्खस्य स्वं कथं भवेत् ॥२४०॥
अनधीतयजुर्वेदः पित्राद्यधीतिहेतुना। यजुर्वेदो भवामीति निर्लज्जो वक्तु मर्हति ॥२४१॥
न ह्याङ्ग्लेयादिभाषासु प्राप्तोपाधिपितुः सुतः। आत्मनस्तांक्वचिद्ब्रूते राजदण्डोऽपि चान्यथा
तस्माद्दर्शितवाक्येन सम्यगेतत्प्रतीयते। यः कर्तुं शक्नुयाद्वेदमात्मस्वं ब्राह्मणो हि सः ॥२४३॥

जैमिनी ब्राह्मण में कहा गया है कि "ब्रह्म वै ब्राह्मणस्य स्वम् (१।२१०) इस से भी मालूम हो जाता है कि श्रुतिसम्मत ब्राह्मण का स्वरूप कैसा है। जिस वस्तु को अपनाने में जिसकी शक्ति होगी उसका ही वह वस्तु न्याय सिद्ध स्वं हो जाता है न कि दूसरे का। ऐसी शक्ति परमेश्वर के द्वारा किसी एक कुल में नियन्त्रित नहीं है किन्तु सभी कुलों में कहीं-कहीं दी गयी और कहीं-कहीं नहीं दिया जाना भी सभी कुलों में समान है। जिसमें वह शक्ति नहीं है उसका वेद कैसा स्वं हो सकता? कोई-कोई स्वं धनादि, स्वामित्व-सम्बन्ध से और कोई कोई स्वं ज्ञानादि, समवायसम्बन्ध से पुरुष में रहता है। विद्यारूप वेद जातिवादी के पुत्र में जिसमें पढ़ने की शक्ति बिलकुल



नहीं है, किस सम्बन्ध से रहेगा। पित्रादि के द्वारा सम्पादित घरबार, उसके मृत्यु के बाद पुत्र का स्वं हो सकता है किन्तु पित्रादि के द्वारा पठित वेद मूर्खपुत्र का स्वं कैसा होगा? जो स्वयं यजुर्वेद पढ़ा नहीं किन्तु अपने पिता उसे पढ़ा जानकर अपने को यजुर्वेदी कहता हो वह निर्लज्ज ही होगा। अंग्रेजी मे अपने पिता जी बी. ए. उपाधि प्राप्त किये हो तो उसका पुत्र जो अंग्रेजी पढ़ा नहीं, अपने को बी. ए. उपाधिवाला कभी कहता नहीं है। यदि ऐसा कहेगा तो राजदण्ड भी हो जाता है। अतः ऊपर के श्रुतिवाक्यों से यही स्पष्ट होता है कि जो वेदको निजी धन बना सकता हो वही ब्राह्मण है।

यदप्युक्तं तैत्तिरीय ब्राह्मणे ब्राह्मणस्य हि। हिताहितोपदेष्टृत्वं युक्तं विद्याधनस्य तत् ॥२४४॥
एतेनापि ब्राह्मणत्वं जन्मतो नोपपद्यते। किन्तु शान्त्यादिभिः सम्यग्विद्ययैवेति गम्यते ॥२४५॥

तै० ब्राह्मण में जो कहा गया है कि "ब्राह्मणो वै प्रजानामुपद्रष्टा" (२.२.१) ब्राह्मण जनता को हित और अहित का उपदेश करनवाला है, वह भी विद्याधन ब्राह्मण का अनुरूप ही है। इससे भी सिद्ध हो जाता है कि ब्राह्मण जन्म से नहीं होता किन्तु विद्या से ही है।

अतो वादे पराजेतुं ब्राह्मणो नैव युज्यते। इत्यप्युक्तं तैत्तिरीयसंहितायां प्रसङ्गतः ॥२४६॥
कार्यवशान्मानुषाग्नेर्विजयो न तु जातितः। दर्शितस्तत्र तेनापि जातिवादो निराकृतः ॥२४७॥
जात्या चेद्विजयश्रेष्ठो भवेदग्निद्वयस्य सः। किन्तु वेदे मनुष्याग्निमात्रस्यैव स दर्शितः ॥२४८॥
तत्प्रसङ्गाद्ब्राह्मणस्य वादे जयः प्रदर्शितः। तत्रापि श्रेष्ठकार्यादिकारित्वं हेतुरिष्यते ॥२४९॥
गुरुर्हि ब्राह्मणः प्रोक्त उपदेष्टृत्वहेतुना। जयस्तस्य स्वशिष्यादेर्युक्तोऽतः श्रुतिदर्शितः ॥२५०॥
विजयो हि स्वगुर्वादेः सर्वशिष्यहितावहः। शिष्यादेर्विजयस्त्वेकशिष्यमात्रहितावहः ॥२५१॥
अथवा ब्राह्मणः सत्यवानेवेति श्रुतेर्मतम्। सत्यस्य विजयोऽपीष्टो लोके वेदे च सर्वदा ॥२५२॥
रामस्य विजयस्तस्माद्रावणस्य पराजयः। सत्यासत्यनिमित्तेन जातो नैव तु जातितः ॥२५३॥
नन्वेव शक्यते वक्तुं यद्वादे ब्राह्मणो जयेत्। न तु शारीरके युद्धे वैषम्यमिति चेच्छृणु ॥२५४॥
वाग्वादपूर्वकं युद्धं सर्वत्रापि प्रवर्तते। प्राग्वादरहितं युद्धं पशुष्वेव प्रदृश्यते ॥२५५॥
सीता मह्यं प्रदेयेति रावणस्य दुराग्रहे। श्रीरामेण च तन्नेति विवादोऽपि तयोरभूत् ॥२५६॥
रावणो विजयं तत्र वाग्वादे यद्यलप्स्यत। नाभविष्यत्तदा युद्धं रामरावणयोरपि ॥२५७॥
श्रुत्युक्तविजयोक्त्याऽपि ब्राह्मणत्वं न जन्मतः। किन्तु सत्वगुणाधिक्याद्वेदविद्यादिभिर्मतम्२५८॥
अस्मन्मतब्राह्मणस्य विजये विश्वमङ्गलम्। युष्मदिष्टब्राह्मणस्य विजये विश्वविप्लवः ॥२५९॥
अस्मन्मतब्राह्मणास्तु विदुरस्तत्समा ह्यपि। युष्मन्मत ब्राह्मणाश्च रावणस्तत्समा ह्यपि ॥२६०॥
न विश्वविप्लवो वेदवाक्यैः क्वाप्युपदिश्यते। किन्तु विश्वस्य कल्याणमिति जानीहि तन्मतम्२६१

अतः तै० संहिता में प्रसङ्गवश से कहा गया है कि ब्राह्मण और अब्राह्मण के बीच में वाद विवाद होने पर मध्यस्थ पुरुष ब्राह्मण की विजय बतावें। ऊपर का प्रसङ्ग यह है कि दैव अग्नि असुरों का हित करता है। और मानुष्य अग्नि ब्राह्मण है, देवताओं का हित करता है। ये दोनों प्रजापति के पास जाकर पूछने लगे कि "हम दोनों में किसका दौत्य अच्छा है। प्रजापति ने मानुष्य अग्नि का दौत्य अच्छा बताकर उसी की ही विजय बताया था। उसी प्रसङ्ग में ऊपर का विषय कहा गया है। वहाँ महत्वपूर्ण कार्य के कारण मनुष्य अग्नि की विजय बतायी गयी न कि जाति के कारण। अगर जाति के निमित्त से वह बतायी होती तब दोनों अग्नियों में अग्नित्व-जाति एक ही रहने का कारण दोनों की विजय बतायी होती। किन्तु श्रुति में ऐसा कहा गया नहीं। प्रकृत में भी वेदसम्मत ब्राह्मण लोक कल्याण कारक ही होता है, अतः उसकी विजय होना उचित ही है। और ब्राह्मण की विजय बताने में दूसरा भी कारण है कि ब्राह्मण सबका उपदेश देनेवाले होते हैं। ऐसा ऊपर कहा गया भी है। अतः वह सबको गुरु होता है। गुरु और शिष्य का, पिता और पुत्र का विवाद होने पर गुरु का और पिता की विजय बताना उचित ही है। ऐसा क्यों? गुरु की विजय सब शिष्यों का हित कारक होती है और शिष्य की विजय तो उसी एक व्यक्ति का हित कारक होता न कि सबका। अथवा सत्यवान ही ब्राह्मण होता है ऐसा वेद का मत है। यह बात आगे कही जायगी, सत्य की विजय भी लोक में और शास्त्रों में भी सम्मत है। इसी सत्यासत्य के निमित्त से ही राम की विजय और रावण की हार हुआ है। ब्राह्मण की विजय बताने वाले वेद-वाक्य से भी यही सिद्ध होता है कि ब्राह्मण जन्म से नहीं किन्तु सत्वगुण की अधिकता से और वेद विद्याओं से। हमारे मत के ब्राह्मण की विजय होने पर विश्व का कल्याण होगा और तुम्हारे ब्राह्मण की विजय होने पर विश्व का विप्लव—नाश होगा। हमारे ब्राह्मण विदुर और उनके समान वर्तमान लोग भी हैं। तुम्हारे ब्राह्मण रावण और उसके समान वर्तमान लोग भी हैं। वेदों के उपदेश विश्वविप्लव के लिए नहीं होते किन्तु विश्व के कल्याण के लिए ही है।

प्रसङ्गत इति। "अग्निर्देवानां दूत आसीत्, दैव्योऽसुराणाम्। तौ प्रजापतिं प्रश्नमैतां स प्रजापतिर्ब्राह्मणं (मानुषाग्निं) मब्रवीदेतद्विब्रूहीत्याश्रावयेतीदं देवाः शृणुतेति वाव तदब्रवीदग्निर्देवो होतेति, य एव देवानां तमवृणीत ततो देवा अभवन् पराऽसुराः यद्ब्राह्मणश्चाब्राह्मणश्च प्रश्नमेयातां ब्राह्मणायाधि ब्रूयाद्यद्ब्राह्मणायाध्याहाऽऽ-



त्मनेऽध्याह। यद्ब्राह्मणं पराहाऽऽत्मानं पराऽऽह। तस्मात् ब्राह्मणो न परोच्यः' (तै० सं० २।५।११) इत्युक्तम्। अस्य सायणीयं भाष्यमित्थं वर्तते 'द्विविधोऽग्निर्मानुषो दैव्यश्चेति। भूलोके वर्तमानो होमसाधनीभूतो मानुषोऽग्निः स च देवानां हविर्दानेन तदीयो दूत आसीत्। दिवि वर्तमानो दैव्यः। स चासुराणां हितमाचरन् तदीयो दूत आसीत्। तावुभौ आवयोः कस्य दौत्यमुचितमिति प्रश्नमभिलक्ष्य प्रजापतिं प्राप्नुताम्। तत्र योऽयं-मानुषोऽग्निः स च ब्राह्मणः। ब्रह्मणि वेदे विहितं कर्म साधयितुं प्रवृत्तत्वात्। दैव्यस्तु असुराणां कर्म साधयितुं प्रवृत्तत्वादासुर इत्युच्यते। न स ब्राह्मणः। तयोर्मध्ये ब्राह्मणमग्निं प्रति प्रजापतिरब्रवीत्। हे मानुषाग्ने त्वं दूत्यमर्हसि। तस्मात्त्वमेव यागे वक्तव्यमेतत्सर्वं ब्रूहि, इति। यस्मात्प्रजापतिः ब्राह्मणाग्निवरणं कृतवान् तस्माद्देवा उत्कृष्टा अभवन्। पराभूता असुरा इति प्रशंसति। यदि लोके ब्राह्मणाब्राह्मणौ विवदमानौ अहमेवाधिक इति अधिविषयं प्रश्नं कर्तुं कंचिदभिज्ञप्रत्यागच्छेतां तदानीं सोऽभिज्ञो ब्राह्मणस्यैवाधिक्यं ब्रूयात्। तेन वक्तुः स्वस्यैवाधिक्यं सम्पादितं भवति। ब्राह्मणस्य पराभववचने स्वस्यैव पराभव उक्तो भवति। तस्मात्कदाचिदपि ब्राह्मणः पराभवविषयो न कर्तव्यः। सोऽयं प्रासङ्गिकः पुरुषार्थो विधिर्द्रष्टव्यः' इति। अत्रापि एतदेव स्पष्टमुक्तं भवति यत्प्रजापतिना मानुषाग्नेराधिक्यं देवकार्यसाधकत्वेन हेतुनैवोक्तमिति। अपि च मानुषाग्नेर्ब्राह्मणत्वमपि ब्रह्म विहितकर्मसाधकत्वेनैवोक्तं न तु जातितः, एतेन लोकेऽपि ब्राह्मणत्वं वेदविहितकर्म-कर्तृत्वेनैव सिध्यति न तु जन्मत इति विज्ञायते। तादृशस्याधिक्यप्रतिपादनमपि युक्तमेव।

सङ्गच्छध्वं संवदध्वं सं वो मनांसि जानताम्। आकूतिश्च समानी वः समाना हृदयानि वः॥२६२॥

समानो समितिर्मन्त्रः समानो वः क्रतुर्भवेत्। व्रतं मनश्च तुल्यं वो यथा वः सुसहासति॥२६३॥

इत्युक्तमृगथर्वादिवेदे तेनापि बुध्यते। जातिप्रथा मनुष्येषु नैव सङ्गच्छते त्विति॥२६४॥

हे मनुष्यो तुम सब मिल कर रहो, तुम सब, एक संस्कृत वाणी के बोलने वाले और एक मत वाले हो जाओ। तुम्हारा सङ्कल्प एक हो और तुम्हारे हृदय सब एक प्रकार के रहें। तुम्हारा समाज एक हो और तुम्हारा गुप्तभाषण भी एक हो, तुम्हारा कर्तव्य कर्म और व्रतनियमादि भी एक हो जिससे तुम्हारा सङ्घटन भी अच्छी तरह मजबूत हो सके। इस प्रकार ऋग्वेदादि में कहा गया है। इससे भी स्पष्ट हो जाता है कि मनुष्यों में जाति-प्रथा ठीक नहीं, जिसके रहने पर उक्त वेदार्थ ठीक पालित न हो सकेगा।

सङ्गच्छध्वमिति, सङ्गच्छध्वं संवदध्वं सं वो मनांसि जानताम्। देवा भागं यथा पूर्वे संजानाना उपासते (४९ वर्गे द्वितीया ऋक्) (ऋ. ८.८.४९.२) समानो मन्त्रः समितिः समानी समानं मनः सहचित्तमेषाम्। समानं मन्त्रमभिमन्त्रये वः समानेन वो हविषा जुहोमि। समानी व आकूतिः समाना हृदयानि वः। समानमस्तु वो मनो

यथा वः सुसहासति । सञ्जानोध्वं संपृचध्वं सं वो मनांसि जानताम् । देवा भागं यथा पूर्वे संजानाना उपासते ( अथर्व० ६.७.२.१ ) समानो मन्त्रः समितिः समानी समानं व्रतं सह चित्तमेषाम् । समानेन वो हविषा जुहोमि समानं चेतो अभिसंविशध्वम् ( २ ) समानो व आकूतिः समाना हृदयानि वः। समानमस्तु वो मनो यथा वः सुसहासति। सं वो मनांसि संव्रताः समाकूतीरनसँगत । अमीये विव्रताः स्थ तान्वः सं नमयामसि समाना वा आकूतानि समाना हृदयानि वः । समानमस्तु वो मनो यथा वः सुसहासति । समानो मन्त्रः समितिः समानी समानं व्रतं सहचित्तमेषाम् । समानं क्रतुमभिमन्त्रयध्वं समानेन वो हविषा जुहोमि । संगच्छध्वं सञ्जानीध्वं सं वो मनांसि जानताम् । देवाभागं यथापूर्वे संजानाना उपासते । ( मै. सं. २.२.६ ) अत्रस्थ कठिनपदानां सायणभाष्यानुसारेण इमेऽर्थाः । सङ्गच्छध्वम् = हे स्तोतारो यूयं सङ्गता भवत, तथा संवदध्वम् = सह वदत, परस्पर विरोधं परित्यज्य एकविधमेव वाक्यं ब्रूत । ( अत्रायमप्यर्थो भवितुमर्हति यत् संवदध्वम् सम्यग्वदत शुद्धपदयुक्तया संस्कृतभाषया वदतेति ) वो युष्माकं मनांसि सञ्जानतां = समानमेकरूपमवार्थमवगच्छन्तु । यथा पूर्वे = पुरातना देवाः, सञ्जानाना ऐकमत्यं प्राप्ता हविर्भागमुपासते = यथास्व स्वाकुर्वन्ति, यूयमपि वैषम्यं परित्यज्य धनं स्वीकुरुतेति भावः । मन्त्रः = एकस्मिन् कर्मणि सह वृत्तानामृत्विजां स्तोतृणां वा मन्त्रः स्तुतिः गुप्त-भाषणवा समान एकविधाऽस्तु तथा समितिः = प्राप्तिरपि समानी एकरूपाऽस्तु तथा मनः = मननसाधनमन्तःकरण तथा समानमेकविधमस्तु । चित्तं = विचारजं ज्ञान, तथा सह = सहित परस्परस्यकार्थेन एकीभूतमस्तु । अह च युष्माकं समानमेकविधं मन्त्रं मन्त्रये । तथा वो युष्माक स्वभूतेन सहमानेन साधारणेन हविषा चरुपुरोडाशादिनाऽहं जुहोमि । आकूतिः = सङ्कल्पोऽध्यवसायो वा, समानी एकविधास्तु । तथा युष्माकं हृदयानि समानानि एकविधानि सन्तु । यथा वो युष्माकं, सुसह = शोभनसाहित्यं असति भवति, तथा समानमस्त्वित्यन्वयः । अस्तेः लेट बहुलं छन्दसीति शपो लुगभावः । संजानीध्वं = हे संमनस्यकामा, जनाः, यूयं समानज्ञानयुक्ता भवत, ज्ञानस्य सर्वव्यवहार मूलत्वात् तादृभागाभावः प्रथमं प्रार्थ्यते । एवं समानज्ञानाः सन्तः ततः संपृच्यध्वं = संपृक्ताः संसृष्टकार्या भवत । अभिसंविशध्वम् = आभिमुख्येन सम्प्राप्नुत इति ।

गुणग्रहणशून्यायां तत्प्रथायां हि पामरः । जन्मना श्रेष्ठमात्मानं मत्वा प्राज्ञमपीतरम् ॥२६५॥
मत्वा चैवावरं नानुगच्छतीह सभादिषु । बुधस्तु वस्तुतः श्रेष्ठो मूर्खं च कथमन्वियात् ॥२६६॥
न ह्यन्धं भुवि चक्षुष्मान् साक्षाद्ब्रह्मसुतं ह्यपि । कोऽनुगच्छति चाण्डालजातिविभ्रमवानपि॥२६७
यद्यन्धमविचार्यैव चक्षुष्मानपि चान्वियात् । अन्धेन सह गर्तेषु पतेत्सोऽपि पदे पदे ॥२६८॥
मैत्रायणीयशाखायामुक्तं सर्वेऽपि मानवाः । श्रेष्ठमेवानुगच्छेयुर्नैकमप्यन्यथा नहि ॥२६९॥
जातिप्रथानुसारेण यदि श्रेष्ठत्वमिष्यते । श्रुतिप्रदर्शिता श्रेयःप्राप्तिर्नैव भविष्यति ॥२७०॥
नानाप्रकारकानर्थाः सम्भवेयुः प्रथाश्रये । अन्धानुयायिचक्षुष्मद्वद्दुर्गतिर्भवेदपि ॥२७१॥



जन्म जाति ·था गुण ग्रहण शून्य रहती है। अतः उसमें अपठित पामर भी अपने को जन्मना श्रेष्ठ मान कर विद्वान् को भी नीच समझेगा और सामुदायक कार्यों में उसका अनुयायी नहीं होगा। विद्वान तो स्वयं श्रेष्ठ ही है, वह मूर्ख का अनुयायी कैसा होगा। लोक में अपने को चण्डाल जाति समझने वाला भी. अन्ध का, ( चाहे वह ब्रह्मपुत्र भी हो ) अनुयायी नहीं होगा। विना सोचे विचारे, वह यदि अन्ध के आश्रय से जायेगा तो अन्ध के साथ वह भी बार-बार गड्ढे में गिरता रहेगा। मै० संहिता में कहा गया है कि "एकं श्रेष्ठं यन्तं बहवः पश्चादनयन्ति" (४'६।५) सब मनुष्य श्रेष्ठ पुरुष के अनुयायी हो न कि सबके पीछे एक श्रेष्ठ। यहाँ जाति प्रथा के अनुसार श्रेष्ठता यदि मानी जायगी तो वेदों में बताया हुआ हित नहीं मिलेगा और अन्धानुयायी की तरह दुर्गति भी हो सकती है।

एवं समान संवादमन्त्रक्रतुव्रतादिषु । श्रुत्युक्तमैकमत्यं हि जातिवादे न सेत्स्यति ॥२७२॥
तस्मादात्मगुणैर्वर्णसिद्धिः सर्वश्रुतिष्वपि । सङ्घशक्त्या महच्छ्रेयो दर्शयन्तीषु सम्मता ॥२७३॥

वैसा ही वेदों में समानसंवाद समानमन्त्र और समानव्रतादि में जो ऐकमत्य बताया गया वह भी जातिवाद में सिद्ध नहीं होगा। अतः संघ शक्ति से बहुत फल दिखलाने वाले वेदों की सम्मति गुण कर्मों से वर्ण सिद्धि में ही है।

यत्तूक्तं सायणेन स्व-भाष्ये ऋत्विग्जनान् प्रति । विहितमन्योऽन्यसंवादसङ्गमित्यादिकं त्विति२७४
नैतद्युक्तं यतः पूर्वे देवा भागं यथाऽऽप्नुवन् । इति दृष्टान्तसामर्थ्याल्लोकेऽन्वेतुं तदर्हति ॥२७५॥
न ह्यार्त्विज्यं प्रकुर्वाणा देवास्तत्राप्युदाहृताः । नाधिकारो यतस्तेषां काम्येषु श्रौतकर्मसु ॥२७६॥
शारीरकेऽपि विद्यायामेवाधिकृतिरिष्यते । देवानां न तु वैधेषु निषिद्धेषु च कर्मसु ॥२७७॥
अविज्ञातसुखोपायबोधको विधिरुच्यते । निषेधो रागतः प्राप्त दुष्क्रियातो निवर्तकः ॥२७८॥
तच्चोभयं नरानेव प्रति प्रवर्तते यतः । शास्त्रस्य च मनुष्याधिकारत्वादिति निश्चितम् ॥२७९॥
अस्तु वा शास्त्रदृष्ट्या हि सर्ववर्णाश्रमे जनाः । गौणमुख्याङ्गभावेन श्रौतकर्मोपयोगिनः ॥२॥८०
तेष्वेवान्योन्यमैत्र्यर्थं मैकमत्यमपेक्षितम् । तदर्थं संवदध्वं भोः सङ्गच्छध्वमिति श्रुतिः ॥२८१॥
विदधाति यतः सङ्घप्राबल्यं प्रभविष्यति । एतच्चापि गुणैर्वर्णं स्वीकारे स्यान्न जन्मतः॥२८२॥
जातिप्रथावशात्सङ्घशैथिल्यं बहुदृश्यते । तन्न वारयितुं शक्यं महाराजैर्निरङ्कुशैः ॥२८३॥

सायणाचार्य ने जो कहा था कि "सङ्घच्छध्वं संवदध्वंमित्यादि विधियाँ यागानुष्ठान समयमें ऋत्विग्जनों के प्रति कही गयीं हैं, वह ठीक नहीं, कारण यह है कि वेदों में यह दृष्टान्त भी दिया गया है कि जैसे देवता लोगों ने सङ्घटित होकर असुरों को पराजित कर दिये थे वैसा तुम

लोग भी सङ्घटित हो जाओ। इस दृष्टान्त के अनुसार देखने पर, मालूम पडता है कि ये सङ्घटनोपदेश लौकिक जनता के प्रति भी लागू है। यहाँ यह कहना भी उचित नहीं कि उन वाक्यों में ऋत्विक रूप देवतायें ही उदाहरण हैं। उत्तर यह है कि देवताओं को काम्यकर्मों में अधिकार नहीं माना गया है। शारीरक भाष्यादि में भी देवताओं का अधिकार आत्मविद्या में ही माना गया है। अज्ञात जो सुखोपाय है उसे बताने वाला वेदवाक्य विधि और राग से किये जाने वाले पापकार्य को रोकने वाला निषेध है। ये दोनों भी मनुष्यों के प्रति ही प्रवृत्त होते हैं। और शास्त्रों में अधिकार भी मनुष्यों का ही है। अथवा यागानुष्ठान में रहने वाले जनता के प्रति ही ये सङ्घटन विधियाँ हैं" ऐसा कहने पर भी कोई आपत्ति नहीं, क्योंकि वेदों की दृष्टि में सभी वर्ण, गौणमुख्याङ्गरूप से वैदिक कर्मों में ही उपयोगी हैं। अतः उन्में परस्पर मित्रता के लिये ऐकमत्य आवश्यक है। अतः वेद माता कहती है कि सङ्गच्छध्वमित्यादि, जिससे जनता में सङ्घटन ठीक हो सके। यह भी गुणों के द्वारा वर्ण मानने पर ही सिद्ध होगा न कि जन्म से। जाति प्रथा से सङ्घ का विघटन ही सर्वत्र देखा जाता है और उसे रोकना महाराजाओं के भी वश में नहीं है।

सर्ववर्णाश्रमे इति ( २७७ ) सर्वेषां वर्णाना माश्रमे गृहस्थाश्रम इत्यर्थः। भृगुस्मृत्यादौ वर्णा गृहाश्रमे एव तिष्ठन्ति नान्याश्रम इत्युक्तत्वात्।

ननु केचित्सन्तु नाम ब्राह्मणा मन्दबुद्धयः। मेधाविनोऽपि सन्त्येव बहवःशास्त्रकोविदाः॥२८४॥
तानेवान्येऽनुगच्छन्तु बुद्धिमद्ब्राह्मणेतराः। सर्वेऽप्यबुद्धिमन्तश्च वेदाज्ञां परिपालितुम् ॥२८५॥
तदयुक्तं यतः सर्वे मानवाः सर्वदेशगाः। नैकसङ्घं चिकीर्षन्ति यत्र स्युर्बुधबाडबाः ॥२८६॥
प्रतिग्रामं पृथक् सङ्घाः प्रतिवीधि पुरीषु च। भिन्न सङ्घा मिलित्वैकं महासङ्घं प्रकुर्वते ॥२८७॥
सर्वत्र त्वदभिप्रेता ब्राह्मणा नियमेन हि। न लभ्यन्ते कश्चिच्चान्ये सुलभाः सूक्ष्मबुद्धयः ॥२८८॥
न ब्राह्मणप्रतीक्षायां ते गच्छेयुर्जना बहिः। किन्तु स्वग्रामसन्नद्धैः सङ्घा धीमद्भिरिष्यते॥२८९॥

यदि कोई कहे कि ब्राह्मणों में कुछ मन्दबुद्धियों के रहने पर भी बहुत से बुद्धिमान भी रहते हैं। दूसरी जाति के बुद्धिमान और सभी मन्दबुद्धि उन्हीं का अनुसार चलें। यह भी ठीक नहीं, क्योंकि सब देशवाले लोग मिलकर एक सङ्घ नहीं बनाते जहाँ बुद्धिमान ब्राह्मण भी कुछ मिल सके किन्तु प्रत्येक गावँ में और शहर के प्रत्येक वीथि में एकैक सङ्घ अपनी सुविधा के लिये बनाना चाहते हैं और उस सभी स्थानों में बुद्धिमान ब्राह्मण अवश्य मिलेंगे ऐसा कोई नियम नहीं किन्तु जो कोई बुद्धिमान तो



अवश्य मिल सकेंगे। यह नहीं होगा कि बुद्धिमान ब्राह्मण की प्रतीक्षा में दूसरे गाँव में जाकर उसी के नेतृत्व में अन्य लोग सङ्घ बनाये किन्तु अपने अपने गाँव में रहने वाले बुद्धिमानों से ही वे संघ बनायेंगे।

अपिचान्यदिहास्त्येकं वस्तुतत्वं विदांकुरु। जन्मना श्रेष्ठता चेत्सा यावद्देहं प्रवर्तते ॥२९०॥
देहापाये तन्निवृत्तिस्तावद्गर्वः प्रवर्धते। चौर्यादिकं प्रकुर्वाणः श्रेष्ठत्वं स्वस्य चिन्तयेत् ॥२९१॥
यथा हि जन्मसं सिद्धराजसिंहासनादिकम्। मदमात्सर्यं हेतुः स्याद्ब्राह्मण्यमपि तत्तथा ॥२९२॥
सङ्घश्रेयस्करस्वात्मगुणानां निरपेक्षता। ततोऽसुरस्वभावाश्च वैषम्यदृष्टिवर्धनम् ॥२९३॥
तेभ्योऽन्योन्यविवादाश्च सङ्घशैथिल्यकारकाः। ततोऽन्ये बुद्धिमन्तस्तान् जनान् त्यक्ष्यन्ति दूरतः
पृथक् सङ्घान् चिकीर्षन्ति जन्मश्रेष्ठत्वनिन्दकान्। तदा वेदोक्तमित्रत्वं नैव मर्त्येषु सेत्स्यति २९५॥
तदेवाद्यापि सर्वत्र मनुष्येष्वनुभूयते। यच्चाभूत्पारतन्त्र्यस्य पाकिस्थानस्य कारणम् ॥२९६॥
यद्यदाचरति श्रेष्ठस्तत्तदेवेतरो जनः। श्रेष्ठत्वं जन्मसिद्धं चेत्स्वमन्यांश्च निपातयेत् ॥२९७॥
प्रति वर्णं मनुष्येषु श्रेष्ठत्वं विद्यया गुणैः। तदन्यराष्ट्रमङ्क्लृप्तमीश्वरेच्छानुवर्ति च ॥२९८॥
यच्च वर्णेषु श्रेष्ठत्वं जन्मनेति प्रकल्प्यते। लोकवेदविरुद्धं तत्तुच्छस्वार्थैकहेतुकम् ॥२९९॥
तस्मान्न श्रेष्ठताहेतुब्राह्मण्यं जन्मनेष्यते। किन्तु श्रुतिस्मृति प्रोक्त गुणविद्यादिभिश्च तत् ॥३००॥

यहाँ खास बात एक और है। जन्मसिद्ध श्रेष्ठता जीवन भर रहेगी। अतः ऐसे श्रेष्ठताभिमानी पुरुष का गर्व दिन-दिन बडता रहेगा। चोरी मद्यपानादि करते हुए भी वह अपने को श्रेष्ठ समझेगा। जैसा जन्मसिद्ध राज धिकार नाना प्रकार के मदमात्सर्यादि का कारण हो जाता है वैसा ही जन्मसिद्ध ब्राह्मणत्व भी ऐसे दुर्गुणों का कारण बन जाता है सङ्घटनो-पयोगी विनय विधेयतादि की उपेक्षा भी हो जाती और उससे सङ्घविघटन कारी वैषम्यदृष्टियाँ पैदा होंगी। अतः दूसरे बुद्धिमान लोग उस मिथ्या-भिमानियों को छोड़कर अपने लिये अलग सङ्घ जिसके द्वारा जन्मसिद्ध उच्चनीचभावों की निन्दा होगी, बनवायेंगे। इस परिस्थिति में वेदों का इष्ट मित्रता भी जनता में नहीं होगी। आजकल भी देश भर में वे ही भेद-भाव दीख पड़ते हैं जो हजारों साल तक देश की परतन्त्रता के और पाकिस्तान बनने के भी कारण हो गये थे। श्रेष्ठपुरुष जैसा करता है वैसा ही दूसरे भी करेंगे। इस परिस्थिति में जन्म से श्रेष्ठता मानने पर, लोग, दुराचारी ब्राह्मण को ही श्रेष्ठ समझकर स्वयं भी दुराचार करते रहेंगे। और फलतः सबको भी दुर्गति होगी। जाति प्रथा में तो ब्राह्मणादि वर्णों में आपस में उच्चनीचता गुण कर्मों से ही मानी जाती है। वह मन्वादि-स्मृति सम्मत और सब राष्ट्रों में भी वैसा ही दीखता है, वर्णों में उच्चनीच-

भाव जन्म से माना जाता है तो वह लोकवेद विरुद्ध हो जाता है। ऐसी चीज की कल्पना भी तुच्छ स्वार्थ के लोभ से ही की जाती है। अत: श्रेष्ठता का हेतु जो ब्राह्मणत्व है वह जन्म से कभी नहीं हो सकता किन्तु श्रुति और स्मृति में बताये गये गुण और विद्या से ही हो सकता है।

नैतदब्राह्मणो वक्तमर्हतीति श्रुतेर्गिरा। जातिप्रथा जन्मसिद्धा सुतरां प्रतिषिध्यते ॥३०१॥
चरेत्सत्यमिवर्तं य: तस्य होतव्यमेव तु। सत्यमृतं ब्राह्मणोऽस्ति तस्माद्धोतव्यमस्य च ॥३०२॥
अनृतं बहुराजन्य: करोति वदतीति च। स्त्रीशूद्रावनृतं चेति प्रोक्तं शतपथादिषु ॥३०३॥
नैतानि विधिवाक्यानि किन्त्वर्थवादसङ्गिर:। विप्रादिसर्ववर्णानां स्वरूपस्थितिबोधका: ३०४॥
स्वराष्ट्रकार्यबाहुल्यव्यतिषक्तनृपस्य हि। असत्यभाषणं क्वापि कदाचित्सम्भवेदपि ॥३०५॥
कायक्लेशकरे शूद्र: खिद्यमानो हि कर्मणि। वदेदनृतमात्मानं क्लेशान्मोचयितुं स्वत: ॥३०६॥
वैश्यकर्म तु वाणिज्यं सत्यानृतविमिश्रितम्। अतोऽसौ सूनृतं वाक्यं वक्तुंनार्हति सर्वदा ॥३०७॥
तस्मादब्राह्मणो नैतत्सत्यं वक्तुमिहार्हति। असत्यमपि स ब्रूयादिति छान्दोग्य निर्णय: ॥३०८॥
तादृक्स्थितिर्ब्राह्मणस्य वेदमात्रोपजीविन:। न संभवेदिति प्रोक्तं सत्यं ब्राह्मण इत्यृतम् ॥३०९॥

उपनिषद में कहा गया है कि ऐसा सत्यवाक्य अब्राह्मण बोल नहीं सकता। इस श्रुतिवाक्य से भी जन्मसिद्ध जाति प्रथा बिलकुल निषिद्ध हो जाती है। जो सत्य बोलता है और उसे करता भी है उसके लिए होम करना चाहिए। ब्राह्मण सत्य बोलता भी है और ऐसा करता भी है। क्षत्रिय असत्य ज्यादा बोलता है और ऐसा करता भी है। स्त्री और शूद्र तो अनृत ही है ऐसा शतपथ में कहा गया है। ये तो विधि वाक्य नहीं किन्तु ब्राह्मणादि वर्णों के स्वरूप और स्थिति का बोधन करनेवाले अर्थ-वाद वाक्य है। क्षत्रिय राष्ट्र के बहुत कार्यों में निमग्न रहता है। अत: उसके लिये कभी असत्य भाषण भी संभव है। शूद्र हमेशा शारीरिक कठिन कर्म करता है। अत: वह उस कष्ट से बचने के लिये कभी असत्य बोल सकता है। वैश्य का मुख्य कार्य तो वाणिज्य है। वाणिज्य में आधा सत्य और आधा असत्य भी रहता है। अत: वह सत्य ही हमेशा बोल नहीं सकेगा। इसलिए छान्दोग्य में ऐसा सत्य अब्राह्मण बोल नहीं सकेगा," कहा गया है। वेदविद्या से हीजीवन बितानेवाले ब्राह्मणों को ऐसी स्थिति का संभव नहीं। अत: कहा गया है कि ब्राह्मण सत्य और ऋत है।

नैतदब्राह्मण इति "नैतदब्राह्मणो विवक्तुमर्हति (छा. उ. ४.४.५) इत्युक्तम्। एतत् = सत्यमब्राह्मण: ब्राह्मणेतरवर्णत्रयं विवक्तुं विशेषेण वक्तुं नार्हति समर्थो न भवतीति तदर्थ:। तदसामर्थ्ये कारणानि दर्शितान्येव श्लोकेषु। तानि च ब्राह्मणस्य



वेदविद्याधनस्य नैव संभवन्ति। अत एवोक्तम्" ब्राह्मण ऋतं सत्यं तस्माद्ब्राह्मणस्यैव होतव्यम्। य ऋतमिव सत्यमिव चरेत् तस्य होतव्यम्" ( मैत्रा० सं० १.८.७ ) इति। अत्रस्थौ इवशब्दौ एवकारार्थौ। अत्र ब्राह्मणस्य सत्यवदनं सत्याचारश्च स्वाभाविकत्वेन दर्शितौ। राजन्यादिविषये च "बहु वै राजन्योऽनृतं करोति वदत्यनृतम् ( तै. ब्रा. १:७.३२ ) इति। "अनृतं स्त्रीशूद्र:" ( शत. ब्रा. १४.१.३१ ) इति चोक्तम्। स्त्रियोऽनृतत्वं नाम गोपनीय कार्यबाहुल्यमेव न त्वन्यत्। स्त्रीणां हि कार्याणि तदीयाचाराश्च प्राय: तदीयाङ्गानीव गोपनीया भवन्ति। शूद्रस्यानृतत्वे हेतुर्दर्शित एव मूले। वैश्यस्य वाणिज्यं च सत्यानृतमिश्रितमिति लोकप्रसिद्धम्। अतस्तेनापि सर्वथा सत्यं वक्तुं न शक्यते। एतदभिप्रायेणैव "नैतदब्राह्मणो विवक्तुमर्हतीत्युक्तम्। "सत्यमेव देवा: अनृतं मनुष्या:" ( शत. १.१.१ ) "सत्यसंहिता देवा: अनृत संहिता मनुष्या:" ( ऐत० ब्रा० १.१.६ ) इत्यादिष्वपि देवा: स्वर्गभूलोकसाधारणा विवक्षिता:। तदतिरिक्ता मनुष्या: क्षत्रियादयोऽनृतसंहिता इति।

जन्मजातिमते सत्यभाषिणामप्यविप्रता। मिथ्याप्रभाषिणां जात्या ब्राह्मणत्वमपीष्यते ॥३१०॥
एतच्च प्रोक्तवेदान्तवाक्यार्थेन विरुध्यते। तस्माज्जातिप्रथा त्याज्या श्रुति प्रमाण्यवादिभि :३११
जनको विदुरो धर्मव्याधश्चाद्यतना ह्यपि। तत्समा वितथं वाक्यं नापि स्वप्ने ब्रुवन्ति ते ॥३१२॥
श्रुत्यभिप्रायतस्ते हि सर्वथा ब्राह्मणोत्तमा:। तेभ्यश्चाब्राह्मणत्वोक्तिर्जातिवादिप्रकल्पिता ॥३१३
एतत्कल्पकप्राज्ञानामेषैव स्वार्थभावना। यद्विदुरादयो ज्ञानिजना: शूद्रा इतीरिते ॥३१४॥
सर्वेऽपि ज्ञानिन: शूद्रपुत्रा: शूद्रतया मता:। स्युर्न: शुश्रूषणादौ ते नियुज्येरन् महीभृता ॥३१५॥
श्रुत्यभिप्रेतवर्णस्य ग्रहणे सेवकात्मजा:। अस्मत्पुत्राग्रगण्या: स्युस्तदसह्यं तु नो भवेत् ॥३१६॥
सुखजीवनवृत्त्यादौ ते भवेयुश्च भागिन:। तेनास्मच्छ्रेयसो हानि: साप्यसह्या भविष्यति ॥३१७
कथंचिद्द्वयमस्माकं सन्ततिश्चापि सर्वदा। विनाऽऽयासं यथा पूज्या: सुखजीवनयापका: ॥३१८॥
तथा विधेयमस्माभिरित्यालोच्य मृषा बहु। कल्पितं तैस्तदन्ये च भुक्तेर्मुक्तेर्बहिष्कृता: ॥३२०॥
स्वार्थभावनयैवाद्य प्रथां तां ब्राह्मणब्रुवा:। वाञ्छन्ति न तु शास्त्रीयसिद्धान्तह्रासभीतित:३२१
निर्विवादाँस्तु सिद्धान्तान् सर्वान् प्रायोऽजहुश्च ते। तुच्छस्वार्थेप्सया जातिप्रथामिच्छन्त्यवैदिकीम्
धर्मव्याधादय: सत्यवादिनस्त्विति निश्चितम्। तस्मादब्राह्मणत्वोक्तिर्मिथ्या श्रुतिविरोधत:३२२

जाति प्रथा में हमेशा सत्य बोलनेवाले भी अब्राह्मण और मिथ्या-भाषी भी ब्राह्मण समझे जाते हैं। यह तो दर्शित उपनिषद्वाक्यार्थ का विरुद्ध है। जनक विदुर और धर्मव्याध और उसी प्रकार के वर्तमान धर्मनिष्ठ लोग, स्वप्न में भी असत्य बोलनेवाले नहीं हैं। उक्त श्रुतिवाक्य के अनुसार वे श्रेष्ठ ब्राह्मण ही होते हैं। उनको अब्राह्मण बतानेवाले महाभारतादि के वाक्य जातिवादियों के द्वारा कल्पित हैं इन मिथ्या वाक्यों को बनानेवाले

पण्डितों को स्वार्थभावना यही है कि विदुरादिज्ञानी भी यदि शूद्रमाने जायेंगे तो शूद्रपुत्र सब ज्ञानी अज्ञानी भी हमारी सेवा में नियुक्त किये जायँगे। श्रुति सिद्ध वर्ण को मानने पर वे शूद्रपुत्र हमारे पुत्रों से आगे बड सकेंगे और वह हमारे लिये असह्य ही होगा। अध्यापनादि जीविका वृत्तियों में भी वे भाग लेंगे और उससे भी हमारी हानि होगी। अतः किसी भी प्रकार से हम और हमारी उत्तरोत्तर सन्तति जैसा सुखजीवन बिता सकेगी वैसा हमको करना होगा सोचकर वे मिथ्यावाक्यों की कल्पना किये थे। और उनसे इतर लोग भक्ति और मुक्ति के सुख से वञ्चित हो गये। ऐसी स्वार्थ भावना से ही आजकल भी ब्राह्मणब्रुव जातिप्रथा को चाहते हैं न कि शास्त्रीय सिद्धान्त भंग के भय से। निर्विवाद शास्त्रीयसिद्धान्तों को प्रायः वे छोड़ ही दिये थे किन्तु तुच्छ स्वार्थ के लिये ही इस प्रथा की रक्षा करना चाहते हैं। धर्मव्याधादि महात्मा पहले रहते थे ऐसा वृतान्त सत्य ही है। उसमें कोई विरोध नहीं किन्तु उनको अब्राह्मण बतानेवाले वाक्य सब अप्रमाण हैं :

तथैव सर्वदा मिथ्यावेषभाषादिदूषितः। रावणस्तत्समाश्चाद्यतना ह्यब्राह्मणा मताः ॥३२३॥
ब्राह्मणत्वमपि प्रोक्तश्रुत्या तेषां न सम्मतम्। तथापि तज्जन्मजातिप्रथावादि-प्रकल्पितम् ३२४॥
तत्प्रकल्पकधूर्तानामप्येषा स्वार्थभावना। यद्रावणे महादुष्टे ब्राह्मणत्वेन सम्मते ॥३२५॥
वयसस्मत्सुता दौष्ट्यं कुर्वाणा ब्राह्मणा मताः। स्युर्नृपेणापि दण्डात्ते मोचिताश्चापि पूजिताः ३२६
श्रौतवर्णानुसारेण ते हि शूद्रा भवन्त्यतः। मलमूत्रक्षालनादौ नियुक्ताश्चेन्नृपेण ते ॥३२७॥
तत्कथं सह्यतेऽस्माभिः श्रेष्ठै राजपुरोहितैः। लोकेऽपि वा किमस्माकं मान्यता संभविष्यति ३२८
इति सञ्चिन्त्य सर्वं तैः कल्पितं मुनिनामभिः। ततो गुणादरो नष्टो मूर्खताऽपि प्रवर्धिता ॥३२९॥
रावणस्तु भवेन्नाम सत्यः सीतापहारकः। ब्राह्मण्यं तस्य मिथ्यैव वेदवाक्यविरोधतः ॥३३०॥
दत्तमुत्तरमप्यर्धजरन्न्यायप्रसङ्गतः। प्रमेये नेष्यते किन्तु प्रमाणेऽस्तीति सर्वदा ॥३३१॥
मिथ्यासंन्यासिवेषेण नानामिथ्याप्रभाषणैः। विश्वासं जनयित्वाऽथ स सीतामप्यचूचुरत्। ३३२
तथाविधवेषभाषी रावणो ब्राह्मणः कथम्। श्रुत्यैव ज्ञायते मिथ्या वक्तुं न ब्राह्मणोऽर्हति ३३३॥
सत्यमब्राह्मणो वक्तुं नार्हतीति श्रुतेर्गिरा। असत्यं ब्राह्मणो वक्तुं नार्हतीत्यपि गम्यते॥३३४॥
तस्मादेव च तत्रोक्तं समिधं सोम्य त्वमाहर। त्वोपनेष्ये यतः सत्यादगा नेषदिहेत्यपि ॥३३५॥
तादृग्मिथ्याकल्पनानां मूलं रागादिकं विना। नान्यत्प्रकल्प्यते श्रौत वाक्यं वेदार्थकोविदैः ३३६॥
एतदुद्घोषितं स्पष्टं मीमांसाभाष्यवार्तिके। यद्रागादिः प्रसक्तश्चेत्स्मृत्यादेर्मूलमेव सः ॥३३७॥
अनादितोऽद्यपर्यन्तं भुवि सर्वेऽपि मानवाः। रागद्वेषादिभिः पूर्णा विद्वांसस्तु विशेषतः ॥३३८॥
सत्यवाक्येन विप्रत्वं कुलगोत्रादिवर्जिते। ज्ञातं महर्षिणा पूर्वं ज्ञेयमद्यापि तत्तथा ॥३३९

वैसा ही हमेशा मिथ्यावेषभाषी रावण और तत्समान वर्तमान लोग



भी वेदमत में अब्राह्मण ही हैं। उनको ब्राह्मण बताने वाले रामायणादि के वाक्य जातिवादियों के द्वारा कल्पित हैं। ऐसे मिथ्या कल्पक धूर्तों की स्वार्थ भावना भी यही है कि महादुष्ट रावण भी ब्राह्मण कहा गया हो तो हम और हमारे पुत्र भी कितने भी दुराचारी हों ब्राह्मण समझे जायेंगे और राजा के तरफ से दण्ड भी न होगा और सर्वपूजित भी होंगे। श्रुतिसम्मत वर्ण को मानने पर वे शूद्र ही होते हैं। उनको यदि राजा मलमूत्रादि धोने के काम में नियुक्त करेगा तो वह हमारे लिये बिलकुल सहन नहीं होगा। लोक में हमारी मान्यता भी नहीं रहेगी, ऐसा सोचकर वे मुनियों के नाम से झूठमूठ कल्पित किये थे। इन्हीं के कारण लोक में गुणग्राहित्व बिलकुल नष्ट हो गया और मूर्खता भी बड गयी। रावण सत्य ही था और उसका सीतापहरण भी सत्य ही था, किन्तु उसको ब्राह्मण कहना, वेद विरुद्ध है। अर्धजरती न्याय भी प्रमेय में मान्य नहीं किन्तु प्रमाणों में वह सर्वत्र रहता ही है। मिथ्या संन्यासि वेष से और मिथ्याभाषणों से विश्वास पैदा कर रावण सीताजी को चोरी से ले गया था। ऐसे वेषभाषी रावण ब्राह्मण कैसा होगा। श्रुतिवाक्य से ज्ञात होता है कि ब्राह्मण असत्य बोल नहीं सकता। अब्राह्मण सत्य नहीं बोल सकता? "नैतदब्राह्मणो विवक्तुमर्हति" इस वाक्य से, ब्राह्मण असत्य बोल नहीं सकता यह अर्थ भी सिद्ध हो जाता है। इस लिये आगे कहा गया है कि "समिधं सोम्याहरोप त्वा नेष्ये न सत्यादगा" हे सोम्य तुम सत्यसे विचलित नहीं हो, अतः समिध लाओ तुम्हारा उपनयन करूँगा। रागद्वेषादि से बनाये गये स्मृत्यादिवाक्यों का मूल वही रागद्वेषादि ही होता। उसके अतिरिक्त श्रुतिवाक्य मूल माना नहीं जाता। यह बात मीमांसा भाष्यवार्तिकादियों में भी स्पष्ट शब्दों से कही गयी है। सृष्ट्यादि से लेकर आजकल भी सब मनुष्य रागद्वेषादि से भरे हुए हैं और पण्डित लोग तो और भी अधिक रागद्वेषादिपूर्ण हैं। सत्यवाक्य बोलना प्रत्यक्षविषय है, ऐसे प्रत्यक्षसत्यभाषण से ही पहले हारिद्रुमत-गौतममहर्षि ने कुलगोत्रादि रहित जाबालि को ब्राह्मण समझा था। अतः इस समय में भी लोग ब्राह्मण को ऐसा ही समझे।

मीमांसेति (३३४) "हेतुदर्शनाच्च" इति सूत्रे इदं निर्धारितं यत् "औदम्बरीं स्पृष्ट्वोद्गायेत्" इति श्रुतिविरोधात् "औदुम्बरी सर्वा वेष्टयितव्ये"ति स्मृतिवाक्यमप्रमाणमिति। स्मृतिविहितसर्ववेष्टने कृते सति श्रुतिविहितस्पर्शो बाधितः स्यात्। अतः श्रुतिविरुद्धार्थबोधकत्वात्स्मृतेरप्रामाण्यम्, अप्रमाणभूतायाः स्मृतेः कल्पनाबीजत्वेन लोभश्च प्रदर्शितः। तस्याधिकरणान्तरत्वपक्षेऽपि "वैसर्जनहोमीयं वासोऽध्वर्युः परिगृह्णाति इति

स्मृतेरप्रामाण्यमुक्तम् । अत्र यद्यपि पूर्ववत् श्रुतिविरोधो नास्ति तथापि सर्वमानवसाधारण लोभस्याध्वर्योरपि संभवात्तद्वस्त्रग्रहणलोभवताऽध्वर्युणा कल्पितेयं स्मृतिः स्यादिति तस्याः अप्रामाण्यमुक्तम् । अपिवा कारणाग्रहणे प्रयुक्तानि प्रतीयेरन् इति सूत्रेऽपि कारणाग्रहणे लोभादिदृष्टकारणाज्ञाने प्रयुक्तानि क्षुते आचामेदित्यादिस्मृति—वाक्यानि प्रतीयेरन् = प्रमाणत्वेन ज्ञातव्यानि भवेयुरित्युक्तम् । तदीयतन्त्रवार्तिके च कुमारिलभट्टेनाप्येवमुक्तम् अपि वा कारणं दृष्टं यस्मादेषु न गृह्यते । तस्मान्नाचमनादीनां क्रतुश्रुतिविरुद्धता" इति । अत्रापि वार्तिके रागद्वेषलोभाद्यभावपक्षे स्मृत्यादीनां प्रामाण्यमङ्गीकृतम् । तथा प्रकृतेऽप्युभयधा श्रुतिविरोधेन लोभादिदृष्टकारणसम्भवेन च रावणादिब्राह्मणत्वोक्तीनां विदुरादिशूद्रत्वोक्तीनां चाप्रामाण्यमेव ।

**एतदर्थोपदेशाय श्रुत्या गाथा प्रदर्शिता । अन्यथाऽपौरुषेयोक्तौ तस्याः का सत्यता भवेत्।।३४०।।**

इसी बात का कुलगोत्रादि ज्ञात न होने पर भी सत्यभाषणादि से ब्राह्मण समझा जाय ) उपदेश करने के लिये श्रुति में ऐसी गाथा दिखायी गयी थी । नहीं तो अपौरुषेय वेदवाणी में उसकी क्या सत्यता होगी ।

एतदर्थोपदेशायेति–विषयान्तर–विजिज्ञापयिषयैवापौरुषेये वेदे गाथाः प्रदर्श्यन्ते न तु भूतकालिकेतिहासप्रदिदर्शयिषया । इतिहास प्रदर्शनपरत्वे पौरुषेयत्वापत्तेः । अतएव सर्वत्र शाङ्करभाष्यादौ तासां सुखावबोधार्थत्वमुक्तम् । नन्वत्र जन्मपरम्परागत गोत्र प्रश्नेनपि जन्मजातिपक्षः स्थिरो भवतीति चेन्न । गोत्रप्रश्नस्याभिप्रायान्तरसद्भावात् । वशिष्ठादिमहर्षिगोत्रा हि पुरुषाः प्रायः तदृषिप्रवर्तित शिष्टाचार-निर्वर्तनपराः स्युरिति तत्परीक्षां विनैव स्वशिष्यत्वेन ते स्वीकर्तुं स्वाश्रमे प्रवेशयितुं वा शक्यन्त इत्यभिप्रायेण तत्तदाश्रमाधिपतिभिः गोत्रादिकं पूर्वतनगुर्वाश्रमादिकं ( गुरुस्थान ) वा पृच्छ्यते । यथाऽद्यतनाः महाविद्यालयाध्यक्षाः स्वविद्यालये प्रविविक्षुं विद्यार्थिनं पूर्वतनविद्यालय-परिचयपत्रं पृच्छन्ति । दर्शिते च तस्मिन् तद्द्वारा विद्यार्थियोग्यतां सत्प्रवर्तनादिकं च ज्ञात्वा स्वविद्यालये तं प्रवेशयन्ति । यस्य च पार्श्वे तादृशं परिचयपत्रं नास्ति तं तदीययोग्यतां सत्प्रवर्तनादिकं स्वयं परीक्ष्य पश्चात्प्रवेशयन्ति । तथैव हरिद्रुमत गौतमेनापि सत्यकामस्य परीक्षां विनैव तदीयशिष्टाचारादिकं ज्ञातुं गोत्रप्रश्नः कृतः । पश्चाद्गोत्रज्ञानाभावेऽपि सत्यवचनेनैव तदीयसुजनत्वं तत्समानाधिकरण-ब्राह्मणत्वं चानुमायोपनयनं कृतमिति कुतो जातिवादस्यात्रावकाशः । यद्यपि ब्राह्मणत्व-मुपनयनेऽनपेक्षितम् । तस्य गार्हस्थ्यकर्मापेक्षितत्वात् तथापि तस्मिन् ब्राह्मणोचित सत्यश-मादयो गुणाः वस्तुतः सन्ति, भाविब्राह्मणत्वार्हं इत्यभिप्रायेण सत्यकामं ब्राह्मणत्वे निर्दिष्टवानृषिः । गोत्रनाम्ना जातिरेव पृष्टेति येषामप्पय्यदीक्षितादीनां मतं तन्मते सत्यकामस्य जारजातत्वं स्पष्टमेव । जातिवादे हि विवाहितपतिपत्न्योः सजातीयत्वनियमेन



पत्न्याः पतिजातिज्ञानाभावो नैव संभवेत्' तथा च सत्यकामस्य विवाहितदम्पति पुत्रत्वाभावज्ञानेऽपि सत्यवचनादिनैव तदीयविद्यायोग्यतां ज्ञात्वा महर्षिस्तमुपनिन्ये इति न जातिवादस्य सुतरामवकाशः । अत्र केचिदित्थं कथयन्ति यत् जबालायाः प्रतिवचन स्वारस्येन तदीयव्यभिचार एव सूच्यते । तथाहि 'नाहमेतद्वेद इति जबालावचनं न तु नाहमेतत्स्मरामीति । विवाहसमये देशकालादिसङ्कीर्तनात्मकसङ्कल्पे उच्यमानं पति-गोत्रं जबालया श्रुतं चेत्पश्चात्तस्य स्मरणाभावो वक्तव्यः स्यान्न तु सामान्यतस्तज्ज्ञाना-भावः । एवं बह्वहं चरन्ती परिचारिणी यौवने त्वामलभे साऽहमेतन्न वेद यद्गोत्रस्त्वमसि जबाला तु नामाहमस्मि सत्यकामो नाम त्वमसि स सत्यकाम एव जाबालो ब्रवीथा' इति प्रतिवचनैः तस्या विवाहित—पत्यभाव एव सूच्यते । बह्वहं चरन्तीत्यनेन जारत्वं परिचारिणी यौवने इत्यनेन च दासीत्वं = शूद्रात्वं तस्या सूच्यते । अन्यथा त्वत्पितृपरि-चारिणीत्येवावदिष्यत् । अपिच "जबालाऽहं जाबालस्त्वमित्यनेन स्वपतिनामापि तया न ज्ञातमिति सूच्यते । यदि तस्याः निजपतिः स्यात्तदाऽवश्यं तन्नामोत्तरापत्यप्रत्ययेन सा तं निरदेक्ष्यत् । सा नैवं निर्दिदेश । यौवने इत्यनेन तस्यास्तदानीं वृद्धात्वं सूनोस्त्रिंशद्वर्षं वयस्कत्वं च सूच्यते । त्रिंशद्वर्षवयस्कस्योपनेयत्वे चोपनयनस्य षोडशवर्षावधित्वं बोधयन्तीनां स्मृतीनां अवेदमूलत्वेनाप्रामाण्यमपि सूच्यते । पूर्वयुगेषु सर्वेषां पूर्णायुष्कत्वेन मध्यकाले मरणमपि जबालापतेः संभावयितुमशक्यम् । यदि तत्पतिर्मृतश्चेत्तत्प्रकरणे तन्मरणं कुतो न दर्शितम् ? तस्मात्तस्याः स्वकीयः पतिरेव नासीदिति ज्ञायते । ननु जबाला यदि व्यभिचारिणी स्यात्तदा व्यभिचारगोपकशब्दैरेव पुत्राय उत्तरं दद्यात् न तु बह्वहं चरन्तीत्यादि व्यभिचारद्योतक शब्दैः । पतिव्रतायाश्च व्यभिचारशङ्काज्ञानमेव न भवतीति यथेष्टशब्द प्रयोगस्तस्या उचित एवेति चेदुच्यते । पूर्वकाले हि प्रमादकृतो दोषः तद्गो-पकानृतवचनदोषेण नैव संयोज्यते स्म, किन्तु पूर्वदोषह्रासाय स्पष्टशब्दैः तत्प्रकाश्यते स्म । अतएव यज्ञसभायां प्रतिप्रस्थाता पत्न्याः व्यभिचारं पृच्छति "पत्नि कस्ते जार इति, सा च ब्रवीति ( यद्यस्तिचेत् ) असौ मे जार इति । एवं बहिः प्रकाशनेन स्वकृत दोषो विनश्यतीति धर्मशास्त्रानुसारेण पूर्वयुगेषु जनाः स्वदोषं प्रकाशयन्ति स्म । आधु-निकाश्च स्वयंकृतचौर्यव्यभिचारादिदोषं तद्गोपकासत्यवचनदोषैः संयोजयन्तीत्यन्यदेतत् । तथाच जबालायाः स्वव्यभिचाराभिव्यञ्जकशब्दप्रयोगः युक्त एव । एवमेतैर्हेतुभिः सत्यकामस्य जारजातत्वं यदन्यैरुच्यते तदपि नासङ्गतम् । अस्माकं च मतमिदम् । नात्र जबालाया व्यभिचारस्य प्रातिव्रत्यस्य वा वृत्तान्तः श्रुत्या बोध्यते । अपौरुषेयत्वात्तस्याः, किन्तु व्यभिचारव्यञ्जक-शब्दैः जारजातस्यापि विनीतस्य विद्यायामधिकारोऽस्तीति ।

**शोकेनागतराजन्ये शूद्रशब्दो महर्षिणा । प्रयुक्तोऽतस्तत्प्रवृत्तिनिमित्तं सहजैव शुक् ।।३४१।।**

**यथा शमादि सम्पत्तिमाश्रित्य क्षणिकामपि । श्रुतिर्दीक्षितराजन्यं ब्राह्मणं प्रब्रवीति च।।३४२।।**

**यथा दीक्षा परित्यागे तं शौर्यादिगुणान्वितम् । विज्ञाय सा स्वयं ब्रूते क्षत्रियं धनुषा युतम् ३४३**

तथा क्षणिक शुग्योगाच्छूद्रं जानश्रुति मुनिः । उक्त्वा राजन्यचिह्नेन क्षत्रियं ज्ञातवान् ततः ३४४॥
यस्मिन् स्वाभाविकः शोको बुद्धिमान्द्यादिहेतुकः । दृश्यते तस्य शूद्रत्वमिति श्रुत्यैव सम्मतम् ३४५
यज्ञे दीक्षितराजन्यवैश्ययोरिव विप्रता । शूद्रत्वं क्षत्रियत्वं च भवेदेकस्य कालतः ॥३४६॥
व्रतोपवाससञ्जातैर्दीक्षाकालशमादिभिः । क्षणिकैर्वैश्यराजन्यौ ब्राह्मणत्वेन सम्मतौ ॥३४७॥
तथा क्षणिकशुग्योगाच्छूद्रत्वं तदभावतः । जानश्रुतेः क्षत्रियत्वमपि वेदेन सम्मतम् ॥३४८॥
विद्याग्रहण सामर्थ्य शून्यः शूद्रः पशूपमः । तस्माद्यज्ञेऽनवक्लृप्तिस्तस्य प्रोक्ता श्रुतौ क्वचित् ३४९
पादावनेजनाद्यग्र सेवया यस्तु जीवति । स शूद्रत्वेन निर्दिष्ट स्ताण्डये च ब्राह्मणे स्फुटम् ॥३५०॥
न चैतद्विपरीतार्थे जातिवादसमर्थके । शूद्रशब्दः प्रयुक्तोऽस्ति क्वापि वेदचतुष्टये ॥३५१॥

शोक से आये हुए जानश्रुति को रैक्वमुनि ने शूद्र शब्द से सम्बोधित किया था । अतः, शूद्रशब्द प्रयोग में निमित्त, अज्ञान से आया हुआ स्वाभाविक शोक ही है। इससे विपरीत अर्थ में शूद्रशब्द वेदों में प्रयुक्त नहीं है।

हंसोक्तं रैक्वमहत्वं श्रुत्वा जानश्रुतिः स्वस्य तदभावं ज्ञात्वा तत्प्रयुक्तशोकेन रैक्वसमीपं गतवान् । तं प्रति रैक्वः "अरे त्वा शूद्र तवैव सह गोभिरस्तु" इत्युक्त्वा पश्चादश्वतरीरथादि क्षत्रियचिह्नद्वारा तमशूद्रं ज्ञात्वा संवर्गविद्यामुपदिदेश । यद्यप्यत्र जानश्रुतेः शोकोत्पत्तिर्न शब्दतः प्रतीयते तथापि बह्वन्नदानादिभिः प्राप्तयशसस्तस्यान्यदायाधिकयशःश्रवणे आधुनिकानामिव शोको जात इत्यनुमीयते । अतः शुगस्य तदनादरश्रवणात्तदाद्रवणात्सूच्यते इति व्यास सूत्रेऽपि शोकहेतुना शूद्रशब्दः प्रयुक्त इत्युक्तम् । "राजन्यचिह्नेनेति (३४१)=अश्वतरीरथादयः क्षत्रियचिह्नानि वर्तन्ते । तदुक्तम्" एतानि वै क्षत्रे शिल्पानि हस्तिनिष्कोऽश्वतरीरथोऽश्वरथः (जै. ब्रा. १.२६४) इति । "पादावनेजनादीति (३४७) तदुक्तम् "तस्माच्छूद्रउत बहुपशुरयज्ञियः तस्मात्पादावनेज्यं नातिवर्तत" (ता. ब्रा. ६.१.६) इत्यादिना पशुतुल्यस्य पादसेवामात्रगतिकस्य शूद्रत्वमुक्तम् । बहुपशु शब्दस्य पशुतुल्यत्वमर्थो रामानुजभाष्य (ब्र. सू. १.३.३६) उक्तः । शूद्रस्य पशुतुल्यत्वेन हेतुना वेदग्रहणधारणपटुत्वाभावस्तेन च यज्ञेऽनवक्लृप्तत्वमयाज्ञत्वं पादावनेजनगतिकत्वं च श्रुत्या दर्शितम् । तादृशपटुत्वं हि पूर्वजन्मसंस्कारादेव कस्यचित् भवति नत्वभ्यासमात्रेण नापि विशिष्टवंशजन्ममात्रेण । सर्वो हि सर्वत्र सामर्थ्यमिच्छति तदर्थं यतते च तथापि कश्चिदेव तल्लभते न सर्वे । दर्शितं चैतत् पूर्वमेव (श्लो० १७-२०) एतेन ब्रह्मसूत्रशाङ्करभाष्योक्तं समाहितं भवति । तत्र ह्येवमुक्तम् "सामर्थ्यमपि न लौकिकं केवलमधिकारकारणं भवति । शास्त्रीयेऽर्थे शास्त्रीयस्य सामर्थ्यस्यापेक्षितत्वात् शास्त्रीयस्य च सामर्थ्यस्याध्ययन-निराकरेण निराकृतत्वादि"ति । सामर्थ्यस्य लोकसिद्धत्वाभावात् । तत्तद्भाषापरिज्ञानं हि तत्र तत्र निवसतो जनस्य लोकतः सिद्धं भवति । तत्रैव च पाण्डित्यं पूर्ववासनया भवति । प्रतिव्यक्ति च भिन्नस्वभावकर्मकुशलत्वादिकं पूर्वजन्मसंस्कारेणैव ।



शूद्रस्य ब्राह्मणस्य वा वेदशास्त्रग्रहणधारणसामर्थ्यं तदभावो वा कथमपि लोकसिद्धो न भवति । किन्तु ईश्वरानुगृहीतपूर्वजन्मसंस्कारेण-। ईश्वरो हि पूर्वजन्मनि तत्तत्प्राणिकृतसुकृतदुष्कृतानुसारेण जन्मान्तरे तत्समानजातीयोत्कट-संस्कारमनुगृह्णाति । ईश्वरीयं शास्त्रमपि, तत्तत्संस्कारानुसारेणैव तत्तत्कर्मस्वधिकारं तस्य ब्रूते । यच्च शास्त्रं तद्विपरीतं ब्रूते न तदीश्वरनिर्मितं किन्तु निरीश्वरमनुष्यनिर्मितं, कोहि नाम बुद्धिमान् तच्छास्त्रं श्रद्दधाति यदीश्वरदत्तं नेत्रद्वयं सदपि सर्वदा पिधातुं विदधाति ।

जातिवादे तु शूद्रोऽपि धनी दानपरो भवेत् । जिज्ञासुश्चेति तत्रोक्तशूद्र शब्दो न निन्दने ॥३५२॥
प्रयुक्तः स्यात्किन्तु सत्यशूद्रे तस्मादधिक्रिया । अर्थवादबलाद्ब्रह्मज्ञाने देवाधिकारवत्॥३५३॥
यथाऽद्यतनराजा हि शूद्रास्तव मते भुवि । कलावाद्यन्तयोर्विप्रशूद्रयाः स्थितिमिच्छतः ॥३५४॥
ते हि कोटीश्वरा दानपरा जिज्ञासवोऽपि च । एवं जानश्रुतिः शूद्रो जातिवादे भवेदपि ॥३५५॥
नास्मत्पक्षे तदापत्तिरत्र शूद्रो जडात्मकः । अतो निन्दार्थकः शूद्रशब्दः प्रोक्तोऽतदात्मनि ।३५६
यथा शिष्यं बुद्धिमन्तमपि मूर्खं वदेद्गुरुः । अल्पेनैव प्रमादेन तथा रैक्वोऽब्रवीन्नृपम् ॥३५७॥
तदीयमपशूद्राधिकरणं चापि सङ्गतिम् । लभेतास्मन्मतेऽन्येषां मते नैवेति वक्ष्यते ॥३५८॥

जातिवाद में शूद्र भी धनी दानशील और परतत्वजिज्ञासु हो सकता है । अतः वहाँ का शूद्र शब्द निन्दार्थक नहीं होगा, किन्तु यथार्थ शूद्रबोधक ही होगा । और देवताधिकरण न्याय से शूद्र का भी ब्रह्मविद्या में अधिकार मानना पड़ेगा । जैसे कलियुग में ब्राह्मण और शूद्र दो वर्णों को माननेवाले तुम्हारे मत में वर्तमान सभी राजा शूद्र ही हैं, तो भी वे कोटीश्वर दानशील और तत्वजिज्ञासु भी हैं, वैसा ही पूर्वकाल में जानश्रुति भी जातिवाद के अनुसार शूद्र भी हो सकता है। हमारे मत में यह आपत्ति नहीं, क्योंकि इसमें जडबुद्धि ही शूद्र माना जाता है। अतः जानश्रुति के लिये प्रयुक्त शूद्र शब्द निन्दार्थक होगा । जैसे बुद्धिमान शिष्य को भी गुरु थोड़ी गलती से मूर्ख कह देता है, वैसा रैक्व भी जानश्रुति को थोड़े शोक के निमित्त से शूद्र कह दिया था । वहाँ का अपशूद्राधिकरण भी हमारे मत में ही सङ्गत होगा न कि जातिवाद में यह बात हम आगे कहेंगे ।

जानश्रुतौ क्षत्रियत्वमप्यत्राश्वतरीवता । चैत्राख्येन रथेनैव नित्यान्नदानादिना ॥३५९॥
विनिश्चितं हि रैक्वेण न तु क्षत्रियजन्मतः । न वा चैत्र-रथाख्यान्यराजन्यपतियोगतः ॥३६०॥

अश्वतरी रथ से और नित्यान्नदानादि से जानश्रुति को रैक्व क्षत्रिय समझा था न कि क्षत्रिय वंश में जन्म लेने से और न तो चैत्ररथनामक राजा के सम्बन्ध से ।

अश्वतरीवतेति=सहस्रं गा अश्वतरीरथं च गुरुदक्षिणात्वेनादाय जानश्रुतिः

रैक्वसमीपं गतवान् । तदुक्तम् "जानश्रुतिः पौत्रायणः सहस्रं गवां निष्कमश्वतरीरथं दुहितरं तदादाय प्रतिचक्रमे" ( छा० उ० ४.२.३ ) इति । अश्वतरीरथस्य चैत्ररथ इति नाम ब्रह्मपुराणादौ प्रसिद्धम् ।" तदुक्तम् "रथस्त्वश्वतरीयुक्तश्चित्र इत्यभिधीयते" इति । उदाहृतं चैतद्वाक्यं माध्वभाष्यापशूद्राधिकरणे । चित्ररथ एव चैत्ररथः, तेन चैत्ररथेन, लिङ्गात्सम्बन्धादस्य क्षत्रियत्वमिति तत्रैवोक्तम् । अश्वतरीरथयोगश्च क्षत्रियाणां नियत इत्यपि ज्ञायते "एतानि वै क्षत्रे शिल्पानि हस्तिनिष्कोऽश्वतरीरथ इत्यादिना । तदेतत्क्षत्रियलिङ्गं रैक्वः प्रत्यक्षतो दृष्टवान् । जानश्रुतेः बह्वन्नदानकर्तृत्वं च जनश्रुत्या हंसवाक्येन च श्रुतवान् । एतैर्लिङ्गैर्जानश्रुतिं रैक्वः क्षत्रियमजानात्, न तु क्षत्रियवंशजत्वेन, नापि चैत्ररथाख्यक्षत्रियान्तरसम्बन्धात् ।

यत्तु ताण्डयश्रुतिस्थेन राज्ञा चैत्ररथेन हि । संयोगादस्य क्षत्रत्वमित्येतन्नोपपद्यते ॥३६१॥
सुखावबोधनार्थं हि वेदे गाथा प्रदर्शिता । सा चेच्छाखान्तरस्थेन सम्बद्धा स्यान्न तादृशी॥३६२॥
अभिप्रतारिणश्चैत्ररथत्वमपि दुर्लभम् । कापेयेनैकपङ्क्तिस्थो ब्राह्मणोऽपि भवेद्धि सः ॥३६३॥
एकस्यामपि संवर्गविद्यायां योगमात्रतः । अभिप्रतारिणो जानश्रुतेश्च नैकवर्णता ॥३६४॥
वर्णत्रस्य वेदेषु सर्वेष्वप्यधिकारिता । श्रुताऽप्यङ्गीकृता सर्वैः सर्वस्यैकान्वयोऽपि किम्॥३६५॥
प्रायेण हि समानानामेकविद्याप्रवेशने । विशेषतोऽन्यवर्णस्य प्रवेशः संभवेदपि ॥३६६॥
समानानामेकविद्याप्रवेशोऽपि न शास्त्रतः । विधीयते कुतश्चैष निर्णयः स्वेच्छया कृतः॥३६७॥
न ह्यन्धनिश्चितेभादिस्वरूपमिव वैदिकः । वर्णो युक्तो विनिश्चेतुं परलोकफलप्रदः ॥३६८॥
एतैरस्वरसैरन्ते भाष्यकारोऽन्यथाऽब्रवीत् । यत्क्षतृप्रेषणाद्यन्यभूतियोगान्न शूद्रता ॥३६९॥
जानश्रुतेरितीदानीं सोऽपि मार्गे समागतः । सा चोक्तिरिष्यतेऽस्माभिः श्रौतवर्णानुरूपतः३७०॥

कुछ लोगों का कहना है कि ताण्डच ब्राह्मण प्रसिद्ध चैत्ररथ नामक क्षत्रिय से जानश्रुति का एक विद्या में सम्बन्ध मालूम पड़ता है। अतः जानश्रुति भी क्षत्रिय ही होगा। किन्तु यह ठीक नहीं क्योंकि आसानी से विषय-बोध करवाने के वास्ते वेदों में गाथायें सुनी जाती हैं। ऐसा बोध तभी होगा, जब वे गाथायें उसी प्रकरण में पठित व्यक्तियों से सम्बद्ध हो न कि दूसरी शाखामें पठित व्यक्तियों के साथ ऐसा होनेपर वे गाथायें सुखावबोधक नहीं होंगी किन्तु दुःखावबोधक हो होंगी। और छान्दोग्य में अभिप्रतारी का नाम आया है। उसका कापेयगोत्र ब्राह्मण के साथ एक पंक्ति में सम्बन्ध भी मालूम पड़ता है। इससे अभिप्रतारी ब्राह्मण भी हो सकता है क्षत्रिय, एक संवर्गविद्या में सम्बन्ध रहने मात्र से अभिप्रतारी और जानश्रुति एक वर्ण के नहीं हो सकते। सभी वेदों में तीनों वर्णों का अधिकार माना गया है न कि क्षत्रियों के लिये खास एक विद्या में। सब वेदों को सब त्रैवर्णिक



पढ़ सकते ही हैं। क्या इससे सभी को एक वर्ण सिद्ध होगा? ऐसी कोई श्रुति प्रमाण भी नहीं है जिससे एक वंशवाले एक ही विद्या में प्रविष्ट हों। अतः परलोक साधक इन चार वर्णों का स्वरूपनिर्णय ऐसा न किया जाय, जैसा चार अन्धों ने हाथी का स्वरूपनिर्णय किया था। इस प्रकार के अनौचित्यों के कारण भाष्यकार ने अन्त में दूसरे प्रकार से कहा था कि क्षत्तृप्रेषणा-द्यैश्वर्य सम्बन्ध से जानश्रुति शूद्र नहीं है। इस प्रकार कहकर ये भी अब मार्ग में आ गये हैं।

यत्तु ताण्डचश्रुतीत्यादि, जानश्रुतेः क्षत्रियत्वं केचिदेवं साधयन्ति "इतश्च न जातिशूद्रो जानश्रुतिः। यत्कारणं प्रकरणनिरूपणेन क्षत्रियत्वमस्योत्तरत्र चैत्ररथेनाभिप्रतारिणा क्षत्रियेण समभिव्याहारल्लिङ्गादगम्यते। उत्तरत्र हि संवर्गविद्यावाक्यशेषे चैत्ररथिरभिप्रतारी क्षत्रियः सङ्कीर्त्यते, अथ ह शौनकं च कापेयमभिप्रतारिणं च काक्षसेनिं परिविष्यमाणौ ब्रह्मचारी बिभिक्षे ( छा० ४.३.४ ) इति। चैत्ररथित्वं चाभिप्रतारिणः कापेययोगादवगन्तव्यम्। कापेययोगो हि चित्ररथस्यावगतः, एतेन वै चित्ररथं कापेया अयाजयन्" ( ताण्डच ब्रा० २०.१२.५ ) इति। समानान्वयानां च प्रायेण समानान्वया याजका भवन्ति। "तस्माच्चैत्ररथिर्नामैकः क्षत्रपतिरजायत" इति च क्षत्रपतित्वावगमात्क्षत्रियत्वमस्यावगन्तव्यम्। तेन क्षत्रियेणाभिप्रतारिणा सह समानायां विद्यायां सङ्कीर्तनं जानश्रुतेरपि क्षत्रियत्वं सूचयति। समानानामेव हि प्रायेण समभिव्याहारा भवन्ति" इति ब्रह्मसूत्रशाङ्करभाष्यम् ( १.३.३५ ) तदुत्तरमुच्यते, "एतन्नोपपद्यते" इत्यादिना। स्पष्टमन्यत्। संवर्गविद्या क्षत्रियाणामेवेति नियमो नास्ति। तथाविधनियमाङ्गीकारे च कापेये व्यभिचारः। कापेयोऽभिप्रतारी चैकपङ्क्तौ भोजनार्थमुपविष्टाविति खलु संवर्गविद्याप्रकरणे श्रूयते। कापेयश्च ब्राह्मणः, तद्विद्यासम्बन्धश्च वर्तते। प्रदर्शितास्वारस्यादेव भाष्यकारेण यथार्थपक्षोऽन्तेशरणं गतः। "क्षतृप्रेषणाद्यैश्वर्ययोगाच्च जानश्रुतेः क्षत्रियत्वावगति" रिति। अस्मदभिप्रायोऽप्ययमेव। स च दर्शित एव। एतत्पक्षे च भाष्यकारेणापि "क्षत्रियत्वावगतेश्चोत्तरत्र चैत्ररथेन लिङ्गात् (ब्र० सू० १.३.३५ ) इति सूत्रे, उत्तरत्र चैत्ररथेन लिङ्गादिति भागस्याश्वतरीरथेन सम्बन्धादित्येवार्थो वक्तव्यो भवति।

यज्जातीयं भवेद्रेतस्तज्जातीयोऽपि तच्छिशुः। पुरुषस्य पुमान् गोश्च गौरश्वादेस्तथेति च।३७१
जैमिन्युपनिषन्नाम्नि ब्राह्मणे स्पष्टमीरितम्। तेन मानवतैवैका जातित्वेनावगम्यते ॥३७२॥
यद्यवान्तरधर्माणां जातित्वं वेदसम्मतम्। तदा स्यादपि निर्दिष्टं "ब्राह्मणो ब्राह्मणादिति ॥३७३
क्षत्रियः क्षत्रियाद्वैश्याद्वैश्यः शूद्रोऽपि शूद्रतः"। यतो नोक्तं तथा तस्माद्वर्णो जातिर्भवेन्न हि।३७४

वीर्य जिस जाति का हो उसी जाति का बच्चा पैदा होगा वह वीर्य मनुष्य का हो तो मनुष्य ही पैदा होगा। गो का हो तो गौ और बकरादि

का हो तो बकरादि पैदा होगा। इससे स्पष्ट मालूम पड़ता है कि मनुष्य सब एक ही जाति के हैं। यदि ब्राह्मणत्वादि वर्ण भी जाति हो तब ब्राह्मण का वीर्य हो तो ब्राह्मण पैदा होगा ऐसा भी कहा हुआ होता किन्तु उसमें ऐसा नहीं कहा गया। अतः वर्ण जाति नहीं है।

यज्जातीयमिति "यादृशस्योह वै रेतो भवति तादृशं संभवति। यदि वै पुरुषस्य पुरुष एव यदि गाः गौरेव। यद्यश्वस्याश्व एव, यदि मृगस्य मृग एव। यस्यैव रेतो भवति तदेव संभवति (जै० ब्रा० अनु० ६. खं० ७) इति। अत्र पुरुष शब्देन मनुष्यजातिः विवक्षिता। मनुष्यत्वजात्यवान्तरधर्माणां ब्राह्मणत्वक्षत्रियत्वादीनां जातित्वं यद्यागमेनेष्टं स्यात्तदा यदि ब्राह्मणस्य ब्राह्मण एव यदि क्षत्रियस्य क्षत्रिय एवेत्यादिकमप्यवक्ष्यत्। यस्मात्तथा नोक्त तस्माद्वर्णो न जातिरिति ज्ञायते।

तत्रैवमपि सम्प्रोक्तं यावन्न यजेन्नरः। तावन्नासौ भवेज्जातः किन्त्वण्डावस्थितिर्मता ॥३७५॥
द्विजत्वमपि चैतेन न जातिरिति सूच्यते। द्विजत्वं व्यापको धर्मः संस्कारात्तद्धि विष्यति ॥३७६॥
व्याप्यश्च ब्राह्मणत्वादिर्व्यापकोत्तरकालिकः। पश्चाद्व्यापकसिद्धिश्चेद्व्याप्यसिद्धिः कथं पुरा ७७

उसी ब्राह्मण में यह भी कहा गया है कि आदमी जब तक याग नहीं करेगा तब तक वह पैदा हुआ ही नहीं और जो पैदा दीखता है तो वह अण्ड का समान है। इससे द्विजत्व भी जाति सिद्ध न होता है।

अजातो वै तावत्पुरुषो यावन्न यजते, स यज्ञेनैव जायते, स यथाऽण्डं प्रथमनिर्भिण्णमेवमेव" इति। अत्र यज्ञेनेत्यस्य यज्ञानुष्ठानयोग्योपनयनपूर्वकवेदाध्ययनेनेत्यर्थो वक्तव्यः।

मुखबाहूरुपादेषु वीर्यवत्वं प्रतीयते। चतुर्णामपि वर्णानां श्रुतौ शतपथे क्रमात् ॥ ३७८ ॥
जैमिनि ब्राह्मणे ताण्ड्ये श्रूयते तैत्तिरीयके। मुख्यत्वं मुखवीर्यत्वं ब्राह्मणस्यैव नृष्विति ॥३७९॥
क्षत्रिये बाहुवीर्यत्वं वैश्ये भूयस्त्वमोर्यते। प्रजनिष्णुत्वमाद्यत्वं तथाप्यक्षीयमाणता ॥ ३८० ॥
शूद्रे पादोपजीवित्वं यज्ञे चानवक्लृप्तता। पशुतुल्यत्वमप्यस्य स्वाभाविकं प्रदर्शितम् ॥३८१॥
एतद्ब्राह्मणवाक्यैस्तु स्वरूपं ब्राह्मणस्य च। क्षत्रियस्यापि वैश्यस्य शूद्रस्य ज्ञायते स्वकम् ॥३८२

शतपथ ब्राह्मण से यह विदित होता है कि मुखवीर्यवाले ब्राह्मण, बाहुवीर्यवाले क्षत्रिय, ऊरुवीर्यवाले वैश्य और पादवीर्यवाले शूद्र होते हैं। जैमिनि, ताण्ड्य और तैत्तिरीय ब्राह्मण भी कहते हैं कि मनुष्यों में ब्राह्मण मुख्य और मुखवीर्य होता है, क्षत्रिय बाहुवीर्य और वैश्य धनधान्यादि के उत्पादन और संग्रह करनेवाला होता है। शूद्र तो दूसरों के पादोपजीवी और पशुतुल्य होता हैं। अतएव वह यज्ञ में समर्थ नहीं होता है। इन वाक्यों से ब्रह्मणत्वादि चार वर्णों के निज स्वरूप बताये जाते हैं।



'शतपथे क्रमादिति, 'तद्वै न महत्कुर्यात्, नेन्महदघं करवाणीति। यावानुद्बाहुः पुरुषः तावान् क्षत्रियस्य कुर्यात् (श्मशानगर्तइति शेषः) मुखदघ्नं ब्राह्मणस्य, उपस्थदघ्नं स्त्रियः ऊरुदघ्नं वैश्यस्य, अष्ठीवद्घ्नं (जानुदघ्नं), शूद्रस्य, एवं वीर्या ह्येते (१३.४.६.११) इत्युक्तम्। अग्निचितः पुरुषस्य मरणे श्मशानगर्तो वर्ण-भेदेन दर्शित-प्रमाणः कर्तव्यः। कुत एवमिति जिज्ञासायां श्रुतिः स्वयमेव तत्र कारण ब्रूते। एवं वीर्या ह्येते इति। ब्राह्मणादयो वर्णा मुखादिवीर्याः सन्ति। अतस्तत्प्रमाणो गर्त इति। अत्र सायणभाष्येऽप्येवमुक्तम् "उद्बाहुमात्रादि-प्रकारं वीर्यं येषां ते एवं वीर्याः। यस्य यस्य यादृग्वीर्यं तस्य तस्य तादृगेव श्माशानं युक्तमित्यभिप्राय" इति। "बाह्वोरु वै राजन्यस्य वीर्यं बाहुभ्यां हि राजन्यो वीर्यं करोति"। जैमिनि ब्राह्मण इत्यादि, तस्माद्ब्राह्मणो गायत्रीछन्दा आग्नेयो देवतया तस्मादु मुखं प्रजानाम्। तस्माद्राजन्यस्त्रिष्टुप्छन्दा ऐन्द्रो देवतया, तस्माद्बाहुभ्यां वीर्यं करोति। तस्माद्वैश्यो जगतीछन्दा विश्वे देवो देवतया, तस्मात्स प्रजनिष्णुः। तस्माच्छूद्रोऽनुष्टुप्छन्दा वैश्यपतिर्देवः तस्मादु पादावनेज्येनैव जिजीविषति ( ज० १.६८ ) इत्युक्तम्। एवं "तस्माद्ब्राह्मणो मुखेन वीर्यं करोति तस्मादु ( राजन्यः ) बाहुवीर्यः। तस्माद्वैश्योऽद्यमानो न क्षीयते, तस्माद्ब्राह्मणस्य च राजन्यस्य चाद्योऽधरो हि सृष्टः। तस्माच्छूद्र उत बहुपशुरयज्ञियः तस्मात्पादावनेज्यं नातिवर्तते ( ताण्डय ब्रा० ६.१.१ ) इति। 'तस्मात्ते ( गायत्री ब्राह्मणादयः ) मुख्याः, तस्मात्ते ( त्रिष्टुब्राजन्यादयः ) वीर्यावन्तः, तस्मात्त आद्याः ( गोवैश्यादयः ) तस्माद्भूयांसाऽन्येभ्यः, तस्मात्तौ भूतसङ्क्रामिणावश्वश्च शुद्रश्च, तस्माच्छूद्रो यज्ञेऽनवक्लृप्तः तस्मात्पादावुपजीवतः ( तै० ७.१ ) इति चोक्तम् ॥ अत्र सर्वत्र चतुर्णां वर्णानां स्वरूप-लक्षणमुक्तं भवति।

जातिवादिमते बाहुवीर्यत्वं क्षत्रियेतरे। अविप्रे मुखवीर्यत्वमपि प्रायः प्रदृश्यते ॥३८३॥
रावणे जामदग्ने च द्रोणाचार्ये तदात्मजे। तादृशेऽद्यतने सैन्यप्रविष्टे विप्रवंशजे ॥३८४॥
सङ्ग्रामकामनायुक्ते देहदार्ढ्यं बलान्विते। बाहुवीर्यत्वमासीत्तच्छ्रौत क्षत्रियलक्षणम् ॥३८५॥
जनके विदुरे भीष्मे तादृशेऽद्यतनेऽपि च। मुखवीर्यत्वमासीत्तच्छ्रौतब्राह्मण लक्षणम् ॥३८६॥
मुष्टिबाणादि-सङ्ग्रामकर्तृत्वं बाहुवीर्यता ॥३८७॥
तत्त्वोपदेशकर्तृत्वमेवात्रमुखवीर्यता। भीष्मादावुभयं चासीदिति चेदस्तु तद्द्वयम्। ब्राह्मण्यं क्षत्रियत्वं च कालभेदेन का क्षतिः? ३८८॥

जातिवादी के मत में क्षत्रियेतर में भी बाहुवीर्यत्व और ब्राह्मभिन्न में भी मुखवीर्यत्व प्रायः दीखता है। रावण परशुराम, द्रोणाचार्य और अश्वत्थाम और उसी प्रकार के वर्तमान विप्रवंशज में बाहुवीर्यत्व रहा है और जनक विदुर और भीष्म और उसी प्रकार के अब्राह्मण कुलोत्पन्न उपदेशकों में मुखवीर्यत्व रहा है। अतः वे ही श्रुतिसम्मत क्षत्रिय ब्राह्मण

यथाक्रम होते हैं। तत्त्वज्ञान प्राप्त कर शान्ति से उसे दूसरों को उपदेश करना ही मुखवीर्यत्व है और मुष्टियुद्ध या बाणयुद्ध करना बाहुवीर्यत्व है। भीष्मादि में मुखवीर्यत्व और बाहुवीर्यत्व भी रहे थे तो उनमें कालभेद से ब्राह्मणत्व और क्षत्रियत्व भी रहे थे ऐसा मानने पर भी कोई हानि नहीं रहेगी।

'रावणे' इत्यादि—वस्तुतो ब्राह्मणस्यापि शस्त्रधारणे क्षत्रियत्वमायाति किमुत जन्ममात्राश्रितस्य मिथ्याब्राह्मणस्य। तदुक्तं महाभारते परशुरामं प्रति भीष्मेण "ये ते वेदाः शरीरस्था ब्राह्मण्यं यच्च ते महत्। तपश्च ते महत्तप्तं न तेभ्यः प्रहराम्यहम्। प्रहरे क्षत्रधर्मस्य यं राम त्वं समाश्रितः। ब्राह्मणः क्षत्रियत्वं हि याति शस्त्रसमुद्यमात् ( उद्योग १७९.२४-५ ) इति। अत्र ब्राह्मण्यं यच्च ते महदित्यनेन परशुरामे तपोमहत्त्वादिलब्धमेव ब्राह्मण्यमासीदिति ज्ञायते। महत्वस्याल्पत्वस्य वा प्रयत्नलभ्य वस्तुन्येव सम्भवात्। तादृशब्राह्मण्यवत्यपि परशुरामे शस्त्राघातेन क्षत्रियत्वमायातीत्युक्तम्। एतेन परशुरामेऽपि कालभेदेन वर्णद्वयमासीदिति ज्ञायते। एतदपि कर्मणैव न तु जन्मत इत्यपि ज्ञातव्यम्। दिवोदासस्य वर्णद्वय-प्राप्तिः श्रुतिसम्मता इह प्रदर्शितैव प्राक्। द्वयोर्मध्ये एकं भूतपूर्वगत्याऽपरं वर्तमानत्वेन। इदमप्यत्र ज्ञातव्यं यन्मुखवीर्यत्वमात्रेण न ब्राह्मणत्वं किन्तु श्रौतकर्मापेक्षित ब्राह्मणत्वेन को ग्राह्य इति जिज्ञासायां यो मुखवीर्यः स तत्वेन ग्राह्य इति, यथा लोके भूमिकरादिनिरीक्षकत्वेन ( रिविन्यू इन्सफिक्टर ) तत्परीक्षायामुत्तीर्णो गृह्यते। तादृशनिरीक्षकत्वं च तत्कर्मकर्तृत्व-समये एवेष्यते न तु तत्परीक्षोत्तरणमात्रेण, तथा कर्मापेक्षित ब्राह्मणत्वेन मुखवीर्यत्ववान् गृह्यते, ब्राह्मण्यमपि तत्कर्मकर्तृत्वसमय एव न तु मुखवीर्यत्वमात्रेण। एव क्षत्रियत्वादिकमपि ग्राह्यम्। यथा वर्णास्तथाऽऽश्रमा अपि तत्तदुचितकर्मस्वेव। प्राप्तराज्यस्य शूद्रस्य क्षत्रियत्वं मेरुतन्त्रे प्रोक्तम्। शूद्रोऽपि राज्यं प्राप्य गायत्रीं सम्यगभ्यसेत्। स शूद्रः क्षत्रियो ज्ञेयः सङ्ग्रामे जायते जयः। तस्य वशे स्थिरं राज्यं मृतो विष्णुपदं व्रजेत् (२६ प्र० ९६१ श्लोक) इति। ननु "तस्माद्ब्राह्मणो मुखेन वीर्यं करोति, बाहुभ्यां राजन्य इत्यादीनां विधित्वमेवास्तु कुतो लक्षणत्वमिष्यते। शारीरकभाष्ये तेषां विधित्वमेवाङ्गीकृतम्। अत एवोक्तं तत्र "तस्माच्छूद्रो यज्ञेऽनवक्लृप्तः" इतिवत् शूद्रो विद्यायामनवक्लृप्त इति च निषेधाश्रवणादिति पूर्वपक्षमुक्त्वाऽग्रे यच्चेदं शूद्रो यज्ञेऽनवक्लृप्त इति तन्न्यायपूर्वकत्वाद्विद्यायामप्यनवक्लृप्तत्वं द्योतयति, न्यायस्य साधारणत्वात् ( ब्र० सू० भाष्ये १.३. ३४ ) इति अत्रोच्यते।

मुखबाह्वादिवीर्यत्वं पशुधान्यसमृद्धता। यज्ञे चानवक्लृप्तत्वं कृत्यसाध्यं हि देहिनाम् ॥३८९॥
तस्मान्न ब्राह्मणत्वादि वर्णोद्देश्येन शास्त्रतः। विधातुं शक्यतेऽतस्तच्चातुर्वर्ण्यस्य लक्षणम् ॥३९०
तद्यदि कृतिसाध्यं स्यात्तदा सर्वेऽपि मानवाः। मुखवीर्यादिमन्तः स्युर्जन्मजात्यभिमानिनः३९१॥



यथोपनयनोद्वाहसंस्काराः सर्वमानवैः। क्रियन्ते कृतिसाध्यत्वात्तथा स्यान्मुखवीर्यता ॥३९२॥
को नाम मुखवीर्यत्वं बाहुवीर्यत्वमेव वा। बहुधान्यादिमत्वं वा न वाञ्छति पुमानिह ॥३९३॥
कृति साध्यं जनैः कर्तुमकर्तुमन्यथाऽपि वा। शक्यते तदसाध्ये च तद्विकल्पोऽपि नेष्यते ॥३९४॥
तथाचात्रावक्लृप्तिर्हि शूद्रे कथं निषिध्यते। नावक्लृप्तो भवेच्छूद्रो यज्ञ इत्युच्यते कथम् ॥३९५॥

मुखवीर्यत्व, बाहुवीर्यत्व, बहुपशुधान्यसमृद्धता और यज्ञ में असमर्थ होना, ये सब कृति साध्य नहीं हैं। यदि वे कृति साध्य होते हों तब सब मनुष्य मुखवीर्यवाले या बाहुवीर्यवाले या धनधान्यादि समृद्धिवाले हुए होते। जैसा उपनयनादिसंस्कार कृतिसाध्य होने से लोग उचित समय पर कर लेते हैं वैसा मुखवीर्यादि को भी कर सकते थे। कृतिसाध्य कार्य को ही करना या नहीं करना या बिगाड़ना होता है न कि कृति के असाध्य को। ऐसी परिस्थिति में शूद्र में यज्ञावक्लृप्तिः=यज्ञसामर्थ्य कैसा निषिद्ध होगा।

"मुखबाह्वादिवीर्यत्वमिति—यस्य हि मुखवीर्यविषयकः संस्कारः प्राक्तनो वर्तते तस्यैवेह जन्मनि तदभ्यासवशादुद्बुद्धं भवति। अत एवोक्तं नीतिशास्त्रे "विद्या चतस्रोऽसाध्याः स्युः जन्मना सह संभवाः। गान्धर्वं च कवित्वं च शूरत्वं दानशीलता" इति दातृत्वं प्रियवक्तृत्वं धीरत्वमुचितज्ञता। अभ्यासेन न लभ्यन्ते चत्वारः सहजाः गुणाः" इति च। "कृतिसाध्यमिति, कृति साध्यमेव कर्म कुत्रचिद्विधीयते कुत्रचिच्च निषिध्यते न तदसाध्यम्। तथाचावक्लृप्तिः सामर्थ्यं तदपि पूर्वसंस्कार-लभ्यमेवेति न सा शूद्रस्य निषेद्धुं शक्यते। ननु प्रजापति-मुखबाह्वादिजन्यत्वेन हेतुनैव ब्राह्मणक्षत्रियादीनां मुखबाह्वादिषु वीर्यवत्त्वमुच्यते न तु प्राक्तनसंस्कारवशात् "तस्माद्ब्राह्मणो मुखेन वीर्यं करोति" मुखतो हि सृष्टः, तस्मादु बाहुवीर्यो ( राजन्यः ) बाहुभ्यां हि सृष्ट"। तस्मात् ( वैश्यः ) ब्राह्मणस्य च राजन्यस्य चाद्योऽधरो हि सृष्टः" तस्मात् ( शूद्रः ) पादावनेज्यं नातिवर्तते पत्तो हि सृष्टः" ( ताण्ड्य ब्रा० ६.१.१ ) इत्यादिना। अत्रोच्यते।

मुखबाह्वादिजन्यत्वहेतुना मुखवीर्यताम्। बाहुवीर्यत्वभोग्यत्वे यज्ञे चानवक्लृप्तताम् ॥३९६॥
पर्यायत्येषु वर्णेषु हिशब्दश्च यतस्ततः। हेतुवन्निगदन्यायात्तद्धेतुताऽविवक्षिता ॥३९७॥
मीमांसादर्शनस्याद्ये द्वितीयचरणे खलु। अग्नौ जुहोति शूर्पेण तेन ह्यन्नं करिष्यते ॥३९८॥
अन्नादावन्नहेतुत्वहेतुना होमहेतुता। हिशब्देन यतः शूर्पे प्रोक्ताऽतःसाऽविवक्षिता ॥३९९॥
मतान्नान्ननिमित्तत्वहेतुना होमहेतुता। मता चेत्तर्हि दर्व्यादेरन्नहेतोर्भवेद्धि सा ॥४००॥
तस्माच्छूर्पत्वमेवात्र होमहेतुत्वकारकम्। तच्च श्रुत्यैव निर्दिष्टं दर्व्यादौ नास्ति शूर्पता ॥४०१॥
एवमत्र हिशब्देन मुखबाह्वादिजन्यता। मुखबाह्वादिवीर्यत्वे प्रोक्ता हेतुतया यतः ॥४०२॥
ततोऽविवक्षिता साऽपि ब्राह्मणत्वादिरेव हि। मुखबाह्वादिवीर्यत्वे हेतु स्यादन्यथा पुनः॥४०३॥
जाताद्यादौ प्रसज्येत मुखबाह्वादिवीर्यता। मुखाद्युत्पत्तिरस्यापि विप्रादेरिव दर्शिता॥४०४॥

दर्शित ब्राह्मण वाक्यों में हिशब्द के द्वारा यह बताया जाता है कि ब्रह्म मुखजन्य होने के कारण ब्राह्मण मुखवीर्य है बाहुओं से उत्पन्न होने के कारण क्षत्रिय बाहुवीर्य है। ऊरुजन्य होने के कारण वैश्य पशुधान्यादि समृद्ध रहता है और पादजन्य होने के कारण शूद्र पशुतुल्य पादोपजीवी और यज्ञ में असमर्थ होता है। अतः तत्तदवयवजन्यत्वरूप हेतु, हेतुवन्निगदाधिकरण न्याय से विवक्षित नही किन्तु अर्थवाद है। मीमांसा के ( १ ) अध्यायं, ( २ ) पाद के हेतुवन्तिगदाधिकरण में निर्णय किया गया है कि "शूर्पेण जुहोति, तेन ह्यन्नं क्रियते" यहाँ शूर्प में हिशब्द के द्वारा, अन्नहेतुत्व से होमहेतुत्व जो बताया गया है वह अन्नहेतुत्व विवक्षित नहीं है। यहाँ वह यदि विवक्षित होगा तो अन्नहेतु दर्वी पिठरादि में भी होम हेतुत्व की आपत्ति आ जाती है। अतः शूर्पत्व ही होमहेतु है न कि अन्नहेतुत्व। शूर्प में होम-हेतुत्व श्रौत है। दर्वी पिठरादि में वह शूर्पत्व नहीं, अतः होम हेतुत्व भी नहीं। एवं प्रकृत में हिशब्द के द्वारा बताया गया मुखादिजन्यता भी ब्राह्मणादि में मुखादिवीर्यता का हेतु नहीं किन्तु ब्राह्मणत्वादि ही उसके हेतु हैं। यहाँ भी मुखादिजन्यत्व को हेतु मानने पर भेड़ बकरों में भी मुखबाह्वादिवीर्यत्व की आपत्ति आ जाती है। अतः उन ब्राह्मणवाक्यों में हिशब्दार्थ हेतुत्व विवक्षित नहीं है।

ननु मुखादिजन्यत्वे मुखवीर्यत्वादि-हेतुत्वाभावेऽपि "तस्माद्ब्राह्मणो मुखेन वीर्यं करोति तस्माद्बाहुभ्यां ( राजन्यः ) वीर्यं करोति इत्यादौ तच्छब्दस्य तत्पूर्ववाक्योक्त-मुखादिजन्यत्वपरामर्शकत्वात्स्वरूपतो मुखादिजन्यत्वमस्त्विति चेदुच्यते।

सोमजो ब्राह्मणस्तस्मान्न सुरां क्षत्रजन्मदाम्। पिबेदित्यत्र ब्राह्मण्यमेव सुरानिषेधकम् ॥४०५॥
न तु सोमसमुत्पत्तिरन्यथा ब्रह्मणो मुखात्। त्वदुक्ता हि तदुत्पत्तिर्न सिद्धयेदपि साम्प्रतम् ॥४०६
यथा सूर्यं समुद्यन्तं समारोहति चानलः। तस्माद्धूमो दिवेक्ष्येत नार्चिरित्यत्र भास्करे॥४०७॥
नाचष्टेऽग्नेः समारोहं तच्छब्दोऽत्र तथैवहि। तच्छब्दो मुखबाह्वादेर्नाचिष्टे वर्णसंभवम्॥४०८॥

सोम से ब्राह्मण पैदा हुआ था। अतः क्षत्रिय जन्म कारण सुरा (मद्य) को वह न पीवे। इसमें भी सुरापान निषेध में ब्राह्मणत्व ही निमित्त है न कि तच्छब्दोक्त सोमजन्यत्व। सोमजन्यत्व को निमित्त मानने पर तुम्हारा मुखजन्यत्व भी ब्राह्मण में सिद्ध नहीं होगा। प्रातःकालीनासंसृष्ट-होमप्रकरण में बताया गया है कि सूर्योदय होते ही अग्नि सूर्य में मिल जाता है। अतः (तस्मात्) दिन में धूम ही दीखता है न आग। जैसा यहाँ का तच्छब्द सूर्य में अग्नि का लय नहीं बताता है वैसा ही तस्माद्ब्राह्मण इत्यादिवाक्यों में तच्छब्द भी पूर्वोक्त मुखादिजन्यत्व को नहीं बताता है।



सोमज इत्यादि "यद्वैयं सोमोवै सः ततो ब्राह्मणमसृजत। तस्माद्ब्राह्मणः सर्व एव ब्रह्माभिधीरः यन्माल्यं सुरा वै सा ततो राजन्यमसृजत तस्माज्ज्यायांश्च कनीयांश्च स्नुषा च श्वशुरश्च सुरां पीत्वा विलालपत आसते, माल्यं हि तत्। पाप्मा वै माल्यम्। तस्माद्ब्राह्मणः सुरां न पिबेत्" ( मै० सं० २.४.२ ) अत्र ब्राह्मणत्वमेव ब्रह्माभिधारणे सुरापान-निषेधे च प्रयोजकम्। न तु सोमजन्यत्वम्। सोमजन्यत्वस्य तत्प्रयोजकत्वे त्वदुक्तं ब्रह्ममुखादिजन्यत्वमपि ब्राह्मणादिषु न सिध्येत्। अपि च सर्वेषां ब्राह्मणानां ब्रह्माभिधीरत्वं क्षत्रियाणां सुरापान-विलपनं चोपाधिपक्षे एव सङ्गच्छते न तु जन्मजाति-पक्षे। जातिवादे मूर्खाणां ब्राह्मणत्वसत्वेऽपि ब्रह्माभिधीरत्वासंभवात्। ब्राह्मणो न सुरां पिबेदित्यत्र ब्राह्मणशब्दस्य त्रैवर्णिकपरत्वमिष्यते कुमारिल भट्टेन। अत एवोक्तं "सुरा वै मलमन्नानां पाप्मा च मलमुच्यते। तस्माद्ब्राह्मणराजन्यौ वैश्यश्च न सुरां पिबेत्" ( तन्त्र वा० १.३.४ ) इति। "यथा सूर्ये इति, 'उद्यन्तं वावादित्यमग्निरनुसमारोहति तस्माद्धूम एव दिवा ददृशे नार्चिः ( तै० ब्रा० २.१.२ ) इत्यादावपि तच्छब्दः पूर्ववाक्योक्तं सूर्येऽग्निप्रवेशं यथा न परामृशति तथा तस्माद्ब्राह्मणो मुखेन वीर्यं करोती-त्यादावपि तच्छब्दः पूर्ववाक्योक्त मुखादिजन्यत्वं न परामृशतीति ज्ञातव्यम्।

दृश्येन मुखवीर्यादिकार्येणादृश्यकारणम्। ब्राह्मणत्वादियोग्यत्वमनुमातुं च शक्यते ॥४०९॥
न चैतद्वैपरीत्येन वक्तुं शक्यमिहेतरैः। ब्राह्मणत्वादिना ज्ञेयो मुखवीर्यादिरित्यपि ॥४१०॥
यो ह्यप्रत्यक्षवन्ह्यादेर्धूमं प्रत्यक्षगोचरम्। अनुमातुं यतेतासौ तथा वक्तुं हि शक्नुयात् ॥४११॥
प्रत्यक्षादि प्रमाणेन वर्णाः शक्या न वेदितुम्। इति प्रदर्शितं पूर्वमतो युक्तं न तद्वचः ॥४१२॥

मुखवीर्यत्वादि प्रत्यक्ष होते हैं। अतः इस प्रत्यक्ष हेतु से अप्रत्यक्ष भावि कर्मापेक्षितब्राह्मणत्वादि योग्यता अनुमेय होती है। यहाँ ऐसा कहना उचित नहीं होगा कि जन्मसिद्ध ब्राह्मणत्वादि से ही मुखवीर्यत्वादि अनुमेय होते हैं। जो अप्रत्यक्ष वन्हि से प्रत्यक्ष धूम का अनुमान करेगा वही उस प्रकार कह सकेगा, दूसरा नहीं। वर्ण प्रत्यक्षादि प्रमाणों से विदिति नहीं होते हैं यह बात हम पहले ही कह चुके हैं। अतः उनका ऐसा कहना उचित नहीं है।

नन्वस्त्वहेतुर्मुखजन्यतादिकं वक्त्रादिवीर्यत्वगुणान् प्रतीह भोः।
स्वरूपतः किन्तु मुखादिजन्यता स्यादेव वर्णेष्विति चक्ष्महे वयम् ॥४१३॥

यथा शूर्पेऽन्नहेतुत्वं स्वरूपेणेह विद्यते। होमाहेतुरपि त्वेवं मुखाद्युत्पत्तिरस्त्विति ॥४१४॥
अपौरुषेयवेदस्थभागानां हि जनिर्यथा। श्रूयमाणाऽपि मिथ्यैव तथा तन्मध्यविश्रुता ॥४१५॥
ब्राह्मणादिचतुर्वर्णसमुत्पत्तिश्च वस्तुतः। नासीद्ब्रह्ममुखादिभ्यः सृष्ट्यादाविति निश्चितम् ४१६
को हि शिष्टस्त्रिवृत्स्तोमगायत्रीच्छन्दसोरपि। साम्नो रथन्तरस्याग्नेः प्रजापतिमुखाज्जनिम् ४१७
तथा तद्बाहुतः पञ्चदशस्तोमेन्द्रयोरिह। त्रिष्टुप्छन्दोबृहत्साम्नोरङ्गीकुर्यात्समुद्भवम् ॥४१८॥

एवं सप्तदशस्तोमजगतीच्छन्दसोर्जनिम् । तदूरुभ्यां च वैरूपसाम्नः कः स्वीकरिष्यति ॥४१९॥
तत्पादाभ्यामेकविंशस्तोमस्यानुष्टुभोऽपि च । वैराजस्य जनिं साम्नो नैव मन्दोऽपि विश्वसेत् ४२०
अतोऽथर्वणवेदस्य भूमिकायां हि सायणः । परस्परविरुद्धत्वाद्वेदोत्पत्तिर्न वस्तुतः ॥४२१॥
प्रजापतिवपोत्खेदवाक्यस्येवार्थवादता । इत्युक्तवानिहोत्पत्तिं कथं ब्रूयादसावपि ॥४२२॥
क्वचिद्रथन्तरादीनां त्रिवृदादेर्जनिः श्रुता । साऽपि केनेष्यते तस्माद्वेदोत्पत्तिरतत्परा ॥४२३॥
तथा ब्रह्ममुखाद्यङ्गाद्वसन्ताद्यृतुसंभवम् । कः प्रोक्तमपि तत्वज्ञो विश्वसेत्पामरं विना ॥४२४॥

यहाँ मुखादि से उत्पत्ति माननेवाले के तरफसे यह शङ्का की जाती है कि मुखवीर्यादि में मुखादिजन्यता हेतु न हो तो भी स्वरूपत वह मुखजन्यता, शूर्पादि में अन्नहेतुत्व की तरह, ब्राह्मणादि में रह सकती हैं । उसका उत्तर यह है कि अपौरुषेय वेदभागों का जन्म, जैसा विवक्षित नहीं है वैसा ही उसके बीच में पठित वर्णोत्पत्ति भी विवक्षित नहीं है । कौन ऐसा शिष्ट होगा जो त्रिवृत्स्तोमगायत्रीरथन्तरसामों का जन्म ब्रह्म मुख से, पञ्चदशस्तोम-त्रिष्टुप्छन्दबृहत् सामों का बाहुओं से, सप्तदशस्तोमजगतीच्छन्द वैराजसामों का जन्म उनके पैरों से मानता हो । अतएव सायश ने अथर्ववेदभाष्य भूमिका में कहा कि परस्परविरुद्ध होने से वेदों को उत्पत्ति, प्रजापत्ति वपोत्खेद को तरह सत्य नहीं है । वहाँ वैसा कहकर यहाँ वह भी कैसे वेदोत्पत्ति मान लेगा । और ताण्ड्य ब्राह्मग में वसन्त ऋतु का जन्म ब्रह्म मुख से ग्रीष्म का बाहुओं से और वर्षा ऋतु का जन्म ऊरुओं से बताया गया था । उसको भी विवेको पुरुष मानेगा नहीं ।

"को हि शिष्ट इति । आपाततो मुखादिभ्यः सृष्टिराम्नाता वेदे । "स शीर्षत एव मुखतस्त्रिवृतं स्तोममसृजत गायत्रीछन्दा रथन्तरं सामाग्नि देवतां ब्राह्मणं मनुष्यमजं पशुं तस्माद्ब्राह्मणो गायत्रीछन्दा आग्नेयो देवतया, तस्मादु मुखं प्रजानां मुखाद्ध्येनमसृजत । सोऽकामयत प्रैव जायेयेति । स बाहुभ्यामेवोरसः पञ्चदशं स्तोममसृजत त्रिष्टुभं छन्दो बृहत्सामेन्द्रं देवतां राजन्यं मनुष्यमश्वं पशुम् । तस्माद्राजन्यः त्रिष्टुप्छन्दा ऐन्द्रो देवतया, तस्माद्बाहुभ्यां वीर्यं करोति बाहुभ्यां ह्येनमुरसो वीर्यादसृजत ॥ सोऽकामयत प्रैव जायेयेति । स उदरादेव मध्यतः सप्तदशं स्तोममसृजत जगतीं छन्दो वामदेव्यं साम विश्वान् देवान् देवतां वैश्यं मनुष्यं गां पशुं, तस्माद्वैश्यो जगतीछन्दा वैश्वदेवो देवतया, तस्मात्स प्रजनिष्णुः उदराद्ध्येनं प्रजननादसृजत ॥ सोऽकामयत प्रैव जायेयेति । स पद्भ्यामेव प्रतिष्ठायां एकविंश स्तोममसृजतानुष्टुप् छन्दो यज्ञायज्ञीयं साम न काञ्चन देवतां शूद्रं मनुष्यमविं पशुं तस्माच्छूद्रोऽनुष्टुप्छन्दा वेश्मपतिर्देवः, तस्मादु पादावनेज्येनैव जिजीविषति । पद्भ्यां ह्येनं प्रतिष्ठाया असृजत" ( जै० ब्रा० १.६८-६९ ) इति । तथा "सोऽकामयत यज्ञं सृजेयेति । स मुखत एव त्रिवृतमसृजत तं गायत्रीछन्दोऽन्वसृजताग्निर्देवता ब्राह्मणो मनुष्यो वसन्त ऋतुः तस्मात्त्रिवृत्स्तोमानां मुखं गायत्री छन्दसामग्निर्देवतानां ब्राह्मणो मनुष्याणां वसन्त ऋतूनाम् । तस्माद्ब्राह्मणो मुखेन वीर्यं करोति, मुखतो हि सृष्टः, मुखेन वीर्यं य एवं वेद ॥ स उरस्त एव बाहुभ्यां पञ्चदशमसृजत तं त्रिष्टुप्छन्दोऽन्वसृज्यतेन्द्रो देवता राजन्यो मनुष्यो ग्रीष्म ऋतुः तस्माद्राजन्यस्य पञ्चदशस्तोमः त्रिष्टुप्छन्द इन्द्रो देवता ग्रीष्म ऋतुः तस्माद्बाहुवीर्यो बाहुभ्यां हि सृष्टः । करोति बाहुभ्यां वीर्यं य एवं वेद । स मध्यत एव प्रजननात्सप्तदशमसृजत तं गायत्री छन्दोऽन्वसृज्यत विश्वे देवा देवता वैश्यो मनुष्यो वर्षा ऋतुः तस्माद्वैश्योऽद्यमानो न क्षीयते, प्रजननाद्धि सृष्टः, तस्मादु बहुपशुर्वैश्वदेवो हि जागतो वर्षा ह्यस्यर्तुः तस्माद्ब्राह्मणस्य च राजन्यस्य चाद्योऽधरो हि सृष्टः ॥ स पत्त एव प्रतिष्ठाया एकविंशमसृजत तमनुष्टुप्छन्दोऽन्वसृज्यत न काचन देवता शूद्रो मनुष्यः, तस्माच्छूद्र उत बहुपशुरयज्ञियो विदेवो हि । न हि तं काचन देवताऽन्वसृज्यत, तस्मात्पादावनेज्यं नातिवर्तते । पत्तो हि सृष्टः तस्मादेकविंशः स्तोमानां प्रतिष्ठा, प्रतिष्ठायां हि सृष्टः, ( ता० ब्रा० ६.१.३-६ ) इत्युक्तम् । अत्र प्रजापतेर्मुखादितो गायत्र्यादीनां या उत्पत्तिरापाततः श्रूयते सा वेदापौरुषेयत्ववादिभिरङ्गीकर्तुं नैव शक्यते । तत्पौरुषेयत्ववादिभिरपि प्रजापतिबाह्वाद्यङ्गेभ्यः पञ्चदशस्तोमादीनामुत्पत्तिर्न शक्यत एवाङ्गीकर्तुम् । अतोऽगत्याऽर्थवादत्वमेव अङ्गीकर्तव्यम् । अत एव सायणेन अथर्ववेदभाष्यभूमिकायामुक्तम् "अनन्तर च वक्त्रेभ्यो वेदास्तस्य विनिःसृताः । ऋग्वेद एवाग्नेरजायत यजुर्वेदो वायोः सामवेद आदित्यात् ( ऐ० ब्रा० ५.३२ ), इति, तस्माद्यज्ञात्सर्वहुतः ऋचः सामानि जज्ञिरे" इत्येतेषां वाक्यानां परस्परविरुद्धार्थतया प्रमाणान्तर प्रतिहततया च "प्रजापतिरात्मनो वपामुदखिददित्यादिवदर्थवादत्वेनाप्युपपत्तेः स्वार्थे तात्पर्याभावादित्युक्तम् । "क्वचिद्रथन्तरादीनामिति = त्रिवृदादि-वेदभागेभ्यो रथन्तरादिवेदभागानामप्युत्पत्तिः क्वचिच्छ्रूयते । तथाहि "त्रिवृतो रथन्तरं रथन्तराद्वशिष्ठ ऋषिः, पञ्चदशाद्बृहत् बृहतो भरद्वाज ऋषिः, सप्तदशाद्वैरूप्यं वैरूप्याद्विश्वामित्र ऋषिः, एकविंशाद्वैराजं वैराजाज्जमदग्नि ऋषिः" ( तै० सं० ४.३.२ ) इति । एवमेव वाजसनेयेऽपि श्रूयते । अत्र सर्वत्र सायणभाष्ये उत्पन्न इवेत्यध्याहारो दर्शितः । वस्तुतो नोत्पन्ना इति भावः ।

एवं चाग्न्यादिदेवानां ब्राह्मणादिनृणां जनिः । तन्मध्यपठितत्वेन स्वीकर्तुं नैव शक्यते ॥४२५
अपि च श्रूयते देवयोनिरन्या दिवि स्थिता । मर्त्ययोनिस्ततो भिन्ना मर्त्यलोके स्थितेति च ४२६
मुखादिसृष्टिवाक्यानामन्यार्थपरताऽस्त्यपि । योनिभेदकवाक्यस्य न तद्वक्तुं च शक्यते॥४२७॥
अविवक्षित स्वार्थोक्तिमध्ये वर्णजनिर्यतः । प्रोक्ता ब्रह्ममुखादिभ्यस्ततः साऽप्यविवक्षिता ४२८

जैसे मुखादि से वेदों को उत्पत्ति मानी नहीं जा सकता वैसा उनके बीच में पठित देवतासृष्टि और वर्णों की सृष्टि भी मानने योग्य नहीं ।

देव योनि अन्य ही है और वह स्वर्ग में रहती है और मनुष्य योनि उससे भिन्न है और मनुष्यलोक में वह रहती है। मुखादि सृष्टिबोधकवाक्यों का अर्थान्तर भी हो सकता न कि योनि भेदकवाक्यों का। अविवक्षितस्वार्थवाक्यों के बीच में पठित होने का कारण वर्णसृष्टि भी विवक्षित नहीं है।

देवयोनिरन्येति "द्वे ह वाव योनी देवयोनिर्हैवान्या मनुष्ययोनिरन्या, द्वा उ हैव लोकौ देवलोको हैवान्यः मनुष्यलोकोऽन्यः। सा या मनुष्ययोनिर्मनुष्यलोक एव सा, तत्स्त्रियै प्रजननम्। ततोऽधिप्रजाः प्रजायन्ते" ( जै० ब्रा० १.१७ ) इति "प्रजापतिः प्रजा असृजत, स ऊर्ध्वेभ्य एव प्राणेभ्यो देवानसृजत, येऽवाञ्चः प्राणास्तेभ्यो मर्त्याः प्रजाः" ( काण्व शत० १२.१.३ ) इति च श्रूयते। तस्माद्देवमनुष्ययोः प्रजापति-मुखादिकमेकं जन्मस्थानं भवितुं नार्हति।

नन्वसत्या प्रजासृष्टिः किमर्थं दर्शिता श्रुतौ। श्रेष्ठप्रमाणभूतायामिति चेदुत्तरं शृणु ॥४२९॥
अर्थान्तरमभिप्रेत्य क्वचिद्भिन्नार्थकं वचः। लोके वेदे च सर्वत्र बहुधा सम्प्रयुज्यते ॥४३०॥
विषं भुङ्क्ष्वेति वाक्यं हि मा भुङ्क्ष्वान्नं रिपोर्गृहे। इत्यभिप्रायतो लोके विज्ञैरपि प्रयुज्यते ४३१
को हि तद्वेद स्वर्गोऽस्ति न वाऽमुस्मिन्निति श्रुतौ। गवाक्षा दिक्षु कर्तव्या इत्यभिप्रायतः श्रुतम् ३२
वेदतात्पर्य-ज्ञानार्थमेव द्वादशलक्षणम्। मीमांसा-दर्शनं पूर्वं जैमिनिश्च विनिर्ममे ॥ ४३३ ॥

यदि कोई ऐसी शङ्का करें कि प्रामाणिक वेद में असत्य सृष्टि क्यों कही गयी उसका उत्तर यह है कि एक अभिप्राय से दूसरे अर्थवाले वाक्यों का प्रयोग करने की मर्यादा लोक में और वेद में भी है। लोक में तो शत्रु के घर में भोजन मत करो इस अभिप्राय से जहर खाओ वाक्य बोला जाता है। ऐसा ही वेद में भी यज्ञशाला की चारो दिशाओं में गवाक्ष (खिडकियाँ) रखे जाय इस अभिप्राय से ऊपर स्वर्ग है या नहीं यह कौन जानता है ऐसा कहा गया है। वेद का तात्पर्य जानने के लिए ही जैमिनि महर्षि ने बारह अध्याय का पूर्वमीमांसा शास्त्र बनाया था।

तथाऽग्निष्टोमशंसार्थं प्रायो यागोपयोगिनाम्। वस्तूनामिह सम्बन्धो दर्शितः सृष्टिवाक्यतः।४३४
यथा प्रजापतिर्यागमिममग्रे विधाय ताः। प्रजाः स्रष्टुं समर्थोऽभूत्तथैवाद्यतनो नरः ॥४३५॥
यागं सम्यगिमं कृत्वा प्राप्नुयादीप्सिताः प्रजाः। इति प्रदर्शनार्थं स दर्शितोऽन्यप्रवृत्तये ॥४३६॥

एवं प्रकृत में भी अग्निष्टोम की प्रशंसा के लिये यागोपयोगि कुछ वस्तुओं का सम्बन्ध सृष्टि के बहाने से दर्शित किया गया है। प्रजापति को भी अभीष्ट प्रजा प्राप्ति के लिये अग्निष्टोम करना पड़ा था तो दूसरों के बारे में क्या कहना होगा।



तत्र ब्राह्मणगायत्रीत्रि वृत्स्तोमार्चिषां मिथः। सम्बन्धसूचनार्थं हि जन्मैकाङ्गात्प्रदर्शितम् ४३७॥
यथैकमातृसम्भूताः परस्परहिते रताः। तथैषामेकजन्मोक्तौ सुज्ञेयोपकृतिर्मिथः ॥ ४३८ ॥
तेषां यागोपयुक्तेषु मुख्यत्वान्मुखसङ्गतिः। दर्शिता ब्राह्मणादीना मित्येषैव निजा स्थितिः ॥४३९
परस्परोपकारित्वं तेषामन्यत्र दर्शितम्। ताण्ड्ये तलवकारे च ब्राह्मणेऽप्यैतरेयके ॥ ४४० ॥
तैत्तिरीयेऽपि सर्वत्र संहितान्तर्गते बहु। मैत्रायणीये काण्वे च माध्यन्दिनेऽपि विस्तरात् ॥४४१॥

उनमें ब्राह्मण गायत्री त्रिवृत्स्तोम और अग्निदेवता आदि का याग में परस्पर सम्बन्ध सूचित करने के वास्ते प्रजापति के एक अङ्ग से जन्म दिखाया गया। जैसे एक माता से पैदा हुए स्त्रीपुरुष परस्पर हितकारक होते हैं, वैसा एक अङ्ग से जन्म दिखाने पर ब्राह्मणादियों में भी परस्पर उपकार सूचित होगा। उन यागोपयोग वस्तुओं में ब्राह्मण वर्ण और गायत्री आदि वेद भाग मुख्य होते हैं, इसको सूचित करने के लिये उनको मुख से जन्म दिखाया गया था। यहाँ यही वस्तुस्थिति है और वह उपकार्योपकारकभाव ताण्ड्यब्राह्मणादि में स्पष्ट रूप से बताया गया है।

त्रिवृत्स्तोमाग्निगायत्र्यः साधनानि हि तेजसः। ब्रह्मवर्चसरूपस्य ब्राह्मण्यव्यञ्जकस्य तु ॥४४२॥
ब्रह्मवर्चसमप्यत्र सर्वशास्त्र-प्रवीणता। तस्या मुखाश्रितत्वेन तेषां तत्सङ्गतिः श्रुता ॥४४३॥
सर्वेषां मुख्यसम्बन्धस्तेन चोपकृतिर्मिथः। सुगमो बालकानां स्यान्मुखोत्पत्तिप्रदर्शने ॥४४४॥
इत्यभिप्रायतो वेदे प्रजापतिमुखाज्जनिः। त्रिवृद्ब्राह्मणगायत्रीच्छन्दसामपि कीर्तिता ॥४४५॥
एवं बाह्वादिसम्बन्धो वीर्यहेतुत्वसूचकः। त्रिष्टुप्पञ्चदशेन्द्राणां राजन्यादेश्च दर्शितः ॥ ४४६ ॥
वीर्याभिलाषी राजन्यो बाहू वीर्याश्रयौ खलु। त्रिष्टुभादिश्च वीर्यस्य श्रुतिदर्शितकारणम् ॥।४४७
सर्वेषां बाहुसम्बन्धस्तेन चोपकृतिर्मिथः। सुज्ञेयो बालकानां स्याद्बाहूत्पत्तिप्रदर्शने ॥४४८॥
इत्यालोच्य श्रुतिर्माता त्रिष्टुब्राजन्ययोरपि। पञ्चदशबृहत्साम्नोर्बाहुजत्वमिवाब्रवीत्॥ ४४९ ॥
ऊरुशक्तिप्रसाध्यो हि पश्वादिद्रव्यसङ्ग्रहः। सोऽपि सप्तदशस्तोम जगत्यादि प्रयोजितः ॥४५०॥
तस्मात्तेषां विशश्चापि पशुहेतुत्वकारणात्। सम्बन्धश्चोरुदेशेन जन्मव्याजेन दर्शितः ॥४५१॥
अथवा देहमध्यस्थे चोदरेऽन्नं प्रधार्यते। सप्तदशादयोऽन्नस्य हेतवो विट्तदिच्छति ॥४५२॥
तादृशोदरसम्बन्धसुखप्रत्यायनाय हि। वैश्यादीनां समुत्पत्तिरुदरादिव दर्शिता ॥४५३॥
यस्य शूद्रादयो भृत्याः प्रतिष्ठा तस्य दृश्यते। एकविंशादयः प्रोक्ताः प्रतिष्ठाहेतवस्त्विति ॥४५४॥
ष्ठाधातोः प्रतिपूर्वस्याप्युत्थानमर्थ इष्यते। तच्च पादद्वयेनैव संभवेन्नान्यथेत्यतः ॥४५५॥
प्रतिष्ठाश्रयपादाभ्यां जन्म शूद्रैकविंशयोः। अनुष्टुभोऽपि चोक्तं चेत्प्रतिष्ठाहेतुता स्फुटा४५६
भवेदित्यभिसन्धाय तेषां पद्भ्यामिवोद्भवः। प्रदर्शितः श्रुतौ बालबोधनायैव केवलम् ॥४५७॥

त्रिवृत्स्तोम अग्नि और गायत्री ब्रह्मवर्चस के साधन होते हैं और ब्राह्मण ब्रह्मवर्चस चाहनेवाला होता है। ब्रह्मवर्चस भी यहाँ अनुभव

पूर्वक सर्वशास्त्र ज्ञान माना जाता है। वह ज्ञान मुखाश्रित है। अतः उन सबका मुखसम्बन्ध वस्तुतः है। वह सम्बन्ध और उससे परस्परोपकार भी मुख से जन्म बताने पर आसानी से विदित होते हैं। इसी अभिप्राय से वेद में उन सबकी उत्पत्ति मुख से बतायी गयी है। ऐसा ही त्रिष्टुप् और पञ्चदश वीर्य के हेतु होते हैं और क्षत्रय वीर्याभिलाषी होता है। बाहु तो वीर्य के आश्रय होते हैं। अतः यह सब बालकों को सुगमता से बोधन करवाने के लिये बाहुजन्यत्व बताया गया था। पशु और धनधान्यादि का संग्रह ऊरु बल से होता है। जगती और सप्तदशस्तोमादि तो पशुधान्यादि के कारण बताये गये हैं। वैश्य तो उनको चाहनेवाला होता है। अतः इस प्रकारक परस्पर उपकार सूचित करने के लिये श्रुति में उनका ऊरुओं से जन्म सा बताया गया। जिसके घर में शूद्रादि भृत्य रहते हैं उसकी प्रतिष्ठा अधिक मानी जाती है। एकविंशस्तोम और अनुष्टप् प्रतिष्ठा के हेतु होते हैं। पाद भी प्रतिष्ठा के ( ऊपर उठना और खड़े रहना ) साधन होते हैं। इन तीनों का वह सम्बन्ध भी पैरों से जन्म बताने पर सुगम होगा समझकर श्रुति ने उनकी उत्पत्ति ऐसी बतायी थी न कि यथार्थ उत्पत्ति के भाव से। ऊपर बताये गये विषयों के प्रमाण भूत श्रुति वाक्य नीचे दिये गये हैं।

त्रिवृत्स्तोमाग्नीति, ताण्ड्यब्राह्मणे श्रूयते "त्रिवृता ब्रह्मवर्चसकामः स्तुवीत, तेजो वै त्रिवृत् ( २.७.२ ) इति। त्रिवृदेव स्तोमो भवति तेजसे ब्रह्मवर्चसाय ( ११.१.११.५, ११.५.२९ ) इति। अत्र ब्रह्मवर्चसहेतुत्वं त्रिवृत्स्तोमस्य स्पष्टम्। यश्चतुर्विंशोऽग्निष्टोमश्चतुर्विंशत्यक्षरा गायत्री, तेजो ब्रह्मवर्चसम्। गायत्री तेज एव ब्रह्मवर्चसमवरून्धे ( १९.५.८ ) इति। अत्र गायत्र्याः ब्रह्मवर्चसहेतुत्वं ज्ञायते। तेजो वै रथन्तरं साम्नाम् ( १५.१०.६ ) इति। साम्नां मध्ये रथन्तरं साम ब्रह्मवर्चसरूप-तेजोहेतुरित्यर्थः। "तस्मात्त्रिवृत्स्तोमानां मुखं गायत्री छन्दसामग्निर्देवानां ब्राह्मणो मनुष्याणां वसन्त ऋतूनाम् ( ६.१.१ ) इति च। एतैः ताण्ड्यब्राह्मणवाक्यैः त्रिवृदादीनां मुख्यत्वं ब्रह्मवर्चसहेतुत्वं च ज्ञाप्यते। अग्निश्च स्वयं तेजो रूप एव। ब्राह्मणश्च ब्रह्मवर्चसकामी भवतीत्यत्रैव पूर्वं प्रदर्शितम्। ब्रह्मवर्चसकामस्य वसन्ततौ आधानमपि "स यः कामयेत ब्रह्मवर्चसी स्यामिति वसन्ते स आदधीत, ब्रह्म वै वसन्तो ब्रह्मवर्चसी हैव भवति" ( शत० ब्रा० २.१.३.६ ) इत्यादिना प्रोक्तम्। एतादृशापकार्योपकारक भावद्योतनार्थमेव ताण्ड्यब्राह्मणे त्रिवृद्गायत्री-रथन्तर-वसन्तर्तुब्राह्मणानां ब्रह्मवर्चसाश्रय-भूतात् प्रजापतिमुखादुत्पत्तिरिव प्रदर्शिता न तूत्पत्तिः। एवं जैमिनिब्राह्मणेऽपि "तस्माद्ब्राह्मणो गायत्रीच्छन्दाः, आग्नेयो देवतया", ( १.६८ ), तेजो वै ब्रह्मवर्चसं गायत्री ( १.१३२ ) इति, "तेजो वै ब्रह्मवर्चसं त्रिवृत्स्तोम" ( १.२५३ ) इति



"गायत्रं प्रातःसवनं स यद्गायत्रे सति प्रातःसवने गायत्रीं गायति ब्रह्म वै गायत्री ब्रह्मैव तद्ब्राह्मणस्य स्वेऽन्वाभजति" ( १.२६५ ) इति चोक्तम्। एवं तैत्तिरीयसंहितायामपि श्रूयते "तेजो वै गायत्री तेजः प्रातःसवनम्। तेज एव प्रातःसवने आत्मन् धत्ते (३.२.९) इति। यदि कामयेत ब्रह्मवर्चसमस्त्विति गायत्रिया परिदध्याद्ब्रह्मवर्चसं वै गायत्री ब्रह्म-वर्चसमेव भवति ( २.५.१० ) इति। अत्र सायणेनोक्तम् "गायत्र्युपदेशेन ब्राह्मण्यसम्पूर्तेः-गायत्र्यास्तेजो रूपत्वमिति"। अनेनैव ज्ञायते ब्राह्मणत्वं न जातिः किन्तूपाधिरिति। उपाधयो हि प्रायः सावयवा भवन्ति। तेन सकलावयवसम्पूर्तौ तेषां पूर्णता कतिपयावयववैकल्ये चापूर्णता भवति। जातिश्च निरवयवा। अतस्तत्र पूर्णत्वापूर्णत्वव्यवहार एव न भवति। एवं "अजाक्षीरेण जुहोत्याग्नेयी वा एषा यदजा" ( ५.४.३ ) इत्युक्तम्। अत्राजायाः आग्नेयत्वप्रतिपादनेन तस्या अपि स्वकीयक्षीरद्वारा तेजो हेतुत्वं सूचितं भवति। 'एवं बाह्वादिसम्बन्ध इति, ताण्ड्ये श्रूयते "अथ पञ्चदशौ ( अभितो भवतः ) वीर्यं पञ्चदशो वीर्यमेवावरुन्धे, अथ सप्तदशौ, पशवो वै सप्तदशः पशूनेवावरुन्धे अथैकविंशौ, प्रतिष्ठा वा एकविंशो मध्यत एव यज्ञस्य प्रतितिष्ठति ( १९.१० ) इति एवं "यत्त्रीणि पञ्चदशानि ( भवन्ति ) नाना वीर्ये, यत्त्रीणि सप्तदशानि नाना पशुषु, यत्त्रीण्येकविंशानि नाना प्रतितिष्ठन्ति" ( १९.१४.४ ) इत्युक्तम्। एवं "पञ्चदशेनातिरात्रेण वीर्यकामो यजेत सप्तदशेनातिरात्रेणान्नाद्यकामो यजेतान्नं वै सप्तदशोऽन्नमेवावरुन्धे, एकविंशेनातिरात्रेण प्रतिष्ठाकामो यजेत प्रतिष्ठा वा एकविंशो यदतिरात्रो भवति ( २०.१०.१ ) इति। पञ्चदश एव स्तोमो भवति ओजस्येव तद्वीर्ये प्रतितिष्ठत्योजो वीर्यं पञ्चदशः ( ११.६.१० ) ( ११.११.१३ ) इति। सप्तदश एव स्तोमो भवति प्रतिष्ठायै प्रजात्यै ( १२.१ ११ ) "एकविंश एव स्तोमो भवति प्रतिष्ठायै प्रतितिष्ठति ( १२.१३.३४ ) इति चोक्तम्। अत्रैतैर्वाक्यैः पञ्चदशस्य वीर्यहेतुत्वं सप्तदशस्यान्नपश्वादि हेतुत्वं एकविंशस्य प्रतिष्ठाहेतुत्वं च ज्ञायते। एवं "ओजो वीर्यं तिष्टुबोजस्येव वीर्ये पराक्रम्य प्रयन्ति" ( १४.१.६ ) इति। त्रैष्टुभमयनं भवत्योजस्कामस्य, जागतमयनं भवति पशुकामस्य ( १३.३.१० ) इति चोक्तम्। अयनं = अनुष्ठानम्। अत्र तिष्टुभो वीर्यहेतुत्वं जगत्याः पशुहेतुत्वं च ज्ञायते। एवं 'अनुष्टुभि बृहद्भवत्यन्तो वा अनुष्टुप् छन्दसाम्। अन्तो बृहत्साम्नां अन्तो राजन्यो मनुष्याणामन्त एव तदन्तं प्रतिष्ठापयति ( १९.१३.९ ) इत्युक्तम्, यथा मनुष्याणां मध्ये क्षत्रियराजा प्रतिष्ठाया अन्तिमावधिर्भवति, एवं छन्दसां मध्ये अनुष्टुबपि प्रतिष्ठाया अन्तिमावधिर्भवतीत्यनेनानुष्टुभः प्रतिष्ठा हेतुत्वं दर्शित भवति। क्षत्रियत्वादिकामस्य ग्रीष्मर्तौ पश्वादिकामस्य वर्षर्तौ चाधानमुक्तं शतपथे। तद्यथा "अथ यः कामयेत क्षत्रं श्रिया यशसा स्यामिति ग्रीष्मे स आदधीत। क्षत्रं वै ग्रीष्मः क्षत्रं हैव श्रिया यशसा भवति। अथ यः कामयेत बहुः प्रजया पशुभिः स्यामिति वर्षासु स आदधीत विड्वै वर्षाः, अन्नं विशः बहुर्वै प्रजया पशुभिः भवति" (१.१.२.७ ८) इति।

एतादृशान्योन्योपकार्योपकारकभावद्योतनार्थमेव वीर्यहेतुत्रिष्टुप्पञ्चदशग्रीष्मर्तूनां वीर्यकाम्नि क्षत्रियस्य च वीर्याश्रययाहुद्वयाज्जन्मेव दर्शितम्। एतदभिप्रायेणैव जैमिनितैत्तिरीयब्राह्मणयोरपि राजन्यवैश्यशूद्राणां त्रिष्टुबादि छन्दसामश्वगवादीनां प्रजापतिबाहूरुपादेभ्य सम्बन्धो जन्मव्याजेन दर्शितः। तथाहि जैमिनिब्राह्मणे श्रूयते तस्माद्राजन्यः त्रिष्टुप्छन्दा ऐन्द्रो देवतया तस्माद्बाहुभ्यां वीर्यं करोति। तस्माद्वैश्यो जगतीछन्दा वैश्वदेवो देवतया, तस्मात्स प्रजनिष्णुः तस्माच्छूद्रोऽनुष्टुप्छन्दा वेश्मपतिर्देवः, तस्मादु पादावनेज्येनैव जिजीविषति ( १.६८-९ ) इति। एवं ओजो वीर्यं त्रिष्टुप् प्रजननं जगती, ओजस्वी वीर्यवान् प्रजया पशुभिर्जायते य एवं वेद ( १.९३ ) त्रैष्टुभं माध्यन्दिनसवनम्। अथ यत्त्रिष्टुभं गायति क्षत्रं वै त्रिष्टुप् एतानि वै क्षत्रे शिल्पानि हस्तिनिष्कोऽश्वतरीरथोऽश्वरथोरुक्मः कंसः। तान्येव तदाहृत्य ब्रह्मण्यनक्ति जागतं तृतीयसवनम्। अथ यज्जगतीं गायति विड्वै जगती, एतानि वै विशि शिल्पानि गोऽश्वं हस्तिहिरण्यमजाविकं व्रीहियवाः तिलमाषाः सर्पिः क्षीरं रयिः पुष्टः तान्येव तदाहृत्य ब्रह्मण्यनक्ति। तदेव ( तृतीयसवनम् ) अनुष्टुबन्वायत्ता। अथ यदनुष्टुभं गायति अनुष्टुभो वै शूद्रः शूद्रादेव तदाहृत्य ब्रह्मण्यनक्ति। ( १.२६३ ) इति। "गायत्रं वै प्रातः सवनम्, त्रैष्टुभं माध्यन्दिनसवनम्, जागतं तृतीयसवनम् तदेवानुष्टुबन्वायत्ता, स यद्गायत्रे सति प्रातः सवने गायत्रीं गायति, ब्रह्म वै गायत्री, ब्रह्मैव तद्ब्राह्मणस्य स्वेऽन्वा भजति अथ यत्त्रिष्टुभं गायति क्षत्रं वै त्रिष्टुप् क्षत्रियमेव तद्ब्राह्मणस्य स्वेऽन्वा भजति। तदेवानुष्टुबन्वायत्ता अथ यदनुष्टुभं गायति अनुष्टुभो वै शूद्रः शूद्रमेव तद्ब्राह्मणस्य स्वेऽन्वा भजति ( १.२६५ ) इति चोक्तम्। एवं तत्रैव जैमिनिब्राह्मणे प्रोक्तं "गायत्रं वै प्रातः सवनं त्रैष्टुभं माध्यन्दिनसवनं जागतं तृतीयसवनम्। तदेवानुष्टुबन्वायत्ता। स यद्गायत्रं सत्प्रातःसवनं सर्वमेव गायत्रं गायति ब्रह्मण एव तं केवलमुद्धारमुद्धरति। सोऽस्य ब्रह्मणः केवल उद्धार उद्धृतो भवति। अथ यत्त्रैष्टुभं सन्माध्यन्दिन सवनं गायत्रेणैवानुरपद्यते ब्राह्मणमेव तत्क्षत्रियस्य स्वेऽन्वाभजति, सोऽस्मै दित्सति श्रद्धया कर्मणोपचारेण। यदा वै क्षत्रियं श्रद्धा विन्दति ब्राह्मणं वाव सा तर्हीच्छति सोऽस्मै ददाति। तदेवानुष्टुबन्वायत्ता। अथ यदनुष्टुभं गायति अनुष्टुभो वै शूद्रः ब्राह्मणमेव तच्छूद्रस्य स्वेऽन्वा भजति, सोऽस्मै दित्सति, श्रद्धया कर्मणोपचारेण यदा वै शूद्रं श्रद्धा विन्दति, ब्राह्मणं वाव स तर्हीच्छति। सोऽस्मै ददाति" ( १.२६६ ) इति। यदि ऋत्विक् तत्तच्छन्दांसि गायति तदा ब्राह्मणयजमानाय तत्तद्वर्णोऽनुकूलो भवतीति तदर्थः। एतेन तत्तच्छन्दसा तत्तद्वर्णस्य कश्चन सम्बन्धोऽस्तीति ज्ञायते तज्ज्ञापनायैव तयोस्तयोः एकैकाङ्गतो जन्मेव दर्शितम्। एवमत्रैव ब्राह्मणे द्वितीयभागे इदमप्युक्तम्। "तदाहुर्यदेते पृष्ठ्यस्य विषमाः स्तोमाः। त्रिवृत्पञ्चदशः सप्तदशः एकविंश इति। कथमेतत्समात्सममुपेतं भवति। स ब्रूयाद्ब्रह्म वै त्रिवृत् क्षत्रं पञ्चदशः, ब्रह्म वै क्षत्राज्ज्यायः। तेन समात्सममुपेतं भवति। विट्सप्तदशः क्षत्रमु वै विशो ज्यायः, तेन समात्सममुपेतं भवति, एकविंशस्तोममनु शूद्रः, वैश्यो वै शूद्राज्ज्यायान्" ( २.३१ ) इति। एतेषां वर्णानां स्तोमानां चान्योन्य-ज्यायस्त्वकनिष्ठत्वद्योतनार्थमेवात्र प्रजापतेः उत्तमाधमाङ्गेभ्यो जन्मेव दर्शितमित्यपि ज्ञातव्यम्। एवं "पञ्चदशानुब्रूयाद्राजन्यस्य पञ्चदशो वै राजन्यः, स्व एवैनं स्तोमे प्रतिष्ठापयति। त्रिष्टुभा परिदध्यादिन्द्रियं वै त्रिष्टुगिन्द्रियकामः खलु वै राजन्यो यजते, त्रिष्टुभैवास्मा इन्द्रियं परिगृह्णाति। सप्तदशानुब्रूयाद्वैश्यस्य सप्तदशो वैश्यः स्व एवैनं स्तोमे प्रतिष्ठापयति। जगत्या परिदध्याज्जागता वै पशवः पशुकामः खलु वै वैश्यो यजते जगत्यैवास्मै पशून् परिगृह्णाति (२.५.१०) इति। अत्रापीन्द्रियकामस्य राजन्यस्य त्रिष्टुबिन्द्रियं साधयति। पशुकामस्य वैश्यस्य जगती पशून् साधयतीति तादृशोपकार्योपकारकभावद्योतनार्थं तयोस्तयो रेकैकाङ्गतो जनिरिव दर्शिता। अत्राक्षोरापेक्षयाऽक्षिरेऽधिकबलजनकत्वमस्तीति तदाविष्करणाय बलाश्रयबाहुभ्यामवेः जन्मेव प्रदर्शितम्। वैश्यापेक्षितकृष्यादिकर्मोपकारकत्वाद्गोः वैश्येन सहैकाङ्गतो जन्म दर्शितम्। एवं परकार्यार्थप्रधावनादिसाधर्म्यात् शूद्राश्वयोः धावनाश्रयपादाभ्यां जन्म प्रदर्शितम्। यत्तु जैमिनिब्राह्मणे प्रजापति-बाहुभ्यामश्वस्य पादाभ्यामवेश्च जन्मोक्तं तदश्वमेधेऽश्वरथादिषु चाश्वराजन्ययोः सम्बन्धास्तित्वसूचनार्थम्। भारवहनादिसाधर्म्यसूचनार्थमविशूद्रयोः भारवहनादिसाधनपादाभ्यां जन्मोक्तम्। एवं मैत्रायणीयसंहितायामपि "चत्वारि वै छन्दांसि, छन्दोभिरेवैनं संवपति, गायत्रीभिर्ब्राह्मस्य संवपेत् गायत्रो हि ब्राह्मणः त्रिष्टुब्भी राजन्यस्य त्रैष्टुभो हि राजन्यः जगतीभिर्वैश्यस्य जागतो हि वैश्यः यथाछन्दसमेवोभयीभिस्संवपेत् (१९.४) इत्युक्तम्। अत्रादौ चतुर्णां छन्दसामुल्लेखादन्ते च यथाछन्दसमिति निर्देशाच्छूद्रस्यापि अनुष्टुप्छन्दसा संवापः सूचितो भवति। अतएव "चत्वारि छन्दांसि यज्ञवाहाः गायत्री त्रिष्टुब् जगत्यनुष्टुप्" इत्युक्तम्। एतत् सूचनार्थमेव तेषामेकैकाङ्गतो जन्म दर्शितम्। एवं "प्राची दिग्वसन्त ऋतुरग्निर्देवता ब्रह्म ( ब्राह्मणः ) द्रविणं, गायत्री छन्दः रथन्तरं साम त्रिवृत्स्तोमः...। दक्षिणादिग्ग्रीष्म ऋतुरिन्द्रो देवता क्षत्रं ( क्षत्रियः ) द्रविणं त्रिष्टुप्छन्दो बृहत्साम पञ्चदशस्तोमः...। प्रतीची दिग्वर्षा ऋतुर्विश्वे देवा देवता विड् (वैश्यः) द्रविणं जगतीछन्दो वैरूपं साम, सप्तदशःस्तोमः। उदीची दिक् शरदृतु मित्रावरुणौ देवता पुष्टं ( शूद्र ) द्रविणमनुष्टुप्छन्दो वैराजं साम एकविंशस्तोमः" ( २.७.२० ) इत्युक्तम्। तैत्तिरीयसंहितान्तर्गततादृशवाक्यसन्दर्भे विद्यमानस्य पुष्टं द्रविणमित्यस्यार्थः सायणेनैवमुक्तः "पुष्टशब्दः परिचर्यया वर्णत्रयपोषकत्वाच्छूद्रजातिमाचष्टे। अतएव वाजसनेयिनः (बृ० उपनिषदि) समामनन्ति "स शौद्रं वर्णमसृजत्पूषणमिति। एतादृशसम्बन्ध-सूचनार्थमेव तेषां प्रजापतेरेकैकाङ्गतो जन्मेव दर्शितम्। गायत्र्यादिभिः ब्राह्मणादीनामुपकार ऐतरेयब्राह्मणेऽपि स्पष्टं दर्शित एव। तद्यथा "गायत्रीं ब्राह्मणस्यानुब्रूयात्, त्रिष्टुभं राजन्यस्यानुब्रूयात्, जगतीं वैश्यस्यानुब्रूयात् ( १.५.१ ) इति।

अर्थवादास्त्विमे सर्वे नैतेषामीदृशार्थत: । मृग्यतेऽर्थान्तरं तस्मात्सर्वेषां नेष्यते जनि: ॥४५८॥
प्रोक्तं हि द्रव्यसंस्कार-कर्मसूक्ता फलश्रुति: । अर्थवादो न तेनोक्तो ग्राह्यश्चार्थो यथाश्रुत: ॥४५९॥
कर्मणोऽग्निष्टोमनाम्नस्तादृक्सर्वं प्रजोद्भव: । दर्शितोऽत्र फलत्वेन तस्मादेष न तत्फलम् ॥४६०॥
कर्मणोऽस्य फलं स्वर्गो न तु प्रजासमुद्भव: । ज्योतिष्टोमेन वै स्वर्गकामो यजेदिति श्रुते: ॥४६१॥
ज्योतिष्टोमप्रभेदोऽयमग्निष्टोमोऽपि कीर्त्यते । तस्मादस्यापि स स्वर्ग: फलं स्यान्न प्रजाजनि:४६२
यथाऽद्यतनतत्कर्तु: प्रजोत्पत्तिर्न तत्फलम् । तथा सृष्ट्यादितत्कर्तुर्नासीत्प्रजाजनि: फलम्॥४६३
अस्तु वाऽद्यतनस्येदं फलं प्रजासमुद्भव: । तथापि न प्रजार्थं तं चकारादौ प्रजापति: ॥४६४॥
अल्पशक्तेरसर्वज्ञपुरुषस्य फलाप्तये । शास्त्रोक्तसाधनापेक्षा यथा शास्त्रं भवेदिह ॥ ४६५ ॥
अचिन्त्यशक्ति सर्वज्ञपुरुषस्य तदाप्तये । सङ्कल्पमात्रमेवालं नान्यापेक्षोचिता भवेत् ॥ ४६६ ॥
प्रजापतेरपीदानींतनमानववच्च सा । इष्यते चेत्तदा तस्यानीश्वरत्वं प्रसज्यते ॥ ४६७ ॥
तस्माद्वेदेष्वीश्वरस्य कर्मानुष्ठानदर्शनम् । अन्यप्रवृत्तिसिद्ध्यर्थमित्यङ्गीकार्यमेव तत् ॥४६८॥
यादृशं कुरुते श्रेष्ठ: कर्म तादृशमेव हि । मर्त्य: साधारण: कुर्यादित्येतल्लोकविश्रुतम् ॥४६९॥
कर्माणि वैदिकान्यादावनुष्ठितान्यपीश्वरै: । इत्युक्ताव परैस्तानि कर्तव्यानीति गम्यते ॥४७०॥
एतदर्थस्य लाभाय बहुधा श्रुतिषु श्रुतम् । पूर्णकामैरपीष्टाप्त्यै-ज्योतिष्टोमादिकं कृतम्॥४७१॥
यदा प्रजासमुत्पत्त्यै तस्याग्निष्टोमसंश्रय: । न युक्तो न्यायतस्तर्हि कुत: सृष्टिर्मुखादित: ॥४७२॥

ये सब अर्थवाद हैं । अत: ऊपर दर्शित अर्थ के अलावा इनका दूसरा अर्थ नहीं हो सकता । महर्षि जैमिनि ने कहा है कि द्रव्य संस्कार और कर्मों में जो पृथक् फल बताया जाता है वह अर्थवाद मात्र है न कि फलम् । फल तो अधिकार विधिवाक्य से निर्दिष्ट होता है । यहाँ अधिकारविधि है "ज्योतिष्टोमेन स्वर्गकामो यजेत" यह ज्योतिष्टोम सप्तसंस्थाक होता है । उनमें अग्निष्टोम प्रथम संस्था है । अत: इसका भी स्वर्ग ही फल है न कि प्रजोत्पत्ति । जैसा वर्तमानाग्निष्टोमकर्ता का फल प्रजोत्पत्ति नहीं है वैसा सृष्ट्यादि में उसके करनेवाले को भी वह फल नहीं था । अल्पशक्ति और असर्वज्ञ पुरुषों की फलसिद्धि के लिये शास्त्रोक्त कर्म कर्तव्य होता है न कि सर्वज्ञ पुरुष को । उनकी फल सिद्धि सङ्कल्पमात्र से ही हो जाती है । प्रजापति को भी कर्मानुष्ठान अपेक्षित हुआ हो तो उनमें ईश्वरत्व ही माना नहीं जाता । अत: वेदों में प्रजापति का अग्निष्टोमानुष्ठान जो दिखाया गया था वह दूसरों को कर्मों में प्रवृत्त करवाने के लिये ही है, श्रेष्ठ-पुरुष जैसा करता है वैसा ही सामान्य जनता भी करती है । इसी अभिप्राय से वेद में पूर्णकाम प्रजापति का कर्मानुष्ठान दिखाया गया है । जब विचार करने पर उसका कर्मानुष्ठान ही सिद्ध नहीं होता, तब उस अनुष्ठान से उसने अपनेमुखादि से प्रजा की सृष्टि की थी यह सिद्ध होगा कैसे ?



द्रव्यसंस्कारकर्मस्विति, मीमांसादर्शने हि श्रूयते "द्रव्यसंस्कारकर्मसु परार्थत्वात्फलश्रुतिरर्थवाद: स्यात् ( ४.३.१ ) इति । तत्र द्रव्ये फलश्रुति: "यस्य पर्णमयी जुहूर्भवति न स पापं श्लोकं शृणोति" इति । अत्र पापयश:श्रवणाभावोऽर्थवाद एव न तु फलम् । संस्कारे च "यदङ्क्ते चक्षुरेव भ्रातृव्यस्य वृङ्क्ते" इति । अत्रापि शत्रुनाशो न चक्षुरञ्जनस्य फलं किन्त्वर्थवाद एव । कर्मणि तु "वर्म वा एतद्यज्ञस्य क्रियते यत्प्रयाजानुयाजा इज्यन्ते इति ।" प्रयाजाद्यनुष्ठानस्य यज्ञरक्षकत्वकथनमपि न फलप्रदर्शनार्थं किन्तु स्तुत्यर्थमेव । न चेयं कर्मणि फलश्रुतिरारादुपकारकविषयिणी, अग्निष्टोमश्च नारादुपकारक इति वाच्यम् । तस्यारादुपकारकत्वाभावेऽपि स्वर्गफलस्याधिकारिविशेषणत्वेनात्र श्रुतत्वेन फलान्तरस्यार्थवादत्वात् । न च रात्रिसत्रन्यायेनार्थवादोक्तस्यापि फलत्वमिति वाच्यम् । तस्यापि कर्तृविशेषणत्वेनाश्रुतफलविषयत्वात् । यत्र चार्थवादतोऽपि फलं न प्रतीयते तत्र विश्वजिन्न्यायेन फलं कल्प्यते । तदुक्तं "फलमात्रेयो निर्देशादश्रुतौ ह्यनुमानं स्यात् ( जै० सू ४.३.१८ ) इति । यथा चान्यत्र दर्शपूर्णमासाभ्यां स्वर्गकामो यजेतेत्यधिकारविधिनिर्दिष्टमेव फलं दर्शयागत्रयस्य पूर्णमासीयागत्रयस्य च पृथगनुष्ठीयमानस्य भवति, तथाऽत्रापि ज्योतिष्टोमेन स्वर्गकामो यजेतेत्यधिकारवाक्यनिर्दिष्टमेव स्वर्गफलं तदीयाग्निष्टोमादिसप्तसंस्थानां भवति । अत: तदतिरिक्तप्रजोत्पत्ते: फलत्वं नेष्यते । न चास्य संयोगपृथक्त्वन्यायेन स्वर्ग-प्रजोत्पत्त्यर्थत्वमिष्यते इति वाच्यम् । तस्याङ्ग फलविषयत्वात् ।

नन्वत्र जन्म नोक्तं चेद्वर्णानां कुत्र तच्छ्रुतम् । ब्रूहीति पृच्छते सम्यगत्रैवोत्तरमुच्यते ॥४७३॥
वेदे न क्वापि वर्णानां समुत्पत्तिर्विवक्षिता । किन्तु सृष्टेषु मर्त्येषु वर्णप्राप्तिस्तत: परम् ॥४७४॥
ऋत्विजामपि चोत्पत्तिर्वेदे क्वचिच्छ्रुताऽपि सा । विवक्षिता न किन्त्वेतदार्त्विज्यं प्राप्यते तत: ७५
सामान्यतो मनुष्याणां सृष्टिरुक्तैव योनिजा । बृहदारण्यकस्याद्ये चतुर्थे ब्राह्मणे स्फुटम् ॥४७६॥
तेषामेव हि गार्हस्थ्ये श्रौतं कर्म चिकीर्षताम् । अग्न्याधानात्परं वर्णप्राप्तिरुक्ता श्रुतिष्विह ॥४७७

यहाँ शंका होती है कि वर्णो की सृष्टि यहाँ विवक्षित नहीं है तो वह कहाँ कही गयी है ? उसका उत्तर यह है कि वर्गों की सृष्टि वेद में कहीं भी नहीं है किन्तु सामान्यत: मनुष्यों की सृष्टि के बाद ही वर्ण, गुण-कर्मों के द्वारा श्रौतकर्म के लिये प्राप्तव्य होते हैं । जैसे ऋत्विजों की सृष्टि बतानेवाले श्रुतिवाक्यों के रहने पर भी वह मानी नहीं जाती किन्तु मनुष्योत्पत्ति के बाद ही प्रयत्नों से आर्त्विज्य पाया जाता है, वैसा ही वर्ण, भी बाद में पाये जाते हैं । बृहदारण्यकोपनिषद् में मनुष्यों की योनिज सृष्टि बतायी गयी है । इस प्रकार पैदा हुए मानव जब गृहस्थ होकर अग्नि का आधान करते हैं तभी उनमें श्रौतकर्मानुष्टान के लिये वर्ण माने जाते हैं ।

ऋत्विजामपीति-ऋत्विजाम्प्युत्पत्तिः श्रूयते वेदे। तथाहि "अत्रिरददादौर्वाय प्रजां पुत्रकामाय स रिरिचानोऽमन्यत निर्वीर्यः शिथिलो यातयामा स एतं चतूरात्रमपश्यत्, तमाहरत् तेनायजत ततो वै तस्य चत्वारो वीरा आऽजायन्त सुहोता सूद्गाता स्वध्वर्युः सुसभेयः" ( तै० स० ७.१.८ ) इति। अत्र च सायणीयं भाष्यमित्थं वर्तते "तेन ( चतूरात्रेण ) तस्यात्रेः सुहोत्रादयश्चात्वारः पुत्रा उत्पन्नाः। ते च हौत्रे औद्गात्रे आध्वर्यवे यज्ञप्रयोगोपदेशे च कुशलाः। अतोऽन्येऽपि चतूरात्रेणेष्ट्वा तादृशान् लभन्ते इति। एवं ताण्ड्यब्राह्मणेऽपि "प्रजापतिरकामयत बहु स्यां प्रजायेयेति। स आत्मन्नृत्व्यमपश्यत्तत ऋत्विजोऽसृजत, यदृत्व्यादसृजत तदृत्विजामृत्विक्त्वं तैरेतं द्वादशाहमुपासीदत्सोऽराध्नोत्" ( १०.३.१ ) इत्युक्तम्। एतदीयं सायणभाष्यं च "अस्य जगतः सृष्टेः प्राक् प्रजापतिरकामयत, किमिति बहु स्यामिति तदर्थं प्रजायेय प्रजारूपेणोत्पद्येयेति एवं कामयमानः स प्रजापतिः आत्मन् आत्मनि ऋत्व्यं ऋतौ ऋतुकाले भवं गर्भस्य कारणं बीजमपश्यत् दृष्टवान्। ततस्तस्मादात्मनः ऋत्व्यात् प्रजापतिः ऋत्विजोऽसृजत। यद्यस्मात् ऋत्व्यात्सृष्टवान् तस्माहत्विजां याजकानां ऋत्विक्त्वं ऋत्विगिति नाम सम्पन्नम् इति। अत्र यथा ऋत्विजामुत्पत्तिश्रवणेऽपि न ऋत्विक्त्वं जन्मसिद्धा जातिः किन्तु पश्चादेव यत्नैः प्राप्यते, तथा क्वचिद्ब्राह्मणादिवर्णोत्पत्ति-श्रवणेऽपि न ते वर्णा जन्मसिद्धा भवितुमर्हन्ति किन्तु पश्चादेव तत्प्रयोजकगुणसंस्कारादिद्वारा प्राप्तव्या भवन्ति। लोकेऽपि "इयं वीरप्रसूः, वीरमातेयमित्यादि प्रयोगाः वर्तन्त एव। न चैतावता तत्पुत्रा उत्पत्तित एव वीरा जाता इति वक्तुं शक्यते। यदा प्रौढावस्थायां पुत्राणां वीरत्वं सिद्धं भवति तदा तन्माता वीरप्रसूरित्युच्यते। बृहदारण्यके मनुष्यसृष्टिरग्रे दर्शयिष्यते। आधानाद्ब्राह्मणत्वादिप्राप्तिर्दर्शितैव प्राक् ( श्लो० १९७-१९९ ) ननूपनिषत्प्रोक्तैव सृष्टिर्विवक्षिता न तु पूर्वकाण्डोक्तेत्यत्र किं विनिगमकमिति चेदुच्यते।

वैराग्योत्पादकत्वेन वेदान्तेषु विवक्षितौ। चराचरजगत्सृष्टिनाशौ नान्यत्र दर्शितौ ॥४७८॥
वैराग्यं कर्मकाण्डस्य बाधकं न तु साधकम्। तस्मात्सर्वेषु वेदेषु पूर्वकाण्डप्रदर्शितम् ॥४७९॥
सृष्टिनाशादिकं सर्वं पूर्वमोमांसकोत्तमैः। अविवक्षितमित्येव स्पष्टमुद्घोष्यते सदा ॥४८०॥
सुखे सांसारिकेऽनर्थं वैराग्योत्पादकारणम्। पिता ज्ञात्वाऽपि न ब्रूते पुत्रं वंशविवर्धिषुः ॥४८१।
आचार्यः कामयन्नत्महितं सर्वान् प्रबोधयेत्। तमनर्थं च वैराग्यं भवेदिति मनीषया ॥४८२॥
एवं वेदेषु बोद्धव्या पूर्वोत्तरविभागयोः। कर्मप्रवर्तकब्रह्मविद्याबोधकयोर्भिदा ॥४८३॥
उत्पत्तिमच्छरीरादेर्विनाशमपि पश्यताम्। पुंसां तादृक्पदार्थेषु वैराग्यमुपजायते ॥४८४॥
तेन ते नश्वरे दृष्टिं त्यक्त्वा तात्त्विकवस्तुनि। कीर्त्यादौ निक्षिपन्तीति प्रसिद्धं खलु दृश्यते ॥४८५
एवं सर्वप्रपञ्चस्य कार्यकारणरूपतः। द्विधा प्रदृश्यमानस्य जन्म चेत्सम्प्रदर्श्यते ॥४८६॥
तदा तस्यान्तमालोच्य प्रत्यगात्मनि पण्डिताः। जन्मनाशादिशून्यत्वान्नित्ये सर्वश्रुतीरिते ४८७



योजयन्ति मनः सर्वे सदा मुमुक्षवस्त्विति। जगतश्च समुत्पत्तिं ब्रुवते श्रुतिशिरांस्यपि ॥४८८।
तत्प्रसङ्गात्क्वचिन्मर्त्यपश्वादीनां समुद्भवः। दृष्टानुसारतः प्रोक्तो यः पुराऽऽसीद्यथार्थतः ४८९

वेदान्तों में कही गयी सृष्टि और प्रलय ही विवक्षित ( माने जाते ) हैं। क्योंकि वेदान्तों में ही वैराग्य की आवश्यकता होती न कि कर्मकाण्ड में उसमें वैराग्य बाधक ही हो जाता है। अतएव कर्मकाण्ड में बताई गयी सृष्टि को मीमांसक लोग अविवक्षित मानते हैं। जैसे सांसारिक सुख में रहनेवाली हानि को जानते हुए भी माता और पिता, जो अपनी पौत्रादि सन्तति की उन्नति चाहते हैं उसे पुत्रों को बताते नहीं किन्तु आध्यात्मिक उन्नति चाहनेवाले आचार्य जी उस हानि को अपने शिष्यों को बताते हैं, वैसा ही प्रापञ्चिक भोगसाधनों के बतानेवाले पूर्वकाण्ड वेदभाग भी, वैराग्य के हेतुभूति सृष्टि प्रलयादि को बताते नहीं किन्तु वेदान्तों में ही उन बातों का स्पष्टीकरण रहता है उससे लोग दृश्य प्रपञ्च से मन हटाकर परमात्मा में लगाने का यत्न करेंगे। इसी अभिप्राय से उपनिषदों में प्रपञ्च के सृष्टि प्रलय और उसी प्रसङ्ग से मनुष्यादि प्राणियों का भी जन्म बताया गया है जो निम्नलिखित श्लोकों से दिखाया जाता है।

कल्पान्ते लीनभूतानां भाविभोगैकहेतुना। प्रजापतेर्मनस्याशीदरतिः प्राण्यदर्शनात् ॥४९०॥
तन्निवृत्त्यर्थमात्मानं कृत्वा स्त्रीपुंसभेदतः। मैथुनेन स मर्त्याश्वगोगजादीन्विसृष्टवान् ॥४९१॥
न चेयं श्रुतिरर्थोक्तिः द्रव्यसंस्कारकर्मसु। फलश्रुतित्वशून्यत्वादतः स्वार्थप्रबोधिका ॥४९२॥

प्रलयकाल में ब्रह्मा में छिपे हुए प्राणियों के भावि भोगों के निमित्त सृष्टिकर्ता के मनमें असन्तोष हुआ था और उसको हटाने के लिये वह, स्त्री और पुरुष दो शरीरों का धारण करके दाम्पत्य धर्म के द्वारा, मनुष्य और पशुपक्ष्यादि प्राणियों की सृष्टि की थी। इस सृष्टि को बतानेवाले श्रुतिवाक्य अर्थवाद नहीं है अर्थवाद तो वही होता है जो द्रव्य,संस्कार, और कर्मों में पृथक् फल बताता हो। अतः ये वाक्य अपने अर्थ को बताने में तत्पर हैं।

सामान्यतो मनुष्यसृष्टिश्च बृहदारण्यके इत्थमभिहिता "स वै नैव रेमे। तस्मादेकाकी न रमते स द्वितीयमैच्छत्। स ह्येतावानास यथा स्त्रीपुंसौ सम्परिष्वक्तौ स इदमेवात्मानं द्वेधा अपातयत्, ततः पतिश्च पत्नी चाभवताम्। तस्मादिदमर्धबुगलमिव स्व इति स्माह याज्ञवल्क्यः, तस्मादयमाकाशः स्त्रिया पूर्यत एव। तां समभवत्ततो मनुष्या अजायन्त। सा हेयमीक्षांचक्रे कथं नु मात्मान एव जनयित्वा संभवति, हन्त तिरोऽसानीति सा गौरभवदृषभ इतरस्तां समेवाभवत्ततो गावोऽजायन्त, बडबेतराऽभव-

दश्ववृष इतरो गर्दभीतरा गर्दभ इतरः तां समेवाभवत्तत एकशफमजायताजेतराऽभवद्वस्त इतरोऽविरितरा मेष इतरः तां समेवाभवत् ततोऽजावयोऽजायन्त एवमेव यदिदंकिञ्च मिथुनमा पिपीलिकाभ्यः तत्सर्वमसृजत ( १.४.३ ) इति ।

अद्य प्रत्यक्षमानुष्य पशुपक्षि समुद्भवम् । दृष्टान्तीकृत्य सृष्ट्यादावपि तेषां समुद्भवे ॥४९३॥
मैथुनप्रभवत्वं चाप्यनुमायोक्ततच्छ्रुतेः । अनुमानमपि ब्रूमो ह्युपोद्बलकमञ्जसा ॥४९४॥
तदित्थं मानुषी सृष्टिराद्या मैथुनजा ध्रुवम् । तत्सृष्टित्वादिदानीं तत्प्रत्यक्षदृष्टसृष्टिवत् ॥४९५॥
यथा कुलालकदृष्टान्ताज्जगत्कर्तापि तादृशः । श्रुत्युक्तोऽपि विशेषज्ञैस्तथैवात्रानुमीयते ॥४९६॥
मुखादिसृष्टिपक्षे तु नैव दृष्टान्तसम्भवः । नानुमानमतस्तस्याः स्यादुपोद्बलकं श्रुतेः ॥४९७॥

इस विषय में वर्तमान मनुष्यादि सृष्टि को दृष्टान्त करके युगादि मनुष्यादिसृष्टि में मैथुनजन्यत्व का अनुमान भी करके, उत्पत्तिबोधकश्रुति में अनुमान प्रमाण भी उपोद्बलक बता सकते हैं। वह अनुमानप्रयोग इस प्रकार है। कि "आदिमनुष्यादिसृष्टिः मैथुनजन्या, मनुष्यादि-सृष्टित्वात्, वर्तमान प्रत्यक्ष मनुष्यादिसृष्टिवत्"। जैसा नैयायिक लोग कुलाल दृष्टान्त से श्रुतिप्रतिपादित ईश्वर को भी जगत् के प्रति निमित्त कारण अनुमान से बताते हैं। ब्रह्ममुखादि से वर्ण सृष्टि मानने पर प्रत्यक्षदृष्टान्त नहीं मिलेगा। अतः उस का श्रुति को अनुमान प्रमाण उपोद्बोलक नहीं होगा।

एवं सृष्टमनुष्याणामग्रे कर्मोपयोगिनः । ब्राह्मणत्वादयो वर्णा विभक्ताश्च स्वभावतः ॥४९८॥
उत्पत्त्यनन्तरं सर्वे बहुकालं हि मानवाः शुद्धान्तःकरणा ब्रह्मध्यानमात्रपरायणाः ॥४९९॥
वेदधारणसंलग्ना बहिर्दृष्टिविवर्जिताः । तेष्वतो ब्राह्मणत्वादिव्यवहारोऽपि नाभवत् ॥५००॥
यदा कालानुसारेण बहिर्दृष्टिरजायत । तदा पापान्निवृत्त्यर्थं श्रौतकर्म समाश्रितम् ॥५०१॥
तदर्थं मन्थनेनापि वीतिहोत्रं प्रजापतिः । उत्पाद्य दर्शयामास यष्टुकामानपि द्विजान् ॥५०२॥
ब्राह्मणोचितकर्मादौ श्रुत्युक्तं स प्रजापतिः । देहभेदं समाश्रित्य कृत्वा प्रादर्शयत्प्रभुः ॥५०३॥

इस प्रकार मनुष्यादि को सृष्टि करके ब्रह्मा ने आगे यज्ञादि कर्मोपयोगि ब्राह्मणत्वादि वर्णों को भी तत्स्वभाव के आधार पर विभक्त किया था। उत्पत्ति के बाद सभी जनता कृत युग में शुद्धचित्त और ब्रह्मध्यान में लीन रहती थी। अतः उसमें ब्राह्मणत्वादिव्यवहार की आवश्यकता ही नहीं थी। जब कालानुसार उनमें विषय दृष्टि आ गयी थी तब अनुचित कार्यों से जनता को निवृत्त करवाने के वास्ते वैदिक कर्मों का आरम्भ किया गया और उसके लिये आग भी मन्थन से पैदा किया गया था वर्णोचित तत्तत्कर्मों को प्रजापति ने शब्दार्थ सम्प्रदाय की तरह देहभेद के द्वारा स्वयं करके दिखाया था।



सृष्ट्यादौ मनुशतरूपाभ्यामुत्पन्ना मनुष्या ब्रह्मध्यानपरत्वेन ब्राह्मणा आसन्। यत्तूक्तं वायुपुराणे कृतयुगे वर्णाश्रम प्रविभागो नासीदिति। तथाहि "अप्रवृत्तिः कृतयुगे कर्मणोः शुभपापयोः। वर्णाश्रमव्यवस्था च न तदाऽऽसीन्न सङ्करः॥ अनिच्छाद्वेषयुक्तास्ते वर्तयन्ति परस्परम्। तुल्यरूपायुषस्सर्वा अधमोत्तमवर्जिताः" ( अनुषङ्गपादे अ० ८.६१२ ) इति। एवमेव लिङ्गपुराणे ( अ० ३१.१८ ) भृगुस्मृतौ च ( अ० ४.१ ) उक्तम्। तच्च कर्मोपयोगिवर्णाभिप्रायेणोक्तम्। तथा च ब्राह्मण्यं द्विविधम्। एकं ब्रह्मस्वरूपावस्था-प्रयुक्तम्। इदं मुख्यम्। द्वितीयं कर्मोपयोगि गौणं ब्राह्मण्यम्। तदुक्तम् "तस्मादेवंविच्छान्तो दान्त उपरतस्तितिक्षुः समाहितो भूत्वाऽऽत्मन्येवात्मानं पश्यति सर्वमात्मानं पश्यति सर्वं पाप्मानं तरति विपापो विरजोऽविचिकित्सो ब्राह्मणो भवति" ( बृ० उ० प० ४.४.२३ ) इति। एतदीय शाङ्करभाष्येऽपि "अयं त्वेवंभूतः एतस्यामवस्थायां मुख्यो ब्राह्मणः प्रागेतस्माद्ब्रह्म-स्वरूपावस्थानाद्गौणमस्य ब्राह्मण्यमि"त्युक्तम्। एवं तत्रैव तृतीयाध्यायेऽपि प्रोक्तम् "तस्माद्ब्राह्मणः पाण्डित्यं निर्विद्य बाल्येन तिष्ठासेत्। बाल्यं च पाण्डित्यं च निर्विद्याथ मुनिः, अमौनं च मौनं च निर्विद्याथ ब्राह्मणः स ब्राह्मणः केन स्यात् येन स्यात्तेनेदृश एव" इति ( ५ ब्राह्मणे )। येन केनापि आचरणेन भवतु तस्य स्वरूपमेतादृशमेवेति तदभिप्रायः। इदमपि मुख्यब्राह्मण्याभिप्राणेणोक्तम्। वज्रसूचकोपनिषद्यपि मुख्यमेव ब्राह्मण्यं निरूपितम्। "ब्राह्मणो बृहस्पतिसवेन यजेत" इत्यादिषूक्तं ब्राह्मण्यं च गौणम्। अस्यैव वर्णत्वव्यवहारो न तु मुख्यस्य। अस्य कर्मानुपयोगित्वात्कर्मोपयोगिन एव वर्णत्वाच्च। अत्र बृहदारण्यके च सामान्यतो मनुष्यसृष्ट्यनन्तरमग्रे क्रियमाणो ब्राह्मणादिविभागः कर्मोपयोगिवर्ण-विभाग एव। आदौ सृष्टेषु नृषु कालक्रमेण रागद्वेषादि समागमेऽनिष्टकर्मतो निवृत्त्यर्थं श्रौतं कर्म प्रजापतिना प्रदर्शितं, तदर्थं मन्थनेनाग्निनिष्पत्तिरपि दर्शिता वर्णाश्च श्रुत्युक्ततत्तदर्थवादानुसारेण विभक्ताश्च। त्रेतायां वैदिककर्मणामारम्भः वर्णविभागश्च कृत इति दर्शितवाय्वादिपुराणेषु स्पष्टमुक्तम्। मन्थनेनाग्नेरुत्पत्तिश्च दर्शिता बृहदारण्यके "अथेत्यभ्यमन्थत्स मुखाच्च योनेः हस्ताभ्यां चाग्निमसृजत। तस्मादेतदुभयमलोमकमन्तरतोऽलोमका हि योनिरन्तरतः ( १.४.६ ) इति। एतदेवाग्रे स्पष्टी क्रियते।

उत्तरारणिना धाता मथित्वा चाधरारणौ । हस्ताभ्यामग्निमुत्पाद्य कर्मार्थं समदर्शयत् ॥५०४॥
अत्राधरारणिर्योनि मुखं चैवोत्तरारणिः । साधनद्वयसङ्घर्षादग्निर्निष्पादिता पुरा ॥५०५॥
यथा हि सोमशब्दस्य दध्यर्थत्वेन सम्मतम् । दध्यातञ्चितदुग्धाद्धि दध्युत्पत्तेश्च दर्शनात् ॥५०६॥
तथाऽधरारणि योनिशब्दस्यार्थोऽपि युज्यते । मुखशब्दस्य चाप्यर्थः सङ्गतस्तूत्तरारणिः ॥५०७॥
यतोऽग्निर्जायतेऽरण्यो रुत्तराधर संज्ञिनोः । मन्थनान्नान्यथा तस्मात्तावर्थौ सम्मतौतयोः ॥५०८॥
मुखशब्दः प्रयुक्तोऽत्र मुख्यत्वादुत्तरारणौ । अधः स्थिरत्वसाम्येन योनिशब्दोऽधरारणौ ॥५०९

अलोमकत्वमप्यग्नियोनि द्वन्द्वे प्रदृश्यते । तदेवारोपितं योनौ शब्दसाम्यान्मुखेऽपि च ॥५१०॥
मुखादुत्पत्तिपक्षेऽपि शब्दसाम्यादलोमता । योनावप्यत्र वक्तव्या तथैवोक्ता मुखेऽपि सा ॥५११॥
इतोऽग्नि: प्रथमं जज्ञे स्वाद्योनेरिति वेदवाक् । तत्र स्वाद्योनिशब्दार्थं सायणोऽरणिमुक्तवान्॥५१२॥
एतावत्कथनेऽप्यत्र सामञ्जस्ये ह्यसङ्गतम् । मुखे हस्तौ प्रवेश्याग्निमन्थनाश्रयणं कुत: ॥५१३॥
मैथुनेन प्रजोत्पत्तिं जीवान् ग्राहयितुं विधि: । तथाऽकरोत्किमर्थं स वह्निमेवं हि सृष्टवान् ॥५१४॥
अग्राह्यमननुष्ठेयं किमर्थं रागत: प्रभु: । कृतवानिति प्रश्नस्य किं ब्रूयादुत्तरं पर: ॥५१५॥
नित्यमार्द्रप्रदेशाद्धि मुखाद्योनेरपीश्वर: । अग्निं कृष्णवर्त्मानं कथमत्रोदपादयत् ॥ ५१६ ॥
मन्थनेनाग्निनिष्पत्तिरनुकार्या जनैरपि । अतस्तां दर्शयामास शब्दार्थसम्प्रदायवत् ॥५१७॥
एवं विधाग्निसम्प्राप्तिरज्ञाता पूर्वमानवै: । तस्मात्सृष्टिकृतैवादौ तेभ्य: साऽपि प्रदर्शिता ॥५१८॥
तत: परं यदा चाग्निरावश्यकोऽप्यभूत्तदा । अरणिद्वयसङ्घर्षाज्जिनयन्त्येव तं जना: ॥५१९॥

ब्रह्मा ने नीचे के अरणि में ऊपर के अरणि से दोनों हाथों के द्वारा अग्नि का मन्थन करके लोगों को दिखाया था । ऊपर के उपनिषद्वाक्य में मुख शब्द से उत्तरारणि और योनिशब्द से अधरारणि बताये जाते हैं । जैसा श्रुतिस्थ सोमशब्द का एक जगह पर दधि अर्थ बताया गया था, क्योंकि दूध में दही डालने पर ही वह दूध दही बन सकता न कि सोमरस डालने पर । अत: वहाँ वैसा अर्थ बताना पड़ा था, एवं प्रकृत में भी अरणि-द्वय से मन्थन करने पर ही आग पैदा होता है । अत: यहाँ योनिशब्द का अर्थ अधरारणि मुखशब्द का उत्तरारणि अर्थ बताना उचित ही है । आग निकालने में उत्तरारणि मुख्य होता है । अत: वह मुख शब्द से कहा गया और अधरारणि नीचे स्थिरता से रहता है । अत: वह योनिशब्द से कहा गया है । उन दोनों अरणियों में भी जहाँ से आग निकलता है वहाँ लोम ( बाल ) नहीं रहते हैं । अत: अलोमकत्व कहा गया है । अग्निकारण योनि और मुख में रहनेवाला अलोमकत्व, प्रसिद्ध योनि और मुख में भी योनिमुख शब्दसाम्य से आरोपित किया गया है । यहाँ परमत के अनुसार प्रसिद्ध मुख से अग्नि की उत्पत्ति मानने पर भी योनि में जोअलोमकत्व कहा गया है वह भी शब्दसाम्य से ही है । अर्थात् मुख भी अग्नि का योनि और प्रसिद्ध योनि भी योनि ही है । अत: इस शब्दसाम्य से योनि अलोमक कहा गया है । इसी प्रकार अरणिद्वय से उत्पत्तिपक्ष में भी श्रुति, मुख और योनि में अलोमकत्व कह सकती है । "इतोऽग्नि: प्रथमं जज्ञे स्वाद्योने:" इति श्रुतिवाक्य के सायण भाष्य में योनिशब्द का अर्थ अरणि बताया गया है । अत: उक्त उपनिषद्वाक्य में रहनेवाले मुख और योनि शब्दों के अर्थ



उत्तरारणि और अधरारणि बताना उचित ही है । जब इस प्रकार आग की उत्पत्ति मानने पर सब कुछ ठीक हो जाता है तो मुख में हाथ रखकर आग की असङ्गत उत्पत्ति मानना निरर्थक है । मनुष्यों को सिखाने के वास्ते ब्रह्मा ने पहले सब कुछ काम स्वयं करके दिखाया था । मुख में हाथोंसे मन्थन करके आग निकालना वह किसको सिखाया था ? जो काम दूसरों के द्वारा ग्रहण करने और अनुष्ठान करने का योग्य नहीं उसको क्यों ब्रह्मा ने किया था ? इस प्रश्न का उत्तर दूसरे क्या देंगे । मुख हमेशा गीला रहता है । उससे कैसे आग को, जो स्वाश्रय को जला देने का स्वभा-ववाला है, निकला था । अरणिद्वय से आग निकालना दूसरों को भी अनुकरणीय है । अत: इसी को ब्रह्मा ने पहले शब्दार्थसम्प्रदाय की तरह, करके दिखाया कहना ही यहाँ उचित है । इस प्रकार आग को निकालना, सृष्टिकालीन मनुष्य नही जानते थे । अत: उसको ब्रह्मा ने दिखाया था । उसके बाद जब जब आग की आवश्यकता होती थी, लोग उसी प्रकार उसे निकालने लगे ।

व्योमवायुक्रमेणाग्निमात्मनोऽजोऽसृजत्पुरा । स च भूत्वा प्रविष्टोऽभूद्दार्वादिभुवनं त्विति॥५२०॥
काठके तैत्तिरीये च वाक्ये प्रोक्तमिदं खलु । मन्थनेन तत: पश्चादुत्पाद्योऽग्निरभूदिह ॥५२१॥
स्वनिर्मितक्रमं तं च विहायैव प्रजापति: । स्वीयादेव मुखादग्निं किमर्थं स विनिर्ममे ॥५२२॥
एवं यागादिरूपस्य संभविष्यत्क्रियात्मन: । धर्मस्यानुष्ठितेरन्या सृष्टिर्नैवोपपद्यते ॥५२३॥
असृजद्धर्ममित्यस्य कृत्वा यागं जनानज: । दर्शयामासइत्यर्थो वक्तव्य: सूपपत्तये ॥५२४॥

परमात्मा ने आकाश और वायु की उत्पत्ति के बाद अग्नि को पैदा किया और वह अग्नि काष्टादि जगत में प्रविष्ट हो गया था । यह विषय कठोपनिषद और तैत्तिरीयोपनिषद में बताया गया ही है । उसके बाद आग मन्थन से ही निकाला जाता है । अपने इस सृष्टि क्रम को छोड़कर ब्रह्मा ने क्यों अपने मुख से आग को निकालेगा । उसी बृहदारण्यक में 'श्रेयोरूपमत्यसृजत धमम्" ( १।४।१४ ) इत्यादि वाक्य से धर्म को जो सृष्टि बतायी गयी थी वह भी अनुष्ठान रूप ही थी । यह क्यों ? क्रियारूप धर्म को अनुष्ठान से अतिरिक्त सृष्टि संभव नहीं होती है । अत: वहाँ के असृजत्पदका अर्थ "अन्वतिष्ठत्" ऐसा कहना होगा ।

तथा क्षत्रादिवर्णस्य विभाग: सृष्टिशब्दत: । तत्रोपनिषदि प्रोक्तो न तु सृष्टिर्विवक्षिता ॥५२५॥
चातुर्वर्ण्यमपीहास्ति मनुष्येभ्य: पृथङ् नहि । कथं तच्च सृजेदग्रे मानवोत्पत्त्यनन्तरम् ॥५२६॥
तस्मात्सुरेश्वरेणोक्तं बृहदारण्यवार्तिके । द्वन्द्वयुक्तं जगत्यस्मिन् यावत्किञ्चित्समीक्ष्यते॥५२७॥

तदस्राक्षीन्मनुः सर्वं स्त्रीपुंद्वन्द्वप्रयोगतः । मनोः सशतरूपस्य पिण्डसृष्टिरिहोदिता ॥५२८॥
सोमाग्नीन्द्रादिका याऽपि तामुक्तवदुपेक्ष्य सः । इत्युक्तोक्तेरिदं स्पष्टं नसृष्टिव्यतिरेकतः॥५२९॥
मुखबाहूरुपादादि जातेव दर्शिताऽपि सा । वर्णसृष्टिः पृथङ्नासीत्किन्तु वर्णविभाजनम् ॥५३०॥
अत्रासृजत्पदस्यार्थो विभागं कृतवानिति । ग्राह्यः संवत्सरं मासानसृजत्स पुरेतिवत् ॥५३१॥
जैमिन्युपनिषन्नाम्नि काण्वे च ब्राह्मणे तथा । संवत्सरमृतून्मासानसृजत्स इतीरितम् ॥५३२॥
विभागव्यतिरेकेण सृष्टिः का ह्यत्रगीयते । मासर्तुपक्षरूपेऽस्मिन् काले संवत्सराभिधे ॥५३३॥
श्रुतेरसङ्गतार्थं वा तदप्रामाण्यबुद्धिदम् । प्रजल्पतां स्वार्थसिद्धै कथं लज्जा न जायते ॥५३४॥
तस्माद्विभाग एवात्र वर्णानामुचितोऽस्त्यतः । ब्रह्मक्षत्रादिवर्णानां सृष्टिभ्रमो विसृज्यताम् ॥५३५॥

वैसा क्षत्रियादिवर्णों का विभाग ही उस उपनिषद में सृष्टिशब्द से कहा गया है न कि सृष्टि । चार वर्ण भी मनुष्यों के बीच में ही है न कि बाहर । अतः ऐसे वर्णों की सृष्टि मनुष्योत्पत्ति से अलग कैसा की जायगी अतः वहाँ "असृजत" इस पद का अर्थ विभाग किया ऐसा अर्थ कहना ही पड़ेगा । जैसे जैमिन्युपनिषद्ब्राह्मण के संवत्सरमसृजन्मासानसृजत्" इस वाक्य में "असृजत" शब्द का अर्थ विभाग कहा जाता है, वैसा ही प्रकृत में भी कहना उचित है । ऋतु मास समुदाय से संवत्सर अलग नहीं होता है । अतः वहाँ ऋतु मासादि विभाग के अतिरिक्त अर्थ नहीं हो सकता ।

ब्रह्मप्रदर्शिते तस्मिन् धर्मानुष्ठाने सर्वेषां वर्णानां मुख्योपसर्जनरूपेणोपयोगात्स मनुष्य सृष्टिकृत्प्रजापतिः तेषां प्रविभागमपि सत्त्वादित्रिगुणन्यूनाधिक-भावनिमित्तमाश्रित्य कृतवान् तदुक्तम् "ब्रह्मवा इदमग्र आसीदेकमेव, तदेकं सन्न व्यभवत्, तच्छ्रेयोरूपमत्यसृजत क्षत्रं ( क्षत्रियत्वं ) यान्येतानि देवत्रा क्षत्राणीन्द्रो वरुणः सोमो रुद्रः पर्जन्यो यमो मृत्युरीशान इति । स नैव व्यभवत्स विशमसृजत यान्येतानि देवजातानि गणश आख्यायन्ते वसवो रुद्रा आदित्या विश्वे देवा मरुत इति । स नैव व्यभवत्स शौद्रम् वर्णमसृजत पूषणमियं वै पूषेयं हीदं सर्वं पुष्यति यदिदं किञ्च ( १.४.७-९ ) इति । धर्मार्थत्वं वर्णानां शाङ्कर-भाष्यादौ तत्र तत्रोक्तम् "अविद्याधिकारे कर्माधिकारार्थं वर्णविभागस्य प्रस्तुतत्वात् ब्रह्मणा सृष्टा वर्णाः कर्मार्थम् । तच्च कर्म धर्माख्यं सर्वानेव कर्तव्यतया नियन्तृ पुरुषार्थ-साधनं च ( बृ० १.४.१५ ) इत्यादिना । कर्माधिकारश्च नोत्पत्त्यनन्तरं किन्तु गृहस्था-श्रमेऽग्न्याधानानन्तरमेव सम्यगधीतवेदराशेः । अतः कर्मार्थवर्णविभागोऽपि गृहस्थाश्रम एव न तूत्पत्तितो नापि ब्रह्मचर्यादाविति भाष्यवाक्यादिभ्योऽपि स्पष्टं भवति । मैथुनेन सृष्टा मनुष्याः सामान्यतः सृष्टाश्च देवाः । ते चाग्रेऽत्र ब्राह्मणादिरूपेण विभक्ताइत्येव वक्तव्यम् । अत्र विभागे सत्त्वादिन्यूनाधिकभाव एव निमित्तम् । यत्र व्यक्तिविशेषे सत्वगुणाधिक्यं रजस्तमसोः न्यूनता, स ब्राह्मणः तादृश एव सत्वगुणप्रधानः रजस्तमो-



न्यूनतावान् देवेषु ब्राह्मणः । सामान्यतो देवानां सृष्टिश्चान्यत्र दर्शितैवेति अत्र तेषा-मनुवादमात्रम् । अथवा प्राशाप्राशन्यायेन देवसृष्टिरत्रेष्यतां नाम । वर्णसृष्टेश्च मनुष्यसृष्टचैव प्राप्तत्वान्न सा पृथगत्रेष्यते । सत्वादिगुणन्यूनाधिकभावश्च तत्कार्यभूतैः शमदमसूक्ष्मबुद्ध्यादिभि ज्ञातुं शक्यते । ब्राह्मणादिवर्णानां ये स्वाभाविकाः शमादयो गुणाः तत्कारणत्वं सत्वादिगुणानामस्तीति गीताशाङ्करभाष्येऽप्युक्तम् । तथाहि ब्राह्मण-स्वभावस्य सत्वगुणः प्रभवः कारणम् । तथा क्षत्रिय-स्वभावस्य सत्वोपसर्जनं रजः प्रभवः । वैश्यस्वभावस्य तम उपसर्जनं रजः प्रभवः । शूद्रस्वभावस्य रज उपसर्जनं तमः प्रभवः । प्रशान्त्यैश्वर्येहामूढतास्वभावदर्शनाच्चतुर्णाम् । ( १८.४१ ) इति । अत्र ब्राह्मणस्वभावस्य इत्यादौ स्वभावो लक्षणं शमादिगुण-समुदायः । तस्य कारणं सत्त्वादि-कमित्यर्थः । दृश्यते खलु चतुर्णां भ्रातृणां मध्येऽपि कस्मिंश्चित्पुरुषविशेषे शमादिगुणसमुदायः तदन्यस्मिन् शौर्यधैर्यपराक्रमादिसमुदायः, इतरत्र च कृषिवाणिज्यादि-स्वभावः, कुत्र चित्सेवादिशीलता बुद्धिमान्द्यादिकं च । शमादिगुण समुदायादिमन्तश्च यथाक्रमं ब्राह्मण-क्षत्रियादयो भवन्ति । चातुर्वर्ण्यं मया सृष्टं गुणकर्मविभागशः (४.१३) इति गीतावाक्य शाङ्कर भाष्येऽपि सत्वादिगुणन्यूनाधिकभावेनैव चातुवर्ण्यविभागः कृतः इत्युक्तम् । तद्यथा गुणकर्म-विभागशः = गुणविभागशः कर्मविभागशश्च । गुणाः सत्वरजस्तमांसि । तत्र सात्विकस्य सत्वप्रधानस्य ब्राह्मणस्य शमादयस्तप इत्यादीनि कर्माणी"ति । वस्तुतस्त्वत्र शमदमाद्यात्म-गुणेषु कृतिविषयत्वाभावेन कर्मत्वासम्भवात् गुणाः सत्वादिकार्यभूताः शमादयो ग्राह्याः । कर्माणि च शमादिगुणवत्पुरुषैः सहजतो वृत्यर्थं क्रियमाणानि अध्यापनादीनि ग्राह्याणि । शमादिगुणवन्तो हि पुरुषाः सहजतोऽध्यापनादिभिरेव स्वजीविकां निर्वर्तयन्ति न तु युद्धादिभिः, शौर्यधैर्यादिगुणवन्तश्च युद्धशासनव्यवस्थापनादिकर्मभिः स्वजीविकां निर्वर्तयन्ति न त्वध्यापनादिभिर्नापि वाणिज्यादिभिः । एवं कृषिवाणिज्यादि शीलाश्च कृष्यादिभिः परिचर्यादिशीलाश्च परिचर्यादिभिः रागतो जीविकां वर्तयन्ति । शीलं च गुण एव । एतादृशैर्गुणैः कर्मभिश्च भगवता श्रुतिविहितकर्मापेक्षितं चातुवर्ण्यं सृष्टमित्यर्थः । ब्राह्म-णादिवर्णानुद्दिश्य खलु वेदैः कर्माणि पृथक्-पृथक् विधीयन्ते । तत्र के ब्राह्मणा क्षत्रिया-दयश्चेति जिज्ञासायां दर्शितशमादिगुणवन्तोऽध्यापनादिकर्माणश्च ब्राह्मणादिवर्णत्वेन ग्राह्या इत्यभिप्रायः । तत्र जातिप्रथावादिमते मया सृष्टमित्यत्र भगवतो न साक्षात्कर्तृत्वं [illegible] हेतुकर्तृत्वमेव । ईश्वरेच्छां विना कस्यापि कार्यस्यानिर्वर्तनात् । सृष्टमिति पदस्यापि [illegible]मित्यर्थो वक्तव्यः । एतादृशार्थाश्रयणस्यायमभिप्रायः । साक्षाद्भगवता कृता-जाति [illegible]तद्विभागो वा मनुष्यैः रागतः परिवर्तयितुं न शक्यते । तद्यथा नरगोमहिषादिजाति-[illegible]गधता कृता सा च न नरैः परिवर्तयितुं शक्यते । न हि नरः पशुरूपेण गौः महिष-[illegible]ण महिषो वा गोरूपेण परिवर्तयितुं तथा वक्तुं वा शक्यते । न हि समानजातौ कृतः [illegible]विभागः पुरुषैरन्यथा कर्तुं तथा वक्तुं वा शक्यते । न हि स्त्री स्वात्मानं पुरुषं पुरुषो

वा स्वात्मानं स्त्रियं वक्तुं शक्नुयात् । मनुष्यजात्यन्तर्गतानां ब्राह्मणादि वर्णानां जातित्वेन क्रुतो विभागश्च पुराणादिषु लोके च बहुधा परिवर्तितो दृश्यते । विश्वामित्रवीतहव्यादयः क्षत्रियाः ब्राह्मणाः कृताः । कर्णः स्वात्मानं ब्राह्मणमुक्त्वा परशुरामाच्छस्त्रविद्यामवाप । पाण्डवाः विराटनगरेऽक्षत्रियरूपेण स्वात्मानं गोपयित्वा कञ्चित्कालमूषुः । एतादृशपरिवर्तनं च पुरुषकृतविभागस्यैव संभवति न त्वीश्वरकृतस्य । मनुष्यैः कृतो राजा प्रधानमन्त्री वा समयान्तरे अराजा भृत्योऽपि वा कर्तुं शक्यते स स्वयं वा राजत्वादिकं त्यक्तुं शक्नुयात् । एवं मनुष्यकृतः प्रान्तमण्डलाद्यन्तर्गत-भूविभागः समयान्तरे तदन्यप्रान्तमण्डलान्तर्गतत्वेनापि विभज्यते । एतादृश-परिवर्तनप्रसङ्गवारणार्थमेव वेदानामपौरुषेयत्वमङ्गीकृतम् । तदुक्तं वाचस्पतिमिश्रेण "परमात्मनो नित्यस्य वेदानां योनेरपि न तेषु स्वातन्त्र्यम् । पूर्वसर्गानुसारेण तादृशतादृशानुपूर्वीविरचनात् । तथाहि यागादिब्रह्महत्यादयोऽर्थानर्थहेतवो ब्रह्मविवर्ता अपि न सर्गान्तरे विपरीयन्ते । न हि जातु क्वचित्सर्गे ब्रह्महत्याऽर्थहेतुः अनर्थहेतुश्चाश्वमेधो भवति, अग्निर्वा क्लेदयति आपो वा दहन्ति, तद्वत् यथाऽत्रसर्गे नियतानुपूर्व्यं वेदाध्ययनमभ्युदयनिःश्रेयसहेतुरन्यथा तदेव वाग्वज्रतयाऽनर्थहेतुः । एवं सर्गान्तरेष्वपीति, तदनुरोधात्सर्वज्ञोऽपि सर्वशक्तरपि पूर्वपूर्वसर्गानुसारेण वेदान् विरचयन्न स्वतन्त्रः ( ब्र० सू० १.१.३ ) इति । वर्णाश्रमविभागश्चाद्यतनः परस्परं विपरिवर्तमानो दृश्यते । तस्मात् ब्रह्माख्येन ऋत्विजा पुरुषेणादौ स वर्णविभागः कृतो न त्वीश्वरेण । पित्रादिभिरपि स्वपुत्रादिभ्यः स्वसम्पत् दायभागत्वेन विभज्य दीयमाना तथाविभज्य दीयते यथा तेष्वन्यतमः पुत्रः निजसम्पदं व्ययीकृत्य संवर्धितसम्पदा भ्रात्रा सह पुनर्विभागाय विवादं कर्तुं न शक्नुयात् । राजकीयनियमानुसारेण प्रतिपुत्रदायभागविवरणं सम्यग्लिलिख्य पञ्जीकृत्य पिता स्वपुत्रेभ्यः स्वसम्पदं विभजति येनाग्रे पुनर्विभागविवादो न स्यात् । यदा चैवं पित्रादिकृतसम्पद्विभागाऽपि अन्यतमपुत्रेच्छया परिवर्तयितुं न शक्यते तदा ईश्वर कृतश्चेद्वर्णविभागः कथं परिवर्तयितुं शक्येत । परिवर्त्यते च लोके । तस्मान्नेश्वरकृतो वर्णानां जातित्वेन विभागः । अस्मदिष्टवर्णपक्षे च सज्जनत्वादिवत् सात्विकराजसादिपुरुषवच्च तेष मीश्वरेणैव सृष्टत्वात् चातुर्वर्ण्यं मया सृष्टमित्यत्र मयेति सृष्टमिति च मुख्यार्थकमेव । ईश्वरानुग्रहेणैव एकस्मिन् पुरुषे सज्जनत्वं तदनुग्रहाभावेन तद्भ्रातर्यैव दुर्जनत्वं च यथा तिष्ठति, तथा ब्राह्मणत्व क्षत्रियत्वादिकमपि भगवदनुग्रहतदभाववशादेककुटुम्बान्तर्गत भ्रातृष्वपि तिष्ठेदेव । गुणकर्मनिमित्तकः स विभागः पश्चात्कालक्रमेण कलियुगे जातिरूपेणा[illegible]कृतो नियतव्यवस्थया उच्चनीचादिकर्मप्रवृत्तिसिद्ध्यर्थम् ।

[illegible]नन्तरं करिष्यमाणः स गुणकर्मकृतविभाग एवात्राप्युपनिषदि भाविनी [illegible] सृष्टिशब्देन दर्शितः । अपौरुषेये वेदे पूर्ववृत्तान्त प्रदर्शनस्यासम्भवात् । मासा[illegible] इति, "प्रजापतिर्वा इदमग्र आसीत्, सोऽकामयत, ततः संवत्सरमसृजत, तत ऋतून-



सृजत ततो मासानर्धमासानहोरात्राण्युषसोऽसृजत" ( जै० उप० ब्रा० १५.१.३ ) इत्युक्तम् । एवं "विष्णुक्रमै वै प्रजापतिरहरसृजत वात्सप्रेण रात्रिम् । विष्णुक्रमै वै प्रजापतिः पूर्वपक्षानसृजत वात्सप्रेणापरपक्षान्, विष्णुक्रमैर्वै प्रजापतिरर्धमासानसृजत वात्सप्रेण संवत्सरम्" ( काण्वशत ब्रा० ८.७.४.७ ) इति च । अत्र सर्वत्र सृजतिर्विभागपरैव न तु सर्जनपरा । दिनपक्षमासर्तुसंवत्सरात्मके कालेऽखण्डे विभागव्यतिरेकेण सृष्टेरसंभवात् । एवं "तच्छ्रेयोरूपमसृजत क्षत्रं···स विशमसृजत···स शौद्रं वर्णमसृजत" इत्यादावपि सृजतिर्विभागपरैव नृजात्यवान्तरविभागात्मकस्य वर्णचतुष्टयस्य मानवसृष्टिव्यतिरेकेण सृष्ट्यन्तरासंभवात् । मानवसृष्टिश्च सामान्यतो योनिजा पूर्वमुक्तैव ।

महादुराग्रहेणात्र पूर्वकाण्डेषु विश्रुता । सृष्टिरेव तवेष्टा चेत्तदाऽन्यानेष्यते कथम् ॥५३६॥
शुक्लकृष्णप्रभेदेन विद्यमानयजुश्रुतौ । तद्ब्राह्मणेषु सर्वत्र सृष्टिर्नानाविधेष्यते ॥५३७॥
एकयाऽस्तुवत स्रष्टा सृष्ट्यादावसृजत्प्रजाः । तिसृभिर्ब्राह्मणं सृष्ट्वा भूतसृष्टिं च पञ्चभिः ॥५३८॥
सप्तभिश्च स सप्तर्षीन् नवभिस्तु पितॄंस्तथा । ऋतून सृष्ट्वैकादशभिर्मासान् त्र्यधिकया ततः।५३९
क्षत्रियं पञ्चदशभिः स सप्तदशभिः पशून् । एकोनविंशतिद्वारा शूद्रार्यौ सृष्टवानिति ॥५४०॥

वेदों के पूर्वकाण्डों में मुखादि से सुनी हुई वर्ण सृष्टि को ही पूर्वपक्षी ( जातिवादी ) महादुराग्रह से यदि मानता है तो उन्हीं पूवकाण्डों में दूसरे प्रकरण में दूसरे प्रकार से लिखी हुई वर्ण सृष्टि को क्यों न मानता ? शुक्लयजुर्वेद और कृष्णयजुर्वेद की संहिताओं और ब्राह्मगग्रन्थों में नाना प्रकार की सृष्टि लिखी हुई। कृष्णयजुर्वेद के चतुर्थकाण्ड तृतीय प्रपाठक में सृष्टि इस प्रकार की है कि प्रजापति ने एक बार स्तुति करके प्रजा को सृष्टि की थी तीन बार स्तुति करके ब्राह्मण को पाँच बार स्तुति करके भूतों की सात बार स्तुति करके सप्तर्षियों की नौ बार स्तुति करके पितरों की, ग्यारह बार स्तुति करके ऋतुओं की तेरह बार स्तुति करके मासों को पन्द्रह बार स्तुति करके क्षत्रिय को सत्रह बार स्तुति करके पशुओं की, और उन्नीस बार स्तुति करके शूद्र और वैश्य की सृष्टि की थी ।

"एकया ऽस्तुवतेति" एकयाऽस्तुवत प्रजा अधीयन्त ( उदपाद्यन्त ) प्रजापतिरधिपतिरासीत् । तिसृभिरस्तुवत ब्रह्मासृज्यत ( ब्राह्मणोऽसृज्यत ) ब्रह्मणस्पतिरधिपतिरासीत् । पञ्चभिरस्तुवत भूतान्यसृज्यत भूतानां पतिरधिपतिरासीत् । सप्तभिरस्तुवत सप्तर्षयोऽसृज्यन्त धाताऽधिपतिरासीत, नवभिरस्तुवत पितरोऽसृज्यन्तादितिरधिपत्न्यासीत्, एकादशभिरस्तुवतर्तवोऽसृज्यन्त आर्तवोऽधिपतिरासीत्, त्रयोदशभिरस्तुवत मासा असृज्यन्त संवत्सरोऽधिपतिरासीत्, पञ्चदशभिरस्तुवत क्षत्रमसृज्यतेन्द्रोऽधिपतिरासीत्, सप्तदशभिरस्तुवत पशवोऽसृज्यन्त बृहस्पतिरधिपतिरासीत्, नवदशभिरस्तुवत" शूद्रार्यावसृज्येता-

महोरात्रे अधिपत्नी आस्ताम् ।" ( तै० सं० ४.३.१० ) इत्यादिनापि वर्णानां सृष्टिरुक्ता । एवमेव काण्वसंहितायां पञ्चदशाध्याये माध्यन्दिनसंहितायां चतुर्दशाध्याये शतपथब्राह्मणे च ( ८.२.६ ) तेषां सृष्टिरुक्ता ।

तथैव चक्षुषा सृष्टौ द्योरादित्यश्च कर्णतः । दिशश्च चन्द्रमाः सृष्टा इत्यादौ सायणेन तु ॥५४१॥
ध्येयं सृष्टाविति प्रोक्तं वारणार्थमसङ्गतेः । तादृक् प्रमेयविज्ञानवतो महामनीषिणः ॥५४२॥
मते मुखादितो वर्णसृष्टिः स्यात्सङ्गता कथम् । तस्माद्ध्येयमितीहापि वर्णोत्पत्तौ प्रभाषयेत्॥५४३
क्वचिद्ब्रह्ममुखादुक्ता सा गायत्रीवसन्तयोः । त्रिवृद्रथन्तरादीनामुत्पत्तिरिह चान्यथा ॥५४४॥
वसन्तादेव गायत्री ततस्त्रिवृद्रथन्तरम् । समुत्पन्नमिति प्रोक्तं किमत्र परिगृह्यताम् ॥५४५॥
एवं बाहूरुपादेभ्यो येषां येन क्रमेण तत् । जन्म प्रदर्शितं चात्र विपरीतं श्रुतं श्रुतौ ॥५४६॥
तत्रासङ्गति भीत्यैषामुत्पत्तिश्चेदसम्मता । तदन्तर्गतवर्णानां सम्मता सा कथं भवेत् ॥५४७॥

ऐसा ही नेत्र से द्युलोक और आदित्य, और कान से दिशायें और चन्द्रमा पैदा हुए इस अर्थवाले ऐतरेयारण्यक का अर्थ, सायण ने पैदा हुए ऐसा चिन्तन करना चाहिये लिखा है। वहाँ उत्पत्ति असङ्गत होने से उन्होंने ऐसा लिखा था तो क्या मुखादि से ब्राह्मणादि वर्ण सृष्टि सङ्गत होगी ? अतः यहाँ भी ध्येय ऐसा कहना होगा ।

"चक्षुषेति" "चक्षुषा सृष्टौ द्योश्चादित्यश्च श्रोत्रेण सृष्टा दिशश्च चन्द्रमाश्च ( ऐ. आरण्यक २.१.७ ) इति । एतद्वाक्यभाष्ये सायणेन सृष्टाविति ध्येयमित्युक्तम् । चक्षुरादि-द्वारा द्युलोकादीनामुत्पत्तेरसङ्गतत्वेन यथा ध्येयमित्युक्तं तथा मुखादितो वर्णोत्पत्तेरप्यसङ्गतत्वेन ध्येयमित्यत्रापि वक्तव्यम् । तथाविधध्यानस्य प्रयोजनं चेदमेव यदहं ज्ञानाश्रयीभूतमुखादितो जात इति ध्याने सति ब्राह्मणादीनां स्वकीयं मुखवीर्यत्वादिकमुद्बुद्धं भवेत् ।

कहीं गायत्री वसन्त त्रिवृत् औ रथन्तर की उत्पत्ति प्रजापत मुख से कहीं गयी, यहाँ "अयं पुरो भुव इस अनुवाक में वसन्त उससे गायत्री से रथन्तर साम की उत्पत्ति बतायी गयी तो इनमें कौन प्रमाण माना जाय ? कौन नहीं ? ऐसा ही भुजाओं से दूसरे जगह में त्रिष्टुप् ग्रीष्म और पञ्चदश स्तोम की उत्पत्ति कही गयी और यहाँ तो मन से ग्रीष्मर्तुः ग्रीष्म से त्रिष्टुप् और परम्परया त्रिष्टुप् से पञ्चदश की उत्पत्ति बतायी गई है । एवं दूसरे प्रकरण में ऊरुओं से वर्षा ऋतु जगती और सप्तदश स्तोम का जन्म कहा गया है । यहाँ तो नेत्र से वर्षा ऋतुः उससे जगतीछन्द और जगती से परम्परया सप्तदश का जन्म, तथा अन्यत्र पादों से शरदृतु शरदृत से अनुष्टुप् छन्द और एकविंशस्तोम का जन्म कहा गया और यहाँ सुब से श्रोत्र उससे



शरदृतु, शरदृतु से अनुष्टु छन्द और अनुष्टुप् से एकविंशस्तोम का जन्म : जब मुखादि से वसन्तादि ऋतुओं का जन्म असङ्गत होने से माना नहीं जाता है तो उन्हीं के बीच में कही गया वर्णों का जन्म कैसा माना जायगा ?

क्वचित्सृष्टि निविदद्वारा चोपयड्भिः क्वचित्पुरा । प्रजापतिस्तपस्तप्त्वा सर्वमप्यसृजज्जगत्५४८
उपांशुपात्रमेवानु प्रजायन्ते ह्यजास्त्वथ । अवयोऽन्तर्यामिपात्रमनु जायन्त इत्यपि ॥५४९॥
मनुष्यास्तु प्रजायन्ते शुक्रपात्रमनु क्रमात् । ऋतपात्रं त्वेकशफाः क्वचिदग्निमनुप्रजाः ॥५५०॥
प्रजापतिः पशूनात्म प्राणेभ्योऽश्वं च चक्षुषा । पुरुषं मनसः प्राणाद्गां वाचोऽग्निमविं पुनः५५१॥
श्रोत्रान्निरमिमीतेति काण्वे शतपथे श्रुतम् । पुरुषं प्रथमाहुत्या ससर्जाश्वं द्वितीयया ॥५५२॥
गां च तृतीययोत्पाद्य निर्ममेऽविं चतुर्थया । प्रजां पञ्चमया धाता सृष्टवानित्यपि श्रुतम् ॥५५३॥
लोकेशो दशरात्रेग प्रजा निर्मितवानिति । द्वादशाहाङ्गभूतेन दशरात्रेण कुत्रचित् ॥५५४॥
प्रजापतिःप्रजाकामो जनयामास ऋत्विजः । अश्वो भूत्वा प्रजाःसर्वाःसोऽस्राक्षीदित्यपि क्वचित्
यथाऽग्नेः व्युच्चरन्त्यत्र विस्फुलिङ्गास्तथैव । एतस्मादात्मनः सर्वे जीवा देवादयोऽभवन्॥५५६

कहीं निविद् द्वारा कहीं उपयड् द्वारा वेद में सृष्टि लिखित है ॥ उपांशुपात्र के पीछे बकरियाँ अन्तर्यामिपात्र के पीछे भेड़ और शुक्रपात्र के पीछे मनुष्य पैदा हुए और अग्नि के पीछे प्रजा उत्पन्न हुई कहा गया है। प्रजापति ने ऊपर के प्राणों से देवताओं और नीचे के प्राणों से मनुष्यों की सृष्टि की थी । वह अपने प्राणों से पशुओं को, नेत्र से अश्व को मनसे पुरुषों को प्राण से गाय को और वाक से बकरों को श्रोत्र से भेड़ को भी पैदा किया था । ब्रह्मा प्रथमाहुति से पुरुष को दूसरी से अश्व को तीसरी से भेड़ और चौथी से बकरी को पैदा किया था । कहीं ऐसा भी कहा गया है कि प्रजापति दशरात्र से प्रजा को पैदा किया था और दूसरे जगह में कहा गया कि द्वादशाहाङ्गभूत दशरात्र से प्रजापनि पहले ऋत्विजों को पैदा किया । वह अश्व होकर प्रजा को उत्पन्न किया । और तीसरे प्रकरण में जैसा आग से विस्फुलिंग चारों ओर से निकलते हैं वैसा ही परमात्मा से सब जीव और देवगण निकले हैं ।

निविद्द्वारा सृष्टिर्यथा "द्वादश पदा वा एषा निविदेतां निविदंव्याहरत्, तां सर्वाणि भूतान्यन्वसृज्यन्त ( ऐ० ब्रा० ३.१० ) इति । उपयड्भिरिति । "यज्ञेन वै प्रजापतिः प्रजाः असृजत, ता उपयड्भिरेवासृजत" ( तै० सं० ३.४.१ ) इति । उपांशुपात्रमेवान्वजाः प्रजायन्ते, अन्तर्यामिपात्रमेवान्ववयः प्रजायन्ते, शुक्रपात्रमेवानु मनुष्याः प्रजायन्ते, ऋतुपात्रमेवान्वेकशफाः प्रजायन्ते" ( शत० ब्रा० ४.५ ) इति । प्रजापतिरग्निमसृजत, त प्रजा अन्वसृज्यन्त ( तै० ब्रा० २.१.२ ) इति । "अग्निं ह वै जायमानमनु प्रजापतेः

प्रजा जज्ञिरे तथो एवैतस्याग्निमेव जायमानमनु प्रजा जायन्ते" (शत० ब्रा० २.४,२.१९) इति । "प्रजापतिः पशूनिति ' सः ( प्रजापतिः ) प्राणेभ्य एवाधि पशून्निरमिमीत, पुरुषं चक्षुषोऽश्वं प्राणाद्गां श्रोत्रादविं वाचोऽजम् ( काण्वशत० ब्रा० ९.५.१.६ ) इति । पुरुषं प्रथमाहुत्येति" । तस्या आहुत्यै पुरुषमसृजत, द्वितीयमजुहोत् सोऽश्वमसृजत, तृतीयमजुहोत् स गामसृजत, चतुर्थमजुहोत् सोऽविमसृजत, पञ्चममजुहोत् सोऽजामसृजत" ( तै० ब्रा० २.१.२ ) इति । एतद्वाक्यस्य सायणभाष्यमित्थं वर्तते "प्रजापतिस्तस्मिन्ने वाग्नौ पूर्वोक्तेन घृतेन स्वाहाकारेण यामाहुतिं प्रथममजुहोत् तदाहुतिसामर्थ्येन पुरुषमसृजत । तथा द्वितीयाद्याहुतिभिरश्वादीनसृजत" इति । लोकेश इति "प्रजापतिरकामयत प्रजायेयेति स एतं दशरात्रमपश्यत्तदजुहोत् तेन दशरात्रेण प्राजायत" (तै० सं० ७.२.५) इति । एवं "अवान्तरं वै दशरात्रेण प्रजापतिः प्रजा असृजत यद्दशरात्रो भवति प्रजा एव तद्यजमानः सृजते" ( तै० सं० ७.४.५ ) इति च । एषु सर्वेषु वाक्येषु परस्परविलक्षणा सृष्टिरुक्ता । अतः सा न विवक्षिता । प्रजापतिः रिति, प्रजापतिरकामयत बहु स्यां प्रजायेयेति स आत्मन्नृत्व्यमपश्यत्तत ऋत्विजोऽसृजत, यद्दत्व्यादसृजत तद्दत्विजामृत्विक्त्वं ( ता० ब्रा० १०.३.१ ) अस्येदं तात्पर्यं यत्प्रजापतिः ऋत्विक्सहयोगेन करणीयं द्वादशाहमेकेन कर्तुं अयुक्तमिति दर्शयितुं ऋत्विग्लक्षणमन्विष्य तदनुसारेण ऋत्विजो वव्रे येन अग्रे जना अप्येवमेव करिष्यन्तीति । अतः ऋत्विजां सृष्टिरत्र सुतरामविवक्षितैव । अन्यथा परमते ऋत्विक्त्वमपि ब्राह्मणत्वादिकमिव जन्मसिद्धा जातिः स्यात् । लोके च परैरपि नैतदिष्यते । अपि च ताण्ड्ये श्रूयते "अश्वो वै भूत्वा प्रजापतिः प्रजा असृजत स प्राजायत बहुरभवत्प्रजायते बहुर्भवत्यश्वेन तुष्टुवानः" ( ता० ब्रा० ११.८ ) इति । अस्याप्यर्थवादत्वेन सृष्टौ तात्पर्यं नास्ति । अन्यथा कारणस्याश्वत्वेन सर्वासां प्रजानामश्वत्वापत्तेः । अथर्वणवेदे चेत्थमभिहितम् "स वै वायोरजायत, तस्माद्वायुरजायत, स वै ऋग्भ्योऽजायत, तस्मादृचोऽजायन्त, स वै यज्ञादजायत, तस्माद्यज्ञोऽजायत", ( क० १३.४-११ ) इति । तत्रैव तृतीयकाण्डे "पुमान् पुंसः प्ररिजातोऽश्वत्थः खादिरादधि" ( ३.२.१ ) इत्युक्तम् । अत्र "पुमानश्वत्थवृक्षः पुंसः खादिरादुत्पन्न" इति सायणभाष्यम् ॥" यथाऽग्नेः व्युच्चरन्तीति "यथाऽग्नेः क्षुद्रा विस्फुलिङ्गा व्युच्चरन्त्येवमेवास्मादात्मनः सर्वे प्राणा लोकाः सर्वे देवाः सर्वाणि भूतानि सर्व एत आत्मनो व्युच्चरन्ति" इत्युक्तम् । एवमन्यत्रापि प्रकारान्तरेणाविवक्षिता वर्णसृष्टिरुक्ता । तद्यथा—

ऋग्भ्यो जातो वैश्यवर्णः क्षत्रियो यजुषस्तथा । ब्राह्मणः सामतश्चेति श्रूयते तैत्तिरीयके॥५५७॥
अत्रावशिष्टवर्णस्य जन्माथर्वणवेदतः । प्रोक्तमित्येव मन्तव्यं वर्णवेदप्रसङ्गतः ॥ ५५८ ॥

ऋग्वेद से वैश्यवर्ण यजुर्वेद से क्षत्रियवर्ण और सामवेद से ब्राह्मण वर्ण उत्पन्न हुए । चार वेद हैं और वर्ण भी चार हैं उनमें तीन वेदों से तीन



वर्ण का जन्म हुआ कहने पर चौथा वेद से चौथा वर्ण का जन्म भी अर्थात् कथित प्राय हो जाता है ।

"ऋग्भ्यो जातं वैश्यं वर्णमाहुः यजुर्वेदं क्षत्रियस्याहुर्योनिम् सामवेदो ब्राह्मणानां प्रसूतिः पूर्वे पूर्वेभ्यो वच एतदूचुः" ( तै० ब्रा० ३.१२.९ ) इति । वेदत्रयाद्वर्णत्रयस्योत्पत्तौ प्रोक्तायां चतुर्थवेदाच्चतुर्थवर्णस्य शूद्रस्यो त्पत्तिरुक्तप्राया भवति ।

अग्नेर्ब्राह्मणवर्णत्वं वायोर्वैश्यत्वमेव च । क्षत्रियत्वं रवेरुक्तं तत्पौत्रेषु कुतो न तत् ॥५५९॥
यद्यत्राग्न्यादिदेवेभ्यो ऋग्वेदादिसमुद्भवः । ऋगादिवेदतश्चापि यदि वैश्यादिसंभवः ॥५६०॥
यथार्थश्चेत्तदा युष्मत्सिद्धान्तोऽपि चभज्यते । जातिवादं कथं कुर्या वेदशास्त्रविरोधतः ॥५६१
निःश्वासात्मकता तस्मात्तेषां सत्या श्रुतौ श्रुता । अन्यत्सर्वमर्थवाद इति त्वया यथेष्यते॥५६२॥
तथाऽनुमानमानानुगृहीतश्रुतिदर्शिता । मैथुनसृष्टिरेवादौ सत्याऽन्या त्वविवक्षिता ॥ ५६२ ॥

श्रौतार्थवादों से आग ब्राह्मण, वायु ( मरुत् ) वैश्य और सूर्य क्षत्रिय मालूम पड़ते हैं किन्तु उनके पौत्रों में वे वर्ण नहीं यदि अग्नि आदिदेवताओं से ऋग्वेदादि की उत्पत्ति और ऋग्वेदादि से वैश्यादि वर्णों की उत्पत्ति सत्य होती तो तुम्हारा सिद्धान्त का भंग हो जाता है अतः जैसे तुम वेदों की उत्पत्ति परमात्मा के निःश्वास से मानकर अन्य अन्य वेदोत्पत्ति वाक्यों को अर्थवाद मानते हो वैसा हो हम श्रुतिप्रोक्त और अनुमान प्रमाणसिद्ध योनिज सृष्टि को मानकर दूसरे प्रकार को सृष्टि को अर्थवाद मानते हैं ।

अग्नेरिति, अथर्ववेदे श्रूयते "अयं वा अग्निर्ब्रह्मासावादित्यः क्षत्रम्,' ( १५ काण्डे ) इति । नन्वस्तु सृष्टिबोधकवाक्यानां सर्वेषामेकवाक्यता, एवं च तेषां परस्पर विरोध एव न स्यादिति चेदुच्यते ।

न [illegible] शक्यते वक्तुं स्तुत्वाऽसावेकया ततः । दशरात्रादिकं कृत्वा तेभ्यः शक्तिमवाप्य च॥५६३॥
[illegible]होममनुष्ठाय प्रजाकामः प्रजापतिः । ब्राह्मणादीन् मुखादिभ्यः कृतादौ सृष्टवानिति ॥५६४॥
[illegible] प्रकथने यस्मात्प्रजोत्पादककर्मणाम् । अङ्गाङ्गित्वप्रसङ्गेन कर्मैकत्वं प्रसज्यते ॥५६५॥
[illegible]विधिस्थानामफलानां तदङ्गता । नान्यप्रकरणस्थानां पृथक् फलवतां तथा ॥५६६॥
[illegible] शक्यते वक्तुं सर्वेषामेकवाक्यता । एकस्य सत्यताऽन्येषामर्थवादत्वसम्भवे ॥५६७॥
[illegible]ोक्ता सृष्टिश्चापि त्वयेष्यते । तदा वेदादितो वर्णसृष्टिः कुतो न गृह्यते ॥५६८॥
[illegible] प्राथम्यं ब्राह्मणस्यतृतीयता । गम्यते प्रथमाद्वेदात्तृतीयाच्च तयोर्जनेः ॥५६९॥
[illegible] नैव स्वीकर्तुं शक्यते यतः । ब्राह्मणस्यैव प्राथम्यं सर्वत्र श्रुतिसम्मतम्॥५७०॥

[illegible]वादी के द्वारा ऐसा कहा नहीं जा सकता कि प्रजापति ने एक [illegible] और पांच वार पहले स्तुति किया और दशरात्रादि याग

करके उससे आत्मबल का सम्पादन भी करके अग्निष्टोमानुष्ठान के बाद उसने अपने मुखादि से ब्राह्मणादि वर्णों को सृष्टि की थी। क्योंकि ऐसा कहने पर सृष्टि हेतु कर्मों और स्तोत्रों का परस्पर अङ्गाङ्गिभाव हो जायगा ओर वे सब एक ही कर्म हो जायगे। यह तो मोमांसाशास्त्र सम्मत भी नहीं है। कर्मों में अङ्गाङ्गिभाव होने में जो नियम है वह अग्रिम श्लोकों से कहा जाता है। सफल कर्मों के प्रकरण में पठित अफलकर्म सफलकर्मों के अङ्ग होते हैं न कि भिन्न प्रकरण में पठित और सफलकर्म। ऐसे कर्म किसी के अङ्ग न ही होते किन्तु वे स्वतन्त्र ही हैं। अतः उन सब की एकवाक्यता नहीं हो सकती इसलिये एक सृष्टिवाक्य सत्यार्थक और अन्य सब अर्थवाद ऐसा मानना ही होग। यदि वेदों के पूर्वकाण्ड में भी सृष्टि मानी जातो है तो तोनों वेदों से भी तीन वर्णों का जन्म भी माननोय होगा। उनमें प्रथम वेद से वैश्य और तृतोय वेद से ब्राह्मण उत्पन्न बताया गया है। अतः उसके अनुसार वैश्य प्रथम वर्ण और ब्राह्मण तृतीय वर्ण मालूम पड़ता है। यह तो तुम मान नहीं सकोगे, क्योंकि सब वेदो में ब्राह्मण प्रथम और वैश्य तृतीय वर्ण माने गये हैं।

फलवत्सन्निधाविति। फलवतोर्दर्शपूर्णमासयोः प्रकरणे श्रुतानां प्रयाजानामश्रुतफलानां दर्शपूर्णमासाङ्गत्वमेव न तु ज्योतिष्टोमाद्यङ्गत्वम्। तदुक्तम् "असंयुक्तं प्रकरणादिति कर्तव्यतार्थत्वात्" ( जै० सू० ३.३.११ ) इत्यस्य शाबरभाष्ये।

यदप्यारण्यकेऽवोचत्तैत्तिरीये तु सायणः। श्रुतिस्मृतिपुराणोक्ता विरुद्धाऽपि परस्परम्॥५७१॥
सृष्टिर्वार्तिककारेण समस्ता सन्मतेति च। एकत्र पक्षपातिन्यास्तत्र युक्तेरभावतः॥५७२॥
यथा सर्वानुभूतेषु स्वप्नेष्वनृतवस्तुषु। तद्विनिगमकाभावात्सर्वे तुल्यतया मताः॥५७३॥
तथा श्रुत्यादिषु प्रोक्ता मिथो भिन्ना हि सृष्टयः। ब्रह्मान्यकारणत्वादिवारणार्थाः समा मता॥५७४
श्रुत्युक्ता सृष्टिरेकत्र सत्याऽन्यत्र श्रुता मृषा। स्तावकाद्यर्थवादेश्च प्रोक्तत्वादित्यसद्वचः॥५७५॥
अतोऽत्र कल्पभेदेन सर्वा सृष्टिः सुसङ्गता। परस्परविरुद्धाऽपि समानश्रुतिबोधनात्॥५७६॥
इति सायणभाष्याभिप्रायस्योत्तरमुच्यते। येन स्यादुपपन्नैव सृष्टिः श्रुतौ विवक्षिता॥५७७॥

सायण ने तैत्तिरीयारण्यकभाष्य में कहा है कि श्रुति स्मृति और पुराणों में कही गयी सृष्टि परस्पर विरुद्ध है तो भी वार्तिकार के द्वारा वह सब मानी गयी है। एक प्रकार की सृष्टि प्रमाणिक और दूसरी अप्रामाणिक इसमें विनिगमक युक्ति नहीं है। जैसे स्वप्नों में किसी का स्वप्न सत्य और दूसरा का स्वप्न मिथ्या इसमें कोई विनिगमक न होने से स्वप्न सब समान माने जाते हैं। वैसा श्रुत्यादि में कही गयी भिन्न भिन्न



प्रकार की सृष्टि भी ब्रह्म से भिन्न जगत्कारण का अभावसिद्ध करने के वास्ते मानी जाती है। अर्थवादवाक्यों के द्वारा बतायी गयी कुछ सृष्टि सत्य और कुछ सृष्टि असत्य कहना भी ठीक नहीं, इस सायणभाष्य का ऐसा उत्तर नीचे दिया जाता है जिससे उपपत्ति युक्त ही सृष्टि मानी जाय।

तैत्तिरीयारण्यकस्य द्वितीयभागभाष्ये सायणेनोक्तम् "श्रुतिस्मृतिपुराणागमेषु परस्परविरोधेन बहुधा प्रतिपादिता सृष्टिः सर्वाऽपि वार्तिकारैरङ्गीकृता" यया-यया भवेत्पुंसां व्युत्पत्तिः प्रत्यगात्मनि। सा चैव प्रक्रियेह स्यात्साध्वी सा चानवस्थिता" न बहुभिर्दृष्टेषु बहुविधस्वप्नेषु कश्चिदेवाङ्गीकार्यो न त्वितरे इति नियमोऽस्तीत्यलमतिप्रसङ्गेन इति। तदुत्तरमुच्यते एवमित्यादिना।

एवं वार्तिककारोक्त न्यायेन श्रुतिसंहतेः। परस्परविरुद्धाऽपि सृष्टिः सत्या कुतोऽमता॥५७८॥
व्याहतोक्ति निरुक्तत्वाच्छ्रुते र्नानाविधा जनिः। नेष्टा चेज्जगत्सृष्टिः कथं तादृगिहेष्यते॥५७९॥
तस्माद्युक्त्युपपन्नैव वेदानां जगतोऽपि च। उत्पत्तिरिष्यते त्वैका तदन्या चाविवक्षिता॥५८०॥

उस प्रकार वार्तिककार के मत के अनुसार वेदों की सब भो उत्पत्तियाँ मानी जा सकती थी किन्तु उन्होंने ऐसा नहीं माना है। परस्पर विरुद्ध होने से सायण ने वेदों को उत्पत्ति ही नहीं माना है तो उस प्रकार को सृष्टिः जगत की कैसे मानी जायेगी। अतः युक्ति-युक्त सृष्टि ही वेद और जगत की मानी जाती और उससे अतिरिक्त सृष्टि सब अविवक्षित है।

सूर्याचन्द्रमसौ धाता यथापूर्वमकल्पयत्। दिवं च पृथिवीं चेति श्रुतिरत्र नियामिका॥५८१॥
रागद्वेषनिवृत्त्यर्थं प्रतिकल्पमपीश्वरः। जगत्सर्वं सृजेदेकक्रमेणेवेह नान्यथा॥ ५८२॥
अस्मिन् सुरेश्वराचार्यैं बृहदारण्यवार्तिके। चतुर्थब्राह्मणे चाद्ये चाध्याये त्विदमीरितम्॥५८३॥
प्रक्रियानियमो नास्ति पुंव्युत्पत्तिप्रधानतः। प्रतिश्रुतिविगीतिश्च प्रक्रियाणां समीक्ष्यते॥५८४॥
तत्रानन्दगिरेस्टीका तत्तात्पर्यं व्यनक्ति च। परस्परविरुद्धत्वात्सृष्टिः श्रुत्यविवक्षिता॥५८५॥
यया यया भवेत्पुंसां व्युत्पत्तिः प्रत्यगात्मनि। सा चैव प्रक्रियेह स्यात्साध्वी सा चानवस्थिता॥५८६
उत्पत्तिस्थितिहानीनां न क्वचित्संभवो यथा। मुख्यां वृत्तिं समाश्रित्य तथोदर्केऽपि वक्ष्यते॥५८७
कारणव्यतिरेकेण कार्यस्थितेरसंभवात्। ब्रह्मणोऽस्तित्वसिद्ध्यर्थं जगज्जन्म प्रदर्शितम्॥५८८॥
यदेवमुच्यतेऽस्माभिस्तत्सृष्टिः परमार्थतः। गौडपादाद्युक्तरीत्या न यद्यप्युपपद्यते॥५८९॥
तथापि यादृशीं सत्तामाश्रित्य व्यावहारिकीम्। मानमेयादिसिद्धान्ताः प्रवर्तन्ते समास्वपि॥५९०
तयैव सत्तया सृष्टिस्तादृशीहापि चेष्यते। विरुद्धाऽनुपपन्ना तु त्याज्या सर्वश्रुतीरिता॥५९१॥
यथैवाचरितं शिष्टैर्धर्म्यमद्यापि मानवाः। आचरन्ति न चाधर्म्यं तथा श्रुत्युक्तसृष्टयः॥५९२॥

ब्रह्मा हर एक कल्प में एक ही प्रकार से सूर्य चन्द्र स्वर्ग और भूमि आदि को उत्पादन करता है। भिन्न-भिन्न कल्प में भिन्न-भिन्न प्रकार को

सृष्टि के मानने पर तन्निर्माता ईश्वर में रागद्वेषादि की आपत्ति आजाती है। अत उस आपत्ति को हटाने के लिये उक्त श्रुतिप्रमाण से एक ही प्रकार की सृष्टि प्रतिकल्प में माननी होगी। बृहदारण्य के प्रथमाध्यायचतुर्थ ब्राह्मण के भाष्य वार्तिक मे सुरेश्वराचार्य का कहना भी इतना ही है कि सृष्टि प्रकरणों में सर्वत्र परस्पर विरोध होने के कारण सृष्टि की विवक्षा नहीं है। अतः सृज्यमान-पदार्थों की संख्या का अन्वेषण करना ठीक नहीं। सृष्टि का प्रदर्शन केवल कारण ज्ञान के लिये ही है। आनन्द गिरि ने भी सृष्टि में परस्पर विरोध होना ही उसकी अविवक्षा में कारण बताया था। उस विषय में हमारा कहना यह है कि गौडपादादिमत के अनुसार यद्यपि वस्तुतः सृष्टि नहीं है तो भी जिस व्यावहारिक सत्ता के द्वारा मान-मेयादि व्यवहार लोक में प्रसिद्ध हैं उसी सत्ता से सृष्टि भी माननीय है, जहाँ तक परस्पर विरोध और अनुपपत्ति न हो। जैसे शिष्टाचार सर्वमान्य होने पर भी शिष्ट लोगों के द्वारा किया हुआ सब कुछ मान्य नहीं वैसा ही कुछ श्रौतार्थवादवाक्यों का यथा श्रुतार्थ ग्राह्य होने पर भी सब अर्थवादों का यथा श्रुतार्थ ग्राह्य नहीं किन्तु उनका तात्पर्य सम्भवदर्थान्तर में ही है।

सूर्याचन्द्रमसाविति, ऋग्वेदे दशम मण्डले श्रूयते "सूर्याचन्द्रमसौ धाता यथापूर्वमकल्पयत्। दिवं च पृथिवीं चान्तरिक्षमथो स्वः" ( अ० १२.१९१ ) इति। पूर्वकल्पे सूर्यचन्द्रादीनामुत्पत्ति-स्थितिप्रलयादिकार्याणि यादृशान्यासन् तादृशान्येव वर्तमानकल्पेऽपि तेषां आसन्। एवमग्रिमकल्पेऽपि भविष्यन्ति। परस्पर-विरुद्ध-नानासृष्ट्याद्यङ्गीकारे तत्कर्तरि रागद्वेषाद्यापत्तेः। नहीश्वरे तदङ्गीकर्तुं युक्तम्। तस्यानीश्वरत्वापत्तेः। ईश्वरे रागद्वेषादिवारणार्थमेव शारीरकभाष्ये आचार्यैः छान्दोग्ये श्रूयमाणं तेजसः प्राथम्यमविवक्षितमित्यङ्गीकृत्य तैत्तिरीयोपनिषच्छ्रुत-सृष्टिवाक्यैकवाक्यत्वमुक्तं न तु कल्पभेदमाश्रित्य विरोधः परिहृतः। गौडपादेति, गौडपादाचार्यैरुक्तम् "न निरोधो न चोत्पत्तिर्न बद्धो न च साधकः न मुमुक्षुर्न वै मुक्त इत्येषा परमार्थता" ( मा० का० ३२ ) इति। परमार्थतः उत्पत्तिप्रलययोरभावेऽपि लोकदृष्ट्या तौ स्यातामेव। अत एवोक्तम्" देहात्मप्रत्ययो यद्वत्प्रमाणत्वेन कल्पितः। लौकिकं तद्वदेवेदं प्रमाणं त्वात्मनिश्चयात्" ( ब्रह्मसूत्रभाष्ये १.१.४ ) इति। शिष्टैरिति, कीदृशः शिष्टाचारः प्रमाणमित्यत्र कुमारिलेनोच्यते "लोके हि कश्चिदाचारः शिष्टत्वेन विशिष्यते। कश्चित्तु प्राणिसामान्य-प्राप्तस्तैरपि सङ्गतः तत्र यः कार्यरूपेण शिष्टानेवानुवर्तते। स एव केवलो धर्मो नेतरः प्राणिमात्रगः॥ दृष्टकारणहीनानि यानि कर्माणि साधुभिः प्रयुक्तानि प्रतीयेरन् धर्मत्वेनेह तान्यपि। शरीरस्थितये यानि सुखार्थं वा प्रयुञ्जते। अर्थार्थं वा न तेष्वस्ति शिष्टानामेव धर्मधीः" ( तन्त्रवार्तिके १.३.७ ) इति। एवं श्रौतार्थवादानां यथाश्रुतार्थः सर्वो न ग्राह्यः किन्तु विवक्षितार्थ



एव। तद्यथा "ग्रहं सम्मार्ष्टीत्यत्र ग्रहशब्देन ग्रहत्वमेकत्वं च प्रतीयते शक्त्या, तथापि तत्रैकत्वमविवक्षितम्। अत एव सर्वेषु ग्रहेषु सम्मार्जनं भवति। एवमसङ्गतसृष्टिगाथास्वपि वेदस्य विवक्षा नास्त्येव। यदि श्रुत्युक्तो यथाश्रुतार्थः सर्वोऽपि विवक्षितत्वेन गृह्येत तर्हि अर्थवादाधिकरणं तत्सिद्धिपेटिका च व्यर्थैव स्यात्। ननु किमर्थमसत्याः गाथाः प्रमाणभूते वेदे श्रूयन्ते इत्युक्तौ तस्योत्तरमुच्यते।

वैधकर्मप्रवृत्त्यर्थं निषिद्धेभ्यो निवृत्तये। श्रुतिष्वनुपपन्ना हि श्रूयन्तेऽपि मृषा कथाः ॥५९३॥
मुख्यप्राणप्रशंसार्थं तदुपास्तिविधौ यथा। श्रौतो वागाद्रियाणां मृषैव कलहो मतः ॥ ५९४ ॥
सायं प्रातर्विधेयाग्नि-होत्रे यथाऽग्निसूर्ययोः। अन्योन्यस्मिन् प्रवेशोऽपिमिथ्याभूतःप्रदर्शितः५९५
नहि श्रुतिवचोबद्धश्रद्धादरबुधैरिह। सत्यता शक्यते तेषां प्रवक्तुं चतुरैरपि ॥ ५९६ ॥
तथैवोच्चावचश्रौत-कर्मस्तुत्यर्थमागमैः। मिथ्याभूतजगत्सृष्टिगाथाश्चापि प्रदर्शिताः ॥५९७॥

विधिविहित कर्मों में प्रवृत्ति और निषिद्ध कर्मो से निवृत्ति करवाने के लिये वेदों में असत्यगाथायें बतायी गयी हैं। जैसे मुख्य-प्राणोपासनाप्रकरणमें प्रशंसा के लिये वागादीन्द्रियों का असत्य कलह दिखाया गया और प्रातरग्निहोत्र प्रकरण में अग्नि का सूर्य में और सायमग्निहोत्र प्रकरण में सूर्य का अग्नि में असत्य प्रवेश बताया गया था, वैसा ही विहित और निषिद्ध कर्मों में स्तुति और निन्दा बताने के अभिप्राय से असत्य सृष्टि गाथायें भी वेदों में प्रदर्शित की गयीं हैं।

मुख्यप्राणेति, बृहदारण्यके श्रूयते "ते हेमे प्राणा अहं श्रेयसे विवदमाना ब्रह्म जग्मुस्तद्धोचुः को नो वसिष्ठ इति।" तद्धोवाच यस्मिन्व उत्क्रान्त इदं शरीरं पापीयो मन्यते स वो वसिष्ठ इति ( ६. १. ७. ) इत्यादिकम्। तदीयशाङ्कर भाष्येऽपि तत्कलहस्यासत्यत्वं स्पष्टमुक्तम्। तद्यथा "अयं च प्राणसंवादः कल्पितो विदुषः श्रेष्ठत्वपरीक्षण प्रकारोपदेशः। न ह्यन्यथा संहत्यकारिणां सतामेषामञ्जसैव संवत्सरमात्रमेव एकैकस्य निर्गमनाद्युपपद्यते" ( ६. १. १३ ) इति। सायं प्रातरिति। असंसृष्टहोम प्रकारणे हि सायमग्निहोत्रमन्त्रः "अग्निर्ज्योतिर्ज्योतिरग्निः स्वाहे"ति। तत्रैव सूर्यदेवतापरित्यागार्थमर्थवादः श्रूयते" अग्निं वावादित्यः सायं प्रविशति। तस्मादग्निर्दूरान्नक्तं ददृशे। उभे हि तेजसी सम्पद्येते ( तै० ब्रा० २. १. ३. ९ ) इति। तत्रैव प्रातर्होममन्त्रश्च "सूर्यो ज्योतिर्ज्योतिः सूर्यः स्वाहेति।" तत्राग्निदेवतापरित्यागार्थमर्थवादः श्रूयते "उद्यन्तं वावादित्यमग्निरनुसमारोहति, तस्माद्धूम एवाग्नेर्दिवा ददृशे नार्चिः" इति। संसृष्टहोमप्रकरणे चोभयोरग्निसूर्ययोरुभयत्र देवतात्वमुक्तम्। तदेतत्सर्वं तैत्तिरीयादिब्राह्मणबोधायनादिभीनसूत्रेषु स्पष्टम्। तत्र सायं प्रातः कालीनासंसृष्टहोम-सन्निधौ अग्निसूर्ययोः यः परस्पर प्रवेश उक्तः स मिथ्याभूत एव। एवमेव सृष्टिगाथा अपि मिथ्याभूता वेदेषु

श्रूयन्ते । तासां सत्यत्वं कथमपि वक्तुं न शक्यते । ननु तैत्तिरीयसंहितादिषु प्रतिपादिता ब्राह्मणादिवर्णानां ब्रह्ममुखादित उत्पत्तिः, तत्रत्य-त्रिवृत्स्तोम गायत्र्याद्युत्पत्तिरिवाविवक्षिताऽस्तु । ऋग्यजुरथर्ववेदगतेषु पुरुषसूक्तेषु केवल ब्राह्मणादीनामेव मुखादित उत्पत्तिः श्रूयते न त्रिवृदादिवेदभागानाम् । अतः पुंसूक्तोक्तवर्णोत्पत्तिः सत्या भवत्विति चेदुच्यते ।

सुस्पष्टशब्दसंप्रोक्तो मुखादेर्वर्णसंभवः । अविवक्षित इत्युक्ते तदाधारेण कुत्रचित् ॥ ५९८ ॥
पुंसूक्तेष्वपि सर्वेषु मुखाद्यङ्गसमुद्भवः । तदर्थकपदाभावान्नैव कल्पयितुं क्षमः ॥ ५९९ ॥
एतेन सर्ववेदस्थतत्सूक्तार्थविलेखने । सायणेन यदुक्तं तत्सम्यगत्र समाहितम् ॥ ६०० ॥
पुरुषं हि स्तुवानेषु सर्ववेदगतेष्वपि । सूक्तेषु सायणश्चातुर्वर्ण्यजन्मोक्तवान् हठात् ॥६०१॥
तत्रास्यहस्तकम्पोऽभून्मुखाद्युत्पत्तिवर्णने । अतोऽसौ तैत्तिरीयोक्तामुत्पत्तिं शरणं ययौ ॥६०२॥
यतो हि प्रश्नवाक्येषु तथैवोत्तरवाक्ष्वपि । उत्पत्तिबाधकः शब्दस्तत्र क्वापि न विद्यते ॥६०३॥
ततोऽसौ तैत्तिरीयोक्तस्पष्टोत्पत्तिप्रमाणतः । तत्प्रश्नोत्तरवाक्यानामुत्पत्तिपरतां जगौ ॥६०४॥
स्पष्टोत्पत्त्यर्थिका वाचो भ्रष्टस्वार्था भवन्ति चेत् । तदाधारेण चान्यासामुत्पत्त्यर्थकता कुतः ॥६०५॥
यच्चान्ते श्रूयते पद्भ्यां शूद्रश्चाजायतेति तत् । प्रश्नानुसारतो नेयं न प्रश्नस्तूत्तरानुगः ॥६०६॥
लोके प्रश्नानुसारेण सर्वत्रोत्तरमुच्यते । न क्वाप्युत्तरवाक्यानु-सारं प्रश्नार्थं उच्यते ॥६०७॥
अन्यथा पृष्टमन्यच्च प्रोक्तमन्यत्तदुत्तरम् । इत्यापतेत्तदुन्मत्तप्रलापित्वप्रसूचकम् ॥ ६०८ ॥
नह्याम्रान् बालिशाः पृष्टाः कोविदारान् प्रचक्षते । यद्याचष्टेकश्चिदेवं स चोपेक्ष्येत लौकिकैः ॥६०९

प्रजापति मुखादि से स्पष्ट शब्दों से कही गयी वर्णोत्पत्ति अविवक्षित सिद्ध हो गयी तो उसके आधार से पुरुष सूक्तों में जहाँ उत्पत्ति बोधक पद हो नहीं, वर्णोत्पत्ति की कल्पना नहीं हो सकती । इससे सायण ने उन सूक्तों के भाष्य में वर्णोत्पत्ति समर्थक बातें जितने कहीं थी उन सबका यहाँ उत्तर हो जाता है । जब तैत्तिरीयसप्तमकाण्डस्थ वर्णोत्पत्ति बोधक पदों का भी उत्पत्ति में तात्पर्य नहीं है तो उनके बल से दूसरे प्रकरण में उत्पत्ति का वर्णन कैसा होगा । उन सूक्तों मे उत्तर वाक्यों के अन्त में पादों से शूद्र पैदा हुआ ऐसा जो स्पष्ट लिखा गया था उसका भी प्रश्नानुसार अर्थ करने पर उत्पत्ति सिद्ध नहीं होती । सर्वत्र लोक में प्रश्नानुसार ही उत्तर वाक्य का अर्थ बताया जाता है न कि उत्तर वाक्यानुसार प्रश्न वाक्य का अर्थ । ऐसा न करने पर यह आपत्ति होगी कि पूछा कुछ और बताया और कुछ यह तो पागल पन का सूचक है । आम कैसा है ऐसा पूछने पर मूर्ख भी कोविदार का आकार बताता नहीं । ऐसा बताने पर वह पागल समझा जायगा ।

शरणं ययाविति । "ब्राह्मणोऽस्य मुखमासीदित्यादि वाक्यानां भाष्ये सायणेनेत्थमुक्तम्" इयं च मुखादिभ्यो ब्राह्मणादीनामुत्पत्तिः तैत्तरीय सप्तमकाण्डे "स मुखतस्त्रिवृतं निरमिमीत" इत्यादौ स्पष्टमाम्नाता । अतः प्रश्नोत्तरे उभे अपि तत्परत्वेन योजनीये" इति ।

अप्रश्नपूर्वकेषूक्तसमुत्तरवचस्स्वपि । नापृष्टो न्यायतो ब्रूयादिति प्रश्नस्तु कल्प्यते ॥६१०॥
तत्रापि कल्पितप्रश्नवचनार्थानुसारतः । अर्थश्चोत्तरवाक्यानां वर्ण्यते पण्डितोत्तमैः ॥६११॥
तस्मादद्वैतसिद्धयादावखण्डार्थविनिर्णये । प्रश्नो ब्रह्मस्वरूपं किमित्यादिस्तु प्रकल्पितः ॥६१२॥
तस्य ब्रह्मस्वरूपैकविषयत्वात्तदुत्तरम् । सत्यं ज्ञानमनन्तं च ब्रह्मेत्यादीति दर्शितम् ॥६१३॥
कल्पितप्रश्नवाक्यस्थसमुत्तरगिरामपि । मर्यादैतादृशी चेत्सा कुतः संसिद्धयोर्नहि ॥ ६१४ ॥

जिस प्रकरण में प्रश्न नहीं किन्तु उत्तर वाक्य ही दीखते हैं वहाँ भी "नापृष्टो ब्रूयादिति न्याय से प्रश्न को कल्पना की जाती है और वहाँ भी कल्पित प्रश्न वाक्यार्थ के अनुसार ही उत्तर वाक्य का अर्थ बताया जाता है । अतएव अद्वैत सिद्धि आदि में अखण्डार्थ का निरूपण करते समय मधुसूदन सरस्वती ने कहा था कि "सत्यं ज्ञानमनन्तं ब्रह्म" इति वाक्य के पहले "ब्रह्म-स्वरूप कैसा है यह प्रश्नः कल्पित किया जाता है । और वह प्रश्न ब्रह्मस्वरूपमात्रविषयक होनेसे उत्तर वाक्य का भी तात्पर्य ब्रह्मस्वरूप मात्र में ही है न कि सत्यत्वादिविशिष्ट में । जब कल्पित प्रश्न वाक्यस्थलीय उत्तरों की मर्यादा ऐसी है तो स्वतः सिद्ध प्रश्नोत्तरवाक्यों में वह क्यों न रहेगी ?

तस्मादद्वैतसिद्धयादाविति, तत्र द्वितीयपरिच्छेदेऽखण्डार्थे प्रमाणप्रदर्शनप्रसङ्गे एवमुक्तम् "सत्यादिवाक्यं ब्रह्मप्रातिपदिकार्थनिष्ठं तन्मात्रप्रश्नोत्तरत्वात् प्रकृष्टप्रकाशश्चन्द्र इत्यादिवाक्यवदिति पदार्थविषयाखण्डार्थत्वानुमानम् । तत्त्वमस्यादिवाक्यमात्मस्वरूपमात्रनिष्ठं तन्मात्रप्रश्नोत्तरत्वात् सोऽयमित्यादिवाक्यवदिति वाक्यार्थविषयाखण्डार्थत्वानुमानम् । न च सत्यादिवाक्ये तन्मात्रप्रश्नोत्तरत्वमसिद्धम् । ब्रह्मविदाप्नोति परमिति ब्रह्मवेदनस्यैवेष्टसाधनतया तन्मात्र एव बुभुत्सातः तन्मात्रस्यैव प्रश्नविषयत्वादि"ति अत्र सर्वत्र "नापृष्टो ब्रूययादिति न्यायेन प्रश्नः कल्प्यते । एवं च लौकिकवैदिकोत्तरवाक्यानां कल्पितप्रश्नार्थानुसारेणैवार्थवर्णनस्य न्यायसम्मतत्वे "ब्राह्मणोऽस्य मुखमासीद्बाहू राजन्यः कृतः। ऊरू तदस्य यद्वैश्यः पद्भ्यां शूद्रो अजायतेत्युत्तरवाक्यानामपि, मुखंकिमस्य कौ बाहू कावूरू पादावुच्येते इति प्रश्नमात्रनिवर्तकार्थवर्णनं युक्तम् । अन्यथा प्रश्नप्रतिवचनयोर्वैयधिकरण्यापत्तेः । नन्वत्रै" चन्द्रमा मनसो जातश्चक्षोः सूर्योऽजयत इत्यादिवाक्येषु चन्द्राद्युत्पत्तेः स्पष्टतः प्रतीयमानत्वात् तत्पूर्वतनवाक्यैरपि वर्णोत्पत्तिरेव गम्यत इति वक्तव्यम् । तथा च प्रकरणप्रतीतवर्णोत्पत्तेरेवोत्तरवाक्यैरुक्तत्वात्कुतो वैयधिकरण्यमिति चेदुच्यते ।

तेषां पुरुषसूक्तानां पूर्वकाण्डेष्ववस्थितेः । अर्थवादत्वमेवेष्टं न तूत्पत्त्यर्थता मता ॥ ६१५ ॥
यजे पुरुषमेधाख्ये स्तावकत्वेन तिष्ठतां । विधित्वाभावतश्चार्थवादत्वमुपपद्यते ॥ ६१६ ॥
स्तावकत्वप्रकारश्च प्रोक्तः शतपथद्वये । इत्थमसीत्यादिवाक्यैः पुंस्वरूपप्रदर्शकः ॥ ६१७ ॥

यथा त्वं स्वमुखाद्यङ्गस्थानीयब्रह्मणादिकः। इत्युक्ते स्यात्स्वरूपस्य प्रशंसात्मकवर्णनम् ॥६१८॥
न तथा स्वमुखाद्यङ्गसञ्जातब्राह्मणादिकः। स्वकीयोर्वादिसञ्जातवैश्यादिरिति वर्णने॥६१९॥
तस्मात्पुरुषसूक्तेषु चन्द्रार्कादिदिवौकसाम्। नोत्पत्तिरिष्यते वेद तात्पर्यार्थज्ञकोविदैः ॥६२०॥

पुरुष सूक्त सब, वेदों के पूर्वकाण्डों में रहते हैं। अतः वे जगदुत्पत्ति बोधक नहीं किन्तु यज्ञपुरुष की स्तुति करने वाले अर्थवाद हैं। उस स्तुति का प्रकार काण्व और माध्यन्दिन शतपथब्राह्मणों में "इत्थमसीत्थमसीत्यादि शब्दों के द्वारा दिखाया गया है। आप स्वमुखादिस्थानीय ब्राह्मणादिवर्ण वाले हैं कहने पर निज स्वरूप का जैसा वर्णन होता है, वैसा आप स्वमुखादि से उत्पन्न ब्राह्मणादि वर्ण वाले हैं करने पर वह नहीं होता हैं।

इत्थमसीत्यादि, शतपथब्राह्मणद्वये श्रूयते "पुरुषो ह नारायणोऽकामयत् अतितिष्ठेयं सर्वाणि भूतानि अहमेवेदं सर्वं स्यामिति, स एतं पुरुषमेधं पञ्चरात्रं यज्ञक्रतुमपश्यत् तमहरत् तेनायजत तेनेष्ट्वा अत्यतिष्ठत् सर्वाणि भूतानि इदं सर्वंमभवत्, अतितिष्ठति सर्वाणि भूतानि इदं सर्वं भवति य एवं विद्वान् पुरुषमेधेन यजते यो वा एतदेवं वेद, तस्य त्रयोविंशति दीक्षाः द्वादशोपसदः पञ्चसुत्याः स एष चत्वारिंशद्रात्रः, चत्वारिंशदक्षरा विराट् तद्विराजमभिसम्पद्यते ततो विराडजायत विराजोऽधिपूरुषः इत्येषा वै सा विराट् एतस्या एवैतद्विराजो यज्ञं पुरुषं जनयति" (१३।४।१) अत्र सायणभाष्यमित्थं वर्तते। ततो विराडजायत विराजो अधिपुरुष इति मन्त्रेणापि विराडुपासनं पुरुषमेधे दर्शितमिति मन्त्रोपादानम्। एषा वै सा विराडिति या मन्त्रे विराडुक्ता एषैव सा आधियज्ञकी विराट् एतस्या एव च विराजः सकाशात् यज्ञं यज्ञाभिमानिनं पुरुषं नारायणं जनयति यजमान इति ब्रुवन् एतन्मन्त्रार्थं दर्शयति। यस्तु पौराणिकदृश्यो मन्त्रार्थः ततो हिरण्यगर्भाद्विराट् त्रैलोक्यशरीरः अजयत विराजोऽपि सकाशात् तच्छरीरार्धयुगलरूपः स्वायंभुवमनुः सर्वस्य जातिपिण्डसर्गस्य प्रथमोऽजायतेति। स तु ज्ञातत्वात् नात्राख्यातः नपि प्रतिषिद्धः" इति। अग्रे पुरुषमेधाख्ये कर्मणि विधयः श्रूयन्ते "ब्रह्मणे ब्राह्मणमालभते क्षत्राय राजन्यं मरुद्भ्यो वैश्यं तपसे शूद्रम्" इत्यादयः। तादृशस्य पुरुषमेधाख्यकर्मणः स्तुत्यार्थं पुरुषसूक्तं प्रवर्तते। तदुक्तं तत्रैव ब्राह्मणे "नियुक्तान् पुरुषपशून् ब्रह्मा (ब्रह्माख्य ऋत्विक्) दक्षिणतः पुरुषेण नारायणेन (पुरुषसूक्तेन) अभिष्टौति "सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपादि" त्यनेन षोडशर्चेन षोडशकलं वा इदं सर्वं पुरुषमेधः सर्वस्याप्त्यै सर्वस्यावरुध्यै। इत्थमसीत्थमसीत्युपस्तौत्येवैनमेतन्महयत्यैव। अथ यथेष तथैवैनमेतदाह तत्पर्यग्निकृताः पशवो बभूवुः असञ्ज्ञप्ताः" इति। नियुक्तान् पुरुषान् ब्राह्मणादीन् नारायणेन पुरुषाः स्तोतुं शक्यन्ते। कथम् सहस्रशीर्षा पुरुष इत्यनेन नारायणेन सूक्तेन पुरुषपशवोऽभिष्टोतुं शक्यन्ते? उच्यते। नारायण एतेन सूक्तेन साक्षात्स्तूयते सर्वभावाय



अवयवशः। तत्र च पुरुषपशूनां तादात्म्यं गम्यते। पुरुष एवेदंग् सर्वं, पशूंग् स्तांग् श्चक्रे, ब्राह्मणोऽस्य मुखमासीत् "इत्यादिवचनैः। ततश्चानेन सूक्तेन नारायणाभिष्टवद्वारेणैव तदात्मानः तदभिजना वा पुरुषाः पशवः अभिष्टूयन्ते इत्युपपन्नमेतत्। अन्ये तु मन्यन्ते नारायणार्थं सूक्तमेवेदं नारायणम्। ततश्चायमर्थः "सहस्रशीर्षा पुरुष इत्यनेन सूक्तेन पुरुषेण नारायणेनाभिष्टौति। तत्रापि दर्शने प्रकृतिभूमिमभित एव पुरुषाणामयमभिष्टव इति वाच्यम्। इत्थमसीत्थमसीत्युपस्तौत्येवैनमेतन्महयत्येव तु प्रथमाख्याने समर्थं भवति। इत्थमेवाभिभवसि सहस्रशिराः सहस्राक्षो भवसि, भूमिं सर्वतः स्पृष्ट्वा दशाङ्गुलमतिष्ठसीत्यादि कर्म तत्तदुपन्यस्य स्तौति नारायणमेवत्। एतेन सूक्तेन महयत्येव पूजयति। केन चिद्वृत्तिसामान्येन सिंहो देवदत्त इत्यादिवत् गौणाः सहस्रशीर्षादिशब्दाः प्रयुज्यन्ते इत्यर्थः। एदत्तावत्तार्किकदृष्ट्यनुगतं सूक्तस्य संक्षेपेण व्याख्यानम्। अधुना व्युत्पादनदृष्ट्याऽनुगतमाह यथैवैष इति। परमार्थत एव भगवान्नारायणः "सहस्रशीर्षेत्यादि"। अत्रैतैर्ब्राह्मणवाक्यस्तद्भाष्यवाक्यैश्च यज्ञाख्यपुरुषतादात्म्यमेव नियुक्तानां ब्राह्मणादिपशूनां गम्यते। एतदेव च "ब्राह्मणोऽस्य मुखमासीत्यादि मन्त्रवाक्यैरभिहितं भवति। मुखादित उत्पत्तिपक्षे च विवक्षितं तत्तादात्म्यमनुपपन्नमेव स्यात्।

यदि चोत्पत्तिरेवात्र स्यात्सूक्तेन विवक्षिता। तदा त्वेकैकवर्णस्य साऽप्येकैकाङ्गतः श्रुता ॥६२१॥
बाहुद्वयात्क्षत्रियस्य वैश्यस्योरुद्वयाज्जनिः। पादद्वयाच्च शूद्रस्य किमर्था वा भवेत्कथम् ॥६२२॥
बाहुद्वयादिरूपत्वे नोक्तापत्तिर्भविष्यति। तत्तदङ्गेषु वर्णानां वीर्यवत्त्वमपि स्फुरेत् ॥६२३॥

पुरुष सूक्तों में यदि वर्णों की उत्पत्ति विवक्षित होती तब एकैक अङ्ग से एकैक वर्ण की उत्पत्ति कही होती, दोनों बाहुओं से एक क्षत्रिय की दोनों ऊरुओं से एक वैश्य की और दोनों पादों से एक शूद्र की उत्पत्ति क्यों कही गयी, और दो अङ्गों से एक की उत्पत्ति भी कैसी होगी। ब्राह्मण-क्षत्रियादि-वर्ण विराट् पुरुष के और पुरुषमेध के मुखादिस्वरूप हैं कहने पर कोई आपत्ति नहीं होगी और ब्राह्मणादि चार वर्णोंके यथाक्रम मुखादिचार अङ्गों में वीर्यवत्व भी जो श्रुतिसम्मत है, प्रतीत होगा।

वीर्यवत्वमपीति, चतुर्णां वर्णानां मुखादिषु वीर्यवत्वं च प्रदर्शितमेव ३७८ श्लोके। तदेव हि वीर्यवत्वं द्योतयितुमेष्वेषु पुंसूक्तेषु वर्णानां मुखादि-स्थानीयत्वमुक्तम्। मुखे वीर्यवत्वं ब्राह्मणस्य वर्तते। अतस्तस्य तादृशवीर्याश्रय प्रजापतिमुखरूपत्वमुक्तम्। एवं क्षत्रियादेः बाह्वादिद्वये वीर्यवत्वमस्तीति तस्य बाह्वादिद्वयस्वरूपत्वमुक्तं श्रुत्या। तत्तदङ्गवीर्यवत्वस्य प्रत्यक्षादिगम्यत्वात् तद्द्वारा ब्राह्मणत्वादिकं ज्ञातव्यमिति श्रुत्यभिप्रायः।

ननु स्त्रीपुंसयोर्जन्म तत्तद्वर्णस्य सूचितुम्। बाह्वादिद्वयतो वेदे क्षत्राद्युत्पत्तिरुच्यते ॥६२४॥
तन्न युक्तं मही पद्भ्यामित्यत्र व्यभिचारतः। ब्राह्मणो मुखमस्यासीदित्यत्राव्याप्तिरस्त्यपि॥६२५॥

यहाँ कुछ लोगों का कहना है कि क्षत्रियादिवर्णों के स्त्री और पुरुष इन दोनों की उत्पत्ति के अभिप्राय से बाह्वादिद्वय से क्षत्रियादि की उत्पत्ति श्रुति में कही गयी। किन्तु यह ठीक नहीं, क्यों "पद्भ्यां भूमिर्दिशः श्रोत्रात्" इस वाक्य में पृथिवी एक ही ( स्त्री-पुरुष भेद शून्य ) दोनों पादों से पैदा हुई कही गयी है। अतः यहाँ उत्पत्ति-पक्ष में पूर्वोक्त नियम का व्यभिचार, और ब्राह्मणोऽस्य मुखमासीत् इस वाक्य में एक ही मुख से ब्राह्मण स्त्री-पुरुष दोनों का जन्म मानने पर पूर्वोक्त-नियम का यहाँ अव्याप्ति भी होती है।

अपिचोत्पत्तिरेवात्र सूर्यादेरपि चेन्मता। तत्तदिन्द्रियगोलेभ्यः साऽभविष्यत्प्रदर्शिता ॥६२६॥
पुंसूक्तेष्विन्द्रियेभ्यः सा निश्छिद्रेभ्यो निशम्यते। निरंशेभ्यःश्रुता सृष्टिः कथं सत्या भविष्यति ६२७
चद्रमा मनसो जातश्चक्षोः सूर्यो अजायत। प्राणाद्वायुर्दिश श्रोत्रादिति श्रुतौ खलू च्यते॥ ६२८॥
चक्षुश्श्रोत्र मनांस्यत्र खानीति सर्वसम्मतम्। तद्गोलकानि विद्यन्ते कर्णौ हृदयमक्षिणी ॥६२९॥
तदुक्तमैतरेयस्य स्पष्टमारण्यकेऽपि च। चन्द्रमा हि मनो भूत्वा हृदयं प्राविशल्लये ॥ ६३० ॥
आदित्यस्त्वक्षिणी चक्षुर्भूत्वा श्रोत्रं दिशोऽपि च। कर्णौ तु विविशुर्वायुः प्राणो भूत्वा च नासिके ॥
तत्तत्स्थाने प्रविष्टानां बहिरागमनं पुनः। यदा चिकीर्षितं सृष्टेरादौ प्राण्यनुकम्पया ॥ ६३२ ॥
स्वकीयस्थानतो युक्तं न तु स्वीयस्वरूपतः। न हि स्वरूपतः स्वस्य जन्म केनापि सम्मतम् ।६६३
तस्मात्पुरुषसूक्तेषु युक्ता जनिर्नकस्यचित्। अतो दिग्रवि चन्द्रादेः श्रोत्रचक्षुर्हृदाप्मता ॥६३४॥
वाय्वन्तरिक्षभूम्यादेः प्राणनासिपदात्मता। वक्तव्या मानमेयज्ञैर्न तूत्पत्तिः कदाचन ॥६३५॥
अतस्तद्ब्राह्मणेऽन्यत्र वायुः प्राणेन चक्षुषा। सूर्यः सृष्टश्च श्रोत्रेण दिक् चन्द्रो मनसेति॥६२६॥
इत्येतद्वाक्यभाष्येषु सायणश्चेत्थमब्रवीत्। सृष्ट इत्येव सर्वत्र ध्यातव्यं पण्डितैरिति ॥ ६३७ ॥

और यहाँ सूर्य-चन्द्रादियों की भी उत्पत्ति श्रुति का यदि सम्मत हो तब इन्द्रिय गोलकों से उनकी उत्पत्ति कही होती, किन्तु उन सूक्तों में सर्वत्र निरवयव और निश्छिद्र इन्द्रियों से वह उत्पत्ति कही गयी थी, ऐसी असङ्गत सृष्टि सत्य कैसी होगी। उक्त सूक्तों में मन से चन्द्र की चक्षु से सूर्य की और श्रोत्र ( कान ) से दिशाओं की उत्पत्ति बतायी गयी है। मन चक्षु और श्रोत्रादि तो सबके मत में इन्द्रिय माने गये हैं और उन इन्द्रियों के हृदय अक्षि और कर्ण आदि यथाक्रम गोलक होते हैं। इसलिये ऐतरेय आरण्यक में कहा गया है कि प्रलय काल में चन्द्र ब्रह्मा जो का मन बन कर हृदय में प्रवेष्ट होता है और सूर्य चक्षु बन कर अक्षिगोलकों में और दिक श्रोत्र बनकर कर्णगोलकों में प्रवेश करते हैं। जिस-जिस गोलक में जो-जो प्रविष्ट होते हैं सृष्टिकाल में उनकी उत्पत्ति भी उन्हीं गोलकों से बताना उचित होता है न कि अपने स्वरूप से अपना जन्म अब तक किसी ने माना



नहीं है। अतः पुरुष सूक्तों में किसी का भी जन्म मानना युक्त नहीं होगा। अतः सूर्य, सृष्टि-काल में भी उस विराट् पुरुष का चक्षुस्स्वरूप चन्द्र उसका मनस्वरूप और दिक उसका श्रोत्रस्वरूप होते हैं ऐसा कहना ही उचित होगा न कि तत्तदिन्द्रियों से उत्पन्न कहना, अतएव उसी ब्राह्मण में अन्यत्र उसी प्रकार इन्द्रियों से सूर्यादि की उत्पत्ति बताने वाले वाक्यों के भाष्य में सायण ने ( सृष्टाविति ध्येयम् ) केवल उत्पन्न समझने को कहा था। इससे यही सिद्ध होता है कि चक्षुरादि से सूर्यादि ग्रह उत्पन्न नहीं हुए किन्तु सिर्फ ऐसा चिन्तन करने के वास्ते वैसा कहा गया :

चन्द्रमा मनस इति। "चन्द्रमा मनसो जातश्चक्षोः सूर्यो अजायत मुखादिन्द्रश्चाग्निश्च प्राणाद्वायुरजायत" इत्यादिकं पुरुष सूक्तवाक्यं सर्वैं ज्ञायत एव। तत्र मन आदीनीन्द्रियाणीत्यपि सर्वसम्मतम्। यदि तत्सूक्तेषु सूर्यादीनामुत्पत्तिरिष्टा चेत्तदा अक्ष्यादीन्द्रियगोलकेभ्यः सा दर्शिता स्यात् किन्त्वत्र सा नैवं दर्शिता। तस्मादत्रोत्पत्ति र्न विवक्षिता। "तदुक्तमैतरेयस्येति" वायुः प्राणो भूत्वा नासिके प्राविशत् आदित्यश्चक्षुर्भूत्वाऽक्षिणी प्राविशत् दिशः श्रोत्रं भूत्वा कर्णौ प्राविशन् ओषधिवनस्पतयो लोमानि भूत्वा त्वचं प्राविशन्। चन्द्रमा मनो भूत्वा हृदयं प्राविशत् "( ऐ० आ० १. २. ४. ) इत्यादिकमुक्तम्" "अतस्तद्ब्राह्मणे" इति। "प्राणेन सृष्टावन्तरिक्षं च वायुश्च चक्षुषा सृष्टौ द्यौश्चादित्यश्च श्रोत्रेण सृष्टा दिशश्च, चन्द्रमाश्च मनसा सृष्टा आपश्च वरुणश्च" ( २. १. ७ ) इत्यादि। अत्र सर्वत्र सृष्टाविति ध्येयमिति सायणभाष्यम्। वस्तुतस्तु परतत्वस्याक्ष्यादिगोलकेषु प्रलयकाले सूर्यादीनां प्रवेशः सृष्टिकाले ततो निर्गमनं चार्थवाद एव। यथा मुक्तात्मनः पाञ्चभौतिकशरीरे तत्तन्महाभूतेषु लयं गते सति सः सर्वव्यापक आत्मा स्वरूपेणावतिष्ठते तथा प्रलयेऽपि सूर्यादिमण्डलेषु पृथिव्यादिसहितेषु विशीर्णेषु स सर्वस्वरूपः परमात्मा सर्वव्यापी अवतिष्ठते। यदा च स्रक्ष्यमाणप्राणिभोगवशात् तस्यैव सङ्कल्पो भवेत्तदा स एव सूर्यचन्द्रमण्डलाद्याकारेण परिणमय्य भासते। स च परिणामो विवर्तवादे मिथ्याभूत एव न तु सत्य इति तु परमार्थः। मनुष्यादि-प्राणि-साधारण्येन सूर्यादीनां विराट्पुरुष चक्षुराद्यङ्गतया कल्पना, क्वचित् तदीयाक्ष्यादिगोलकप्रवेशनिर्गमनादिवर्णनं च बालकानां सुबोधायैव। तत्र प्रवेशनिर्गम-बोधक श्रुतिवाक्यानि दर्शितान्येव प्राक्। तदङ्गत्वकल्पना च मुण्डके इत्थं दर्शिता। तथा हि "अग्निर्मूर्धा चक्षुषी चन्द्रसूर्यौ दिशः श्रोत्रे वाग्विवृताश्च वेदाः। वायुः प्राणो हृदयं विश्वमस्य पद्भ्यां पृथिवी ह्येष सर्वभूतान्तरात्मा" ( २. १. ४ ) इति। एतद्वाक्यशाङ्करभाष्ये अग्न्यादीनां मूर्धादिस्वरूपत्वमेव वर्णितम्। तदनुसारेण पद्भ्यामिति प्रथमार्थे पञ्चमी, पादौ पृथिवी पादद्वयस्थानीयेत्यर्थः। अथवा पद्भ्यामिति चतुर्थीद्विवचनम्। पादद्वयाय पृथिवी सम्पन्नेति तदर्थः। एवमेव पुरुषसूक्ते "पद्भ्यां शूद्रो अजायत" इत्यस्याप्यर्थो वर्णनीयः। उत्पत्त्यर्थक

जाधातुयोग एव तदुत्पत्ति-हेतोरपादानसंज्ञा न तु परिणामात्मकजाधातुयोगे । अत एव स राजा जातः सुवर्णं कुण्डलाय जातमित्यादौ न राजादेरपादानसंज्ञा ।

तथैव पुरुषसूक्तेषु चन्द्रसूर्यदिशामपि । जनेरसंभवाज्जात इत्येवं ध्यायतां बुधैः ॥ ६३८ ॥

वैसा ही प्रजापति के इन्द्रियों से सूर्यचन्द्रादियों का जो जन्म पुरुषसूक्तों में बताया गया, वह सम्भव न होने से केवल ऐसा समझने के लिये ही है ।

सहस्रशीर्षापुरुषः सहस्राक्षः सहस्रपात् । इत्युपक्रमवाक्यार्थो यथा स्तुत्यानुसारतः ॥६३९॥
वर्णितोऽनन्तजीवानां शीर्षाण्यक्षीणिचाङ्घ्रयः । ते सर्वेऽपि विराजःस्युः शोर्षण्यक्ष्यङ्घ्रयस्त्विति
तथैवाग्रेऽपि वक्तव्यं स्तोतव्यार्थानुसारतः । लोके प्रदृश्यमानानि महाभूतानि चन्द्रमाः॥६४१॥
सूर्यो द्यौरन्तरिक्षं च तत्तदङ्गानि तस्य हि । विराजःपुरुषस्येति वर्णने सङ्गता स्तुतिः ॥६४२॥
इत्थमसीत्थमस्यादि ब्राह्मणोक्ताऽपि तत्स्तुतिः । सर्वस्वरूपतास्मृत्या न तत्कारणतास्मृतेः ६४३
जगत्प्राणप्रदातारः सूर्यचन्द्रानिलादयः । तस्मात्पूज्या स्ततोप्येतत्सर्वरूपो विशेषतः ॥६४४॥
पूजनीयतमश्चास्ती त्यर्थंलाभोऽत्र गम्यते । सोऽर्थःशतपथाभीष्टो न तद्धेतुत्वबोधकः ॥ ६४५ ॥

सहस्रशीर्षा पुरुष इत्यादि प्रथम वाक्य में जैसा स्तोतव्य अर्थ के अनुसार उस पुरुष का वर्णन किया गया है, वैसा ही आगे के वाक्यों में भी वर्णन होना चाहिये । प्रथम वाक्य में यह कहा गया कि विश्व में रहने वाले अनन्त प्राणि कोटियों के जितने शिर आँखें और पाद हैं, वे सब उस विराट् पुरुष के शिर आँखें और पाद होते हैं । अतः आगे के वाक्यों में कहे हुए महाभूत सूर्यचन्द्रादि और अन्तरिक्षादि भी उस पुरुष के तत्तदङ्ग होते हैं ऐसा ही कहना उचित है और तभी उस पुरुष की स्तुति, ठीक प्रतीत होती है । इत्थमसीत्थमसीत्यादि ब्राह्मण वाक्य से भी यही मालूम पड़ता है कि पुंसूक्त उस पुरुष की सर्वात्मकत्वोपस्थितिद्वारा स्तुति करती है न कि सर्व-कारणत्वोपस्थिति द्वारा । सूर्य चन्द्र और वायु आदि, सब जगत के प्राणाधार होते हैं । अतः ये सब पूजनीय होते हैं और जो पुरुष सूर्यचन्द्रवाय्वादि-स्वरूप है वह पूजनीयतम होता है । यह अर्थ सूर्यादिस्वरूपता मानने पर ही सिद्ध होगा न कि सूर्यादि के कारण मानने पर, यही अर्थ शतपथ का इष्ट है ।

पूज्यानां कारणीभूताः पूज्यपुत्रोऽपि वा क्वचित् । अपूज्योऽपि यथा वेनो रावणश्च यथाक्रमम् ६४६
यस्मात्पूज्यस्वरूपत्वे यादृक् पूज्यत्वसंभवः । न तादृक् पूज्यहेतुत्वे तस्मात्पूज्यस्वरूप्यसौ।६४७।
शब्दसामर्थ्यगम्यार्थमाश्रित्योत्पत्तिवर्णने । श्रुतितात्पर्यगम्यः स परित्यक्तो भविष्यति ।६४८।
लोके वेदे च सर्वत्र तात्पर्यार्थो हि गृह्यतो । लक्षणावृत्तिमाश्रित्य न तु मुख्योऽपि शक्तितः।६४९।
शब्दार्थोऽपि च सूक्तेषु प्रकृतार्थस्य वर्णने । न त्यक्तव्यो भवेत्किन्तु विभक्त्यर्थःक्वचित्क्वचित् ६५०



पूजनीयों का कारण व्यक्ति और पूजनीय से उत्पन्न व्यक्ति कहीं अपूज्य भी होते हैं । जैसे वेन और रावण । राजा वेन, पूजनीय पृथिवीराज का पिता था और वह निन्दनीय व्यक्ति था । एवं निन्दनीय रावण, पूज्य पुलस्त्य ब्रह्मा का पौत्र था । पूज्यों का समुदाय स्वरूप मानने पर जितना पूज्यत्व प्रतीत होगा उतना पूज्यत्व, पूज्यों का कारण मानने पर नहीं होगा । अतः यहाँ वह विराट् पुरुष पूजनीय सूर्यादि स्वरूप माना जाता है न कि सूर्यादि का कारण । शब्दों के वाच्यार्थ को लेकर सूर्यादि की उत्पत्ति मानने पर श्रुति-तात्पर्यार्थ हट जाता है । पौरुषेय और अपौरुषेय ग्रन्थ राशि में सर्वत्र तात्पर्यार्थ ही लक्षणावृत्ति से लिया जाता है न कि वाच्यार्थः । प्रकृतार्थ के वर्णन में ( अर्थात् सूर्यचन्द्रादि विराट् पुरुष के अक्ष्यादि-स्वरूप हैं कहने पर ) शब्दार्थ भी हट जाता नहीं किन्तु कहीं-कहीं विभक्त्यर्थ मात्र ।

अस्तु वा सूर्यचन्द्रादेः शब्दसामर्थ्यबोधिता । सृष्टिर्विवक्षिता किन्तु वर्णसृष्टिर्मुखान्न हि ॥६५१॥
स्याद्वा पुरुषसूक्तं हि सर्वसृष्टिप्रबोधकम् । तथापि वर्णसृष्टिं तु न तद्वक्ति मुखादितः ॥ ६५२ ॥
तदत्र शृणु पुंसूक्तसङ्ग्रहार्थः प्रवक्ष्यते । येन चातुर्वर्ण्यसृष्टिभ्रमस्तव प्रणङ्क्ष्यति ॥ ६५३ ॥

चन्द्र और सूर्यादि की सृष्टि पुरुष सूक्तों के वाच्यार्थ में प्रतीत होती है तो भले ही वह विवक्षित हो और ये पुरुष सूक्त सब, सृष्टि को बताने में ही तत्पर हों तो भी ब्राह्मणादि वर्णोंकी सृष्टि ब्रह्ममुखादि से विवक्षित नहीं है । इस प्रसङ्ग में पुरुष सूक्तों का सङ्ग्रह अर्थ भी आगे बताया जाता है ।

सहस्राक्षादिमानग्रे विराड्रूपोऽभवत्खलु ततोऽधिपुरुषो जातः स कर्मस्वधिकारवान् ॥६५४॥
मर्त्यः कर्माधिकारीति पुरुषत्वेन दर्शितः । शास्त्रस्य च मनुष्याधिकारित्वेन तथा श्रुतम्।६५५॥
श्रौतकर्माधिकारोऽपि जातमात्रस्य नेष्यते । किन्तु गार्हस्थ्यब्राह्मण्यवर्णप्राप्तेरनन्तरम् ।६५६॥
अधिकारी पुमान् क्वापि वर्णशब्देन दर्शितः । क्वचिन्मैत्रायणीयादौ पुरुषाख्येन सूचितः।६५७॥
यत्पुरुषेण हविषा देवा यज्ञमतन्वत । इत्यत्रापि च वर्णात्मा पुरुषो हि विवक्षितः ॥ ६५८ ॥
यज्ञे पुरुषमेधाख्ये पुरुषा ब्राह्मणादयः । पशुत्वेन नियुज्यन्ते मेध्याः सन्त्यपि ते स्वतः ॥६५९॥
तस्मात्पुरुषमेधत्व-व्यपदेशोऽस्य कर्मणः । मेध्यपुरुषसाध्यत्वहेतुनैव समागतः ॥ ६६० ॥
इदं च प्रकृतं सूक्तं स्तावकं चास्य कर्मणः । तस्मात्पुरुषसूक्तत्वमस्यापि व्यपदिश्यते ॥ ६६१ ॥
यत्पुरुषं पुरा साध्या व्यदधुः कतिधा हि तम् । व्यकल्पयन्निती हापि प्रश्नः पुरुषगोचरः ॥६६२॥
तस्य सामान्यप्रश्नस्य चतुर्धा हि व्यकल्पयन् । ब्राह्मणः क्षत्रियो वैश्यः शूद्रश्चेत्युत्तरं ह्यभूत् ६६३
नैव विशेषजिज्ञासा न भवेद्वर्णगोचरी । कस्को मुखादिरूपोऽभूदित्येषा ब्राह्मणादिषु ॥६६४॥
कल्पितादिपक्षेऽपि सामान्यज्ञानसिद्धये । ब्राह्मणादिप्रभेदेन चतुरो हि व्यकल्पयन् ॥ ६६५ ॥
उत्तरं कल्पनीयमन्यथा तेषु को मुखात् । बाह्वादितश्च को जात इति प्रश्नो न संभवेत्॥६६६॥

वह सहस्र नेत्र वाला नारायण विराट पुरुष के रूप में परिणत हो गया और उस विराट् से अधिपुरुष अर्थात् अधिकारी पुरुष उत्पन्न हो गया। यह विषय "सहस्र शीर्षा पुरुषः सहस्राक्षः सहस्रपात्...तस्माद्विराडजायत विराजोऽधिपूरुष" इत्यादि वाक्यों से विदित होता है। शास्त्रस्य मनुष्याधिकारित्वात् ( ब्र० सू० १.३.२५ ) इति सूत्र भाष्यानुसार वेदशास्त्रोक्त कर्मोंमें मनुष्य ही सामान्यतः अधिकारी होता है। उसका वह अधिकार भी बाल्यावस्था में नहीं रहता किन्तु गृहस्थ होकर आधानादिद्वारा ब्राह्मणत्वादि वर्ण प्राप्ति के बाद ही रहेगा। वह कर्माधिकारी पुरुष किसी-किसी ब्राह्मण-ग्रन्थ में वर्ण शब्द से और किसी में पुरुष शब्द से बताया गया है। अत एव यहाँ पुरुषसूक्त में अधिपूरुष:अधिकारी पुरुष कहा गया है। वर्णरूप पुरुष ही सामान्यतः मनुष्य जाति के रूप में पैदा हुआ है। यही अर्थ उस वाक्य में अभिप्रेत है। जिस पुरुष से देवता लोग याग किये थे वह भी वर्णरूपी पुरुष ही है। क्यों? पुरुष मेध में ब्राह्मणादि पुरुषों का आलम्भन ( स्पर्श ) किया जाता है। वे पुरुष मेध्य ( पवित्र ) होते हैं। अतः उस याग का नाम पुरुषमेध पड़ गया था। यह प्रकृत सूक्त भी उसी याग और उन पुरुष पशुओं की स्तुति करता है। अतः इसका नाम पुरषसूक्त पड़ गया था। पहले साध्य-नामक देवता लोग जिस पुरुष को उत्पन्न किया उसको कितने वर्गों में विभक्त किया इस प्रश्न में भी वर्णात्मा पुरुष ही विषय होते हैं। सामान्य रूप से किये गये उस प्रश्न का उत्तर "चार वर्णों में विभक्त किये गये हैं" ऐसा अध्याहृत किया जाता है। नहीं तो आगे इन वर्णों में कौन-कौन मुखादि रूप हो गये हैं ऐसी विशेष जिज्ञासा नहीं हो सकती। जो मुखादि से उत्पत्ति मानते हैं उनके मत में भी सामान्यज्ञान सिद्धि के लिये उस सामान्य प्रश्न का उत्तर भी सामान्य रूप से अध्याहृत किया जाता है। यहाँ वह सामान्य प्रश्न इस प्रकार होगा कि साध्य लोग जिस पुरुष को पैदा किये थे उसे कितने वर्गों में पैदा किये? उसका सामान्य रूप से उत्तर यही है कि ब्राह्मणादि के रूप में पैदा किये। इसके बाद मुखादि से कौन-कौन पैदा हुए यह विशेष जिज्ञासा और आगे उसका उत्तर, मुखादि से उत्पन्न हैं होगा।

पशुत्वेनेति। तत्र पुरुषमेधे खलु ब्राह्मणादयः पुरुषा आलभ्यन्त इति श्रूयेत। तथाहि "ब्रह्मणे ब्राह्मणमालभते, क्षत्राय राजन्यं मरुद्भ्यो वैश्यं तपसे शूद्रम्" ( शतपथे १३.१४.३.१० ) इति। स्तावकमिति—तत्रैव शतपथे इदमप्युक्तं यत् "नियुक्तान् पुरुषान् ब्रह्मा दक्षिणतः पुरुषेण नारायणेन ( सूक्तेन ) अभिष्टौति" सहस्रशीर्षा पुरुष "इत्यनेन षोडशर्चेन, षोडश कलं वा इदं सर्वं पुरुष मेध" इति। वैखानसश्रौतसूत्रे



चेदमुक्तम् "पुरस्तात्प्रतीचीं पुरुषाकृतिं मिनोति, पुरुषशिरोऽस्याः शिरो भवति। सहस्रशीर्षा पुरुष इत्युपहितां पुरुषेण नारायणेन यजमान उपतिष्ठते।" इति एतैर्हेतुभिः यज्ञस्य पुरुषमेधत्वं तत्स्तावकस्य पुरुषसूक्तत्वं च व्यपदिश्यते।

इदमत्र विचार्यं यत्कल्पयतिर्विपूर्वकः। प्रविभागपरोऽत्र स्यादुत्पत्तिपरकोऽस्ति वा ॥६६७॥
विपूर्वकस्य तद्धातोर्विभागार्थोऽत्र सङ्गतः। नोत्पत्त्यर्थो यतस्तत्र विदधातिस्तदर्थकः ॥६६८॥
पुरुषस्य जनिर्ग्राम्यपशूत्पत्त्यैव सिध्यति। तस्मान्नात्र तदुत्पत्तिर्वक्तव्या हि भविष्यति ॥६६९॥
पुमान् ग्राम्य पशुष्वन्तर्गतः श्रुत्यनुसारतः। ऊर्ध्वं ग्राम्यपशुत्वेन जातः सोऽत्राप्यनूद्यते ॥६७०॥
यथा ग्राम्यपशुत्वेन जाताः पूर्वं गवादयः। गवादित्वेन चाप्यग्रे जातत्वेन प्रदर्शिताः ॥ ६७१ ॥

यहाँ विचारणीय विषय यह है कि 'व्यकल्पयन्' इस पदका विभाग अर्थ है या उत्पत्ति? उसका अर्थ यहाँ विभाग ही उचित है न कि उत्पत्ति। क्यों? पूर्व वाक्यस्थ 'व्यदधुः' का अर्थ उत्पत्ति ही है। अतो अतः अग्रिम "व्यकल्पयन्" पद से उत्पत्ति बताने की आवश्यकता नहीं। श्रुति के अनुसार पुरुष भी ग्राम्य पशुओं में अन्तर्गत है और ग्राम्यपशुओं की उत्पत्ति ऊपर कही गयी है। अतः यहाँ "यत्पुरुष व्यदधुः" इस वाक्य से उस पुरुषोत्पत्ति का अनुवाद मात्र किया गया है। जैसे ग्राम्यपशु के रूप में सामान्यतः उत्पन्न गवाश्वादियों की उत्पत्ति विशिष्य अग्रे अनूदित की गयी है वैसा ही पुरुषोत्पत्ति के बारे में भी अनुवादमात्र समझ लेना चाहिए।

ग्राम्यपशुष्वन्तर्गत इति। काण्वशतपथे श्रूयते "पुरुषोऽश्वो गौरविरजो भवन्त्येतावन्तो वै सर्वे पशवः" ( ८. २. १. १४ ) इति। अत एव सायणेन अथर्वणश्रुत्युक्त पुरुषसूक्तभाष्ये "आरण्यान् ग्राम्याश्च ये" इत्यत्र पुरुषोऽपि ग्राम्यपशुत्वेन गृहीतः। तथा हि तदुक्तिः "ये च ग्राम्याः ग्रामोद्भवाः गोऽश्वाजाविपुरुषगर्दभोष्ट्राः" इति। एवमन्यत्रापि "एतावन्तो वै पशवो द्विपादश्च चतुष्पादश्च" ( तै० सं० ५. २. ९ ) इत्युक्तम्। ये द्विपादो मनुष्यादयः ये चतुष्पादो गवादय इति तत्रस्थं भाष्यम्। एवं महाभारतेऽपि मनुष्याणां ग्राम्यपशुत्वमुक्तम्। तद्यथा "गौरजाविमनुष्याश्च अश्वाश्वतर-गर्दभाः। एते ग्राम्याः समाख्याताः पशवः सप्त साधुभिः" ( भीष्म० पं० ४. १८ ) इति। यं पुरुषं साध्याः ग्राम्यपशुत्वेनोदपादयन् तं कतिधा कतिभिः प्रकारैः विभक्तवन्त इति प्रश्नार्थः।

अपि चोत्पत्तिपक्षे हि कर्मत्वेन श्रुतस्य तु। पुरुषस्य परित्यागः स्याच्चाश्रुतपरिग्रहः ॥ ६७२ ॥
यं पुरुषंव्यदधुस्ते कतिधा तं व्यकल्पयन्। कर्मत्वमत्र पुंस्येव सामान्याद्वर्णरूपिणि ॥ ६७३ ॥
मुखमस्य विराजः किमित्यादिप्रश्नगीर्ष्विह। स्थानानुसारतो लिङ्गं निर्दिष्टंवचनान्यपि६७४॥
स्थानं हि मुख्यं स्थानीयाद्वर्णादितोऽत्र किंपदम्। स्थानं ब्रवीति नो वर्णं स्थानीयमित्यपि स्फुटम्॥
तस्माद्व्याकरणे स्थानि-वदादेशो विधीयते। लोके स्थानस्य मुख्यात्वत्तद्वदत्रापि मुख्यता६७६॥

उत्पाद्यस्यैव चोत्पत्तिपक्षे प्रामुख्यमिष्यते। अतस्तदनुसारेण प्रश्ने लिङ्गादि रापतेत् ॥ ६७७॥
बाहू कावित्यमुष्यार्थः को बाहुभ्यां समुद्गतः। मुखं किमिति वाक्यस्य मुखात्को जातइत्यपि६७८
कावूरू पादावित्यस्य क स्कस्ताभ्यामभूदिति। एवं नानाविधापार्थाः कल्पनीयाश्च तन्मते।६७९
अश्रुतार्थान् बह्वपार्थान् प्रकल्प्यात्र श्रुतानपि। स्वार्थं साधयितुं जह्यादत्रोत्पत्तिदुराग्रही ॥६८०॥

यहाँ उत्पत्तिवादी के मत में प्रकृतवाक्य में कर्म जो पुरुष है उस विद्यमान का त्याग और दूसरे को जो यहाँ श्रुत नहीं, कर्म मानना पड़ता है। मुखं किमस्य कौ बाहू कावूरु पादाविति प्रश्न वाक्यों में मुख और बाहू आदि जो स्थान हैं उन्हीं के अनुसार लिङ्ग और वचनों का प्रयोग किया गया है। क्यों ? लोक में स्थानीय की अपेक्षा स्थान मुख्य माना जाता है। अत एव व्याकरण शास्त्र में भी "स्थानिवदादेशोऽनल्विधौ (१.१.५६) इस सूत्र से आदेश में स्थानिवद्भाव का विधान किया गया है। यहाँ यदि वर्णों की उत्पत्ति मानी जायगी तो उस उत्पाद्य वर्णों की ही मुख्यता होगी। अतः उनके अनुसार ही यहाँ प्रश्नों में लिङ्ग और वचनों का प्रयोग होना चाहिये जो यहाँ नहीं। और उत्पत्तिवादी के मत में मुखं किं इसका अर्थ मुख से कौन पैदा हुआ, कौ बाहू कावूरू और (कौ) पादौ इन वाक्यों का अर्थ यथा क्रम भुजाओं से ऊरुओं से और पादों से कौन-कौन पैदा हुए है, ऐसा कहना पड़ेगा। इस प्रकार वर्णोत्पत्तिदुराग्रहो के मत में प्रसिद्धार्थ को छोड़ना और अप्रसिद्धार्थ की कल्पना करनी पड़ती है।

एवमुत्तरवाक्येषु शब्दसामर्थ्यतः श्रुतान्। संत्यज्य चेतरानेव कल्पयेत्स निजेच्छया ॥ ६८१ ॥
ब्राह्मणो मुखमस्यासीद्बाहू च क्षत्रियः कृतः। ऊरू तदस्य यद्वैश्य इत्येषामित्थमाभणेत् ॥६८२॥
ब्राह्मणोऽस्य मुखाज्जातो बाहुभ्यां क्षत्रियो ह्यभूत्। ऊरुभ्यामस्य वैश्योऽभूदितिस्यात्बहुसङ्गतम्
तस्मादेतदनौचित्यबाहुल्यं चात्र पश्यतः। सायणस्य करोऽकम्पदुत्पत्तिपरलेखने ॥ ६८४ ॥
अतोऽसौ तैत्तिरीयोक्तामुत्पत्तिं शरणं गतः। वर्णोत्पत्तिर्हि तत्रापि नास्तीति प्राङ्निरूपितम्६८५
न्यायवादिमते नैवं श्रुतत्यागोऽश्रुताश्रयः। तस्माद्वर्णविभागोऽत्र ज्ञेयो वक्त्रादिरूपतः॥६८६॥

ऐसा ही उत्तर-वाक्यों में भी मुख्य अर्थ छोड़कर वह अन्य अर्थ की कल्पना करेगा कि ब्राह्मण मुख से क्षत्रिय बाहुओं से, और वैश्य ऊरुओं से, पैदा हुए जो उन वाक्यों का अर्थ नहीं। अतः इन सब अनौचित्यों के कारण सायण का, पुरुषसूक्तों में वर्णोत्पत्ति परक अर्थ लिखते समय, हाथ काम्पने लगा। इस लिये वह तैत्तिरीय सप्तम काण्डोक्त वर्णोत्पत्ति को शरण लेकर यहाँ भी वर्णोत्पत्ति बताया था। किन्तु वहाँ तै० ७ काण्ड में भी वर्णों की उत्पत्ति विवक्षित नहीं इस बात को हमने पहले ही (८५ पृ० से ९० पृ० पर्यन्त)



निरूपित कर दिया है। यथार्थ वादी के मत में ऐसी अनुचित बात नहीं रहेगी। अतः यहाँ मुखादि रूप से वर्णों का विभाग ही मानना होगा।

न्यायवादीति, प्रमाणप्रमेयानुसारेण श्रुत्यर्थवादीत्यर्थः। नन्वेनन्मतेऽपि "पद्भ्यां शूद्रो अजायत" इत्यत्र श्रुतहानिरश्रुतकल्पना च स्यातामिति चेदुच्यते पद्भ्यामित्यादिना।

पद्भ्यां शूद्रो ह्यभूदत्र पद्भ्यामिति चतुर्थ्यतः। तद्वाक्यार्थपरित्यागोऽपीह नास्त्येव वस्तुतः६८७
पद्भ्यामित्यस्य पादार्थमित्यर्थः संभविष्यति। अजायतेति शब्दस्य जात इत्यपि साम्प्रतम्६८८॥
एतच्चतुर्थवाक्यस्यमुख्यार्थग्रहणेच्छया। प्राग्वाक्यत्रयमुख्यार्थंत्यक्तुमिच्छति को बुधः॥६८९॥
बुद्धिमानेकमुत्सृज्य बहून् रक्षति यत्नतः। यो विहाय बहूनेकं रक्षयेत्स कथं बुधः॥ ६९० ॥
कारणं जायमानस्य स्यादपादानकारकम्। पञ्चमी च भवेत्तस्मान्न तु जाधातुयोगिनः॥६९१
रामाय मैथिली जाता सेवको जात आत्मने। इत्यादिवाक्यसन्दर्भे यतो दृष्टा न पञ्चमी॥६९२॥
अथवा प्रथमार्थेसा पद्भ्यामित्यत्र पंचमी। घटो जातश्च मृत्पिण्डादिति लोकप्रयोगवत् ॥६९३॥
यथामृत्पिण्डरूपत्वं घटस्येह निगद्यते। तथा विराट्पदात्मत्वं शूद्रस्यापि विवक्षितम् ॥६९४॥
मुखबाह्वादिरूपेण वर्णेष्वत्र परस्परम्। उत्तमाधमभावश्च दर्शितोऽन्यत्र यः श्रुतः ॥ ६९५ ॥
अथवा तत्तदङ्गेषु तत्तद्वर्णस्य हि श्रुतम्। वीर्यवत्त्वमतस्तत्तदङ्गरूपत्वकल्पना ॥ ६९६ ॥
ब्रह्मणोऽङ्गेषु सर्वेषु वीर्यवत्त्वं प्रतिष्ठितम्। यो यदङ्गत्वमापन्नस्तदङ्गं तस्य वीर्यवत् ॥६९७॥
वर्णानां तत्तदङ्गेषु वीर्यं हि लोकवेदयोः। दृश्यते श्रूयते तच्च पुंसूक्तैरपि दर्शितम् ॥ ६९८ ॥
सर्ववेदस्थ पुंसूक्त-दर्शितार्थानुसारतः। एकस्यास्तैत्तिरीयाख्यश्रुतेरन्यार्थकल्पना ॥ ६९९ ॥
न त्वेकतैत्तिरीयोक्त तद्वाक्यार्थानुसारतः। बहु श्रुतिस्थपुंसूक्तसुस्पष्टार्थप्रहापणम् ॥ ७०० ॥
यद्वापुरुषमेधेऽस्मिन् पुरुषाकारनिर्मिते। पशुत्वेन नियुक्ता ये पुरुषा ब्राह्मणादयः ॥ ७०१ ॥
तान् नियुक्तान् पशून् यूज्ञतत्तदङ्गतया श्रुतिः। वर्णयतीत्यपि व्याख्याप्रकृतार्थानुसारिणी।७०२
यथा व्याकरणादीनि शास्त्राण्यपि श्रुतेर्बुधैः। चक्षुराद्यङ्गरूपेण वर्ण्यन्ते प्रकृते तथा ॥ ७०३ ॥
किन्त्वत्रैतदपि ज्ञेयं पक्षे पुरुषशब्दतः। पुरुषमेधाख्यो यज्ञो वर्तव्योऽपि भवेदिति ॥ ७०४ ॥
मुख्यप्रवर्तकत्वेन ब्राह्मणो मुखमुच्यते। रक्षकत्वेन यज्ञस्य बाहू क्षत्रिय उच्यते ॥७०५॥
बाहू च यस्य न स्यातां स चात्मानं परानपि। न शक्तो रक्षितुं तस्माद्बाहू रक्षणसाधने ॥७०६॥
द्रव्यप्रदानतो वैश्यो यज्ञमुत्थापयेदतः। उत्थानसाधनीभूतावूरू वैश्योऽप्यभूदिति ॥ ७०७ ॥
ऊर्वोर्यस्य बलं नास्ति स नैवोत्थातुमर्हति। अन्येनोत्थापनीयः स्यात्तस्मात्तौ तत्साधने ॥७०८॥
दत्तं द्रव्यादिकं वैश्यैः शूद्रो यज्ञं समानयेत्। एतच्च पादयोः कार्यमिति शूद्रोऽपि ताविति ७०९॥

"पद्भ्यां" यह चतुर्थी विभक्त्यन्त है। अतः हमारे मत में इसका भी मुख्यार्थ छूट जाता नहीं। "पद्भ्यां शूद्रो अजायत" इसका अर्थ है पादों के लिये शूद्र हो गया। अर्थात् वह पादस्थानीय हो गया। इस चौथा वाक्य का यथा श्रुतार्थ लेने पर पहले तीन वाक्यों का मुख्यार्थ छूट जाता है। बुद्धि-

मान बहुतों की रक्षा के लिये एक को अगत्या छोड़ देता है न कि तद्विपरीत "जनि कर्तुः प्रकृतिः" इस पाणिनि सूत्र से भी यही सिद्ध होता है कि जो जन्म का मूलस्थान है उसी को अपादान संज्ञा और पंचमी विभक्ति लगायी जाती है न कि जाधातु योग मात्र से। क्यों? रामाय सीता जाता, और आत्मने सेवको जातः इत्यादि स्थलों में जाधातु से योग रहने पर भी रामादि शब्दो के आगे पञ्चमी नहीं होती है। अथवा "पद्भ्यां" यह पंचमी विभक्ति ही है ऐसा यदि किसी का आग्रह रहता हो तो यह प्रथमार्थे पञ्चमी हो सकती है। जैसे मृत्पिण्डाद्घटो जातः इत्यादि वाक्यों में प्रथमार्थे में भी पञ्चमी होती है। उसका अर्थ है मृत्पिण्ड घट हो गया। प्रकृत में विराट् पुरुष का, जगत के रूप में परिणाम जहाँ वर्णित है वहाँ उस पुरुष के पादादि अङ्ग शूद्रादि वर्णों के रूप में परिणत हो गये, कहना उचित ही है। इस प्रकार वर्णों में मुखादि रूपता बता कर श्रुति उनमें पूर्व-पूर्व में श्रेष्ठत्व और उत्तरोत्तर में कनिष्ठत्व भी व्यक्त करती है। यह श्रेष्ठत्व-कनिष्ठत्वभाव जैमिनिब्राह्मण में स्पष्ट शब्दों से बताया गया भी है। अथवा मुखादि अंगों में ब्राह्मणादि वर्णों का वीर्य (बल) शत पथश्रुति के द्वारा बताया जाता है। अतः यहाँ मुखादि रूपता वर्णों में कही गयी है। ब्रह्मा जी के सभी अंगों में वीर्य रहता है और वर्णों में से जो वर्ण जिस अंग का रूप धारण करता है उस वर्ण का उस अंग में वीर्य रहता है। ब्राह्मणादि वर्णों के मुखादि स्थानों में वीर्य लोकवेद प्रसिद्ध है। अतः सब वेदों में रहने वाले पुरुष सूक्तों के उस अर्थ के अनुसार एककृष्ण यजुर्वेद के अन्तर्गत एक तैत्तिरीय संहिता के सप्तम काण्ड में विद्यमान वर्णोत्पत्ति वाक्यों का अर्थ बदलना ही उचित है न कि एकतैत्तिरीय श्रुतिवाक्य के अनुसार, सर्ववेदस्थ पुरुष सूक्तों का अर्थ। अथवा पुरुषमेध नामक यज्ञ में, जिसकी वेदी पुरुष सदृश बनायी जाती और जिस में ब्राह्मणादि चार वर्ण पशु के रूप में नियुक्त किये जाते हैं; इन चार वर्णों को मुखादि चार अङ्गों के रूप में श्रुति वर्णन करती है ऐसा कहना भी प्रकृत अर्थ से सम्बद्ध ही है। जैसे व्याकरणादि शास्त्र, वेद के चक्षुरादीन्द्रिय बताये जाते हैं, वैसा ही पुरुषमेध यज्ञ में ब्राह्मणादि चार वर्ण मुखादि (मुख्यस्थानादि) के रूप में बताये जाते हैं। इस पक्ष में सूक्त में रहने वाले पुरुष शब्दों से पुरुषमेध लिया जाता है। उन वर्णों में ब्राह्मण, यज्ञ का मुख्य प्रवर्तक होता है। अतः यहाँ वह यज्ञ का मुख कहा गया है। क्षत्रिय यज्ञ का रक्षक होता है और वह रक्षण कार्य बाहुओं से होता है। अतः वह यज्ञ के बाहू कहा गया है। बाहू जिसको नहीं है वह न अपने को



न दूसरों की रक्षा कर सकता। अतः बाहू-रक्षण के साधन कहे जाते हैं। वैश्य यज्ञ में धनधान्यादि देकर उसे ऊपर उठाता है अर्थात् आगे चलाता है और ऊपर उठने का साधन ऊरू होते हैं। जिसका ऊरूबल; नहीं वह स्वयं ऊपर उठ नहीं सकता। अतः वैश्य वर्ण यज्ञ के उत्थान साधन ऊरू कहा गया हैं। वैश्य के द्वारा दिये गये धनादि को शूद्र यज्ञ देश में लाता है और किसी चीज के लाने में पाद मुख्य होते हैं। अतः वह यज्ञ के पाद कहा गया है।

"अन्यत्र वा श्रुतः" (६९५) इति। जैमिनिब्राह्मणेऽभिहितम् "तदाहुर्यदेते पृथग्यज्ञा विषमाः स्तोमाः त्रिवृत् पञ्चदशः सप्तदश एकविंशः त्रिणवनः इति। कथमेतत्समात्समनुपेतं भवतीति, स ब्रूयाद् ब्रह्म वै त्रिवृत् क्षत्रं पञ्चदशः, ब्रह्म वै क्षत्राज्ज्यायः। तेन समात्सममुपेतं भवति, विड् सप्तदशः क्षत्रमु वै विशो ज्यायः, तेन समात्सममुपेतं भवति, एकविंशस्तोममनु शूद्रः, वैश्यो वै शूद्राज्ज्यायान् तेन समात्सममुपेतं भवति, त्रिणवं-स्तोममनु ग्राम्याः पशवः शूद्रो वै ग्राम्येभ्यः पशुभ्यः श्रेयान्" (२.२१) इति।

सूक्ते पुरुषशब्देन पिण्डसृष्टिकृतं त्विह। गृह्णाति सायणस्तद्धि नैव प्रकरणानुगम् ॥ ७१० ॥
यतः पुरुषमेधीयपशूनां तस्य च स्तुतिः। ब्राह्मण-श्रौतसूत्रादौ प्राधान्येनेह दर्शिता ॥७११॥
तत्सूक्तोव्वटभाष्येऽपि प्रोक्तं चावयविस्तुतिः। क्रियतेऽवयवद्वारेत्यन्तरोऽवयवीह सः ॥७१२॥
नियुक्ताः पुरुषा यज्ञे सन्त्यत्रावयवाः पुनः। सृष्टिकृद्ग्रहणे चैतदुक्ति र्नैवोपपद्यते ॥ ७१३ ॥
क्रतोः पुरुषमेधस्य ब्राह्मणादिपशोरपि। नारायणाख्यतत्कर्तुः स्तुतिर्यथा भवेदिह ॥७१४॥
तथा पुरुषसूक्तार्थो वर्णनीयो मनीषिभिः। ब्राह्मणश्रौत सूत्रादि तात्पर्यार्थविमर्शकैः ॥७१५॥
"देवाः सृष्टिकर्तारं हविष्ट्वेन न्ययुञ्जत। हविरन्तरशून्यत्वाद्वसन्तादीनृतूंश्च ते ॥७१६॥
आज्यत्वेनापि निर्माय यज्ञमेतमतन्वत"। इत्येतदपि तद्भाष्यमत्यन्तमसमञ्जसम् ॥७१७॥
सृष्टिकृत्कर्मिका दैवकर्तृकेह हविष्कृतिः। पुत्रकर्तृकपित्रादिकर्मिकेव प्रदृश्यते ॥ ७१८ ॥
पुत्राः स्वपितरं यज्ञे पशुवन्न नियुञ्जते। न युक्तं च तथा कर्तुं द्रव्याभावेऽपि सर्वथा ॥ ७१९ ॥
प्रजापतिवपोत्खेदः सत्यश्चेदपि नात्र तत्। स्यादुदाहरणं यस्मात्स्वेन स स्वेच्छया कृतः ॥७२०॥
प्रजापतिः स्वयं स्वीयां वपामुत्पाट्य चाहवे। प्राक्षिपत्पशुशून्यत्वान्नान्येनोत्पाटिता बलात् ७२१
लोकन्यायानुसारेण श्रुतीनामर्थसम्भवे। बुद्धिमद्भिस्तद्विरुद्धं न कदाऽपि प्रवक्ष्यते ॥ ७२२ ॥
वसन्ताद्यृतवस्तेषां त्यक्त्वा लिङ्गानि कर्हिचित्। न तिष्ठन्तीति मन्वादिस्मृतिष्वप्यभिधीयते ७२३
तस्मादाज्यं वसन्तोऽभूदित्यादौ तद्गतूद्गतम्। क्षीरादिकमभूदाज्यमित्येवं वर्णनं वरम् ॥७२४॥
नियुक्तपुरुषाणां च हविष्ट्वं नात्र सम्मतम्। यतस्तेषां परित्यागो ब्राह्मणादौ विधीयते ॥७२५॥
नारायणो यज्ञमन्वतिष्ठत्स सृष्टये। किन्तु सर्वातिशायित्वप्राप्त्यर्थमिति विश्रुतम् ॥७२६॥
एतेनेदमपि स्पष्टं यज्ञाचरणात्पुरा। सर्वमासीज्जगत्यत्र द्रव्यमित्यपि बुध्यते ॥ ७२७ ॥
नाव किञ्चिदपि द्रव्यजातं नासीत्तदा भुवि। शशशृङ्गायमाणं किं केनालिप्सयिष्यति ॥७२८॥

स तं यज्ञमनुष्ठाय सहस्राक्षादिरूपतः । दर्शिताकारवान् भूत्वा सोऽतिशिश्येऽखिलं जगत् ।७२९
पश्चात्तमेव साध्याख्या देवा यज्ञमतन्वत । वसन्ताद्यृतुसञ्जात द्रव्यैर्बद्धपशून्विना ॥ ७३० ॥
ततो बहुपशून् ग्राम्यानारण्यानपि लेभिरे । स्वानुष्ठितेष्टिमाहात्म्यात्ते वेदानप्यृगादिकान् ॥७३१
यथाऽल्पीयांसि बीजानि क्षेत्रे निक्षिप्य मानवैः । प्रप्स्यन्तेऽऽधिकधान्यानि तथा यज्ञक्रियास्वपि ३२
तस्मादद्यतनोऽप्येतदनुष्ठाय तथा महान् । यथा नारायणः पूर्वं देवाश्चासन्निति स्तुतिः ॥७३३॥

इस पुरुष सूक्त में सायण ने पुरुष शब्द से पिण्डसृष्टिकार मनु को लिया था, किन्तु वह प्रकृत प्रकरण के अनुसार नहीं । क्यों, इस सूक्त में पुरुषमेध नामक यज्ञ की और उसमें नियुक्त ब्राह्मणादि पुरुष पशुओं की स्तुति की जाती है । यह शतपथादि ब्राह्मणों में और वैखानसादि श्रौत सूत्रों में कहा गया है । उवटाचार्य भाष्य में भी कहा गया है कि यहाँ अवयवों की स्तुति के द्वारा अवयवी की स्तुति की जाती है । यहाँ ब्राह्मणादि पशु अवयव और पुरुषमेध अवयवी माने जाते हैं । अतः इस सूक्त का अर्थवर्णन ऐसा होना चाहिए जिसमें उस यज्ञ की उन पशुओं की और उसका अनुष्ठाता नारायण की स्तुति मालूम हो । सायण ने कहा था कि हविरन्तराभाव से देवता लोग मानस यज्ञ में सृष्टि कर्ता पुरुष को ही पशु और वसन्तादि ऋतुओं को आज्यादि बनाये थे । यह भी असमञ्जस ही है । देवताओं के द्वारा सृष्टि कर्ता को यज्ञपशु बनाना, ठीक वैसा ही होगा जैसे पुत्र पित्रादि को यज्ञपशु बनाने पर होगा । पिता को ऐसा करना पुत्रों का उचित नहीं है । प्रजापति का वपोत्खेद तो यहाँ अनुदाहरण है । वह स्वयं ही अपनी वपा को निकाल कर यज्ञकुण्ड में डाला न कि दूसरे उसे निकाले जब वेदों का उचित अर्थ मिल जाता है तो अनुचित अर्थ बताना ठीक नहीं । वसन्तादि ऋतु भी अपने-अपने काल चिह्नों को ( वृक्षलतादि को ) छोड़कर रहेंगे नहीं यह विषय मनुस्मृति में भी है । अतः "वसन्तोऽस्यासीदाज्यम्" इस वाक्य का अर्थ वसन्त ऋतु में पैदा हुआ घी आदि वस्तु आज्यं हुआ, ग्रीष्म ऋतु के सूखी लकड़ी इध्म हुए, शरद् ऋतु में पैदा हुए धान्य हवि हुए ऐसा कहना होगा । नियुक्त पुरुष पशुओं को स्पर्श करके छोड़ देने का विधि हैं । अतः वे यहाँ हवि नहीं । वसन्तादि ऋतु क्रम से आते हैं न कि युग पद् । अतः उनका एक याग में आज्यादि रूप में एकत्रित होना भी असम्भव है । नारायण नामक पुरुष भी सृष्टि के वास्ते पुरुषमेध नहीं किया था किन्तु सर्वातिशायित्व सम्पादन के वास्ते । इससे यह भी मालूम हो जाता है कि पुरुषमेध करनेके पहले जगत में सब कुछ था । यदि उस समय कुछ भी नहीं होता तब कौन किससे आगे बढ़ने की इच्छा करेगा । वह नारायण



नामक पुरुष, पुरुषमेध करके हजार शिर और हजार नेत्रादिवाला हो गया था । उसके बाद साध्यादि देवता लोग भी उस यज्ञ में ब्राह्मणादि पुरुषों को पशु बना कर और वसन्तादि ऋतुओं में उत्पन्न द्रव्यादियों को आज्यादि बनवा कर उसे किये थे । उस यज्ञानुष्ठान से ग्राम्य और आरण्य पशुओं को और ऋगादि वेदों को भी प्राप्त किये थे । जैसे जमीन में थोड़े धान्यादि बीज रख कर लोग अत्यधिक धान्य पाते हैं वैसा ही यज्ञों में थोड़ा द्रव्य रख कर साध्य लोग भी स्वाभीष्ट वस्तुओं को अधिक प्राप्त किये थे । अतः आजकल भी लोग उस यज्ञ को करेंगे तो नारायण और साध्यादि की तरह सर्वातिशायी हो जायेंगे । ऐसी स्तुति प्रकृतसूक्त में विवक्षित है ।

मन्वादिस्मृतिष्विति ७२३ । "यथर्तुलिङ्गान्यृतवः स्वयमेवर्तुपर्यये । स्वानि स्वान्यभिपद्यन्ते तथा कर्माणि देहिनः" ( मनु० १.३० ) इति । सर्वेऽपि ऋतवः स्वस्वसमये स्वानि स्वानि लिङ्गानि चिह्नानि फलपुष्पसस्यादिरूपाणि प्राप्नुवन्त्येव, अतो वसन्तादिषु ऋतुषूत्पन्नं द्रव्यमाज्यादिरूपेण विनियुक्तमित्यर्थो वर्णनीयः । अथवा वसन्तादिशब्दा अत्र ब्राह्मणादिवर्णपराः । श्रूयते च "ब्रह्म वै वसन्तः, ब्रह्म च ब्राह्मणः, क्षत्रं वै ग्रीष्मः क्षत्रं राजन्यः" (शत० २.१.३) इत्यादि । ब्राह्मणादयश्च वर्णाः पुरुषमेधे पशुत्वेन नियुज्यन्ते । तथा च ब्राह्मणमाज्यत्वेन क्षत्रियमिध्मत्वेन वैश्यं हविष्ट्वेन च संभाव्याग्रे संस्पृश्य ते त्यक्तव्या भवन्ति । यद्यपि शतपथे विड्वै वर्षा विड्वैश्यः वर्षासु वैश्य आदधीत इत्येव पाठो वर्तते न तु शरद्वैश्यः शरदि वैश्य आदधीत इति तथापि शाखान्तराभिप्रायेण तथाविध-प्रयोगो मन्तव्यः । तैत्तिरीयशाखायां हि "वसन्ते ब्राह्मणोऽग्नीनादधीत, ग्रीष्मे राजन्यः शरदि वैश्यः" (तै० ब्रा०) इत्युक्तम् । "वर्षासु रथकारोऽग्नीनादधीत" इति चापस्तम्ब-श्रौतसूत्रादौ । अत्र वसन्तादिशब्दैर्वर्णत्रयोल्लेखः शूद्रादिपुरुषपशूनामप्युपलक्षणम् "यस्य ब्रह्म च क्षत्रं च उभे भवत ओदनः" इत्यादाविवात्रापि प्राधान्येन वर्णत्रयस्य निर्देशात् ।

पिण्डसृष्टिकृतः पुंसः सृष्टिर्मैथुनजैव हि । तस्माद्यत्पुरुषं साध्या व्यदधुरित्यदस्स्थले ॥७३४॥
सृष्टिकृत्पुरुषो धर्तुं न शक्योऽतः पशुग्रहः । पशवश्चात्र चत्वारो वर्णाः पक्षान्तरेऽध्वरः ॥७३५॥

पिण्डसृष्टि कर्ता मनु की सृष्टि योनिज ही होती है न कि ( अयोनिज ) [illegible]ादि से । अतः "यत्पुरुषं व्यदधुः' इस स्थल में भी पुरुषशब्द से सृष्टिकर्ता [illegible] का ग्रहण नहीं किन्तु पशुस्थानीय ब्राह्मणादिचार वर्ण का और दूसरे [illegible] में पुरुषमेध नामक यज्ञ का ही ग्रहण होगा । अयोनिज सृष्टि के बारे में आगे कहा जाता है ।

[illegible] पद्ममाहात्म्यगते सत्ययुगे किल । अयोनिजा प्रजासृष्टिरिति पौराणिका जगुः ॥७३६॥
[illegible] च ब्रह्मणस्त्वहरूच्यते । रात्रिस्तद्युगसाहस्रं तत्सहस्रद्वयं दिनम् ॥ ७३७ ॥

तस्य ताहग होरात्रब्रह्मणोऽर्धशतं समाः । गतास्तस्य द्वितीयं च परार्धं सम्प्रवर्तते ॥७३८॥
तत्र प्राथमिकात्सत्ययुगादग्रे च योनिजाम् । तस्यैतद्दिनपर्यन्तं सृष्टिं सृष्टिविदो विदुः॥७३९॥
यदा चायोनिसंजाता विरक्ता जन्तवोऽभवन् । तदा खिन्नमना ब्रह्मा स्वात्मानं स द्विधाऽकरोत्७४०
स्त्रीपुंरूपेण सङ्गम्य विषयेन्द्रियसंयुताः । प्रजाः मैथुनतः सृष्टा जाताश्चाग्रे तथाऽऽचरन्॥७४१॥
इत्येतद्द्विविधा सृष्टिर्वेदमूलेति चिन्तकाः । ते तथा व्यलिखन् किन्तु तत्र तेषां भ्रमोऽभवत् ।७४२
अग्निष्टोमश्रुतिस्तेषां जाता तद्भ्रमकारणम् । तत्राप्यजमुखात्सृष्टिर्नासीदेवेति दर्शितम्॥७४३॥
मन्त्राऽग्निष्टोमवाक्यार्थमर्मज्ञा नो गिरामपि । तमेवार्थं विजानीयुरिति तेऽन्ववदंस्तथा॥७४४॥
मानवाः सन्त्यसर्वज्ञाः कार्यमादौ विकुर्वते । तत्रानुभवमासाद्य पश्चात्ते सुष्ठु कुर्वते ॥ ७४५ ॥
यथा नूतनविज्ञाननिर्मितानि ह्युपक्रमे । वाष्पयानादिवस्तूनि बह्वसुष्ठुकृतान्यपि ॥ ७४६ ॥
कालेनानुभवं तत्र प्राप्य तान्येव साम्प्रतम् । निर्मीयन्ते चातिसुष्ठु जनानां हितहेतवे ॥७४७॥
सर्वज्ञपुरुषस्त्वेवं नैव क्वापि प्रमाद्यति । स चादावेव जानीयाद्भाविकार्यगतिं स्वयम्॥७४८॥
तस्मादिदं नैव युक्तं वक्तुं यत्कमलासनः । स्वकार्यमुपयुक्तां प्राक् सन्ततिं कृतवानिति ॥७४९॥
कल्पना तादृशीं कार्या मूलोच्छेदकरी न या । सृष्टिकृत्सर्ववित्स स्यात्तत्सृष्टिश्चेदयोनिजा ॥७५०॥
अतश्चायोनिजा सृष्टिर्ब्रह्मणः प्रथमे कृते । युगेऽपि च पुराणोक्ता नासीदित्येव मे मतिः ॥७५१॥

ब्रह्माजी के प्रथम दिन के अन्तर्गत प्रथम कृत युग में अयोनिजसृष्टि हुई ऐसा कुछ पौराणिक कहते हैं। चार युगों की एक हजार आवृत्ति होने पर ब्रह्मा जी का एक दिन और उतना ही काल रात्रि होती हैं। ऐसे दिवस वाले ब्रह्मा जी का पचास वर्ष आयु हो गया और इक्कावन साल का पहला दिन अभी चल रहा है। उसमें सबसे पहले कृत युग को छोड़कर बाकी सब युगों में योनिज सृष्टि ही चलती है। इस विषय में पौराणिकों का कहना यह है कि अयोनिज प्राणी सब विरक्त होते थे और आगे सृष्टि बढ़ाने की प्रवृत्ति ही उनमें नहीं होती थी। इससे ब्रह्मा जी का असन्तोष हुआ था। अतः उन्होंने अपने को स्त्री और पुरुष बनाकर उनके संयोग से उसी प्रकार के इन्द्रियादि सहित स्त्री पुरुष प्राणियों को उत्पन्न किया था और वे प्राणी भी आगे उसी प्रकार स्त्री पुरुष संयोग से अपने-अपने जाति का सन्तान बढ़ाये थे। दो प्रकार की इस सृष्टि को वेदमूलक समझ कर वे पौराणिक ऐसा कहते हैं, किन्तु अयोनिज सृष्टि के अंश में उनका भ्रम ही है। उनके उस भ्रम का भी कारण अग्निष्टोम प्रकरण ही हुआ जिसमें अयोनिज सृष्टि का आभास मिल रहा है। किन्तु उस प्रकरण मे भी अयोनिज सृष्टि ( ब्रह्ममुखादि से ) विवक्षित नहीं है यह तो हमने पहले ही कह चुके हैं। अथवा पौराणिकों में भ्रम न मानने पर ऐसा कहना होगा कि "अग्निष्टोम प्रकरण" का तात्पर्यार्थ जानने वाले लोग हमारे पुराण



वाक्यों का भी ऐसा ही अर्थ समझ लेंगे" इस अभिप्राय से वे श्रुति में आपाततः प्रतीत अयोनिज सृष्टि का अपने पुराणों में अनुवाद किये थे। ब्रह्मा जी की अयोनिज सृष्टि न मानने में कारण यह है कि मनुष्य असर्वज्ञ होने का कारण वह आगे का परिणाम नहीं जानते। अतः वे पहले-पहले अपने पारिश्रामिक घटादि वस्तुओं को अच्छी तरह नहीं बनवाते किन्तु करते-करते उसमें अनुभव होने के बाद वे उन चीजों को अच्छी तरह कार्योपयोगी बनवाते हैं। जैसे आजकल नवीन विज्ञान (सैन्स) के बल पर निर्मित रेलगाड़ी इत्यादि चीजें शुरू में अच्छी तरह नहीं बनी जितना आज, कालानुसार अनुभव होने के बाद बन रही हैं। ईश्वर तो सर्वज्ञ है। चीजों को जैसा बनवाने पर वे आगे इष्टकार्योपयोगी होंगी वैसा वह पहले ही जानता है और वैसा ही बनाता भी है। अतः उसमें इस भ्रम का स्वीकार करना ठीक नहीं कि उसने पहले अज्ञानवश अयोनिज सृष्टि का निर्माण किया, वह आगे अपने इष्ट कार्य का लायक नहीं रही, फिर उसने अच्छी तरह समझ कर योनिज सृष्टि किया था। किसी बात की कल्पना या अनुमान वैसा ही किया जाता है जिससे मूल का उच्छेद न हो। सर्वज्ञ को ही सब मतवाले सृष्टिकर्ता मानते हैं। उसमें उस प्रकार का अज्ञान रहा हो तो वह सर्वज्ञ कैसा होगा। अतः ईश्वर में सर्वज्ञता की रक्षा के लिए अयोनिज सृष्टि को ही हम मानते नहीं हैं।

अयोनिजा सृष्टिरिति, तदुक्तं स्कान्दे माहेश्वरखण्डे "कृते तु मानसी सृष्टिर्वृत्तिः साक्षाद्रसोल्लसा। तेजोमय्यः प्रजास्तृप्ताः सदानन्दाश्च योगिनः। ( अ० ३७.१७६ ) एवं भागवतेऽपि "मनसैवासृजत्पूर्वं प्रजापतिरिमाः प्रजाः। देवासुरमनुष्यादीन् नभस्थलजलौकसः। तमबृंहितमालोक्य प्रजासर्गं प्रजापतिः। विन्ध्यपादानुपव्रज्य सोऽचरद्दुष्करं तपः। ततः प्रसन्नो भगवान् प्रजापतिमादिदेश। मिथुनव्यवायधर्मस्त्वं प्रजासर्गमिमं पुनः। मिथुनव्यवायधर्मिण्यां भूरिशो भावयिष्यसि। त्वत्तोऽधस्तात्प्रजाः सर्वा मिथुनीभूय मायया। मदीयया भविष्यन्ति हरिष्यन्ति च मे बलिम्।" ( ६।४।१९.५२-५३ ) ततः प्रजापतिस्तथैवाकरोदित्यग्रे। एवं "यदा तु सृजतस्तस्य देवर्षिगणपन्नगान्। न वृद्धिमगमल्लोकस्तदा मैथुनयोगतः। दक्षः पुत्रसहस्राणि पाञ्चजन्यामजीजनत्" ( मात्स्ये ) एवं मैथुनतो मनुष्यादिसृष्टौ जातायां पश्चाद्वैदिक-कर्मापेक्षितवर्णापेक्षायां स्वाभाविकैः कर्मभिस्तद्गुणैर्ब्राह्मणत्वादिवर्णा विभक्ता न तूत्पत्तित एव पित्रादिपरम्परया ते सिद्धा इति वाच्यम्। यत्तु छान्दोग्ये "तद्य इह रमणीयचरणा अभ्यासो ह ( अवश्यमेव ) यत्ते रमणीयां योनिमापद्येरन् ब्राह्मणयोनिं वा क्षत्रिययोनिं वा वैश्ययोनिं वाऽथ य इह कपूयचरणा अभ्यासो ह यत्ते कपूयां योनिमापद्येरन् श्वयोनिं वा सूकरयोनिं वा चण्डाल-

योनिं वा" इत्युक्तं तत्रापि रमणीयचरणानां ब्राह्मणादियोनिषु जन्ममात्रं तदुचितभोगाय दर्शितम्। न चैतावता तेषां योनितो ब्राह्मणत्वादिसिद्धिः, किन्तु यदा तेषां पूर्वपुण्यलेशवशादुद्बुद्धप्रयोजकगुणाविर्भावस्तदा तद्गुणप्रयुक्तवर्ण व्यवहारः। न च श्वयोनिं वेत्यादौ यथा जन्मनैव शुनकत्वादिसिद्धिः तथा पूर्वत्रापि वर्णसिद्धिरिति वाच्यम्। शुनकत्वादेराकृति-व्यङ्ग्यजातित्वेन वैषम्यात्। जातेरपि जन्मसिद्धत्वमग्रे निराकरिष्यते। जातित्वाभावादेव "शुचीनां श्रीमतां गेहे योग-भ्रष्टोऽभिजायते। अथवा योगिनामेव कुले भवति धीमता" मित्यत्र पुनर्योगाभ्यासवशेनैवाभिजातस्य योगित्वसिद्धिः "तत्र तं बुद्धिसंयोगं लभते पौर्वदैहिकम्। यतते च ततो भूयः संसिद्धौ कुरुनन्दन" इत्यादिना दर्शिता।

एवं पुरुष सूक्तेषु-तदन्यासु श्रुतिष्वपि। नोत्पत्तिर्ब्राह्मणादीनामजास्यादिभ्य इष्यते ॥७५२॥
तथोत्पत्तौ बाधकं स्याद्भिन्न-संस्थानशून्यता। विना भिन्नाकृतिं भिन्नरूपं वा तान्प्रजापतिः ७५३
कस्माद्भिन्न-निजाङ्गेभ्यश्चतुर्वर्णानजीजनत्। केन चिन्हेन बुध्येत तथोत्पत्तिपरम्परा ॥७५४॥
एकगर्भप्रसूतानां भ्रातॄणामितरेतरम्। व्यवहर्तुं रूपभेदः सृष्टः सृष्टिकृता खलु ॥ ७५५ ॥
श्रुतिस्मृतिमुखेनेशो वर्णेष्वपि परस्परम्। पूज्यपूजकभावं च पुण्यार्थत्वेन बोधयन् ॥७५६॥
स्वाभाविकात्म-शान्त्यादि-व्यतिरेकेण दैहिकम्। किंनिमित्तं सृजत्येतद्व्यवहारप्रयोजकम् ७५७
जगद्वैचित्र्यमेतावदचिन्त्यमनिशं सृजन्। कुतश्चतुर्षु वर्णेषु चतुर्भेदान्न सृष्टवान् ॥ ७५८ ॥
तदसृष्टौ च विप्रेषु तदन्ये क्षत्रियादयः। कथं प्रत्यभिजानीयुर्मुखोत्पत्तिपरम्पराम् ॥७५९॥
तस्मादपि तदापत्तिवारणाय मनीषिभिः। वर्णप्रयोजकत्वेन गुणाङ्गीकरणं वरम् ॥७६०॥

इस प्रकार पुरुषसूक्तों में तदतिरिक्त श्रुतियों में भी ब्राह्मणादिवर्णों की उत्पत्ति ब्रह्मा जी के मुखादि के द्वारा मानी नहीं जाती। उस प्रकार की उत्पत्ति मानने में भिन्नाङ्गों या भिन्नरूपों का अभाव ही बाधक है। भिन्नाकृति के बिना वर्णों को भिन्नाङ्गों से ब्रह्मा ने क्यों पैदा किया था? एक गर्भ से उत्पन्न भाइयों में भी व्यवहार के लिए वह भिन्न रूप पैदा करता ही रहता है। श्रुति स्मृत्यादि मुख से भगवान् वर्णों में भी पूज्य पूजक भाव रूप व्यवहार का विधान करते ही हैं। उसका कौन सा बाह्य निमित्त वर्णों में दैवनिर्मित देखा जाता है जिसके द्वारा लोग जन्म से ही किसी को पूज्य और पूजक समझ सके। निरन्तर अचिन्त्य जगद्वैचित्र्य का निर्माण करने वाला ईश्वर चार में वर्णों चार बाह्य भेद क्यों न बनाया था? ऐसा न बनाने पर ब्राह्मणों में उस मुखोत्पत्ति परम्परा को दूसरे लोग कैसे समझेंगे। ये सब आपत्तियों का वारण करने के लिए अन्य-अन्य बातों के बताने की अपेक्षा आत्मगुणों को ही चातुर्वण्य हेतु मान लेना अच्छा है।

गोत्राण्यपि वशिष्ठादि-नामकानि प्रजापतेः। मुखादितः प्रजातानां सङ्गच्छेरन् कथं नृणाम् ७१६



गोत्रशून्यः पुमानद्य चातुर्वर्ण्ये न दृश्यते। कुतस्तान्यागतानि क्व मुखोत्पत्तिपरम्परा ॥७६२॥
जन्मना यदि गोत्राणि प्रागायातानि चेत्तदा। कथं च सङ्गतं जन्म चातुर्वर्ण्ये मुखादितः ॥७६३॥
न हि ब्रह्ममुखाज्जाता वशिष्ठाद्या महर्षयः। किन्त्वन्याङ्गादितोऽन्यत्र योनिजत्वमपि श्रुतम् ७६४
मनुतःशतरूपायां जन्मपक्षेऽप्यसङ्गतः। गोत्रभेदो मनुष्येषु तत्तद्गोत्रर्षिनामतः ॥ ७६५ ॥
न मनोः शतरूपायां सञ्जातास्ते महर्षयः। येन तद्वंशजातानां तत्तद्गोत्रं भवेदपि ॥७६६॥
तत्राप्यार्षेय-गोत्राणि ब्राह्मणानां हि केवलम्। अङ्गीकृतानि चोत्पत्या न तु क्षत्रियवैश्ययोः ७६७॥
पुरोहितस्य गोत्रं हि क्षत्रियाणां विशामपि। आचार्यगोत्रमज्ञातगोत्रस्याङ्गीकृतं बुधैः ७६८॥
अकस्मात्काश्यपं गोत्रं भारद्वाजीयमेव वा। तत्तन्मतानुसारेण तैस्तैरप्यनुमन्यते ॥७६९॥
नैव किञ्चित्तथा गोत्रस्वीकारे च नियामकम्। स्वेच्छानियामकत्वे तु बह्वनर्थः प्रसज्यते ७७०॥
अत्राप्येतदनौचित्य-वारणायासदुक्तितः। वरं जन्मनिमित्तत्वत्यागो गोत्रस्य सर्वतः ॥७७१॥
विवाहादिक्रियाहेतोः गोत्राण्यपि प्रपूर्वजैः। कल्पितान्येव शास्त्रोक्तगोत्रशब्दोपपत्तये॥७७२॥
यद्वा विद्यानिमित्तानि प्रागारब्धानि तान्यपि। पश्चादुत्पत्तितश्चातुर्वर्ण्यवत्सम्मतानि च ७७३
यद्वा पवित्रताबुद्धिसमुत्पत्त्यर्थमात्मनि। गोत्राणि कल्पितानीति वक्तव्यं योगसूत्रवत् ॥७७४॥
योगसूत्रे वीतरागविषयत्वं च योगिनः। चित्ते विधीयते वृत्तिनिरोधोपायरूपतः ॥७७५॥
अर्थादहं पुराणोक्तमहायोग्यस्मि साम्प्रतम्। इति चिन्तयतश्चित्तं वृत्तिहीनं भवेदिति॥७७६॥
तथैवाहं वशिष्ठादिमहर्ष्यन्वयतोऽभवम्। इति ध्यायन् विशुद्धः स्यादितिगोत्रस्य कल्पना७७७॥
यादृशं चिन्तयेन्मर्त्यस्तादृशस्सं भविष्यति। ब्रह्मैवाहमिति ध्यायन् खलु ब्रह्म भविष्यति७७८।
तदेतत्सर्वमालोच्य शास्त्रकृद्भिश्च पूर्वजैः। सर्वं प्रकल्पितं गोत्रं चातुर्वर्ण्यं च जन्मतः॥७७९॥
यद्यप्यस्ति पवित्रत्वं चातुर्वर्ण्यं च वस्तुतः। स्वकीयात्मगुणैर्लभ्यं नैव तादृङ्नृजन्मतः॥७८०॥
तथाप्यात्मगुणेषु स्यादविश्वासो नृणामिति। निस्सन्देहप्रवृत्त्यर्थं जन्महेतुकमादृतम् ॥७८१॥

ब्रह्ममुखादि से वर्णों की उत्पत्ति पक्ष में वशिष्ठादिगोत्र भी ठीक जचते नहीं। आजकल गोत्र शून्य पुरुष कोई नहीं। ये कहाँ से आये थे? यदि गोत्र वशिष्ठादिमहर्षि वंश परम्परा से आये हों तो उन गोत्रवाले ब्राह्मणों का जन्म ब्रह्ममुख से कैसे होगा? गोत्र प्रवर्तक वशिष्ठादि महर्षिगण तो ब्रह्ममुख से पैदा नहीं हुए किन्तु दूसरे अंगों से कहीं योनि से भी उनका जन्म सुना जाता है। मनु से शतरूपा में उन महर्षियों का जन्म मानने पर भी गोत्र-भेद असङ्गत ही है। ये महर्षि मनु से भी पैदा हुए नहीं थे। आर्षगोत्र ब्राह्मणों के लिए और क्षत्रिय, वैश्यों के लिए पुरोहित गोत्र माना गया था और अज्ञात गोत्र वालों को आचार्य गोत्र या काश्यप गोत्र और कहीं विश्वामित्र गोत्र भी माना गया था। ब्राह्मणों का गोत्र वंशपरम्परा से और अब्राह्मणों का वह आकस्मिक और कहीं विद्यानिमित्तक माना गया था। इसमें कुछ भी नियामकता नहीं। इन सब के लिए असङ्गत उत्तर

देने की अपेक्षा गौण को जन्मनिमित्तक न मान कर विवाहादि के लिए कल्पित मानना या विद्यानिमित्तक अथवा पवित्रता भावना के लिए कल्पित मानना ही उचित होगा। जैसा योगसूत्र ( वीतरागविषयं वा चित्तम् ) में अभ्यासी के चित्त में सिद्ध योगी का ध्यान ( मैं पुराण प्रसिद्ध सिद्ध योगी हूँ ऐसा ) चित्तवृत्ति निरोध का उपाय बताया गया। वैसा ही वशिष्ठादि गोत्रों के स्मरण से उन महर्षियों के वंश परम्परा गत जन्म याद आवेगा और उससे कर्मानुष्ठाता के चित्त में पवित्र भावना पैदा होगी, इस अभिप्राय से पूर्व पुरुषों ने गोत्रों की कल्पना की थी। यह पवित्र भावना भी हमेशा वेदमन्त्रों से याग करने वाले ब्राह्मणों को जितना आवश्यक है उतना स्थूल कार्य करने वाले क्षत्रियादि को आवश्यक नहीं है। अतः ब्राह्मणों का गोत्र वंशपरम्परा से और दूसरों का गोत्र ब्राह्मण-गुरुपरम्परा से माना गया है। यद्यपि वास्तविक पवित्रता और चार वर्ण भी आत्मगुणों से ही सिद्ध होते हैं तो भी आदमी को अपने आत्मगुणों में कभी अविश्वास भी रहना सम्भव होता है। अतः निस्सन्देह प्रवृत्ति के लिए ये गोत्र जन्म परम्परामूलक माने गये हैं। इसी अभिप्राय से शास्त्रों में गोत्रस्मरण भी विहित है।

किञ्चान्याक्रादिव ('७६४') इति। श्रीमद्भागवते ३ अध्याये प्रोक्तम् "उत्सङ्गान्नारदो जज्ञे दक्षोऽङ्गुष्ठात्स्वयम्भुवः। प्राणाद्वसिष्ठः सञ्जातो भृगुस्त्वचि करात्क्रतुः" पुलहो नाभितो जज्ञे पुलस्त्यः कर्णयोर्ऋषिः। अङ्गिरा मुखतोऽक्ष्णोऽत्रिर्मरीचिर्मनसोऽभवत् (२२.२४)। लिङ्गपुराणे चेत्थमभिहितम् "प्राणाद्ब्रह्माऽसृजद्दक्षं चक्षुर्भ्यां च मरीचिनम्। भृगुस्तु हृदयाज्जज्ञे ऋषिः सलिलजन्मनः॥ शिरसोऽङ्गिरसश्चैव श्रोत्रादत्रिं तथाऽसृजत्। पुलस्त्यं च तथोदानाद् व्यानाच्च पुलहं पुनः॥ समानजो वसिष्ठश्च अपानान्निर्ममे क्रतुम्। इत्येते ब्रह्मणः पुत्रा दिव्या एकादश स्मृताः ( अ० ७० ) इति। योनिजत्वमपीति, तदुक्तं भविष्ये "तासां पतिभ्यो वै सुताः षोडश-षोडशस्मृताः। ते तु गोत्रकरा ज्ञेयास्तेषां नामानि मे शृणु "कश्यपश्च भरद्वाजो विश्वामित्रोऽथ गौतमः। जमदग्निर्वशिष्ठश्च वत्सो गौतम एव च॥ पराशरस्तथा गर्गोऽत्रिर्भृगुश्चाङ्गिरास्तथा। शृङ्गी कात्यायनश्चैव याज्ञवल्क्यः क्रमात्सुताः ( प्रति० पं० २३ ) इति। गोत्रप्रवरनिबन्धकदम्बादौ च "जमदग्निगौतम भारद्वाज-कश्यप वसिष्ठागस्त्यविश्वामित्रा अष्टमा गोत्रकारा व्यपदिश्यन्ते। अथ खल्वेतेषामष्टानां गोत्रकाराणां सन्तति-बहिर्भूता अपि केचन ब्राह्मणा उपलभ्यन्ते। तेषां च मूलपुरुषाः केचित्क्षत्रियजन्मानः तपः प्रभावादिभिर्विश्वामित्रवत् अधिगत ब्राह्मणभावा" इति। सर्वेषाम्येतद्गोत्राणां पुंसां ब्रह्ममुखप्रभवत्वं सुतरामसिद्धम्। तन्मूलपुरुषाणां वसिष्ठादीनां ब्रह्ममुखजन्यत्वाभावात्। अपि च क्षत्रियजन्मानोऽपि तपः प्रभावादधिगत-ब्राह्मण्यास्चेद् ब्राह्मणजन्मानो जमदग्नि-प्रभृतयः तपः प्रभावं विनैव ब्राह्मणा जाता इत्यत्र



किं प्रमाणम्। तेऽपि तपःप्रभाववत्त्वेनैव पुराणादिषु श्रूयन्ते। तथा च ब्राह्मण्य प्राप्तौ ब्रह्मर्षित्वप्राप्तौ वा क्षत्रियादिजन्यत्वं न बाधकं न वा ब्राह्मणजन्यत्वं साधकं, किन्तु तपो विशेष एव सर्वेषां ब्राह्मणत्वादिप्राप्तौ साधकमिति सिद्धम्। एवं च प्राचीनमहापुरुषाणामपि ब्राह्मण्यं तपः प्रभावलब्धं चेदाधुनिकानां तज्जन्मतो लभ्यमित्यत्र न किञ्चित्प्रमाणम्। प्राचीनपुरुषाणां ब्राह्मणजन्यत्वं निश्चितम्। आधुनिकानां च तद्वंशपरम्पराजन्यत्वं सन्दिग्धम्। इन्द्रियवेगनिरोधक शक्तिहीनत्वेनानियत-प्रवृत्तिदर्शनात्। तथा चोक्तमभियुक्तैः अनादाविह संसारे दुर्वारे मकरध्वजे। सन्ताने कामिनीमूले का जाति-परिकल्पना ( नैषधे सं १४) इति। मनुशतरूपाभ्यां सृष्टिपक्षेऽपि गोत्राणि मुखादिजन्यत्वं चासङ्गतम्। एतेन संन्यासस्य निवृत्ति-विधिविषयत्वेन तत्र सर्वेषामधिकारसिद्धावपि "मुखजानामयं धर्मो यद्विष्णोर्लिङ्गधारणमि"ति वाक्यानुसारेण काषायदण्डकमण्डलुधारणभिक्षाटनादौ ब्राह्मणानामेवाधिकार इति वदन्तो निरस्ताः। मुखादिजन्यत्वस्य वर्णेषु शशविषाण-प्रायत्वात्। यत्तु "लोकानां च विवृद्ध्यर्थं मुखबाहूरुपादतः। ब्राह्मणं क्षत्रियं वैश्यं शूद्रं च निरवर्तयत्। ( १.३१ ) इति मनुस्मृतौ क्वचिदितिहास-पुराणेषु च मुखादिजन्यत्वमुक्तं तन्मुख्यत्वोपसर्जनत्वादितात्पर्यकम्। अत एव मेधातिथिभाष्ये तन्मनुस्मृति वाक्यार्थस्तथैव वर्णितः तथाहि "परमार्थतः स्मृतिरेषा वर्णानामुत्कर्षापकर्ष प्रदर्शनार्था। सर्वेषां भूतानां प्रजापतिः श्रेष्ठः तस्यापि सर्वेषामङ्गानां मुखं ( श्रेष्ठं ) ब्राह्मणोऽपि सर्वेषां वर्णानां प्रशस्यतमः ( श्रेष्ठः ) एतेन सामान्येन ब्रह्ममुखादुत्पन्न इत्युच्यते। मुखकर्माध्यापनाद्यतिशयाद्वा मुखत इत्युच्यते" इति। "ब्रह्माननं क्षत्रभुजो महात्मे" त्यादि ( २.७.३७ ) भागवतश्लोक-सुबोधिनीव्याख्यायां वल्लभाचार्येणापि मुखादिजन्यत्वं खण्डितम्। मुखादिजन्यत्वप्रतिपादक-प्रामाणिकवाक्यानां मुख्यत्वोपसर्जनत्वादिद्योतकमुखादिस्वरूपत्वार्थकत्वाश्रयणपक्ष एव, ब्रह्मच्छायातः समुत्पन्न-कर्दमं प्रति तच्छरीरार्धभूतेन मनुनोक्तस्य "ब्रह्मासृजत्स्वमुखतो युष्मानात्मपरीप्सया" इत्यस्य "तत्त्राणायासृजच्चास्मान् दोःसहस्रात् सहस्रपात्" ( ३.२२.२-३ ) इत्यस्य च भागवतवाक्यस्यार्थ उपपद्यते, नान्यथा। छायातः कर्दमोत्पत्तिश्च "छायातः कर्दमो जज्ञे देवहूत्याः पति प्रभुः" (३.१२.२७) इत्यत्र, मनूत्पत्तिश्च तत्रैव "कस्य रूपमभूद्द्वेधा यत्कायमभिचक्षते। यस्तु तत्र पुमान् सोऽभून्मनुः स्वायंभुवः स्वराट्" इत्यत्र चोक्ता। दोःसहस्रादेकस्य जननमपि दोःसहस्रस्वरूपत्वपक्षे सङ्गच्छते न मूलोत्पत्तिपक्षे। उत्पत्तिश्चैकस्य एकदोषः ( एकभुजात् ) एव भवितुमर्हति न तु दोःसहस्रात्। एवं सङ्गत्यर्थं एव मुखादितो वर्णोत्पत्तिबोधक-पुराणादिवाक्यानां वर्णनीयः। पौराणिकानि हि वाक्यानि मुखादितो वर्णसृष्टिबोधक-श्रुतिवाक्यानामनुवादकानि भवन्ति। तत्र श्रुतिवाक्यानां यो विवक्षितोऽर्थस्तादृश एवार्थोऽनुवादकानामपि। श्रुतिवाक्यतात्पर्यज्ञा अनुवादवाक्यानामपि तादृशमेव तात्पर्यं जानीयुरिति बुद्ध्या पौराणिकैस्तथाविधवाक्यानि "न मूलं नश्येत् जनमेदिति न्यायेन रचितानि। अलमतिविस्तरेण। अधिकं तु भृगुस्मृतिव्याख्यायां

द्रष्टव्यम् । यत्तु "एतं वै तमात्मानं विदित्वा ब्राह्मणाः पुत्रैषणायाश्च वित्तैषणायाश्च लोकैषणायाश्च व्युत्थायाथ भिक्षाचर्यं चरन्ति" ( बृ० उ० ३.२ ) इत्यादौ ब्राह्मणशब्द श्रवणाद्-ब्राह्मणस्यैव संन्यासाधिकार इति केषांचिन्मतं तदपि "जायमानो वै ब्राह्मणस्त्रिभिऋंणवा जायते ब्रह्मचर्येण ऋषिभ्यो यज्ञेन देवेभ्यः प्रजया पितृभ्य एष वा अनृणो यः पुत्री यज्वा ब्रह्मचारिवासी" (तै० सं० ६.३.१०) इत्यादौ ब्राह्मणशब्दस्येव संन्यासविधिस्थब्राह्मण-शब्दस्यापि सर्ववर्णपरत्वाश्रयणेन निरस्तम् । न हि विधिविहितविषयविमर्शं विना शब्द-मात्रबलेन कश्चिदपार्थं आश्रयितुं शक्यः । ऋणापाकरणस्य सर्ववर्णानां नित्यत्वात्तत्र ब्राह्मणत्वस्याप्रयोजकत्वेन श्रूयमाणस्यापि ब्राह्मणपदस्य वर्णमात्रपरत्वमाश्रितम् । न हि केनापि शास्त्रकारेण ऋणापकरणस्य ब्राह्मणमात्रधर्मत्वमिष्यते । अन्यथाऽब्राह्मणस्य विवाहा-नुपपत्तेः । एवं सन्यासेऽपि ज्ञातव्यम् । निवृत्तिविधिष्वपि त्रैवर्णिकमात्राधिकाराङ्गीकारे "ब्राह्मणो न हन्तव्य" इत्यादावपि तन्मात्राधिकारसिद्धेः शूद्रकृतब्राह्मणहत्यया दोषो न स्यात् । अतस्तद्दोषवारणाय संन्यासादिनिवृत्ति विधिषु सर्वाधिकारो जातिवादिभिरपि एषितव्यः । ननु संन्यसिसिषवः सर्वेऽपि शमादिगुणयुक्ता एव भवन्तीति गुणतो वर्णवादिमते तेषां ब्राह्मण्यमिष्टमेव । एवं ब्राह्मणपरिव्राजकन्यायोऽपि युक्त एव । कुतस्तत्प्रतिषिध्यत इति चेदुच्यते । ब्राह्मणत्वादिवर्णानां गृहस्थाश्रमे तत्रापि यज्ञ प्रकरणे पुरुषेष्वेव शमादि-गुणयुक्तेषु सम्मतत्वेन तदन्याश्रमेषु तद्विवक्षा नास्तीति । न च भूतपूर्वगत्या ब्राह्मण्य-व्यवहार इति वाच्यम् । क्रमसंन्यासे तस्येष्टत्वेऽपि ब्रह्मचर्यात्संन्यस्यति नरे तदसंभवात् । ब्राह्मणमात्रस्य संन्यासाधिकारमिच्छत आचार्यस्याभिप्रायस्तु स एव यत्संन्यासमिच्छतः शमादिगुणपूर्वकत्वनियतत्वेन तस्य ब्राह्मण्यं स्यादेवेति । अन्यथा "तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्तीत्यत्रेवात्रापि स त्रैवर्णिकमात्रपरत्वं ब्राह्मणशब्दस्योक्तवानेव स्यात् । तत्र हि तद्वाक्यभाष्ये "विविदिषन्ति वेदितुमिच्छन्ति । के ब्राह्मणाः । ब्राह्मणग्रहणमु-पलक्षणार्थम् । अवशिष्टो ह्यधिकारस्त्रयाणां वर्णानामि" त्युक्तम् । आर्षेयगोत्राणीति ( ७६७ ) गोत्रर्षीणां ब्राह्मणत्वेन क्षत्रियवैश्यादीनां तद्गोत्रत्वाङ्गीकारे तेऽपि ब्राह्मणा भवेयुरितिभीत्या तेषामार्षेयगोत्रत्वं नाङ्गीकृतम् । अत एवोक्तं सत्याषाढ-श्रौतसूत्रे "पुरोहि-तस्य प्रवरेण राजा प्रवृणीत" अध्वर्युं होता वा ( राज्ञः ) तस्यार्षेयाभावात् ( २ प्रश्ने २ पटले ) इति । एवं मानवश्रौतसूत्रेऽप्युक्तम् "परिप्रश्नेन वा यं यस्योपपन्नं मन्येत तं तस्य कुर्यात् । पुरोहितप्रवरो वा स्यादाचार्यप्रवरो वा राजन्यः । एतेनैव तु प्रवरेण वैश्यप्रवरो व्याख्यातः । यदि सार्ष्टि ( सृष्टिसम्बन्धिनं ) प्रवृणीते मानवैड पौरूरवसेति होता, पुरूरवोवदिडावन्मनुवदित्यध्वर्युः सार्ष्टि प्रवृणीयुः, पुरोहितप्रवरावेव राजन्यवैश्यौ स्याताम्" इति प्रवराध्याये । यद्यपि सृष्ट्यनुसारेण वक्तव्यं चेत्सर्वेषामेकमेव मनुगोत्रम् । अत एवोक्तं ताण्डिभिः छान्दोगैश्च "मनुवदित्येकार्षेयं प्रवरं होतारः प्रवृणते । कुतः मानव्यो हि प्रजाः" इति हि ब्राह्मणम् । तदर्थश्चोक्तस्तत्रैव । हिः यस्मादेवं



तैत्तिरीयाणां ब्राह्मणं प्रत्यक्षमेव पठ्यते "मानव्यो हि प्रजा, तथापि "न देवैनं मनुष्यै-रार्षेयं वृणीत ऋषिभिरेवार्षेयं वृणीत" इति शाखान्तरे श्रवणेन, वशिष्ठात्रेयकण्वादि-गोत्रा नाराशंसाः तनूपादन्येषां गोत्राणामिति, आत्रेयाय सुवर्णं दद्यादिति सत्वेन समानगोत्रे विवाहनिषेधादिश्रवणेन च तत्सर्ववाक्योपपत्त्यर्थं गोत्राणि पृथक् वेदश्रुतमहर्षिनामभिः कल्पितानीत्येवेति विज्ञायते । "अकस्मात्काश्यपमिति (७६९) बोधायनेनोक्तम्" "सगोत्रां गत्वा ( आज्ञानतः ) चान्द्रायणं चरेत् । तस्यां यदि गर्भोऽभूत् स ( उत्पन्नः ) काश्यप इति विज्ञायते इति । अभिनवमाधवाचार्यकृतगोत्रप्रवरनिर्णये चोक्तम् "मोहाद्गत्वा ( सगोत्रां ) प्रतिगमं चान्द्रायणं व्रतम् । गर्भश्चेत्काश्यपोऽयं भारद्वाजोऽथवा भवेत्" इति । ज्ञात्वा सगोत्रागमने च तदुत्पन्नश्चाण्डाल एव । तदुक्तं यमेन "आरूढपतितापत्यं ब्राह्मण्यां यश्च शूद्रजः । सगोत्रोढासुतश्चैव चाण्डालाः त्रय ईरिता" इति । एवं स्वेच्छयैव क्वचिदज्ञातगोत्रस्य काश्यपगोत्रं वैश्वामित्रं वेष्यत इत्यन्यत्रोक्तम् ।

यत्तु केचिद्वदन्त्यत्र यद्वशिष्ठादिमानसाः । पुत्रास्तद्वंशजाश्चाद्य वशिष्ठाद्यृषिगोत्रिणः ॥७८२॥
तदयुक्तं यतः साऽपि सृष्टिर्महर्षिमानसी । विचारिता सती सम्यक् सत्या नैवावशिष्यते॥७८३॥
किं कदाचिद्ब्राह्मणानामेवाभावः समापतत् । येन तत्पूरणार्थं तन्मानसी सृष्टिरिष्यताम् ॥७८४॥
प्रजापतिमुखोत्पत्तौ या स्तत्रानुपपत्तयः । ताः सर्वा संभवन्त्यत्र मनःसृष्टिमतेऽपि च ॥७८५॥
मनसा ब्राह्मणानादावस्रक्ष्यंश्चेन्महर्षयः । अवश्यं क्षत्रियादिभ्यस्तानस्रक्ष्यन्विलक्षणान्॥७८६॥
मनसा नूतनां सृष्टिं कर्तुमेवमिहेश्वराः । विभिन्नरूपनिर्माणे कथं ते स्युरनीश्वराः ? ॥७८७॥
नहि क्वचित्पुराणादौ सृष्टिः प्रोक्ताऽपि मानसी । प्रमाणबलसिद्धस्य बाधिका संभविष्यति७८८॥

कुछ लोग कहते हैं कि आजकल के वशिष्ठादि गोत्र वाले सब, पहले उन गोत्रप्रवर्तक वशिष्ठादि महर्षियों के मानस सन्तान ही हैं । यह भी विचार करने पर यथार्थ नहीं है । क्यों ? ऐसा कहना तभी सत्य होगा जब पहले सब जनता के रहने पर भी केवल ब्राह्मणों का ही अभाव रहा हो । ब्रह्ममुखादि से सृष्टि में पहले जितने दोष बताये गये हैं वे सब मानससृष्टि में भी आ जाते हैं । पहले यदि महर्षि लोग मन से ब्राह्मणों की सृष्टि किये हों, तो वे अवश्य उनको क्षत्रियादि विलक्षण ही पैदा किये होते । मन से नया सृष्टि बनवाने में समर्थ महर्षियों को विलक्षण रूप निर्माण करने में शक्ति नहीं रही कहना उचित नहीं । पुराणों के वाक्य न्यायविरुद्ध सृष्टि का साधक नहीं हो सकेंगे ।

ननु प्रयोजनायात्र शास्त्रकृद्भिश्च पूर्वजैः । कल्पितं चापि तद्गोत्रं कुतो न भवतेष्यते ? ॥७८९॥
यत्प्रयोजनमुद्दिश्य जन्मना तत्प्रकल्पितम् । तदर्थमेव तद्गोत्रं यद्युपायोक्ष्यताधुना ॥७९०॥
नाभरोधकयत्नश्च नास्माभिरकरिष्यत । किन्तु वर्णवदेवैतद्गोत्रं दुरुपयुज्यते ॥७९०॥

यागादौ भावशुद्ध्यर्थं स्मर्तव्यत्वेन चोदितम् । गोत्रं ब्राह्मण्यमप्यद्य सर्वश्रेष्ठत्वगर्वयोः ॥७९१॥
स्थापनायाप्यनीचत्वद्योतनायोपयुज्यते । मिथश्चोच्चत्वनीचत्ववैमनस्यार्थमेव च ॥७९२॥
तस्माद्धुत्पत्तिसिद्धत्वं चातुर्वर्ण्यवदेव हि । तस्याप्यत्र निषेद्धव्यमन्यथाऽनर्थसंभवः ॥७९३॥
विवाहो मातृतः पञ्च पुरुषान् सप्त पैतृकान् । त्यक्त्वा पशुत्वव्यावृत्त्यै कर्तव्यः स्यान्मनीषिभिः॥७९४

यदि कोई कहे कि कुछ प्रयोजन के लिए शास्त्रकारों ने इन गोत्रों की कल्पना थी, आप क्यों इनको मानते नहीं ! उसका उत्तर यह है कि जिस प्रयोजन के लिए गोत्र पहले कल्पित किये गये थे उसीके लिए आज भी यदि उपयुक्त किये जाते हों तो हम भी उनके विरोध में कुछ नहीं कहे होते किन्तु चार वर्णों की तरह ये गोत्र भी दुरुपयुक्त होते हैं । पवित्र-भावना-सिद्धि के लिए पहले कल्पित किये गये थे गोत्र, आजकल अपना बड़ापन दिखाने और उच्च-नीच भाव बढ़ाने के लिए उपयुक्त होते हैं । अतः चातुर्वर्ण्य की तरह इन गोत्रों में भी जन्मसिद्धत्व का खण्डन करना पड़ा है । विवाह में गोत्र देखने की कोई आवश्यकता नहीं, क्यों ? आचार्य गोत्र वाले समान गोत्र में विवाह कर सकते हैं । यह बात गोत्रप्रवरनिबन्धादि में लिखी गयी है । ये गोत्र सभी, पहले आचार्यपरम्परा प्रयुक्त ही थे, ऐसा भी हम पूर्व कह चुके हैं । पशुत्वव्यावृत्ति के लिए माता से पाँच और पिता से सात पुरुष छोड़कर लोग शादी कर सकते हैं ।

बहुप्रमाणसंसिद्धां सृष्टिं विहाय योनिजाम् । वर्णोत्पत्तिं मुखादिभ्यः किमर्थं त्वं ब्रवीषि भोः ? ७९५
श्रुत्यादिवाक्यमुख्यार्थरक्षणायेति नोत्तरम् । वक्तुमर्हसि प्रोक्तत्वात्तत्रैव श्रुत्यसम्मतेः ॥७९६॥
श्रुतिस्मृत्युक्तसिद्धान्तविरुद्धमपि कुत्रचित् । त्वमाचरसि मीमांसाशास्त्रमुल्लङ्घ्य साम्प्रतम्७९७
जन्मना ब्राह्मणत्वादिवादे यावान् दुराग्रहः । तावान् श्रौतेऽपि तेऽन्यत्र नैव संदृश्यतेऽधुना॥७९८
स्वाध्यायमङ्गसंयुक्तं मीमांसामपि यत्नतः । अधीत्य स्नातको भूत्वा कुर्यात्पाणिग्रहं त्विति॥७९९
शास्त्रकारैर्विनिर्णीतं खलु तैर्निर्विवादतः । इदानीं त्वं किं करोषि त्वदीयैर्भ्रातृभिस्सह ॥८००॥
हिन्दीमाङ्ग्लं तदन्यां वाऽधीत्यवाऽप्यनधीत्य वा । निस्सङ्कोचं विवाहं त्वं करोषि लिखितं क्व तत्
दारकाले हि दायादकाले वौपासनानलः । आधातव्यो गृहस्थेन पतितश्चान्यथा भवेत् ॥८०२॥
तद्गृहान्नं न भोक्तव्यं वृथापाकः स चाधमः । इति पारस्करे गृह्यसूत्रादौ स्पष्टमीरितम् ॥८०३॥
गृह्याग्न्यनन्तरं श्रौतमग्नित्रयं विधीयते । यदि त्यजेद्गृहस्थस्तदद्विजः स्यात्तदेति च ॥८०४
सर्वशास्त्रविरुद्धं त्वमाचरन् शास्त्ररक्षणम् । कर्तुमिच्छसि वाचैव तस्मात्त्वद्वचनं मृषा ॥८०५॥

बहुप्रमाण सिद्ध योनिज सृष्टि को छोड़कर मुखादि से वर्णोत्पत्ति को आप क्यों मानते हैं ? इस प्रश्न का उत्तर यह नहीं हो सकेगा कि शास्त्र-सिद्धान्त रक्षा के लिए है। क्यों ? शास्त्र का तात्पर्य मुखोत्पत्ति में नहीं है यह



पहले कहा गया। कहीं-कहीं आप श्रुतिस्मृति विरुद्ध आचरण भी करते हैं । जन्म से ब्राह्मणत्वादिवर्ण मानने में आप जितना आग्रह करते हैं, उतना दूसरे शास्त्रार्थ में नहीं । वेदवेदाङ्गों को ठीक पढ़कर धर्मविचार भी करके बाद में शादी करने के लिए शास्त्रों में लिखित है । उसको तुम लोग छोड़ ही दिये हैं । हिन्दी और अंग्रेजी या दूसरी भाषा को पढ़कर आप शादी कर लेते हैं तो ऐसा किस शास्त्र में लिखित है ? शादी के बाद या दायविभाग के बाद गृहस्थ औपासनाग्नि का आधान करें और उसके बाद श्रौताग्नित्रय का आधान । ऐसा न करने पर पतित अभक्ष्यान्न और शूद्र भी हो जायगा । यह बात पारस्करादि गृह्यसूत्रों में लिखित है । इनमें तुम उदासीन है । अतः शास्त्रसिद्धान्तरक्षा के लिये आग्रह करता हूँ कहना मिथ्या है ।

यन्निधाय मनस्येवं दुराग्रहं करोषि भोः । तद्बिभेषि बहिर्वक्तुमेषा ते भावचोरता ॥ ८०६ ॥
यादृशार्थप्रलोभेन तादृक् सृष्टिमसङ्गताम् । व्यग्रचित्तो वदस्येवं स चार्थोऽपि सुदुर्लभः ॥८०७॥
श्रेष्ठाङ्गाद्ब्रह्मणः पूर्वं ब्राह्मणा जज्ञिरे ततः । श्रेष्ठास्ते सर्ववर्णेषु ब्राह्मणाद्युत्पत्तिमस्त्विह ॥८०८॥
तन्मातापितृवंश्यादिपारम्पर्यागता वयम् । लोकेऽपि ब्राह्मणत्वेन मूर्खैर्व्यवहृता ह्यपि ॥८०९॥
तस्माद्वयमपि श्रेष्ठाः पूज्याः सर्वनरेष्विह । एष ते ह्यभिप्रायो मुखाद्युत्पत्तिवर्णने ॥८१०॥
दर्शितश्चायमर्थोऽपि मनुनाम्ना कृतस्मृतौ । "उत्तमाङ्गोद्भवाज्ज्यैष्ठ्याद्ब्रह्मणश्चैव धारणात्८११
सर्वस्यैवास्य जगतो धर्मतो ब्राह्मण प्रभुः ।" एतदन्यच्च दिव्यर्षिनाम्ना बहुप्रकल्पितम् ॥८१२॥
तादृशासङ्गतार्थानां तुच्छस्वार्थप्रलोभतः । प्रकल्पनेन सर्वत्र विश्वासोऽपि नृणां गतः ॥८१३॥

जिस स्वार्थभावना से तुम ऐसा दुराग्रह करते हो उसे बाहर व्यक्त करने को भी तुम डरते हो, यही तुम्हारी भावचोरता । मुखादि से वर्ण सृष्टि अत्यन्तासङ्गत होने पर भी जिस स्वार्थ लोभ से उसे सत्य मानते हो वह भी दुर्लभ है । ब्रह्मा जी के उत्तमाङ्ग मुख से पहले ब्राह्मण पैदा हुए थे । अतः वे वर्णों में श्रेष्ठ रहे थे और उन्हीं की वंशपरम्परा में हम भी पैदा हुए और ब्राह्मण नाम से पुकारे जाते हैं। अतः हम भी सबसे श्रेष्ठ हैं । मनुनाम से लिखित स्मृति में भी यह भाव लिखा गया है । इस प्रकार ऋषियों के नाम से बहुत कुछ मिथ्या लिख कर रखने से लोगों को सब शास्त्रों में ( परमेश्वर और पुण्यपापादि में ) विश्वास नष्ट हो गया है ।

[illegible] नस्तुष्येदिति न्यायेन साम्प्रतम् । त्वदिष्टोत्पत्तिमप्यङ्गीकृत्येदं ब्रूमहे वयम् ॥८१४॥
[illegible] ब्राह्मणादीनामस्तु नाम मुखोद्भवः । तेन पूज्यत्वमप्यस्तु श्रेष्ठाङ्गोद्भवहेतुना ॥८१५॥
[illegible] निमार्गेण संजातेषु नरेष्वपि । पूज्यत्वं कथमिष्येत पूज्यताहेत्वभावतः ॥ ८१६ ॥
[illegible] मुखोत्पत्तिहेतुना पूज्यता क्वचित् । शास्त्रेषु विहिता [illegible] ॥८१७

ब्रह्मोत्तमाङ्गजातस्य श्रेष्ठता जन्मनाऽस्त्वपि । मर्त्याधमाङ्गजातस्य सा कथं जन्मना भवेत्८१८
स्वतो ब्रह्मा जगच्छ्रेष्ठस्तत्र श्रेष्ठतमं मुखम् । ततो जातस्य श्रेष्ठत्वं जन्मनाप्युपपद्यताम् ॥८१९॥
कर्मपाशवशत्वेन मर्त्यजाति: स्वतोऽवरा । तत्रापि चावरा योषित् तन्नीचाङ्गसमुद्गते॥८२०
जातिभ्रमवशप्राप्तब्राह्मणत्वापदेशत: । ब्रह्मास्योत्पन्नश्रेष्ठत्वं निर्लज्जो वक्तुमर्हति ॥८२१॥
दशरथात्मजरामस्य पूजोक्ता मुनिभिस्त्विति । अद्यान्यपुत्रो रामाख्य: कस्तां स्वस्मै प्रयाचते?८२२

अब तुष्यतु दुर्जन न्याय से हम तुम्हारी अभीष्ट मुखादि सृष्टि को मान करके भी यह पूछते हैं कि आदि सृष्टि के पहले कृतयुग में ब्रह्मा मुख से ब्राह्मण का जन्म हुआ भी हो और उसी हेतु से उसकी पूज्यता भी मानी गयी हो, उससे योनि द्वारा पैदा हुए मनुष्यों में वह पूज्यता कैसी मानी जायगी । साक्षाद्ब्रह्म मुख से उत्पन्न व्यक्ति की पूज्यता शास्त्रों में विहित है तो वह मूत्रद्वार से उत्पन्न में कैसी रहेगी ? ब्रह्मा जी सबसे श्रेष्ठ हैं और उनमें उनका मुख और भी श्रेष्ठ है । ऐसी श्रेष्ठ वस्तु से उत्पन्न व्यक्ति, जन्म से भी श्रेष्ठ हो सकता था तो मनुष्य के नीच अङ्ग से उत्पन्न व्यक्ति, कैसा जन्म से श्रेष्ठ होगा ? मनुष्य देवताओं से निकृष्ट जाति के हैं और उनमें भी स्त्रीजाति निकृष्ट मानी जाती है । उसी के नीचाङ्ग से उत्पन्न जातिभ्रमवाले ब्राह्मणों में वह ब्रह्ममुखोत्पत्ति पूज्यता कहने वाला निर्लज्ज ही होगा । दशरथ पुत्र श्रीरामचन्द्र जी की पूजा रामायणादि में विहित है तो आजकल का रामचन्द्र नाम धारी कौन उसे अपने को माँगता है ।

स्वोत्पादकजनन्यादिज्ञानशून्यनरस्य हि । सृष्ट्यादिस्वात्मवंशीयपरम्परामति: कुत: ॥८२३॥
तदभावेमुखोत्पन्न वंशोद्भवनिमित्तकम् । ब्राह्मण्यं स्वात्मनो वक्तुं प्रेक्षावतां न युज्यते॥८२४॥
सन्मानादिप्रलोभेन ब्राह्मणं स्वं ब्रवीषि चेत् । अन्येऽपि चान्धविश्वासाद्ब्रूयुस्त्वां ब्राह्मणं जना:
यद्वा त्वत्पूर्वजास्तेन लोभेन ब्राह्मणं मृषा । स्वात्मानमूचिरे तेन जन्मना ब्राह्मणो भवान् ॥८२६५
जन्मजातिप्रथा चैषा तथाविधमृषागिराम् । मार्गप्रदाऽभवत्तेन बहवो ब्राह्मणब्रुवा: ॥८२७॥
श्रूयते जयचन्द्रेण राज्ञा पूजाप्रसङ्गत: । सपादलक्षसंख्याका ब्राह्मणा निर्मिताइति ॥८२८॥
शालिवाहननाम्नाऽपि बहवो ब्राह्मणा: कृता: । आर्षभाष्ये सर्वमेतदिन्दिरारमणोऽब्रवीत्।८२९॥
मिथ्याजातिप्रथापक्षे ब्राह्मणब्रुववर्धनम् । श्रुत्युक्तवर्णपक्षे तु नैकोऽपि ब्राह्मणब्रुव: ॥८३०॥
यावान् मिथ्याचतुर्वेदित्रिवेदिब्रुवसञ्चय: । तावान् सत्यचतुर्वेदिसमूहो नेह विद्यते ॥८३१॥
मिथ्याब्राह्मणसङ्घातो यावानेह प्रदृश्यते । न तावान् सत्यतत्सङ्घो भूतले क्वापि दृश्यते ॥८३२
चतुर्वेदानधीते य: स चतुर्वेद उच्यते । चतुर्वेदी च स स्याद्यद्गृहे वेदचतुष्टयम् ॥ ८३३ ॥७
अद्यतनचतुर्वेदिगृहे वेदचतुष्टयम् । न स्यादेवेत्यतो मिथ्या चतुर्वेदी स कथ्यते ॥ ८३४ ॥
गृहस्थितैर्वेदग्रन्थैश्चतुर्वेदी भवेद्यदि । तद्वेदग्रन्थविक्रेता चतुर्वेदी कुतो न हि ॥ ८३५ ॥



मिथ्याभूतं ब्राह्मणत्वं स्वेन वा स्वीयपूर्वजै: । अकस्मात्कल्पितं शब्दमात्रेणेतीह बुध्यताम्८३६॥
यथार्थं ब्राह्मणत्वं तु श्रुतिस्मृत्यादिदर्शिता: । गुणा: स्वभावतो यस्मिन् तत्र तत्सम्मतं बुधै:८३७
चतुर्वेदित्वपाण्डित्ये जन्मसिद्धे न शास्त्रजे । शास्त्रसिद्धे तु ते क्वापि भवेतां नैव जन्मत: ॥८३८
द्विवेदीदीक्षितोऽप्येवमुपाध्यायत्रिपाठिनौ । ज्ञातव्यौ जन्मसंसिद्ध शास्त्रसिद्धप्रभेदत: ॥८३९॥
वाजपेयि सोमयाजि शास्त्र्याचार्याद्युपाधय: । सत्यमिथ्याप्रभेदेन ज्ञातव्या द्विविधा जनै: ॥८४०
सोमेन वाजपेयेन यो यजेत यथाक्रमम् । सोमयाजी वाजपेयी स सत्यश्चेतरो मृषा ॥८४१॥
शास्त्रं शास्त्राणिवाऽधीत्य यस्तु सम्यक्प्रचारयेत् सत्यशास्त्रीस एव स्यान्मिथ्याशास्त्री च जन्मत:
आप्नोति च शास्त्रार्थमाचारे स्थापयत्यपि । स्वयमाचरते यस्तु सत्याचार्य: स दुर्लभ:॥८४३
अकृत्वैव च तत्सर्वमाचार्यं यस्तु जन्मना । स्वात्मानं ख्यापयेत्सोऽपि मिथ्याचार्यो निगद्यते।८४४
चातुर्वर्ण्यमपीहास्ति सत्यमिथ्याप्रभेदत: । शास्त्रोक्तगुणवत्सत्यं मिथ्याभूतं तु जन्मत: ॥८४५
मिथ्याभूताश्चतुवर्णा रागद्वेषादिमूलका: । यथार्थास्ते शास्त्रमूला इति वेदविदां मतम् ॥८४६
नूतन: कश्चदागत्य विप्रपङ्क्तौ वदेद्यदि । ब्राह्मणोऽस्मीति तत्रान्यत्प्रमाणमपि मृग्यते ॥८४६॥
यत: शूद्रोऽपि सन्मानभोजनप्राप्तिलोभत: । स्वात्मानं ब्राह्मणं ब्रूयादिति सम्यग्विचार्यते।८४८
शूद्रोक्तस्वात्मब्राह्मण्ये यथा लोभादि चोह्यते । तथा सर्वजनप्रोक्तस्वब्राह्मण्येऽपि तद्भवेत्॥८४९
ब्राह्मणत्वादयो वर्णा: चतुर्वेदाद्युपाधिवत् । जन्मना नाभवन् पूर्वमतो रागादिवर्जिता। ॥८५०॥
साम्प्रतं ते जन्मनैव तस्माद्रागादिहेतुका: । अशास्त्रीया ह्यपभ्रंशा मिथ: प्रद्वेषहेतव: ॥८५१॥

जन्म के कारण माता पिता का ज्ञान भी अनुमान से होता है न कि प्रत्यक्ष से । ऐसी स्थिति में आदि सृष्टिकालीन ब्रह्ममुखोत्पन्नवंश-परम्पराज्ञान किसी प्रमाण से भी नहीं होगा ? जब वह नहीं है तो तन्निमित्तक ब्राह्मणत्वं भी अपने में बुद्धिमान नहीं कहेगा । पूजासम्मानादि के लोभ से आदमी अपने को ब्राह्मण बताता हो या अपने पूर्वज उसी लोभ से अपने को ब्राह्मण बताये हों तो लोग भी अन्धविश्वास से उसको ब्राह्मण कहेंगे । जन्मजाति प्रथा ऐसे मिथ्याब्राह्मणत्व का मार्ग दिया । अत: आजकल ब्राह्मणब्रुवों की संख्या ज्यादा है । सुना जाता हैं कि राजा जयचन्द्र ने पूजानुष्ठन में उचित ब्राह्मण न मिलने पर सवा लाख शूद्रों को ब्राह्मण बनवा दिया था और वे ही आजकल सवालक्खी ब्राह्मण कहलाते हैं । राजा शालिवाहन भी ऐसा ही किया था जातिप्रथा में ही ब्राह्मणसंख्या ज्यादा । शास्त्रीय ब्राह्मण तो बहुत ही दुर्लभ हैं । जैसा मिथ्याचतुर्वेदी त्रिवेदीत्यादि की संख्या जितनी ज्यादा है उतनी सत्यचतुर्वेदीत्यादि की नहीं है । वैसा ही मिथ्याब्राह्मणों की संख्या जितनी है उतनी सत्यब्राह्मणों की नहीं । जिसने चार वेद पढ़ा था वह सत्य चतुर्वेद है और जिसने उनको पढ़ा नहीं किन्तु पितृपितामहादि के पठित वेदग्रन्थों को अपने घर में रक्खा है वह चतुर्वेदी है और जिसके

घर में वे ग्रन्थ भी नहीं और चतुर्वेदी कहलाता है तो वह मिथ्याचतुर्वेदी या चौबे कहलाता है। घर में चार वेदों को रखने मात्र से चतुर्वेदी होता है तो वेदों का विक्रेता भी चतुर्वेदी हो सकता है। एवं मिथ्याब्राह्मणत्व भी स्वयं या स्वपूर्वजों के द्वारा कल्पित ही है। यथार्थ ब्राह्मण तो शास्त्रोक्त-गुणवान ही है। जन्मसिद्ध चतुर्वेदी पण्डित इत्यादि उपाधियाँ शास्त्रसिद्ध नहीं और शास्त्रसिद्ध वे उपाधियाँ जन्मसिद्ध नहीं। एवं द्विवेदी दीक्षित उपाध्याय त्रिपाठी वाजपेयी सोमयाजी शास्त्री और आचार्यादि उपाधियाँ भी जन्मसिद्धशास्त्रसिद्ध भेद से दो प्रकार की हैं। उनमें जन्मसिद्ध मिथ्या और शास्त्रसिद्ध सत्य होती हैं। उसी प्रकार ब्राह्मणत्वादि चार वर्ण भी जन्मसिद्ध मिथ्या और शास्त्रसिद्ध सत्य होते हैं। जन्मसिद्ध उपाधियों और वर्णों का मूल रागद्वेषादि हैं और यथार्थ उपाधियों और वर्णों का मूल, वेदशास्त्रादि ही हैं। यदि कोई नया आदमी ब्राह्मणभोजनपंक्ति में आकर मैं भी ब्राह्मण हूँ कहेगा तो उसमें दूसरा प्रमाण भी पूछा जाता है। क्यों? शूद्र भी भोजनप्राप्ति के लोभ से अपने को ब्राह्मण कह सकता है। जैसा शूद्र अपने को ब्राह्मण बताया हो तो कुछ लोभ से वह ऐसा कहा समझा जाता है वैसा ही जो जो अपने को जन्मसिद्ध ब्राह्मण बताता है उसमें भी लोभादि ही कारण है। पहले चार वर्ण और चतुर्वेदीत्यादि उपाधियाँ भी जन्म से नहीं माने जाते थे। अतः वे रागद्वेषादि हेतुक नहीं किन्तु आजकल वे जन्म से माने जाते हैं। अतः इनमें रागद्वेषादि ही हेतु हैं।

यद्भविष्यपुराणादावुक्तं यद्दीक्षितादयः। चतुर्वेदी त्रिवेदी च काण्वपुत्रा दशेत्यपि ॥८५२॥
तत्र पितृकृताः संज्ञा दर्शिता दीक्षितादिकाः। चतुर्वेदि त्रिवेद्यादि संज्ञामात्रं हि लौकिकम्।८५३
लोके माङ्गल्यनामानि पुत्राणां जनकादिभिः। क्रियन्ते तद्वदेतानि काण्वेनैषां कृतान्यपि॥८५४॥
यद्वा वीरप्रसूर्वीरमातेत्यादि प्रयोगवत्। उपाध्यायचतुर्वेदिदीक्षितान्वर्थकम् ॥ ८५५ ॥
न वीरा जन्मतो जाताः किन्त्वग्रे पूर्वपुण्यतः। यदा वीरास्तदा माता वीरप्रसूरितीर्यते ॥८५६॥
एवं दीक्षादि सम्प्राप्तेरग्रे ते दीक्षितादयः। यदा जाता तदा काण्वो दीक्षितादिपितोच्यते।८५७
केचिदत्र वदन्त्येतत्सिद्धनामोपपत्तये। कल्प्यते जतिरेतेषामिति तन्नैव युज्यते ॥ ८५८ ॥
यथार्थोत्पत्तिपक्षे हि मुखमानससृष्टिवत्। भिन्नावयवसंस्थानविरहोऽत्रापि बाधकः ॥८५९॥
विप्रेष्ववान्तरां जातिं दीक्षितत्वादिभेदतः। यद्यलक्ष्यत्पुरा काण्वस्तदाऽन्योन्यप्रभेदकम् ॥८६०॥
रूपं चावश्यमलक्ष्यन्मा ऽन्यस्तथा वदत्विति। अब्राह्मणोऽपि वा मा वोच दृशस्त्वन्यतमोऽस्म्यहम्॥
यत्तु केनचिदत्रोक्तमब्राह्मणो वदेद्यदि। स्वात्मानं ब्राह्मणं तर्हि पश्चाज्ज्ञातो भवेदिति ॥८६२॥
तत्तुच्छं यद्धि दुर्ज्ञेयं स्वकीयमपि धीमता। तत्परेषां कथं ज्ञेयमन्धविश्वासमन्तरा ॥ ८६३ ॥
मानवाः स्वयमात्मीयवेदहेतुपरम्पराम्। अजानन्तः कथं विद्युस्तामन्यस्य परम्पराम् ॥८६४॥



ब्राह्मणादिस्त्रियामूढतज्जातिपतिवीर्यतः। उत्पत्तिरादितः केर्वा ज्ञायेतासर्वविन्नरैः ॥८६५॥
अतो दुर्ज्ञेयता प्रोक्ता ब्राह्मण्ये तन्त्रवार्तिके। यत्तु तत्रैव सम्प्रोक्तं प्रसङ्गानुप्रसङ्गतः ॥८६६॥
ब्राह्मणत्वादिको वर्णः शक्यो ज्ञातुं सुशिक्षितैः। तच्चोपेक्ष्यं स्वकीयोक्तिविरुद्धत्वाद्विवेकिभिः॥

अनादिकाल से अब तक की विवाहित माता पित्रादि परम्परा को असर्वज्ञ पुरुष नहीं जान सकता। अतएव कुमारिल भट्ट ने तन्त्रवार्तिक में कहा कि ब्राह्मणत्वादि दुर्ज्ञेय होते हैं। उसी तन्त्रवार्तिक में दूसरे प्रकरण में जो कहा गया कि ब्राह्मणत्वादि वर्ण विज्ञानां सुज्ञेय होते हैं, वह असङ्गत और पूर्वापर विरुद्ध होने से उपेक्षणीय है।

यद्भविष्य इति "कण्वो नाम मुनिश्रेष्ठः सम्प्राप्तः कश्यपात्मजः। आर्यावती देवकन्या कण्वस्य दयिता प्रिया। दशपुत्रास्तयोर्जाता आर्यवृद्धिकरा हि ते। उपाध्यायो दीक्षितश्च पाठकः शुक्लमिश्रकौ॥ अग्निहोत्री द्विवेदी च त्रिवेदी पाण्ड एव च। चतुर्वेदीति कथिता यथा नाम तथा गुणाः ॥ (भवि० प्रतिसर्ग २६।७–९) इति। एतानि कण्वकृत-नामान्येव, वीरप्रसूरित्यादिवद्भाविसंज्ञा वा। परस्परविलक्षणापूर्वसृष्टिपक्षे तु विभाजक-रूपाद्यभावो बाधकः ॥ ब्राह्मणादिस्त्रियामिति—"सवर्णेभ्यः सवर्णासु जायन्ते हि सजा-तयः"। (याज्ञ० १-९०) इत्यादिकमुक्त्वाऽग्रे चोक्तं "विन्नास्वेष विधिः स्मृतः" इति। समानजातीयत्वेनाभिमताभ्यां विवाहितस्त्रीपुंसाभ्यामुत्पन्न एव तज्जातीयत्वेना-भिमन्यते न त्वविवाहिताभ्यां ताभ्याम्। सृष्ट्यादितोऽद्यपर्यन्तमेतादृशी परम्पराऽसर्वज्ञ-दुर्ज्ञेयैव। तन्त्रवार्तिक इति। "दुर्ज्ञानत्वात् (ब्राह्मणत्वस्य) अज्ञानवचनं गौणमिति शा० भाष्यस्य त० वार्तिके" ज्ञायमाने त्वज्ञानवचनं दुर्ज्ञानत्वात्। यत्सुखेनाज्ञानं तद-ज्ञानमेव। तच्च स्त्र्यपराधनिमित्तमिति। स्त्र्यपराधो दुर्ज्ञेयः। अतस्तन्निमित्तकसन्ततिरपि दुर्ज्ञेयैव। प्रसङ्गानुप्रसङ्गत इति साध्वसाधुशब्द निष्ठवाचकत्वसाङ्कर्यप्रसङ्गतः। ब्राह्मणत्वादिवर्णानामपि साङ्कर्यं नास्तीत्युक्तम्। तथाहि "यथा च तुल्यप्राण्यादिरूपत्वा-द्वर्णसङ्करम्। वदतः स्मृतिबाधः स्यात्तथा वाचकसङ्करम् ॥ आदितश्च स्मृतेः सिद्धः प्रत्यक्षेणापि गम्यते। साध्वसाधुविभागोऽयं कुशलैर्वर्णभेदवत्" (१।३) इति। अत्र यथा कुशलैर्वर्णभेदो ज्ञायते तथा शब्दसाधुत्वं साधुत्वाभावोऽपि तैर्ज्ञायत एवेत्युक्तम्। तन्न। कुशलोऽपि परशुरामो ब्राह्मणं मत्वैव कर्णाय शस्त्रविद्यामुपादिदेश। येन च हेतुना कर्णं परशुरामो ब्राह्मणमजानात्तेन गुणपक्ष एव समर्थितो भवति न तु जन्मजाति-पक्षः। कुशलाः परनिष्ठाचारविचारविद्यासंस्कारान् ज्ञातुं शक्नुयुर्न तु योनिवीर्य-परम्पराम्। अत एव नापितात्स्वभार्यायां जातं मतङ्गमृषिर्नाजानात्।

भगवतन्न विद्मो यद्ब्राह्मणाः स्मो न वेति च। श्रुतिश्च वर्णसन्देहं ब्रूते तन्निश्चयः कुतः॥८६८
स सन्देहः स्वपित्रादिनिश्चयाभावहेतुकः। इति मीमांसकाचार्यैर्भाष्यादौ प्रत्यपादि ॥८६९॥

स्वमातृव्यभिचारस्य संभवोऽत्र प्रदर्शितः। एवं हि सत्यविच्छिन्नवंशज्ञानं कुतस्तव ॥८७०॥
पत्नीं च प्रतिप्रस्थाता व्यभिचारं तु पृच्छति। "कस्ते जार" इति ब्रूते साऽसौ मे जार इत्यपि ७१
को हि तद्वेद रक्षांसि यत्स्त्रियं भुञ्जते इति। काण्वे शतपथे सम्यगुक्तं काण्डे चतुर्थके ॥८७२॥
यत्प्रलुलोभ मे माता विचरत्यननुव्रता। तन्मे रेतः पिता वृङ्क्तामिति श्राद्धेषु पठ्यते ॥८८३॥
एतेनापि ध्रुवः स्त्रीणां व्यभिचारस्य संभवः। अतोऽतिदुर्लभा वीर्यपरम्परामतिर्नृणाम्॥८७४॥
भवान् ब्रूतेऽतिगर्वेण कल्पादिमर्त्यसूद्भितः। अद्य पर्यन्तमात्मीयवंशविज्ञानवानिति ॥८७५॥
अनादिः सादिर्वा भवतु जनतासृष्टिरखिला। पुरा वा स्याद्वेधो वदन भुजयुग्मादिजनिता।
मनोस्तद्भार्यायामपि मिथुनधर्मेण भवतु। तथाऽप्यद्योत्पन्ने नरि न गमकं तत्क्रमजनेः ॥८७६॥
अनादि सृष्टिपक्षेऽपि सैव वर्णपरम्परा। अद्य पर्यन्तमायातीत्यत्र मानं न किञ्चन ॥८७७॥
सृष्टेः सादित्वपक्षेऽपि द्विधा सैवेह संभवेत्। मदुक्ता मैथुनी सृष्टिः त्वदुक्ताऽन्या मुखादिजा॥८७८॥
अस्मिन् पक्षद्वयेऽप्यादिविप्रवीर्यपरम्परा। एतद्विप्रब्रुवेष्वस्तीत्यत्र नैषत्प्रमापकम् ॥८७९॥

मैत्रायणीयसंहिता में और गोपथ ब्राह्मण में ब्राह्मणत्वसन्देह दिखाया गया है। यह सन्देह पित्रादि सन्देह अर्थात् मातृव्यभिचारसंभावना से हुआ ऐसा मीमांसक कहते हैं। यज्ञसभा में प्रतिप्रस्थाता पत्नी से पूछता है कि इनमें तुम्हारा जार (उपपति) कौन है और वह बताती है कि यह मेरा जार (यदि रहेगा तो) है। काण्वशतपथ में लिखा है कि स्त्रियों को राक्षस या (तत्तुल्य) भोगते हैं यह बात कौन जानता है। श्राद्ध में पिण्डदान के समय, एकाग्निकाण्ड का वह मन्त्र बोला जाता है जिसका अर्थ यदि मेरी माता व्यभिचार किया हो तो मेरा पिता उस वीर्य का धारण करे जिससे मेरा दिया हुआ पिण्ड उसी को मिल सके। इन वाक्यों से और प्रकृतलोकस्वभाव से भी स्त्रियों का प्राय व्यभिचार संभावित होता है। तुम तो कहते हो मैं जन्म से असल ब्राह्मण हूँ। सृष्टि सादि हो या अनादि हो, ब्रह्ममुखादि से पैदा हुई हो या मनुशतरूपा से, कल्पादि में जो चार वर्ण थे उन्हीं की वंश-परम्परा ही ठीक आजतक आ रही हैं इसमें कुछ भी प्रमाण नहीं है।

वयमेतन्नेति "न वै तद्विद्मो यदि ब्राह्मणा वाऽस्मोऽब्राह्मणा वा, तस्य वा ऋषेः स्मोऽन्यस्य वा यस्य ब्रूमहे, यस्य त्वेव ब्रुवाणो यजते तं तदिष्टमागच्छति नेतरमुपनमति, तत्प्रवरे प्रव्रियमाणे ब्रूयात् देवाः पितरः पितरोदेवा योऽस्मि स सन् करोमि शुनं म इष्टं शुनं शान्तं शुनं कृतं भूयात्" ( मैं० सं० १।४।११ )। एवं "आङ्गिरसोऽब्रवीन्न वयं विद्मो यदि ब्राह्मणाः स्मो यद्यब्राह्मणा स्मो यदि तस्य ऋषेः स्मो यदि वाऽन्यस्य, तस्मात्प्रवरे प्रव्रियमाणे वाचयेद्देवाः पितरः पितरो देवाः ( गोप० ब्रा० ५।२१ ) इति। मातृव्यभिचारशङ्कामेवास्य संशयस्य कारणं मन्वते मीमांसकाचार्याः। तथाहि "स्त्र्य-पराधेन कर्तुश्च पुत्रदर्शनेन अप्रमत्ता रक्षत तन्तुमेनमि त्यादिना दुर्ज्ञानम्" (मा० १।२।१३)



इति। तद्वार्तिके च "यतस्तु माता भस्त्रा पितुः पुत्र इति स्मर्तृणां दर्शनं जनयितुश्च नानाजातित्वोपपत्तिस्तेन वर्णसङ्करः। वेदेऽपि चाप्रमत्ता रक्षत तन्तुमेनमिति जाति-विच्छेददर्शनं स्त्र्यपराधकर्तृपुत्रनिमित्तमेवोपपद्यते। अन्यथा ह्य रिरक्ष्यमाणेऽपि नैव स्वजातितन्तुविच्छेदो भवेत्" इत्युक्तम्। अस्मन्मते च तत्संशयकारणं न मातृव्यभिचार-शङ्काऽपितु वर्णप्रयोजकगुणसाकल्यसंशय एवेति वक्ष्यते। "अप्रमत्ता रक्षत तन्तुमेन-मित्यस्यापि "प्रजातन्तुं मा व्यवच्छेत्सीः" इत्यत्रैव पुत्रोत्पत्तिवर्धनमुत्पन्नेषु च श्रौत-विद्यारक्षणं चार्थो न तु स्त्रीव्यभिचारवारणम्। स्त्र्यपराधात्कर्तुश्च पुत्रदर्शन"मिति जैमिनिसूत्रं च जातिब्राह्मण्यवारणार्थमिति वक्ष्यामः। पुंश्चल्यश्च न विविधैरप्युपायैः व्यभिचारात् वारयितुं शक्याः। अत एव यज्ञसभायां पत्न्या व्यभिचारः पृच्छ्यते। तदुक्तमापस्तम्बसूत्रे "तां पृच्छति कति ते जारा" ( ६।२१ ) इति तद ये धूर्तस्वामिभाष्ये चोक्तं अय च व्यभिचारप्रश्नः कर्मकालकृतव्यभिचारविषयकः। पूर्वकालकृतस्य तस्य प्रायश्चित्त पूर्वमेव कर्तव्यमन्यथा यागाधिकार एव न स्यादिति। वैखानससूत्रादावपि पत्नी-व्यभिचारप्रश्नप्रतिवचने दर्शिते। यदि पत्नीव्यभिचारवारणं पुरुषयत्नैः संभवेत्तदा यज्ञसभायां तादृशप्रश्नप्रतिवचने न स्याताम्। काण्वशतपथे चोक्तं "को हि तद्वेद स्त्रियं रक्षांस्यभिसचन्ते" ( ४।२।१ ) इति। मनावपि "पौंश्चल्याच्चलचित्ताच्च नैःस्नेह्याच्च स्वभावतः। रक्षिता यत्नतोऽपीह भर्तृष्वेता विकुर्वते ( ९।१५ ) इति। यत्तु सत्याषाढे-नोक्तं तदत्यन्तमश्लीलम्। तेन चोक्तं "अथातो दारगुप्तिः। स्थूराहढाचूर्णानि कारयित्वा जारी सुप्तायै योनिमुपवपेदिन्द्राय याऽस्य शेमलिफकमन्येभ्यः पुरुषेभ्योऽन्यत्रमदिति (३८) तदर्थश्च अथशब्दोऽधिकारार्थः। अतः शब्दो हेतौ, यस्मादप्रमत्ता रक्षतेत्येवमादिवचनाद् दाराः प्रयत्नेन रक्षितव्याः। तस्माद्दारगुप्तिः। स्थूराहढाः स्थूलाः शनपद्यः तासां चूर्णानि कारयित्वा, यस्य गृहे जारो वर्तते स जारी, स एवं कृत्वा तानि चूर्णानि सुप्ताया भार्याया योनिमुपवपेत्=योन्यां प्रक्षिपेत्। इन्द्राय याऽस्या शेफमलिङ्कमित्यनेन ( मन्त्रेण ) देशान्तरजिगमिषुणा एतत्कर्तव्यम्। एवं कृते उपगमनासमर्था योनिर्भवतीत्युपदिशन्ति। पुनरागत्य बस्तमूत्रेण प्रक्षालयेदित्यापस्तम्बेनोक्तम्। कर्मसद्धौ बस्तमूत्रेण प्रक्षालयेदि-त्यौषध किलैतत्तस्याः (३८) इति। एतादृशाश्लीलोपायैरपि व्यभिचारवारणं चौर्यादि-वारणमिव दुष्करमेव। चौर्यादिवारणार्थं हि सर्वकारेण मनुष्यैश्च बहवो दृढतरोपायाः सततं क्रियन्ते तथापि चौर्यादिकं भवत्येव, तच्च क्वचिज्ज्ञायते क्वचिन्न ज्ञायतेऽपि।

ननु दुर्ज्ञेयपित्रादिवीर्यकारणतामते। श्रुत्युक्तो ब्राह्मणत्वादिसंशयस्तूपपद्यते ॥८८०॥
स कथं स्वमनोवेद्य-गुणपक्षे भवेदिह। शमाद्यात्मगुणाः स्वेन ज्ञायन्ते च परैरपि ॥८८१॥
तस्माद्ब्राह्मण्यसन्देहः श्रुतिवाक्यप्रदर्शितः। जन्म जातिप्रथ सिद्धौ गमकं भवतीति चेत्॥८८२॥
अत्रोच्यते स सन्देहो भवेत्पक्षद्वयेऽपि च। दुर्ज्ञे तन्निमित्तत्वाद् व्यञ्जकानिश्चयादपि॥८८३॥
वर्णसिद्धिनिमित्तं त्वत्-पक्षे वीर्यपरम्परा। दुर्ज्ञेयत्वाच्च तस्यास्तु संशयः सुस्थिरो भवे॥८८४

निमित्तगुणबाहुल्यस्थैर्याद्वर्णस्य निश्चय: । तत्रान्यतरन्यूनत्वशङ्कया संशयो भवेत् ॥८८५॥
शमादिगुणसाकल्यस्थैर्यासद्भावशङ्कया । अस्मत्पक्षेऽपि स्यादेव संशत: श्रुतिदर्शित:॥८८६॥
आत्मन्यप्रत्ययं चेतो बलवाच्छिक्षितेष्वपि । इति न्यायानुसारेण गुणपक्षेऽपि संशय: ॥८८७॥
आदौ हनुमत: सिन्धुलङ्घने खलु संशय: । ततो जाम्बवता स्वात्मशक्त्युद्बोधे स पुप्लुवे ॥
सुष्ठ्वभ्यस्तपरीक्षार्थ-ग्रन्थविद्यार्थिनोऽपि च । परीक्षोत्तरणे प्राय: जायते खलु संशय:८८९॥
प्रवरानुमन्त्रणात्किन्तु त्वत्पक्षे न स वार्यते । अस्मत्पक्षे निवार्य: स्यादित्ययं पक्ष उत्तम: ॥
सन्देह: स भवन्मते यतो मात्रादिव्यभिचारशङ्कया ।
तस्मान्न प्रवरानुमन्त्रणाद्वार्य: स्याच्छतशोऽपि वाचितात् ॥ ८९१ ॥
सोऽस्माकं गुणलोपशङ्कया निष्पन्न: श्रुतितोऽप्यनूद्यते ।
वार्योऽत: प्रवरानुमन्त्रणात्प्रायश्चित्तविधानतोऽघवत् ॥ ८९२ ॥

यहाँ यह शङ्का की जाती है कि जन्म से ब्राह्मणत्व मानने पर ही श्रुतिदर्शित संशय जचता है न कि गुणों से, शमादि आत्मगुण स्वपरपुरुषवेद्य होते हैं। अत: तत्प्रयोज्य वर्ण भी सुवेद्य है। अत: सन्देहसूचक श्रुति ही जन्म जाति प्रथा में प्रमाण है। उसका उत्तर है कि उभय पक्ष में वर्णसन्देह हो सकता है। जन्म दुर्ज्ञेय होने से तत्प्रयुक्त वर्ण में संशय होता है और वर्णनिमित्तगुणकर्मसंस्कारादिबाहुल्य का निर्णय होगा तो वर्ण का निश्चय होगा। सुस्थिरता यदि उन गुणादि में न हो या किसी एक की न्यूनता की शंका होगी तो भी वर्ण का संशय हो सकता है। अपने बल और पाण्डित्यादि भी दूसरों की प्रसंशा से अपने को मालूम होते है न कि स्वत:। अत एव समुद्रलंघन में हनुमान् जी भी पहले अपने को असमर्थ समझता था। पाठ्यपुस्तकों में ठीक अभ्यास किया हुआ विद्यार्थी भी परीक्षा पास होने में अनिश्चित रहता है। वर्णसंशय भी तुम्हारे मत में प्रवरानुमन्त्रण से निवार्य नहीं होगा जो गुणपक्ष में हो सकता। जन्मपक्ष में मातृव्यभिचार शंका ही वर्ण सन्देह का कारण होता है। वह आज के मन्त्र पाठ से निवार्य नहीं होगा। गुण पक्ष में निमित्तगुण बाहुल्य में किसी की न्यूनता शंका। अत: मन्त्र पाठ से उनका मार्जन होगा जैसा कर्म जन्य दोष का नाश प्रायश्चित्त से होता है न कि कर्म का, वैसा ही व्यभिचारिमातृसंपर्क जन्य दोष, मन्त्रपाठ से हट सकता न कि मातृव्यभिचार। यदि वह हुआ हो तो जन्म पक्ष में ब्राह्मणत्व सिद्ध नहीं होगा।

आत्मन्यप्रत्ययमिति = तदुक्तं शाकुन्तले "आपरितोषाद्विदुषां न साधु मन्ये प्रयोगविज्ञानम्। बलवदपि शिक्षितानामात्मन्यप्रत्ययं चेत:" इति प्रथमाङ्के। प्रवरानुमन्त्रणात = "देवा: पितर: पितरो देवा:" इत्यारभ्य शुनं कृतं भवे"दित्यन्तो मन्त्रो दर्शित-



संशयवारणार्थ:। शुनं स्वर्गहेतु:। स च मन्त्र: तैत्तिरीयब्राह्मणे प्रकारान्तरेणोक्त:। तद्यथा "देवा: पितर: पितरो देवा: योऽहमस्मि स सन्यजे, यस्यास्मि न तमन्तरेमि, स्वं म इष्टं स्वं दत्तं स्वं पूर्तं स्वं श्रान्तं स्वं हुतं। तस्य मेऽग्निरुपद्रष्टा, वायुरुपश्रोता, आदित्योऽनुख्याता द्यौ: पिता पृथिवी माता प्रजापतिर्बन्धु: य एवास्मि स सन्यजे ( ३।७।५ ) इति। अस्य सायणकृतोऽर्थ: "हे देवा: पितर: पालयितर: हे देवा द्योतनात्मका उभयविधा यूयं मद्विज्ञापनां शृणुतेति शेष:। योऽहमस्मि पुरा वर्णाश्रमयो: याद‍ृशाचारोहमस्मि ताद‍ृशाचार एव सन् स्वोचिताचारस्य लोपमकृत्वा युष्मान् यजे। "अवश्यं पितुराचारं मनसाऽपि न लङ्घयेदिति सर्वे वदन्ति। ताद‍ृशस्य मे यदिष्टं तत्स्वं भवतु। इह लोके वषट्कारेण देवेभ्यो यद्दत्तं तद्युष्मत्प्रसादात्परलोके भोगाय ममैव भवतु। तथा दत्तं दक्षिणाद्रव्यादिकं मम स्वं भवतु, पूर्तं पक्वमन्नादि पितृभ्यो दत्तं मम स्वं भवतु, श्रान्तं तपोरूपेणानुष्ठितं मम स्वं भवतु तथा हुतं स्वाहाकारेण दत्तं मम स्वं भवतु। सर्वमेतद्यथा भवति तथा हे देवा: पितरश्च यूयमनुमन्यध्वम्। तस्य यथा शास्त्रं कुर्वतो मेऽयमग्निरुपद्रष्टा = समीपे स्थित्वा द्रष्टा साक्षीत्यर्थ:। अयं वायु: उपश्रोता समीपे स्थित्वा मद्वृत्तान्तं साक्षित्वेन शृणोतु। आदित्य अनुख्याता मदीयस्य वृत्तान्तस्यानुक्रमेण ख्यापयिता, द्यौ: पिता मम पितृस्थानीया, पृथिवी च मातृस्थानीया प्रजापतिर्बन्धुस्थानीय:। यस्मादिदं यस्यैवास्मि = याद‍ृशाचारो यदीयपुत्रो यद्देवतासाक्षिकश्चास्मि स ताद‍ृश एव सन्यजे यष्टुं योग्यतां मम कुरुतेत्यभिप्राय:। अत्र 'यस्यैवास्मि' इत्यस्य यदीयपुत्र इति व्याख्या न सङ्गता, कस्य पुत्र इति निर्णयाभावेनैव जातिवादिमते संशयस्योत्पन्नत्वात्। अतो यस्यास्मीत्यस्य यदीयशिष्य: ब्राह्मणत्वादिवर्णप्रयोजकत्वेन ये ये गुणा: यानि कर्माणि च गुरुणोपदिष्टानि ताद‍ृशगुणकर्मविशिष्टोऽहं, स सन्यजे ताद‍ृश वर्ण एव सन् यजे इत्यर्थो वक्तव्य:। अत्रायमभिप्राय: ब्राह्मणत्वप्रयोजका गुणा, अध्यापनादीनि कर्माणि च प्रकरणभेदेन बहून्युक्तानि, तानि गुणकर्माणि सर्वाणि मयि सन्ति न वेति सन्देहेन तत्प्रयोज्यब्राह्मण्येऽपि सन्देहो जात:, स एव "न वै तद्विद्मो यदि ब्राह्मणा वा स्मोऽब्राह्मणा" वेत्यादिना दर्शित:। "योऽहमस्मि स सन् यजे यस्यास्मि न तमन्तरेमि" इत्यादिना च तत्संशयनिवारक प्रवरानुमन्त्रेण स वारित:। गुरुणा पालयित्रादिना वा ये ये गुणा: कर्माणि च ब्राह्मणत्वप्रयोजकत्वेन स्वकीयाचारादिना मे दर्शितानि, तद्गुणकर्मविशिष्ट: सन् मद्गुर्वादिवदहमपि यजे, तद्गुणकर्मातिक्रमणं न मया कृतमतो ब्राह्मण एवाहमिति तदर्थ:। एताद‍ृशमन्त्रार्थेनापि गुणकर्मवाद एव समर्थितो भवति न तु जन्मजातिवाद:। अत्र कर्मशब्देन शमादिगुणवद्भि: स्वभावतो यान्यध्यापनादीनि क्रियन्ते तानि ग्राह्याणि न तु श्रौतानि। श्रौतकर्मणां वर्णप्रयोज्यत्वेन वर्णप्रयोजकत्वासंभवात्। स्वपराधाकर्तुश्च पुत्रदर्शनादिति ( जै० १।२।१७) सूत्रं रागत: प्राप्तब्राह्मणत्वादिवारकम्। मनुष्या: खलु स्वकीयधनधान्यादिकमिव स्वनिष्ठश्रेष्ठवर्णत्वमपि रागत: स्वपुत्रादीन्

प्रापयितुमिच्छन्ति येन ते पुत्रादय: लोके श्रेष्ठत्वेन मन्यमाना स्वपित्रादीन् तद्धेतुत्वेन स्मरेयु। । प्रकृत ब्राह्मण्यसंशायकश्रुतिवाक्यस्य "शास्त्रदृष्टविरोधाच्च" ( १।२।२ ) इत्यनेनाप्रामाण्यमाशङ्क्य "विधिनात्वेकवाक्यत्वात्स्तुत्यर्थेन विधीनां स्यु:" (१ २।७) इत्यनेन प्रवरानुमन्त्रणमन्त्रशेषत्वं दर्शितम् । "गुणवादस्तु" ( १।२।१० ) इत्यनेन च ब्राह्मणत्वादिवर्णानां गुणकर्मादिनिमित्तत्वेन हेतुना तत्संशयोऽपि गुणसाकल्यसंशय-निमित्तक इति दर्शितं भवति । तदनन्तरं रागत: सिद्धजन्मजातिवादे मनस्यागते सति तन्निवारणं 'स्त्र्यपराधादित्यादिना क्रियते । नन्वर्थवादप्रामाण्यनिर्णायके पादे जन्म-ब्राह्मण्यादि प्रतिषेधनमसङ्गतमिति चेन्न । पादसङ्गतर भावेऽप्यधिकरणसङ्गते. सत्वात् । स्मृतस्योपेक्षाबुध्यनर्हत्वमेव हि सङ्गति: । अतएवास्पष्टलिङ्गकोपनिषद्वाक्यानां ज्ञेयब्रह्मपरत्व-निर्णायके पादे देवानां विद्यायामधिकारसाधन तत्प्रसङ्गत: शूद्रस्य क्षत्रियस्य ब्राह्मणस्य च क्रमश। स्वरूपलक्षणप्रदर्शनं, जातिवादिमते वा शूद्रस्यानधिकारसाधनं चोपपद्यते । ननु स्वमात्रा धृतमन्यवीर्यं पित्रापि सन्धारयितुं च मन्त्र: ।

श्राद्धेषु पैत्र्यादिषु पठ्यमानो ब्राह्मण्यमप्युद्भवतो ब्रवीति ॥ ८९३ ॥
यन्मे मातेति मन्त्रस्य पाठ: श्राद्धेषु दृश्यते । स मातृव्यभिचारस्य वारकत्वेन सम्मत: ८९४
शृणु तन्मन्त्रतोऽन्यस्य वीर्यं पित्रा न धार्यते । किन्त्वन्यस्पर्शवद्दुष्टमातृसम्बन्धजक्षय:८९५
साध्व्या मात्रा सता पित्रा सम्यग्दिष्टस्य शास्त्रत: । ब्राह्मण्यं सम्मतं तद्धि कर्मयोग्यत्वमेव हि॥
दुश्शीलमातृपित्रादिसाङ्गत्ये तन्न सिध्यति । तस्मात्तद्दोषनाशाय मन्त्र: कर्मसु पठ्यते ॥
यन्मे माता प्रलुलुभ इति श्रौतमन्त्रप्रपाठात् । मातुर्मा भूत्परपुरुषसंस्पर्शजन्याघलेप ।
तत्संसर्गात्सुतमुपसरद्दुष्कृतं वाऽपि माभूत् । किन्तु स्पर्शो भुवि न सकल श्रौतपाठाद्विनश्येत् ॥
यथा "यन्माय माता च गर्भे सत्यत्र यत्पिता । एनश्चकार सोऽग्निर्मा तस्मान्मुञ्चतु एनस:८९९
इत्यादौ दुष्टमात्रादिसम्पर्कागतदुष्कृतम् । पुत्र: स्वात्मगतं मन्त्राद्वारयत्येवमेव तत् ॥९००॥
अतस्तादृक्पितामह्या: संसर्गागतदुष्कृतम् । दूरीकर्तुमपि श्रौतो मन्त्रस्तादृक्च पठ्यते ९०१
यदि मन्त्रेण तद्रेतो धारणं संभवेत्तदा । स्वमातृधृततद्रेतोधारकेणाप्यलं भवेत् ॥९०२॥
यन्मे पितामही चान्यं प्रलुलोभाननुव्रता । तन्मे पितामहो रेतो वृङ्क्तामित्याद्यपार्थकम् ॥
तत्तन्मन्त्रपाठेन तत्तत्संसर्गजांहस: । विनाशो भवतीत्येतन्मते सर्वं तु सार्थकम् ॥ ९०४ ॥
एतत्पालितपुत्रेण स्वपितृश्राद्धकर्मणि । कृततन्मन्त्रपाठस्य तुल्यमेव प्रयोजनम् ॥ ९०५ ॥
अन्यथा ह्यन्यवीर्येण जातो दत्तसुत। स्वयम् । श्राद्धकर्माणि तन्मन्त्रं किमर्थं च पठिष्यति ९०६
द्वित्रादिमातृसद्भावे पठ्यमानं निरर्थकम् । रेतो धारणपक्षे स्यादत: संसर्गजक्षय: ॥९०७॥
तद्रेतो देहरूपेण परिणम्य प्रदृश्यते । श्राद्धकाले कथं तस्य स्वपित्रा धारणं भवेत् ॥९०८॥
एते घ्नन्ति ब्रह्महत्यां त्रिसुपर्णं च ये ददु: । इत्युक्तेर्ब्रह्महत्योत्थदोषनाशार्थता खलु ॥९०९॥
अन्यथा हतविप्रस्य हत्यानाशे च पूर्ववत् । पुनरुज्जीवनं तस्य स्यात्तत्प्रत्यक्षबाधितम् ॥९१०॥
तथा रेत: पिता वृङ्क्तामित्यस्यापि च लक्षणाम् । आश्रित्य मातृसंसर्गदोषनाशो विधीयते ॥



नोचेत्प्रवृद्धदेहादिहेतुरेत:प्रधारणे । श्राद्धकाले मन्त्रवक्तुर्देहपातो भवेदपि ॥ ९१२ ॥
अस्तु वा दुर्जनस्तुष्येदिति न्यायेन धारणम् । तेन तत्पितृपुत्रत्वमेव सिध्येन्न विप्रता॥९१३॥
कुर्वाणस्य पितृश्राद्धं तत्पुत्रत्वमपेक्षितम् । न तु ब्राह्मण्यमप्यत्र कुतस्तत्सिद्धिरुद्भवात् ॥
तस्माद्दर्शित एवार्थ: साधीयान्वर्णगोचर: । स्वाभाविका गुणावर्णकारणं न कुले जनि। ॥
वर्णानां जन्मसिद्धत्व बोधकं वचनं श्रुतौ । न क्वापि दृश्यते तस्मादुपाधित्वं समाश्रय ॥९१६॥
यदि प्रदर्शयेत्कोऽपि वचनं तादृशं तदा । सहस्रवत्सरं विश्वसृजामयनवाक्यवत् ॥९१७॥
अर्थान्तरपरं ज्ञातुमशक्यत्वाज्जनेर्नृणाम् । सहस्रवत्सरं नृणां जीवनं दुष्करं त्विति॥९१८॥
तत्र वत्सरशब्दस्य दिनपरत्वं समाश्रितम् । एवं च जन्मजात्युक्तिर्ज्ञेयोपाधिपरा भवेत् ॥९१९॥

यहाँ शंका की जाती है कि मासिकश्राद्धादि में वेदमन्त्र के द्वारा पुत्र प्रार्थना करता है कि मेरी माता ने व्यभिचार किया हो तो उस वीर्य को मेरा पिता धारण करे। इससे वंशपरम्परा का जो व्यभिचार निमित्तक विच्छेद है उसकी पूर्ति हो जाती है और चार वर्ण भी जन्म सिद्ध हो सकते हैं। उसका उत्तर यह है कि उस मन्त्र से मातृव्यभिचार-प्राप्त वीय का पिता धारण नहीं करता किन्तु ऐसी माता के संसर्ग से पुत्र में जो दोष आया है उसका स्वर्गीय पिता निवारण करें और मेरा दिया हुआ पिण्ड भी ले। पतिव्रता माता और सज्जन पिता के द्वारा अनुशिष्ट पुरुष हा श्राद्धादि कर्म का योग्य होता है। जैसा दूसरे प्रकरण में मन्त्र से यह प्रार्थना की जाती है कि जब मैं गर्भ में था उस समय मेरी माता और पिता ने जो कुछ पाप किये हों अग्नि देवता मुझे उससे बचाले, वैसा ही यन्मे माता प्रलुलोभ इत्यादि मन्त्र का भी प्रयोजन दोषवारण ही कहना होगा। ऐसा अर्थ मानने पर ही आगे मन्त्रों का अर्थ भी ठीक होगा। आगे के मन्त्रों में यह आता कि मेरी पितामही और प्रपितामही व्यभिचार किये हों तो उस वीर्य का मेरे पितामह और प्रपितामह धारण करें और मेरी दो माताएँ और बहुत माताएँ व्यभिचार की थी तो उस वीर्य को मेरा पिता धारण करें। इन मन्त्रों का पालित (दत्त) पुत्र भी श्राद्ध में पढ़ता है। इन सबका अर्थ दुस्संसर्गनाश पक्ष में ही ठीक होगा न कि वीयधारण पक्ष में। पालित पुत्र तो परवीर्य से ही उत्पन्न होता है। यदि माता ने पहले व्यभिचार किया हो तो वह वीर्य पुत्र के रूप में परिणत भी हो गया, उसे मरा हुआ पिता श्राद्ध काल में कैसे धारण कर सकेगा। अत: जैसे त्रिसुपर्ण का दान देने पर ब्रह्महत्या नष्ट हो जाती है यहाँ ब्रह्महत्याजन्य दोष का ही नाश माना जाता है न कि ब्रह्महत्या का। उसका नाश होगा तो मृतब्राह्मण फिर जीवित हो जाना चाहिए, वैसा ही पहले के व्यभिचार वीर्य को इस समय पिता धारण करता

हो तो पुत्र का शरीर नष्ट हो जाना चाहिए । अतः सर्वत्र दुष्कृत कर्मजन्य दोष का ही नाश मन्त्रादि से माना जाता है न कि तादृशकर्मजन्य दृष्ट फल का । तुष्यतु दुर्जन न्याय से यदि उस वीर्य का धारण भी मान लिया जाय तो भी उससे पिण्ड दाता पुत्र पिण्डपाने वाले पिता का पुत्र हो सकता न कि ब्राह्मण । पितृश्राद्ध में तत्पुत्रत्व ही अपेक्षित है न कि ब्राह्मणत्वादि । अपेक्षित वस्तुकी याचना की जाती है न कि अनपेक्षित । अतः चार वर्ण गुण कर्म सिद्ध है न कि किसी प्रकार के जन्म सम्बन्ध से । वर्णोंको जन्मसिद्धजाति बतानेवाला वाक्य वेदों में दीखता नहीं है । यदि कोई उसे दिखा सकेगा तो उसका अर्थ दूसरा होगा । जैसे एक हजार साल तक मनुष्य जीवन नहीं रहेगा समझकर मीमांसा शास्त्र (६।७।१२) मे "विश्वसृजामयन सहस्रसंवत्सरम्" यहाँ के सहस्रसंवत्सर शब्दका अर्थ सहस्र दिन बताया गया है वैसा ही वर्णों की जन्मपरम्परा दुर्ज्ञेय होने से उसे बतानेवाले वाक्य का भी अर्थ गुणकर्म प्रयुक्त और सुज्ञेय उपाधि (वर्ण) ही होगा ।

एकाग्निकाण्डे ( मन्त्र प्रश्ने ) श्रूयते "यन्मे माता प्रलुलोभ चरत्यननुव्रता तन्मे रेतः पिता वृङ्क्तां माऽऽभुरन्योऽवपद्यताम्" यन्मे पितामही प्रलुलोभ चरत्यननुव्रता यन्मे रेतः पितामहो वृङ्क्तां माऽऽभुरन्योऽवपद्यतामिति । हरदत्तमिश्रकृतोऽस्यार्थश्च "मासि श्राद्धे होममन्त्राः यन्मे मातेति, यद्रेतोऽन्यदीयं वीर्यं मे मम माता भर्तुरननुव्रता अननुकूला चरन्ती प्रलुलोभ प्रकर्षेण इयेष, साध्वीनामपि मानसव्यभिचारसंभवादेवमुच्यते, तद्रेतो मे पिता वृङ्क्तां आच्छिद्य स्वीकरोतु, मानसव्यभिचारनिमित्तं रेतसि साङ्कर्यं माभूत् । आभवतीत्याभुः एतावता निमित्तेन मा मां प्रति पितृत्वेन आभवन् अन्योऽवपद्यतां मोघाशोभवतु । यन्मया दीयमानं हविः तन्न लभतां अमुष्मै यज्ञेश्वरशर्मणे मत्पित्रे स्वाहा" इति । अवशिष्टमप्येवमूह्यम्' यत्तूक्तं साध्वीनामपि मानसव्यभिचारसंभवादेवमुच्यत" इति । तन्न । मानसव्यभिचारे स्त्रीणां अन्यदीयरेतोधारणासंभवात् । नच तत्र पुरुषाणां वीर्यस्कलनादिकमिव वीर्यधारणमपि स्त्रीणां संभवतीति वाच्यम् । तथा सति जाग्रत्पुरुषसंयोगं विनाऽपि गर्भधारणाद्यापत्तेः । पुरुषाणां वीर्यस्कलनं च व्यासादिमहर्षीणामपि पुराणादौ श्रूयते । यत्पुरुषसम्बन्धः स्त्रीणां स्वप्ने भवति तत्पुरुषस्य रेतस्स्कलनं तु न भवति, तदभावे तद्धारणमपि स्त्रीणां न स्यादेव । यत्तूक्तं सुश्रुते "ऋतुस्नाता तु या नारी स्वप्ने मैथुनमावहेत् । आर्तवं वायुरादाय कुक्षौ गर्भं करोति हि । मासि मासि विवर्धेत गर्भिण्या गर्भलक्षणम्" ( अं० २ ) तस्माद् केवल मांसपिण्डः पुरुषाकार उत्पत्स्यते, तदनन्तरं केशनखादयः पितृगुणा आयास्यन्तीति तत्रैवोक्तम् । केशादीनां पितृगुणत्वमपि तत्रैव "केशः श्मश्रु च लोमानि नखा दन्ताः शिरास्तथा । धमन्यः स्नावयः शुक्रमेतानि पितृजानि हि "इत्यादिनोक्तम् । एवं स्त्रियोः परस्परमैथुनेन



गर्भधारणं ततोऽस्थिरहितशरीरस्योत्पत्तिश्च दर्शिता । तदुक्तं "यदा नार्यावुपेयातां वृषस्यन्त्यौ ( कामुक्यौ ) कथञ्चन । मुञ्चन्त्यौ शुक्रमन्योन्यमनस्थिस्तत्र जायते" इति । एतत्सर्वमदृष्टपूर्वमश्रुतपूर्वं च ग्रन्थान्तर इत्युपेक्षणीयम् । अस्तु स्वाप्निकव्यभिचारे स्त्रीणां परवीर्यधारणं तथापि कालान्तरे तद्भर्ता तद्धारणं सुतरामसङ्गतमेवेति अस्मिन् पक्षेऽपि तादृशमातृसंसर्गज दोषवारणमेव यन्मे मातेत्यादि मन्त्रेण क्रियत इति वक्तव्यम् । साध्व्या मात्रेति = तदुक्तं "ब्राह्मणमद्य राध्यासमृषिमार्षेयं पितृमन्तं पैतृमत्यम् ( तै. ब्रा. १.४.४४ ) इति । तद्विवरणमपि तत्रैवोक्तं, "एष वै ब्राह्मण ऋषिरार्षेयः यः शुश्रुवान्" इति । मातापित्रादिभिःसम्यगनुशिष्टस्यैवार्षेयब्राह्मणत्वं कर्मयोग्यत्वं चोक्तम् । ज्ञानप्राप्तिरपि सम्यगनुशासकमात्रादिमत एवोक्ता "मातृमान् पितृमानाचार्यवान् पुरुषो वेद" इत्यादिना । यद्यपि मातापितरौ सर्वेषां तिष्ठतस्तथापि सम्यगनुशासकयोरेव तत्त्वमितरयोस्तु पशुपक्ष्यादिसाधारणमातापितृत्वमेव । यन्मयि मातेति = "यन्मयि माता गर्भे सति एनश्चकार यत्पिता अग्निर्मा मुञ्चतु तस्मादेनसः" ( तै. ब्रा. ३.७.१३ ) इति । अत्र यथा तत्संसर्गदोषवारणं प्रार्थ्यते तथा यन्मे मातेत्यत्रापि तदेव प्रार्थ्यते । द्वित्रादिमातृसद्भावेति = "यन्मे मातरौ प्रलुलुभतुः यन्मे मातरः प्रलुलुभुः इत्यादिकं कैश्चित्पठ्यते । रेतो धारणपक्षे एतदप्यसङ्गतं स्यात् । एकस्य द्वित्रमातृगर्भस्थत्वासंभवत् । संसर्गजदोषवारणपक्षे च सर्वं सङ्गतम् । एते घ्नन्तीति-नारायणोपनिषदि श्रूयते "त्रिसुपर्णमयाचितं ब्राह्मणाय दद्यात् ब्रह्महात्यां वा एते घ्नन्ति ये ब्राह्मणाः त्रिसुपर्णं पठन्ति" इत्यादिः । ब्रह्महत्याजन्यदोषमेव ते घ्नन्ति न तु ब्रह्महत्यामिति यथा तत्राङ्गीक्रियते तथा प्रकृतेऽपि तादृशमातृसंसर्गजदोष एव रेतोधारकमन्त्रे वार्यते न तु रेतो धारण'मति वक्तव्यम् । तत्र ब्रह्महत्यानाशाङ्गीकारे मृतब्राह्मणस्य पुनरुज्जीवनप्रसंगो यथा बाधकस्तथाऽत्र रेतोधारणाङ्गीकारे मन्त्रवक्तुर्देहपातापत्तिर्बाधिका ।

वर्णास्ते चाश्रमाः श्रौतपदार्था न तु लौकिकाः । वेदप्रामाण्यमिच्छद्भिरेव ते सम्मता यतः ॥
ये हि वेदादिशास्त्राणि नाङ्गीकुर्वन्ति तेष्वयम् । व्यवहारो न वर्णादिगोचरो दृश्यते क्वचित् ॥
वेदे तेषां विभागोऽपि विभिन्नगुणकर्मभि । वैदिकान्येव कर्माणि तदुद्देश्येन सर्वतः ॥१२२॥
कालान्तरे फलप्राप्तिसाधनत्वेन वेदतः । विधीयन्ते यतस्तस्माद्धोत्रादिरिव वैदिकाः १२३
होत्रादयो यथाऽपूर्वद्वारा कालान्तरे फलम् । भावयिष्यच्छ्रौतकर्मसाधकत्वेन वैदिकाः १२४
तथा वर्णाश्च चत्वारस्तथाविधफलं प्रति । श्रुतिचोदितहेतुत्वात्पदार्था वैदिका मताः १२५
न हि धान्यादिप्रत्यक्षफलकृत्कर्मकर्तृषु । ऋत्विक्त्वव्यवहारोऽस्ति नापि वर्णादिगोचरः १२६
लौकिकानां पदार्थानांयत्रोल्लेखः श्रुतिष्वपि । तत्रानुवादकत्वासौ नातः श्रौता भवन्ति ते १२७
न हि वर्णसमुल्लेखो भवेदत्रानुवादकः । अवैदिकेष्वप्रसिद्धेस्तेषां श्रौतपदार्थता ॥ १२८ ॥
श्रौतत्वाच्छ्रुतिमानेन तत्स्वरूपं प्रदर्शितम् । स्थितिस्तेषां तथैवाग्रे सङ्ग्रहेण प्रदर्श्यते १२९

वर्ण और आश्रम वैदिकों के समुदाय में माने जाते न कि अवैदिक

नास्तिकादि समुदाय में। वेद में वर्णों का विभाग भी विभिन्न गुणकर्मों के द्वारा किया गया और होत्रादि ऋत्विक की तरह वर्ण भी कालान्तर में अपूर्व द्वारा फलजनक कर्मों के लिये वेदबोधित साधन होते हैं। और प्रत्यक्ष फलहेतु कृष्यादि कर्म करनेवाले में जैसा होत्रादि व्यवहार नहीं रहता वैसा ब्राह्मणादिव्यवहार भी नहीं हैं अत: इन हेतुओं से वर्ण और आश्रम, ऋत्विगादि की तरह वैदिक पदार्थ हैं। यद्यपि वेदों में लौकिक गवादिपदार्थों का भी उल्लेख हैं तो भी वह भूतार्थानुवाद माना जाता है। वर्णोल्लेख ऐसा नहीं क्योंकि ? दूसरे राष्ट्रों में वर्णव्यवहार नहीं है। वैदिक पदार्थ होने से वर्णों का स्वरूप ( लक्षण ) भी वेदवाक्य प्रमाणों से बताया गया और उनकी स्थिति ( अस्तित्व ) किस आश्रम में रहेगी यह विषय आगे वेदप्रमाणों से बताया जाता है।

वेदान् तदविरुद्ध स्मृत्यादिकं च प्रामाणिकग्रन्थत्वेन ये स्वीकुर्वन्ति तेषां समुदाये एव ब्राह्मणत्वादि वर्णव्यवहारः ब्रह्मचर्याद्याश्रमव्यवहारश्च दृश्यते न तु बौद्ध जैनयवन क्रैस्तवादिसमुदाये। शतपथे वर्णविभागश्च वर्तते 'चत्वारो वै वर्णा ब्राह्मणो राजन्यो वैश्य: शूद्रः '( ५।४।६ ) इति।' त्रयो वाऽन्ये राजन्यात्पुरुषा ब्राह्मणो वैश्य: शूद्रः '( तै० सं० २।५।१० ) इति।' चत्वारो वै पुरुषा ब्राह्मणो राजन्यो वैश्य: शूद्रः ( मै० सं० ४।४।६ ) इति च। अत्र पुरुष शब्दनिर्देशात्पुरुषेष्वेव वर्णा न तु स्त्रीष्विति ज्ञायते। एतदग्रेऽपि वक्ष्यते। एतच्च वर्णविभाग-प्रदर्शनं तेषां वैदिकपदार्थत्वे ज्ञापकम्। चातुर्वर्ण्यं त्रयो लोकाश्चत्वारश्चाश्रमा: पृथक् भूतं भवद्भविष्यं च सर्वं वेदात्प्रसिद्ध्यति ( मनु० १२।९७ ) इत्यपि तत्र ज्ञापकम्। अत्र भूतभविष्यद्वर्तमानपदार्था अपि प्रत्यक्षादिनाऽज्ञाता एव वेदत: प्रसिध्यन्ति न तु ज्ञाता:। यत्र ज्ञातार्थ-प्रतिपादनं तत्र तेषामनुवादमात्रं न तु तदंशे वेदस्य प्रामाण्यम्। उक्तं च 'प्रत्यक्षेणानुमानेन यस्तूपायो न बुध्यते। एनं विदन्ति वेदेन तस्माद्वेदस्य वेदते' ति। यद्यपि वर्णप्रयोजकशमादि-गुणा राष्ट्रान्तरपुरुषेष्वपि वर्तन्ते, तदनुसारेण च तेऽध्यापनयुद्धादिकमपि कुर्वन्ति तथापि तेषु न ब्राह्मणत्वादिव्यवहार:। तेषां मतग्रन्थेष्वेतादृशवर्णोद्देश्येन कर्मविधानाभावात्। वेदेष्वपि ब्राह्मणीमुद्दिश्य कर्मणामविधानान्न स्त्रीष्वपि ब्राह्मणत्वादिकम्। यावच्छा-स्त्रमेव शास्त्रीयपदार्थत्वाङ्गीकारात्। यत्तु वर्णानां स्मार्तपदार्थत्वमुक्तं याज्ञवल्क्य-मिताक्षरायां 'यत्र प्रत्यक्षगम्या जातिर्भवति तत्र तथा = ( सवर्णात्सवर्णायां जातस्य सवर्णत्वं ) ब्राह्मणत्वादिजातिस्तु स्मृतिलक्षणे' त्याना, तज्जन्मसिद्धवर्णजात्यभिप्राये-णोक्तम्। वर्णानां जन्मसिद्धत्वं कतिपयस्मृतिपरिगणितमत्यर्वाचीनम्। तच्च वेदविरुद्धं स्मृत्यन्तरपराहतं च। वैदिको वर्ण: शमादिगुणप्रयुक्तोपाधिरेव। एवं 'न वैश्यराजन्यौ सान्नाय्यं प्राश्नीत: ( वैखा० श्रौ० सू० ७।१२ ) इति निषेधेनापि वर्णस्य वैदिक-



पदार्थत्वं ज्ञायते। सान्नाय्यमिति संस्कृतयोर्दधिपयसो: 'ऐन्द्रं दध्यमावास्यायामैन्द्रं पयोऽमावास्याया' मिति विहितयोर्नाम। अत्र वैश्यराजन्यपदं शूद्रस्याप्युपलक्षणम्। तस्याप्यमन्त्रेण यागविधानात्। अत एव हविष्कृदाह्वानेऽग्निचित: श्मशानगर्तसन्दर्भे च शूद्रविषयेऽपि विधिर्दृश्यते' तथाहि दर्शपूर्णमासप्रकरणे श्रूयते 'हविष्कृदेहीति त्रिरवघ्नन्नाह्वयति' इति। अत्र कर्ताऽध्वर्यु:। तत्र वर्णभेदेन शब्दभेद:। 'एहीति ब्राह्मणस्य आगह्याद्रावेति वैश्यस्य राजन्यबन्धोश्च आधावेति शूद्रस्य ( शत० १।१।१२ ) इत्युक्त्वाऽग्रे चोक्तं सर्वेषामपि एहीत्येव वक्तव्यमिति। श्मशानगर्तवाक्यानि च ( ८३ ) पृ० द्र०। यत्त्वत्र शूद्रशब्दो रथकारपर इति कैश्चिच्छ्रौतसूत्रकारैरुक्तं तन्न सम्यक्। वर्णोल्लेखप्रसङ्गे सर्वत्र शूद्रस्यैव निर्देशेन 'वर्षासु रथकारोऽग्नीनादधीते' त्यत्र रथकार-शब्दस्यासति बाधके शब्दानां सामान्ये पक्षपात इति न्यायेन शूद्रपरत्वव्याख्यानस्यैवोचितत्वात्। शूद्रस्यामन्त्रकयागोक्तिश्च पशुतुल्यस्य तस्य मन्त्रधारणशक्त्यभावादेव। 'तस्माच्छूद्रो बहुपशु' रित्युक्ते:। अपि च यागान्तरे ब्राह्मणराजन्यवैश्यशूद्राणां यथाक्रमं सोमन्यग्रोधरसदधिजल-भक्षणविधानमपि तेषां श्रौतपदार्थत्वं ज्ञापयति। एतद्वाक्यानि च (४१ पृ० द्र०)। लौकिकपदार्थत्वे च दधिजलभक्षणस्य लोकेऽपि ब्राह्मणराजन्ययोर्निषेध: प्रसज्येत। य एव लौकिका: पदार्थास्त एव वैदिका इति मीमांसकन्यायश्च गवादिसाधारण:। अत एव 'स्वरुयूपाहवनीयादिशब्दानां तदर्थानां चालौकिकत्वेऽपि प्रसिद्ध पदसमभिव्याहाराद्-व्युत्पत्ति: संभवतीति तैरुक्तम्। पशुतुल्याभिप्रायेणैव 'तस्माच्छूद्रो यज्ञेऽनव क्लृप्त इत्युक्तम्।

ते च वर्णा गृहस्थेषु वर्तन्ते कार्यहेतवे। नान्येषु ब्रह्मचर्यादि संन्यासान्ताश्रमेषु हि ॥९३०॥
वर्णोद्देश्येन शास्त्रेषु यद्यत्कर्म विधीयते। तत्सर्वं च गृहस्थैकनिर्वर्त्यं दृश्यते सदा ॥९३१॥
अग्न्याधानादित: पितृमेधान्तं यद्यदुच्यते। उच्चावचं कर्मजातं तत्तद्धार्यविते मतम् ॥९३२॥
तस्मादाश्रममेकं ते श्रौतकर्मैकदैवता:। जैमिनीया: समाचख्युर्यज्ञविध्येकमानत: ॥९३३॥
यद्यपि ब्रह्मचर्यादिराश्रम: श्रूयते श्रुतौ। तथाप्युपनिषद्भाग ते मुख्यार्थं न मन्वते ॥९३४॥
तत्रापि पुरुषेष्वेव वर्णा: स्त्रीषु न सन्त्यपि। यतस्तासां वर्ण भेदाद्भिन्नं कर्म न चोद्यते॥९३५॥
पत्नीत्वेनेव नारीणामपेक्षा श्रौतकर्मसु। न वर्णित्वेन तस्मात्ता वर्णहीना बुधैर्मता: ॥९३६॥
यत्तु शूद्रसमानत्वं स्त्रीणामुक्तं क्वचित्स्मृतौ। तद्धि संस्कारशून्यत्वसाम्यादेव समीरितम् ॥
यं यं वर्णं विनिर्दिश्य यद्यत्कर्म विधीयते। तत्र तत्रैव तद्वर्णी सङ्कल्पादौ निरुच्यते ॥९३८॥
यथा मनोविनोदार्थंनाटकादिप्रदर्शने। शकुन्तलादिनामापि तद्वेषधारिणोच्यते ॥ ९३९ ॥
ततोऽन्यत्र तु तन्नाम तत्पुंसोऽपि न दृश्यते। तद्गानाभिनयज्ञाननैपुण्यादौ च सत्यपि ९४०
यथा स्वर्गविनोदार्थंश्रौतयज्ञप्रदर्शने। होत्रध्वर्य्वादिनामानि दृश्यन्ते यज्ञकर्तृषु ॥ ९४१ ॥
ततोऽन्यत्रापि वेदोक्तमन्त्रकर्मज्ञतन्नृषु। होत्रादिव्यवहारश्च नैव लोके प्रदृश्यते ॥९४२॥
यथा वर्णप्रयुक्तेषु वर्णोल्लेखश्च कर्मसु। ततो बहिर्वर्णहेतुगुणकर्मादिमत्यपि ॥ ९४३ ॥
न्यायतो वर्णसम्मर्शो नाङ्गाकर्तुं च युज्यते। वर्ण: कर्माधिकारोहि राजकीयाधिकारवत् ९४४

राजकीयाधिकारश्च राजकार्यालयेष्विह । तत्कार्यकालमात्रे स्यात्तनोऽन्यत्र तु सोऽपि न ९४५
तथैव ब्राह्मणत्वादिर्बार्हस्पत्यादिकर्मसु । तदन्यत्र च सर्वेषां मर्त्यत्वमवशिष्यते ॥९४६॥

वे चार वर्ण गृहस्थाश्रमे ही रहते हैं न कि दूसरे आश्रम में। क्यों वर्णों के प्रति शास्त्रों में अग्न्याधान से लेकर पितृ मेघ तक जितने कर्म बताये गये हैं वे सब पत्नी सहित पुरुष के लिये हैं पतिपत्नीत्वव्यवहार भी यज्ञानुष्ठान में ही है न कि बाहर-बाहर केवल पशुपक्ष्यादि साधारण या पाश्चात्यराष्ट्रसाधारण भार्याभर्तृत्व व्यवहार ही शास्त्रीय है। यह विषय 'पत्युर्नो यज्ञसंयोगे' इस पाणिनिसूत्र से विदित है। इस लिये यज्ञ सभा में पत्नी पति का बगल में बैठती और दूसरी सभा में पत्नी स्त्रियों के और पति पुरुषों के ओर बैठता है। कर्ममीमांसक लोग गृहस्थाश्रम को ही श्रुति सम्मत मानते हैं। यद्यपि ब्रह्मचर्य वानप्रस्थ और संन्यास आश्रम भी उपनिषदों में बताये गये हैं तो भी वे उपनिषदों को मुख्यार्थक मानते नहीं। गृहस्थाश्रम में भी पुरुषों में ही वर्ण रहते न कि स्त्रियों में क्यों शास्त्रों में स्त्रियों के लिये वर्ण भेद से भिन्न-भिन्न कर्म विहित नहीं किन्तु पत्नी के रूप में कामों में स्त्रियों का उल्लेख मिलता है। किसी स्मृत्यादि में स्त्रियों की शूद्र समानता जो बतायी गयी है वह उपनयनादि संस्कार के अभाव से ऐसा कहा गया है। जिस वर्ण के प्रति जो कर्म शास्त्रों में बताया गया है उस वर्ण का उसी कर्म में उल्लेख करना शास्त्रीय है। जैसे मनोविनोद के लिये जब शाकुन्तलादि नाटक का प्रदर्शन करते है उसी समय उन पात्र धारियों का दुष्यन्तादि नाम रहता है न कि दूसरे समय में, जैसा ही तत्तद्वर्ण प्रयुक्त कर्मों के अनुष्ठान समय में ही तत्तद्वर्ण का स्मरण करना उचित है न कि दूसरे समय में भले ही उनमें वर्णप्रयोजक शमादिगुण रहे। वर्ण माने, राजकीयाधिकार की तरह कर्माधिकार माने जाते हैं। पोस्ट, मास्टर और रेविन्यू इन्सपेक्टर इत्यादि राजकीयधिकार सब, तत्तत्कार्यालय के समय में रहते हैं न कि दूसरे समय में। अत एव पोस्टलसम्बन्धी कार्यका प्रसङ्ग आने पर जनता को पोस्टाफीस में बुलवाकर पोस्टु मास्टर उनका काम करते हैं न कि दूसरे समय अपने घर में बुलाकर। इससे यही मालूम पड़ता है कि उस समय वह अधिकार उसका नहीं है। वैसा ही वैदिक वर्ण भी वैदिक कर्मानुष्ठान के बाहर नहीं हैं।

ते च वर्णा गृहस्थेष्विति, तदुक्तं वायुपुराणे "चातुर्वर्ण्यात्मकः पूर्वं गृहस्थश्चाश्रमः स्मृतः" ( अ० ८।८० ) इति। गृहस्थाश्रमः चातुर्वर्ण्यात्मक इत्युक्तौ तदन्याश्रमा चातुर्वर्ण्यात्मका न भवन्तीत्यर्थतः सिद्धं भवति। धर्मार्थकामाख्यत्रिवर्गसाधने हि भार्या-



ऽप्यावश्यकी। तदुक्तं तत्रैव "धर्मार्थकामसंसिद्ध्यै भार्या पुंसः सहायिनी" (अ० ६७।७२)। एवं "पत्नी धर्मार्थकामानां कारणं प्रबलं नृणाम्। विशेषतश्च धर्मश्च संत्यक्तः त्यजता हि ताम्" ( अ० ७१।९ ) इति। एवं कूर्मेऽपि "तस्माद्गार्हस्थ्यमेवैकं विज्ञेयं धर्मसाधनम्" ( अ० २।५३ ) इति। वर्णा अपि धर्मार्थाः। तदुक्तं शाङ्करभाष्ये "ब्राह्मणा सृष्टा वर्णाः कर्मार्थाः" इति। एवं पाद्मेऽपि "यज्ञनिष्पत्तये सर्वमेतद्ब्रह्मा चकार ह। चातुर्वर्ण्यं महाराज यज्ञसाधनमुत्तमम्" ( सृष्टि० ३।१३२ ) इत्युक्तम्। तच्च यज्ञाख्यं कर्म धर्मापरनामधेयं गृहस्थसाध्यमिति वर्णा अपि गृहस्थाश्रम एव। आहिताग्नेरेवोत्तरकर्मस्वधिकारः। अग्न्याधानं च "जातपुत्रः कृष्णकेशोऽग्नीनादधीत" इत्यादिना गृहस्थं प्रत्येव वसन्ते ब्राह्मणत्वादि कामिनं प्रतिविधीयते। एतान् कर्मविधीन् प्रमाणीकृत्य केचन जैमिनीया 'गृहस्थाश्रममेकमेवेति वदन्तो वर्णानपि तत्रैवाश्रमेऽङ्गीकुर्वन्ति। दर्शितं च तन्मतं गौतमधर्मसूत्रे "ऐकाश्रम्यं त्वाचार्याः प्रत्यक्षविधानाद्गार्हस्थ्यस्य" प्रत्यक्षविधानादिति हेतुः= प्रत्यक्षश्रुतिषु गार्हस्थ्यस्य विधानात्तदन्याश्रमाणां विधानाभावादितितदर्थः। तेषां चायमभिप्रायः, मन्त्रब्राह्मणात्मक ऋग्वेदे होतृकर्तव्यमेवाभिहितम्। यजुर्वेदे चाध्वर्युकर्तृकम्। सामवेदे चोद्गातृकर्म। होत्रादयश्च गृहस्था एव। तथाचाधीयमाने वेदत्रये गृहस्थकर्तव्याभिधानेन तदाश्रमविधिः कल्प्यते, तदितराश्रमकल्पकविधीनामभावात्तन्न कल्प्यते। अत एव "यावज्जीवमग्निहोत्रं जुहोति, एतद्वै जरामर्यं सत्रं यदग्निहोत्रं जरया वा ह्येतस्मान्मुच्यते मृत्युना वा" इत्यादिविधयः पुरुषजीवितं सर्वं गृहस्थकर्मस्वेव विनियुञ्जते। तस्मादेक एवाश्रम इति। एवमेव सत्याषाढश्रौतसूत्रेऽपि जैमिनीयानां गृहस्थमात्राश्रमवादित्वं दर्शितम्। वैदिका वर्णा अपि वैदिककर्मस्वेवोपयुज्यन्ते वैदिककर्माणि च गृहस्थमात्र पर्यवसन्नानीति गृहस्थाश्रमे वर्णा इति तन्मतेऽपि सिद्धं भवति। "ब्राह्मणः क्षत्रियो वैश्यः शूद्रश्चेति चतुर्विधः। वर्णो गार्हस्थ्य एवेति पैङ्गब्राह्मणमब्रवीत्" इति भृगुमरीचस्मृत्युद्धृतवाक्येनापि स एवार्थः सुस्थिरो भवति। भृगुस्मृतौ तु स्पष्टमेवोक्तम् 'गृहस्थाश्रमकार्यार्थं वर्णास्तत्रैव सम्मताः। नान्याश्रमेषु तद्भेदस्तत्कार्याणामभावतः॥ वर्णकार्याणि गार्हस्थ्यं प्रत्येवाम्नायवाक्यतः। विधीयन्ते प्रभेदेन बृहस्पतिसवादयः" (अ० ३।२-३) इत्यादिना। अधिकजिज्ञासुभिरस्मत्कृततदीयव्याख्याऽपि द्रष्टव्या। तत्रापीति गृहस्थाश्रमेऽपि ते वर्णा पुरुषेष्वेव वर्तन्ते न तु स्त्रीषु "चत्वारो वै पुरुषा इत्यादौ पुरुषशब्दनिर्देशात् विवाहानन्तरं पतिवर्ण एव स्त्रीणां गोत्रवदुपचर्यते। एतदुक्तं भृगुस्मृतावपि "नास्ति स्त्रीणां पृथग्वर्णो ब्राह्मणत्वादिकस्त्विह। पत्युर्वर्णेन युज्यन्ते तद्गोत्रेणेव योषितः ( अ० ५।१२ ) इति। "यं यं वर्ण मिति=यथा वेदनिर्देशादेव वर्णा वैदिकैरङ्गीक्रियन्ते तथा यस्मिन् कर्मणि कर्तृत्वेन यो यो वर्णो वेदेन निर्दिश्यते तत्रैव तस्य होत्रादिवत् परामर्शः शास्त्रन्यायसिद्धो नान्यत्र। होत्रादीनां हि ऋग्यजुर्वेदादिभिः क्रियमाण एव कर्मणि वरणं भवति नान्यत्र। अत एवोक्त पारस्करगृह्यसूत्रे आवसथ्याधानं दार-

काले" ( १ सू० ) इति सूत्रस्य व्याख्यानावसरे ( आवसथ्याधानं नाम विवाहे चतुर्थीकरणानन्तरं क्रियमाणमग्न्याधानम् ) "किमावसथ्याधानादिषु वक्ष्यमाणेषु सर्वकर्मसु ( स्मार्तकर्मसु ) अध्वर्योः कर्तृत्वमुत यजमानस्येत सन्दिह्याग्रे निर्णीतम् "अध्वर्युः कर्मसु वेदयोगात्" ( का० श्रौ० १।८।२९ ) इति परिभाषणात् श्रौतेष्वेव ( अध्वर्युः ) न स्मार्तेषु । वेदयोगाभावात् । समाख्यया हि अध्वर्योः कर्मसु योगः । समाख्या हि वेदयोगात् । न च स्मार्तेषु वेदयोगोऽस्ति । न हि ज्ञायतेऽमुकवेदेनोक्तं स्मार्तमिति । ( अर्थादमुकवेदेनेदं स्मार्तं कर्तव्यमिति यदि स्यात्तदा तद्वेदीयस्य ऋत्विजः सम्बन्धः स्मार्तेऽपिस्यात् न त्वेवमस्तीति भावः ) वैदिककर्मसु तादृशवाक्यानि सन्ति। तद्यथा "सहोवाच यद्यृक्तो भूरिति चतुर्गृहीतमाज्यं गृहीत्वा गार्हपत्ये जुहवथ यदि यजुष्टो भुव इति अग्नीध्रीये, यदि सामतः स्वरिति आहवनीये इत्यादि । एवमैतरेयेऽप्युक्तम् । यदृचैव होत्रं क्रियते यजुषाऽध्वर्यवं साम्नोद्गीथम्" (५।३३) इति । क्वचित्स्मर्तेऽपि च "ऋग्वेदेन होता करोति यजुर्वेदेनाध्वयुः सामवेनोद्गाता सर्वैं ब्रह्मेति । एतद्वचन सामर्थ्याद् वैदिके एव कर्मणि ऋत्विजामुपयोगो न तु स्मार्तेष्विति ज्ञायते । एवं प्रकृतेपि "यद्वर्णोद्देश्येन यत्कर्म वेदे विधीयते तत्रैव तद्वर्णापेक्षा, तदन्यत्र तु मनुष्यत्वं द्विजत्वं वाऽपेक्षितम् । ब्राह्मणग्रन्थैः श्रौतसूत्रैश्च वैदिककर्मस्वेव वेदमन्त्राणां विनियोगो दर्शितः । अतो वेदगोचरवर्णानामपि वैदिककर्मस्वेवोपयोगो न तूपनयन विवाहदेवपूजादिस्मार्तपौराणिककर्मसु । तेषु कर्तृत्वेन कर्मत्वेन वा वर्णानां श्रुतावदर्शत् । एवं तान्त्रिकदीक्षास्वपि वर्णभेदो नास्ति । तदुक्तं मेरुतन्त्रे "गतं शूद्रस्य शूद्रत्वं गता विप्रस्य विप्रता । दीक्षासंस्कारसम्पन्ने वर्णभेदो न विद्यते । दार्वश्मलोहमुद्रत्न-जातिलिङ्गप्रतिष्ठितम् । यथाच्यते महादेवस्तथा वर्णास्तु दीक्षिताः" अन्त्यजो दीक्षितः पूर्वं द्विजः पश्चाच्च दीक्षितः । तदा ज्येष्ठोऽन्त्यजः प्रोक्तः कुलशास्त्रविनिश्चये । ( प्र० १०।६९१-३ ) इति । एतेनापि वैदिक कर्मस्वेव वर्णभेदो नान्यत्रेति स्पष्टम् । न च दीक्षानन्तरं निषिध्यमानं शूद्रत्वादिकं ततः पूर्वं लोकेऽपि स्यादिति वाच्यम् । जातिवादभ्रमेण मूर्खैरारोपितस्यैवात्र निषेधात् ।

## स्मृत्यादिप्रकरणं नाम षष्ठोऽध्यायः ।

ननु मन्वादिमुन्युक्त धर्मशास्त्रेषु कुत्रचित् । गोत्वादिवच्च जातित्वं वर्णानां जन्मनोच्यते १
वैयर्थ्यं च भवेत्तेषामुपाधित्वसमाश्रये । तस्मादेतच्छास्त्रमूला श्रुतिःकल्प्येति चेच्छृणु ॥२॥
मन्वादिस्मृत्यनर्थत्वप्रसङ्गश्चेत्परा ह्यपि । निरर्थिका भविष्यन्ति त्वदुक्तार्थाश्रये सति ॥३॥
श्रीमहाभारते श्रीमद्भागवते भृगुस्मृतौ । पुलहस्मृतिमारीचस्मृत्योर्वर्णा गुणैर्मताः ॥ ४ ॥
शमादिगुणवान्विप्रः क्षत्रियस्तेज आदिमान् । वैश्यः कृष्यादिशीलस्तु सेवाशीलश्च शूद्रकः ५
इत्येव भारतादीनां ग्रन्थानां मतमीक्ष्यते । न क्वाप्यनुचिते त्वर्थे तात्पर्यं संभविष्यति ॥६॥
तत्तद्गुणादिमत्त्वं हि तत्तद्वर्णस्य लक्षणम् । ते च स्वभावसिद्धाः स्युरभ्यस्ता वा यदि स्थिराः ७



क्वचित्कार्यवशाज्जातः क्षणिको गुणविपर्ययः । गुणान्यतमराहित्यं वा वर्णस्य न दूषकम् ८
निमित्तगुणबाहुल्यस्थैर्याद्वर्णस्य निश्चयः । अन्यथा सज्जनत्वादिव्यवहारोऽपि दुष्करः ॥९॥
जातिवादिमतेऽप्यस्ति गुणानां जन्मना सह । ब्राह्मणत्वादिहेतुत्वं न तु केवलजन्मनः॥१०॥
अतस्तेनापि वक्तव्यं तादृग्गुणविपर्ययः । तद्राहित्यं च वर्णस्य दूषकं न भवेदिति ॥११॥
जन्मना ब्राह्मणत्वादेर्जातित्वं बोधयन्ति याः । स्मृत्यादयोऽप्रमाणं स्युर्मूलवेदविरोधतः१२
गोत्वाश्वत्वादिका जातिरपि लोके न जन्मना । जायते किन्तु संस्थानप्रत्यक्षाद् व्यज्यतेऽखिला१३
अतोऽश्वगर्भसम्भूतहयत्वाश्वतरत्वयोः । स्त्रीत्वपुंस्त्वादिजातीनामपि प्रत्यक्षभेदधीः ॥१४॥

यहाँ यह शंका की जाती है कि मनुयाज्ञवल्क्यादि स्मृतियों में चार वर्ण जन्म सिद्ध जातियाँ माने गये है । यदि शमादिगुणसिद्ध उपाधियाँ होती हैं तो वे सब व्यर्थ हो जायँगे । अतः उनको सार्थक बनाने के लिये उन्हीं वाक्यों से उनकी मूलभूत श्रुति का अनुमान क्यों न किया जाय । उसका उत्तर है कि मन्वादि स्मृतियों को सार्थक बनाने के लिये वर्णों को यदि जातियाँ मानी जाय तो वर्णों को गुणसिद्ध बताने वाले महाभारत श्रीमद्भागवत भृगुस्मृति पुलहमरीच्यादिस्मृतियाँ व्यर्थ हो जायेंगे । उन ग्रन्थों में शमादि गुणवाले ब्राह्मण शौर्यधैर्यादिवाले क्षत्रिय कृषिवाणिज्यादिशील वैश्य और सेवादि स्थूल कार्य करने का स्वभाव वाले शूद्र बताये जाते हैं । वे हि गुण उन-उन वर्णों का लक्षण हैं, यदि वे स्वाभाविक हों या अभ्यस्त भी हों । किसी समय में ब्राह्मण के मन में कार्यवश से शौर्यादि क्षण भर के लिये आये हों या ब्राह्मणादि के जितने गुण लक्षण बताये गये उनमें से किसो अमुख्य गुण का अभाव हो तभी ब्राह्मणत्वादि की हानि नहीं होती, किन्तु तत्तद्वर्ण के अधिक गुण सुस्थिर रूप से जिनमें रहेंगे उनमें तत्तद्वर्ण सज्जनत्वदुर्जनत्वादि की तरह माने जाते है । जातिवादी के मत में जन्म के साथ-साथ उपरोक्त गुण रहने पर ही ब्राह्मणत्वादि जाति मानी जाती है न कि केवल जन्म से । अतः एव किसी एक गुण के न रहने पर भी उसके मत में ब्राह्मणत्वादि माने जाते है । जन्म से ब्राह्मणत्वादि को बताने वाली स्मृत्यादि ग्रन्थ सभी वेदविरुद्ध होने से अप्रमाण हैं । गोत्वादि प्रत्यक्षसिद्धजातियाँ जन्मसिद्ध नहो हैं किन्तु अङ्गों के सन्निवेश से व्यङ्ग्य मानी जाती हैं । अत एव एक घोडी के गर्भ से उत्पन्त घोड़ा या खच्चर का और एक स्त्रा के गर्भ से उत्पन्न पुरुष या स्त्री का ज्ञान दर्शनमात्र से होता है ।

मन्वादीति, अत्रादिशब्देनाधुनिकानां याज्ञवल्क्यादिस्मृतीनां स्कान्दादिपुराणां च संग्रहः । यद्यपि मनुस्मृतौ क्वचिदपि वर्णानां जातित्वं शब्दतो नोक्तं तथापि "जातिमात्रोपजीवी वा कामं स्याद्ब्राह्मणब्रुवः । धर्मप्रवक्ता नृपतेर्न तु शूद्रः कदाचन" न जातु

ब्राह्मणं हन्यात्सर्वपापेष्वपि स्थितम् । ( ८.२०.३८० ) इत्यादिश्लोकैरनुमेयं भवति । "सवर्णेभ्यः सवर्णासु जायन्ते हि सजातय" ( याज्ञ० स्मृ० १.९० ) इत्यत्र "सर्वेषां जन्मना जातिर्नान्यथा कर्मकोटिभिः । पश्वादीनां यथा जातिर्जन्मनैव न चान्यथा" ( सूत सं० १२.५१ ) इत्यादौ च स्पष्टमेव तेषां जातित्वमुक्तम् । मन्वादिस्मृत्यनर्थक्य-प्रसङ्ग इति, परा ह्यपि वक्ष्यमाणाः स्मृतयः । महाभारत इति । को ब्राह्मण इति प्रश्नस्योत्तरम् "सत्यं दानं क्षमा शीलमानृशंस्यं तपो घृणा । दृश्यन्ते यत्र नागेन्द्र स ब्राह्मण इति स्मृतः ॥ यत्रैतल्लक्ष्यते सर्प वृत्तं स ब्राह्मणः स्मृतः । यत्रैतन्न भवेत्सर्प तं शूद्रमिति निर्दिशेत्" ( वन पं० १८०. २१.२६) इत्युक्तम् । केन हेतुना ब्राह्मणत्वादिकं भवतीति भारद्वाजप्रश्नस्योत्तरं भृगुमहर्षिणा दीयते "जातकर्मादिभिर्यस्तु संस्कारैः संस्कृतः शुचिः । वेदाध्ययनसम्पन्नः षट्सु कर्मस्ववस्थितः । शौचाचारस्थितः सम्यग्विघसाशी गुरुप्रियः । नित्यव्रती सत्यपरः स वै ब्राह्मण उच्यते ॥ सत्यं दानमथाद्रोह आनृशंस्यं त्रपा घृणा । तपश्च दृश्यते यत्र स ब्राह्मण इति स्मृतः (शा० प० १८९।२-४) इति । तत्र जातकर्मादिकं त्रैवर्णिक साधारणम् । यजनं याजनं च ब्राह्मणत्वप्रयोज्यं न तु तत्प्रयोजकम् । ब्राह्मणत्वादिकमुद्दिश्य वेदेन पृथक् कर्मविधानात् । शौचाचारस्थित्यादिकं यद्यपि सर्वेषां विहितमेव तथापि ब्राह्मणस्य तत्स्वाभाविकमित्यभिप्रायेणोक्तम् अत एव "नैतदब्राह्मणो विवक्तुमर्हति" इत्युक्तम् । सत्यवदनस्य विधितः सर्वेषां समानत्वेऽपि ब्राह्मणस्य स्वाभाविकत्वात् । अधिकं तु ७२ पृष्ठे । स्वाभाविकसत्यवदनं च तत्समनियतशमदमादिगुणानामुपलक्षणम् । अत एवोक्तं गीतायाम् "शमो दमस्तपः शौचं क्षान्तिरार्जवमेव च । ज्ञानं विज्ञानमास्तिक्यं ब्रह्मकर्म स्वभावजमि"ति । अत्र कर्मशब्दो लक्षणावृत्त्या लक्षणं ब्रूते । शमदमाद्यात्मगुणेषु कृतिविषयत्वाभावेन कर्मत्वाभावात् । श्रीमद्भागवते च शमादीनां ब्राह्मणलक्षणत्वं कण्ठरवेणोक्तम् । शमो दमस्तपः शौचं सन्तोषः क्षान्तिरार्जवम् । ज्ञानं दयाऽच्युतात्मत्वं सत्यं च ब्रह्मलक्षणम् । ( ७।११ ) इति । एवं तत्रैव "शमो दमस्तपः शौचं सन्तोषः क्षान्तिरार्जवम् । मद्भक्तिश्च दया सत्यं ब्रह्मप्रकृतयस्त्विमाः ( ११।१७ ) इति । क्षत्रियादिलक्षणान्यपि तत्तत्प्रकरणेऽग्रिमश्लोकैरुक्तानि, तत एव प्रदर्शितप्रकारेणावगन्तव्यानि । ग्रन्थविस्तरभयान्नात्रालिख्यन्ते । यत्त्वग्रे प्रोक्तं शूद्रे चैतद्भवेल्लक्ष्म द्विजे तच्च न विद्यते । न वै शूद्रो भवेच्छूद्रो ब्राह्मणो न च ब्राह्मणः" इति तत्र सप्तम्यन्तशूद्रद्विजशब्दाभ्यां पामर जनव्यवहारसिद्ध-शूद्रत्वब्राह्मणत्वेऽनूद्य प्रथमान्ताभ्यां ताभ्यां शास्त्रतः शूद्रत्वाभावब्राह्मणत्वाभावौ विधीयेते । पामरा हि शूद्रपुत्रं शूद्रं ब्राह्मणपुत्रं ब्राह्मणं च तत्तद्गुण-रहितमपि ब्रूयुः । यथेदानीं पामरजनप्राये जगति पण्डितपुत्रः पण्डित इति, त्रिपाठिपुत्रस्त्रिपाठीति चोच्यते किन्तु पण्डितसभादिप्रसङ्गे शास्त्रीयपण्डित एव गृह्यते न तु वंशपरम्परागतः, तथा वर्णविषयेऽपि ज्ञातव्यम् । भागवते च वर्णलक्षणान्ते स्पष्टमेवोक्तम् "यस्य यल्लक्षणं प्रोक्तं पुंसो



वर्णाभिव्यञ्जकम् । यदन्यत्रापि दृश्येत तत्तेनैव विनिर्दिशे"दिति । तदर्थश्च यस्य ब्राह्मणादेः वर्णाभिव्यञ्जकं यल्लक्षणमुक्तं, तदन्यत्रापि वर्णान्तरे जन्मवत्यपि यदि दृश्यते स तेनैव लक्षणेन ब्राह्मणत्वादिना निर्देष्टव्य इति । ननु गीतायां वश्यशूद्रयोः कर्माण्येवोक्तानि न तु लक्षणानि, कृतिविषयत्वस्य वाणिज्यादौ सत्वादिति चेन्न । तत्राप्युपक्रमप्राधान्यन्यायेन वाणिज्यादिशीलतारूपलक्षणस्यैवोक्तत्वात् । यथा "वेदो वा प्रायदर्शनादित्यधिकरणे उपक्रमप्राधान्येनोपसंहारस्थानामृगादिशब्दानामृग्वेदादिपरत्वमुक्तं तथाऽत्राप्युपक्रमे ब्राह्मणक्षत्रियलक्षणस्यैवोक्तत्वादुपसंहारे वैश्यशूद्रयोर्लक्षणमेवोक्तम् । भृगु-स्मृतावपि "शमो दमस्तितिक्षा च शान्तिरार्जवमेव च । अधीतवेदशास्त्रत्वं येषां ते ब्राह्मणाः स्मृताः" ( ३।११ ) इति ब्राह्मण लक्षणमुक्त्वा तद्धीनस्य ब्राह्मण्यं निषिध्यते "एतल्लक्षणहीनो यो विप्रपुत्रत्वहेतुना । विप्रमात्मानमाचष्टे न पश्येत्तन्मुखं जनः" इत्यादिना । एवमेव क्षत्रियादिलक्षणान्यपि दर्शितान्यग्रे तत्रैव । पुलहस्मृतौ "ब्राह्मण-क्षत्रियवैश्यशूद्राश्चत्वारो वर्णाः" ( ११९ ) "ते च गृहाश्रमे न त्वन्यत्र" ( १० ) इति कथनेनार्थाद्गुणप्रयुक्ता वर्णा इति ज्ञायते । मरीचस्मृतौ च "शमो दमस्तपः क्षान्तिः सन्तोषः शौचमार्जवम् । ज्ञानं सत्यं दयाऽऽस्तिक्यमेतद्ब्राह्मणलक्षण"मित्यादिना सर्व-वर्णलक्षणान्युक्तानि । स्मृत्यन्तरादावपि वर्णा गुणप्रयुक्ता अवगम्यन्ते । मन्वादिस्मृत्या-नर्थक्य-प्रसङ्गेन वर्णानां जन्मप्रयुक्तत्वाङ्गीकारे दर्शितस्मृतीनामानर्थक्यं प्रसज्येत । एतन्न्यायेनैव ब्रह्मसूत्रेऽपि कपिलादिप्रोक्तजगत्कारणत्वं निरस्य ब्रह्मणस्तत्कारणत्वमुक्तं "स्मृत्यनवकाशदोषप्रसङ्ग इति चेन्नान्यस्मृत्यनवकाशदोषप्रसङ्गा"दित्यादिना । श्रुतितात्पर्यं च यथेश्वरकारणवादे वर्तते तथा गुणतो वर्णवादेऽस्तीति प्रागेव प्रपञ्चितम् । प्रधाना-दिकारणवादिकपिलादिस्मृति-प्रामाण्यमाशङ्क्य भाष्ये यत्समाहितं तदत्रापि वर्णजाति-वादिमन्वादिस्मृतिप्रामाण्येऽपि समानम् । अपि च मन्वादि-स्मृतिश्लोकैरपि "न ब्राह्मणो वेदयेत किञ्चिद्राजनि धर्मवित् । स्ववीर्येणैव ताञ्छिष्यान्मानवानपकारिणः" वाक्शस्त्रं वै ब्राह्मणस्य तेन हन्यादरीन् द्विजः । क्षत्रियो बाहुवीर्येण तरेदापदमात्मनः । धनेन वैश्यशूद्रौ तु जपहोमैर्द्विजोत्तमः ( ११।३१ ) इत्यादिभिर्गुणतो वर्णवाद एव समर्थ्यते । न हि ब्राह्मणवंशसमुद्भवमात्रेण मूर्खो बली जपहोमैररीन् हन्तुं शक्नुयात् किन्तु बाहुवीर्येणैव, क्षत्रियो वा ब्राह्मणगुणो बाहुवीर्येण नापदं तर्तुमर्हति किन्तु जपहोमादिनैव ।

वर्णोद्देश्येन स्मृत्युक्तजीविकावृत्तिचोदनाः । गौणं वर्णं सूचयन्त्यो बाधयन्त्येव जातिताम् ॥
विधयश्च निषेधाश्च स्वप्रवृत्तिनिवृत्तिषु । शक्तं पुरुषमुद्दिश्य प्रवर्तन्ते न चेतरम् ॥१६॥
तस्मादेव हि विध्यर्थः कृतिसाध्यत्वमुच्यते । तत्कर्तृ-पुरुषस्तेन तत्कर्मशक्तिमान् भवेत् ॥
ब्राह्मणादिकमुद्दिश्य विहिताध्यापनादयः । सम्यगभ्यस्तवेदादिविद्यानां प्राणवृत्तयः ॥१८
स चाभ्यासो न सर्वस्य जातिब्राह्मणमानिनः । कृतिसाध्यो भवेत्किन्तु यस्य प्राक्तन संस्कृतिः ॥
या विप्रः क्षत्रियादिर्वा स्ववृत्तौ न हि शक्तिमान् । किन्तु वृत्त्यन्तरे शक्तः किं कुर्यात्स स्वशास्त्रतः

न हि वृत्यन्तरं कर्तुं युक्तमस्य द्विजत्वतः। स्ववृत्तौ चासमर्थत्वमिति भ्रंश इतस्ततः ॥२१
न चापत्कालिकी वृत्तिरत्राश्रयितुमर्हति। सा हि कालकृतानिष्टे सत्यगत्योपयुज्यते ॥२२
तत्तत्कलासु सामर्थ्यं पूर्वसंस्कारहेतुकम्। तत्तन्मर्त्यस्य तन्नित्यं न तु कालवशागतम् ॥२३
गुणवादे च यत्रासौ शक्तस्तद्वर्णभागिति। तदेव कर्म शास्त्रेण समुद्दिश्य विधीयते ॥२४॥
सहजं कर्म तच्चैव सदोषमपि न त्यजेत्। इति श्रीभगवद्गीताशास्त्रेणाप्युपदिश्यते ॥२५
ननु तत्कर्मशक्तो हि तस्मिन् स्वतः प्रवर्तते। व्यर्थः शास्त्रविधिस्तत्र स्यादित्यस्योत्तरं शृणु ॥
यत्र रागात्पुंप्रवृत्तिस्तत्रापूर्वो विधिर्वृथा। अभ्यनुज्ञाविधिस्त्वर्थवानेव स्याद्गुरूक्तिवत् ॥
मद्बुद्धिगोचरं कर्म कर्तव्यं वा न वेति च। संशये खलु कर्तव्यमित्याचार्येण चोच्यते ॥
जीविकासाधकेष्वेवं कार्येषु गतिरिष्यते। यजनाध्ययने दानं सर्वेषां पुण्यसाधकम् ॥२९
याजनाध्यापनादिश्च वृत्त्यर्थत्वेन सम्मतः। वैश्यस्य कृषिवाणिज्यगवादिरक्षणादिकम् ॥
शूद्रस्य स्थूलकार्याणि जीविकासाधकानि च। सर्वमेतत्सर्ववर्णस्वभावानुगुणं मतम् ॥ ३१
यदिदानीं चलत्यत्र शास्त्रेणापि तदुच्यते। उपाधित्वाश्रये चालं किमर्था जाति कल्पना ॥

ब्राह्मणादि वर्णों के प्रति स्मृतियों के द्वारा अध्यापनादि कर्म बताये जाते हैं और उन्हीं से गुणवाद का समर्थन और जातिवाद का खण्डन भी हो जाता है। विधि या निषेध अपने विषयों में शक्त पुरुष के प्रति प्रवृत्त होते हैं। अतएव कृतिसाध्यत्व विध्यर्थ माना गया। वेदादिशास्त्रों को जो ठीक अभ्यास कर लिया है वही अध्यापन कर सकेगा वह अभ्यास जन्म से ब्राह्मण समझनेवाले सभी को कृतिसाध्य नहीं है। वह संस्कार जिसका हो उसी को कृतिसाध्य है। जो ब्राह्मण अध्यापन कर नहीं सकेगा किन्तु शारीरक स्थूल कार्य करने समर्थ है वह उसको भी यदि न करेगा तो इतो भ्रष्टस्ततो भ्रष्ट हो जायगा। गुणवाद में ऐसी बात नहीं, जिसमें जिसकी रुचि और शक्ति हो वह उसको कर सकता है। उसीको गीता में सहज कर्म कौन्तेय सदोषमपि न त्यजेत्" कहा गया है। इसपर शंका होती है कि अपनी इच्छा से ही सब लोग कर्म करेंगे तो ब्राह्मण अध्यापन करे और क्षत्रिय युद्ध करे इत्यादि शास्त्र व्यर्थ हो जायँगे। उसका उत्तर यह है कि अपूर्वविधि में ऐसी आपत्ति होती न कि अभ्यनुज्ञाविधि में। अध्यापनादि में शक्त पुरुष को भी यह संशय संभव है कि मैं अध्यापन करूँ या दूसरा काम। ऐसी परिस्थिति में गुरु या शास्त्र उसका इष्ट अध्यापन मान लेता है। जीविका साधक कार्यों की स्थिति ऐसी ही है। याग अध्ययन (पढना) और दान करना पुण्य हेतु और बाकी सब कार्य जीविका साधक माने गये हैं। जैसे आजकल काम चल रहे हैं यदि व शास्त्रीय हों तो शास्त्र भी उनको अनुमोदन करता है। इसके



लिये वर्णों को उपाधि मानने पर भी हो जाता है तो उनको जन्म सिद्ध जातियाँ क्यों मानी जाय।

ननु द्विजत्वविप्रत्व क्षत्रियत्वाद्युपाधयः। किमर्थं जातिशब्देन प्रोच्यन्ते ग्रन्थकर्तृभिः ॥३३॥
क्वचित्स्मृतिपुराणादिग्रन्थजाते हि शब्दतः। द्विजत्वब्राह्मणत्वादिवर्णानां जातितोच्यते ॥३४
भाट्टमीमांसकैस्तेषां गोत्वाश्वत्वादिजातिवत्। प्रत्यक्षजातितैवोक्ता बह्वीभिर्निजयुक्तिभिः ॥
अनुमानाप्तवाक्याभ्यां पिण्डोत्पादकजातिवित्। प्रत्यक्षीकर्तुमर्हः स्यात्पिण्डे तामिति तन्मतम्।
शृणु सर्वत्र वेदे हि ब्राह्मणत्वादिबोधने वर्णशब्दः प्रयुक्तोऽस्ति जातिशब्दो न कुत्रचित् ॥३७॥
पौरुषेयेषु ग्रन्थेषु जातिशब्दश्च कुत्रचित्। प्रयुक्तोऽपि न वर्णानां जातित्वं नैव बोधयेत् ॥
न हि शब्दप्रयोगेण वस्त्वन्यत्वं प्रपद्यते। अन्यथा लक्षणावृत्तेरुच्छेदः स्यात्सदा भुवि ॥
अन्वयानुपपत्त्यादौ सति शब्दार्थकोविदैः। सर्वत्र शब्दमात्रस्य लक्षणाऽऽश्रीयते सदा ॥४०॥
आयुर्वै घृतमित्यादिवेदवाक्ये च लौकिके। गङ्गायां घोष इत्यादौ लक्षणावृत्तिरिष्यते ॥
जातित्वं ब्राह्मणत्वादौ प्राक्प्रदर्शितयुक्तिभिः। नान्वयं लभतेऽतस्तच्छब्दश्चोपाधिलक्षणः ॥
तत्सिद्धमुनिवाक्यं चेल्लक्षणैवाश्रीयते। रागद्वेषादिमन्मर्त्यकल्पितं चेदुपेक्ष्यते ॥ ४३ ॥

यहाँ शंका की जाती है कि ब्राह्मणत्वादिधर्म यदि उपाधियाँ हैं तो क्यों वे जाति शब्दों से स्मृतिपुराणादियों में कहे गये हैं? भाट्टमीमांसक तो उनको गोत्वादि की तरह प्रत्यक्ष जातियाँ मानते हैं। उनका कहना है अनुमान या आप्तवाक्य से पिता की जाति को जो जानता है वह उसके पुत्र को देखते ही उसमें उस जाति को प्रत्यक्ष कर लेता है। उसका उत्तर है कि वेद में वर्णों के बारे में जातिशब्द प्रयुक्त नहीं किन्तु वर्ण शब्द ही है। पौरुषेय स्मृतिपुराणादि में कहीं जातिशब्द प्रयुक्त होने पर भी वह वर्णों को जाति बता नहीं सकेगा। शब्द मात्र से वस्तु का स्वरूप बदलता नहीं। अतएव लक्षणावृत्ति मानी गयी है। जैसे गङ्गा में ग्राम न रहने से गङ्गापद का तीर अर्थ लक्षणा से बताया जाता है वैसा ही वर्णों में जातित्व का अन्वय न रहने से उपाधि में लक्षणा मानी जाती है। यदि वह जातिशब्द सिद्धमहर्षियों का है तो वह ऐसा माना जाता है, यदि रागद्वेषादिदूषित मनुष्य कल्पित है तो वह उपेक्षणीय है।

वर्णेषु द्विजत्वे च जाति शब्दो यथा "ब्राह्मणः क्षत्रियो वैश्यस्त्रयो वर्णा द्विजातयः चतुर्थ एकजातिस्तु शूद्रो नास्ति तु पञ्चमः ॥ सर्ववर्णेषु तुल्यासु पत्नीष्वक्षतयोनिषु। आनुलोम्येन संभूता जात्या ज्ञेयास्त एव ते" इति वर्तमानमनुस्मृतौ १०।३ ५। भाट्टेति-कुमारिलेनोक्तं तन्त्रवार्तिके "यथवालोकेन्द्रियानेकपिण्डानुस्यूतिशब्दस्मरण

व्यक्तिमहत्व-सन्निकर्षाकारविशेषादयोऽन्यजातिग्रहणे कारणं तथैवात्र ( ब्राह्मणत्वादि-जातिग्रहणे ) उत्पादकजाति स्मरणम् । अत्र ग्रहणं प्रत्यक्षज्ञानमिति बोध्यम् ।

ननूपाधिपदं शक्तं त्यक्त्वा लाक्षणिकं कुतः । जातिशब्दं च शास्त्रेषु ग्रन्थकाराः प्रयुञ्जते ॥
विशेषार्थविवक्षातः शब्दो लाक्षणिकः पुनः । शक्यसम्बन्धिनि प्राज्ञैः कुत्रचित्सम्प्रयुज्यते ॥
गङ्गायां घोष इत्यादौ शैत्यपावनतादिकम् । घोषे द्योतयितुं गङ्गापदं तीरे प्रयुज्यते ॥४६
जातिशब्दममुख्यार्थं ब्राह्मणत्वाद्युपाधिषु । कीदृशं ते विशेषार्थं विवक्षित्वा प्रयुञ्जते ॥४७
अस्ति शक्तं विहायात्र जातिशब्दं प्रयुञ्जताम् । विशेषार्थविवक्षाऽपि स्मृत्यादिग्रन्थकारिणाम् ॥
जातिबुद्ध्या जना वंशपारम्पर्यागताः क्रियाः । करिष्यन्तीत्यभिप्रेत्य प्रयुक्तः स च कर्मिभिः ॥
जातिप्रयुक्तमर्यादां पालयन्ति यथा जनाः । वस्त्रधारणप्रच्छन्नमैथुनादिक्रियात्मिकाम् ॥
तथैव ब्राह्मणत्वादौ जातिबुद्धिर्भवेद्यदि । मन्वीरन् जातिमर्यादास्तत्तद्वर्णक्रिया जनाः ॥५१
तदा हि तत्परित्यागस्तत्तज्जात्यभिमानिनाम् । वस्त्रधारणसंत्यागवदेव दुष्करं भवेत् ॥५२
यदा च तत्परित्यागो राजदण्डोऽप्यभूत्तदा । जातिभ्रष्टत्वनिन्दाऽपि बहिष्कारः समाजतः ॥
जातिशब्दाप्रयोगे तु वर्णोऽप्याश्रमवत्सदा । तत्तन्निमित्तलभ्यत्वधर्म एवेति धीर्भवेत् ॥५४॥
ततो गुणान् शमादींस्ते विप्रत्वादिप्रयोजकान् । प्रतीक्ष्य वर्णकार्येषु प्रवर्तेरन् कदाचन ॥५५
एवं चेत्पाटवाभावात्कर्मसिद्धिर्भवेन्न हि । ततस्तत्सिद्धिरूपत्वभुक्तिमुक्ती न सेत्स्यतः ॥
पुरुषार्थप्रणाशेन जगदन्धं भविष्यति । यदर्थं मानवैर्ग्राह्यं तदभावे निरर्थकम् ॥५७॥
भयेनैतेन सर्वेशमपि श्रुत्यादिगोचरम् । पूर्वमीमांसकाः सर्वे नाङ्गीकुर्वन्ति सर्वथा ॥५८॥
दयादाक्षिण्यवत्यङ्गीक्रियमाणे महेश्वरे । तदर्चनादितः सर्वे प्राप्नुयुर्हीप्सितं फलम् ॥५९॥
तादृगल्पप्रयत्नेन प्राप्तव्ये स्वेप्सिते फले । बह्वायासेन साध्यं कः कुर्यात्कर्म तदाप्तये ॥६०॥
एवं कर्मपरित्यागे शास्त्रं च तद्विधायकम् । परित्यक्तं भवेत्तुम्भरिति तेषां महाभयम् ॥६१
सर्वानेताननर्थांस्ते निरोद्धुं जातिविभ्रमम् । ब्राह्मणत्वादिवर्णेषु जनयामासुरादितः ॥६२॥
एतदेव हि पाश्चात्यैः शास्त्रकारैर्विजृम्भितम् । विशेषेण च वेदान्तमीमांसाभाष्यवृत्तिषु ॥
स्वात्मोदयं परग्लानिं चाभिसन्धाय पण्डितैः । असत्यं सत्यमित्युक्तं तदग्रे दर्शयिष्यते ॥
यत्रैतद्द्वयलाभाशा नास्ति तत्रैव सूक्ष्मया । मनीषया विचार्योक्तं तत्सर्वंहितकारकम् ॥६५

यहाँ शंका की जाती है कि उपाधि के लिए उपाधिशब्द का प्रयोग होना चाहिये न कि लाक्षणिक जातिशब्द, किसी विशेषार्थ के तात्पर्य से ही लाक्षणिक शब्द बोला जाता है जैसे गङ्गायां घोषः । यहाँ घोष ( अहीरों का गाँव ) में पावनत्वादि द्योतन कराने के लिये तीरार्थ में गङ्गाशब्द प्रयुक्त किया जाता है । प्रकृत में ऐसा कौन सा विशेष है जिससे वर्णों मे जातिशब्द कहा गया है । उसका उत्तर यह है कि यहाँ भी विशेषार्थ है वर्णों को जाति कहने पर लोग जातिबुद्धि से अपने-अपने वंशपरम्परागत वर्णधर्मों को पालन करेंगे । सभी प्राणि अपनी-अपनी जातिमर्यादा को पालन करते हो



हैं एवं कपड़े पहनना और दाम्पत्य धर्म को गुप्त रूप से करना इत्यादि, मनुष्यजाति की मर्यादा मानी गयी हैं । अत एव उसको सभी मनुष्य अवश्य पालन करते हैं, और जो उसे पालन नही करेगा उसकी लोकनिन्दा और कहीं राजदण्ड भी होता है । उसी प्रकार ब्राह्मणत्वादि वर्णों को भी लोग अलग-अलग जातियाँ समझेंगे तो वंशपरम्परागत शास्त्रीयवर्ण धर्मों को भी वे अपनी-अपनी जातिधर्म समझ कर अवश्य करेंगे और यदि कोई न करेगा तो उसको निन्दा और समाज से बहिष्कार भी होता रहेगा । अतएव स्मृति-पुराणादि में वर्ण कार्य छोड़नेवालों की निन्दा की गयी है और राजदण्ड भी बताया गया है । जातिशब्द का प्रयोग न करने पर होगा क्या ? लोग वर्णों को भी आश्रम की तरह तत्तन्निमित्त से आनेवाला उपाधि समझ कर जब तक उस उपाधि हेतु शमादिगुण अपने में व्यक्त न होंगे तब तक वेदाध्ययनादि में प्रवृत्त न होंगे और उन गुणों का प्रकट होने की प्रतीक्षा में ही किसी-किसी का आधा उम्र बीत जायगा और उसके बाद अध्ययन में प्रविष्ट होनेपर भी वह, विद्याभ्यास ठीक नहीं कर सकेगा । यागादि कार्य भी उससे हो नहीं सकेंगे और धर्मार्थकामादि पुरुषार्थ भी नष्ट हो जायेंगे और उससे आदमी का जन्म ही व्यर्थ हो जायगा । इन्ही अभिप्रायों से कर्म मीमांसक लोगों ने वर्णों में जन्मसिद्ध जातिभ्रम को फैलाया है । इसी प्रकार के भय से ही वे, सकल शास्त्र प्रसिद्ध ईश्वर को भी नहीं मानते हैं । यदि वे ईश्वर को मानेंगे तो वह भक्तवत्सल ही होगा, लोग उसका जपानुष्ठानादि करके भी अभीष्ट स्वर्गादि पा सकेंगे, अल्पकाल मे व्यक्ति गतानुष्ठान से ही जब स्वर्गादि मिल जाता है तो उतने ही प्रयोजन के लिये कौन बचपन से वेद पढ़कर बहुत धन और बहुत आदमियों के साथ याग करेगा और यागादि न करने पर तद्विधायक वेदशास्त्र भी नष्ट हो जायँगे । इतने अनर्थों को रोकने के लिये वे, लोगों में जातिभ्रम पैदा किये हैं । इसको बाद के आचार्यों ने विस्तारित किया और विशेष रूप से मीमांसक और वेदान्त के भाष्यवार्तिककारादियों ने, या उनके नाम से दूसरों ने उसकी पुष्टि की थी । सब में अपनी भलाई और दूसरों की हानि निगूढ़ रहती है । इसी अभिप्राय से पहले के कुछ बुद्धिमान लोग असत्य को सत्य बताये थे । इसको हम आगे कहेंगे । जहाँ ऐसी स्वार्थभावना नहीं वहां उन्होंने ठीक ही बताये थे ।

मन्वीश्वरनिराकर्तृ-मीमांसकप्रकल्पिता । जातिभ्रान्तिर्भवेन्नाम किमर्थं सामताऽऽस्तिकैः ॥६६
धर्मब्रह्मादिसूत्राणां भाष्यकारादिभिर्बहु । वर्णानां जन्मजातित्वमङ्गीकृत्यापि भाषितम् ॥

ब्राह्मणत्वादिवर्णानां जन्मजातित्वबोधकम् । वाक्यजातं महर्षीणां चेत्तस्याप्ययमाशयः ॥
प्रायो मन्दधियां कर्ममार्गः श्रेयान् भविष्यति । न बुद्धिभेदमज्ञानां न्यायेन जनयेदिति ॥
मत्वा तत्कालराजाज्ञाविरोधोऽपि यथा नहि । भक्तिज्ञानादिभिः सर्वश्रेयोवादिमहर्षिभिः ॥
तथा प्राङ्दर्शितो जातिवादोऽप्यनुमतः क्वचित् । क्वचिच्च स निषिद्धोऽपि स्पष्टैरेव निजोक्तिभिः
अतः क्षत्रियवैश्यादिकुलजा बहवः पुरा । सम्मता ब्राह्मणत्वेन क्षत्रियत्वादिनाऽपि ते ॥७२॥
ऋषभस्य हि राजर्षेरेकाशीतिसुताः पुरा । बभूवुर्ब्राह्मणाः कर्मविशुद्धा नव योगिनः॥७३॥
जातू रूपादिब्राह्मणानां कुल जातं च कर्मणा । नाभागो वैश्यतां प्राप्तः शौनकस्य कुले पुनः ॥
ब्राह्मणाः क्षत्रिया वैश्या. शूद्राश्चासन् स्वकर्मभिः । ब्राह्मण्यात्तु भरद्वाजः क्षत्रियोऽप्यभवत्किल
विश्वामित्रमहर्षिश्च क्षात्राद्ब्राह्मण्यमाप्तवान् । बहवो लेभिरेऽप्येवं कर्मणोच्चत्वनीषते ॥
निर्दिष्टमिह दिङ्मात्रं ग्रन्थाधिक्यमनिच्छता । जिज्ञासुभिः पुराणेषु द्रष्टव्यमधिकंबुधैः ॥७७॥
यन्मतङ्गो ब्राह्मणत्वं तीव्रैरपि तपोव्रतैः । जीवितान्तं कृतैर्नैव शक्तः प्राप्तुमितार्यते ॥७८॥
स तपःप्राप्तब्राह्मण्यवृत्तान्तेन विरुध्यते । ततोऽसावनुपादेयो नान्यः श्रुत्यनुसारतः ॥७९॥
सर्वमेतत्पुराणेतिहासादिषु मनीषिभिः । द्रष्टुं च शक्यते सम्यग्दूरीकृतदुराग्रहैः ॥८०॥
नन्वब्राह्मणवीर्येण जातो ब्राह्मणयोषिति । तपोभिरपि ब्राह्मण्यंप्राप्तु नार्होभविष्यति। ८१॥
तपसा ब्राह्मणत्वं ये प्राप्ता ब्राह्मणवीर्यतः । अब्राह्मणीषु सञ्जाता मतङ्गो न तथेति चेत् ॥
देहस्य वीर्यकार्यस्य ब्राह्मणत्वं निराकृतम् । शास्त्रकारैरतो वीर्यं न वर्णहेतुरिष्यते ॥८३॥
तस्मान्नेयं जन्यजातिव्यवस्थेश्वरवादिनाम् । किन्तु नास्तिक-प्राचीनयाज्ञिकानामभूत्पुरा ॥
यथावत्स्वरसयुक्तनित्यस्वाध्यायतत्पराः । श्रौतस्मार्तसदाचारसत्यनिष्ठापरायणाः ॥ ८५ ॥
प्राचीनयाज्ञिकाः सम्यक् प्राप्तसर्वात्मशक्तयः । शापानुग्रहसन्दानसमर्थाः संयतेन्द्रियाः ॥८६॥
अतिवृष्टिमनावृष्टि देशोपद्रवकारिणः । शत्रुराजान् मन्त्रशक्त्या वारयन्ति स्म याज्ञिकाः॥८७
अतः कर्मैव तत्काले तेषामीश्वरनामकम् । जातं तत्सिद्धिहेतुत्वादिष्टा वर्णव्यवस्थितिः॥८८॥
यथेदानीं विदेशस्था, वस्तुतत्वनिरीक्षकाः । स्वनिर्मितलौहयन्त्रैर्विमानप्रमुखैर्भुवि ॥ ८९ ॥
सर्वं समीहितं सम्यक् साधयन्तः स्वयत्नतः । प्रतिक्षिपन्ति सर्वेशमप्यश्रितमिहाखिलैः ॥
एवं प्राग्ब्राह्मणाः श्रौतकर्ममर्मज्ञताबलात् । साधयन्तः समस्तार्थान् नाङ्गीचक्रुर्महेश्वरम् ॥
राष्ट्राय स्वात्मने वाऽपि यद्यदावश्यकं भवेत् । तत्सर्वं वेदवाक्योक्तैः साधयन्तश्च कर्मभिः ॥
तत्कालीनमहाराजान् वशीकृत्यात्मतेजसा । तद्द्वारा जन्मना वर्णव्यवस्थां ते ह्यकल्पयन् ॥
यथा कर्मव्यवस्थोपयोगिनो सा भवेत्तथा । राजदण्डभयेनैव स्थापिताऽभूत्पुरा भुवि ॥९४॥
वर्णाश्रमव्यवस्थेयं लङ्घिता यदि केनचित् । स सर्वो राजदण्डार्हो बभूव भारतावनौ ॥९५॥
धर्मव्याधो महात्माऽपि स्वयं मांसमभक्षयन् । तद्भयान्मांसविक्रेता बभूव किल भारते ॥९६॥
एव विधा महात्मनो बहवो दुर्व्यवस्थया । क्लेशिता ह्यनया जन्मजातिदुष्प्रथया पुरा ॥९७॥
एतत्प्रथाकल्पकानां तत्प्रयुक्ताऽव्यवस्थितिः । अज्ञातप्रायमासीच्च भाविभारतदुःस्थितिः ॥९८
स्वस्वकीयसमौन्नत्यपरकीयापकृष्टते । सिषाधयिषवस्ते हि प्रथामेतामकल्पयन् ॥ ९९ ॥



अतिप्राचीनकालाद्वा जगदुत्पत्तिकालतः । प्रवृत्ताऽपि दुष्प्रथात्वादविद्यावद्विनाश्यताम् १००
तामप्रमाणभूतां हि दुष्प्रथामपि सर्वथा । प्रयोजनावशात्पूर्वमङ्गीचक्रुर्महानृपाः ॥ १०१ ॥
नैव सावश्यकीदानीं जन्मजातिप्रथा नृषु । यतः प्रदर्शिता मन्त्रसिद्धिर्नेह प्रदृश्यते ॥ १०२ ॥
तदा साऽऽवश्यकी लोकेभवेन्नाम व्यवस्थितिः । नेदानीं, मानवाः सर्वे यतश्चेश्वर निर्भराः ॥

यहाँ शंका की जाती है कि निरीश्वरमीमांसक अपनी कर्मसिद्धि के लिये भले ही जातिभ्रम लोगों में फैलाये हों ईश्वर को माननेवाले महर्षियों ने उसे क्यों माने हैं और ब्रह्मसूत्रादि के भाष्यकारों ने भी वर्णों को जाति मान कर बहुत कुछ बोल दिये थे। उसका उत्तर है कि यदि वे वाक्य असल महर्षियों और भाष्यकारों के हों तब उनका अभिप्राय यह है कि प्रायः अज्ञानी लोगों के लिये कर्ममार्ग ही हितकारक होगा समझकर और उस समय के राज कानून का भी विरोध न होने के लिये "न बुद्धिभेदं जनयेदज्ञानां कर्मसङ्गिनाम्" इस न्याय से कुछ मुनियों ने जातिवाद को मान लिये और बहुत मुनियों ने उसके विरोध में भी बहुत कहे थे। अतएव क्षत्रियवैश्यादि कुल में पैदा हुये बहुत, ब्राह्मण बन गये थे। ऋषभदेव का ८१ पुत्र शुभकर्मों से ब्राह्मण बन गये और नौ पुत्र सिद्धपुरुष होकर उपदेशक बन गये। नाभाग ( क्षत्रिय ) वैश्य बन गया था। शौनक ( क्षत्रिय ) कुल में चार वर्ण निजकर्मों के द्वारा पैदा हो गये। विश्वामित्र भी ब्राह्मण हो गये। ग्रन्थगौरव भीति से यहाँ थोड़े ही उदाहरण दिये गये। पुराण देखने पर बहुत ही ऐसे उदाहरण मिलेंगे। महाभारत में मतङ्ग का जो वृत्तान्त है जिसमें घोर तपस्या करने पर भी ब्राह्मणत्व उसका दुर्लभ दिखाया गया वह अनादरणीय है। क्यों उन्हीं इतिहास पुराणों में तपस्या से और कहीं बचनमात्र से भी बहुत ब्राह्मण बन गये ऐसा वृत्तान्त मिलता है। यहाँ ऐसा कहना भी ठीक नहीं कि ब्राह्मण वीर्य से अब्राह्मणी में उत्पन्न व्यक्ति तीव्रतपस्या से ब्राह्मण हो सकेगा, मतङ्ग तो ऐसा नहीं। उसका उत्तर यह है कि वीर्य का परिणामरूप शरीर में ब्राह्मणत्व नहीं है ऐसा शास्त्रकारों ने निर्णय किया था अतः वीर्य भी ब्राह्मणत्वादिवर्ण का हेतु नहीं है। इसके प्रमाणभूतश्रीमद्भागवतादिपुराणवाक्य नीचे संस्कृत व्याख्या में दिये गये हैं यह जातिव्यवस्था ईश्वरवादी की हृदय सम्मत नहीं, किन्तु वह निरीश्वर याज्ञिकों की थी। वे प्राचीन याज्ञिक वास्तविक स्वरों से वेदमन्त्रों को ठीक अभ्यास करके श्रौतयाग करते थे और अपने तपः प्रभाव से शापानुग्रहसमर्थ रहते थे। अपने मन्त्रशक्ति से वे अतिवृष्टि अनावृष्टि और शत्रुराजाओं को भी निवारित करते थे। अतः वे वैदिक कर्म को ही

ईश्वर मानते थे। जैसे इस समय नवीन वस्तुविज्ञान ( सैन्स ) से विमानादि सुखसाधनों को बनानेवाले भी मनुष्य की बुद्धि शक्ति से अतिरिक्त ईश्वर-शक्ति को नहीं मानते हैं वैसा ही पहले के याज्ञिक रहे। वे अपनी मन्त्रशक्ति से राजाओं को वश में कर लिये और उनके द्वारा जातिव्यवस्था और कर्म व्यवस्था को भी स्थापित कर लिये थे। जो उस व्यवस्था का उल्लङ्घन करता था उसको कठिन राजदण्ड भी मिलता था। इसलिये महात्मा धर्मव्याध, स्वयं मांस न खाते हुए भी राजदण्ड के भय से मांस बेचता था। इसी प्रकार बहुत महात्मा भी इस दुष्प्रथा से दुःखित हो गये थे। इस जातिप्रथा के कल्पकों को यह मालूम नहीं रहा कि इससे वर्णों की कैसी दुर्व्यवस्था और भारत की दुस्थिति भी कितनी होगी? वे केवल अपनी और अपने वंशजों की उन्नति और दूसरों की अवनति को ध्यान में रख कर उस प्रथा को स्थापित किये थे। अतिप्राचीन काल से या सृष्टि के आरंभ से ही यह प्रथा आती हो तो भी दुःष्प्रथा होने का कारण यह अविद्या की तरह वर्जनीय है। ऊपर प्रदर्शित प्रयोजन के हेतु से पहले के राजा और जनता इसको मान लिये तो भी आज इसको मानने की कोई आवश्यकता नहीं है। क्यों इस प्रथावादियों में पहले की सिद्धि नहीं है।

क्वचिन्निषिद्ध इति, भृगुमारीचादिस्मृतिषु भागवतादि पुराणेषु च जातिवादो निषिद्ध इति दर्शितमेव। यत्र मन्वादिस्मृतिषु स समर्थितस्तस्य स्वार्थलोभमूलकत्वेना-प्रमाणमित्यपि दर्शितम्। ऋषभस्येति, ऋषभस्य क्षत्रियस्य नव पुत्रा महाभागवता एकाशीति ब्राह्मणा जाताः। तदुक्तं "यवीयांस एकाशीतिर्जायन्तेयाः पितुरादेशकरा महा-शालीना महाश्रोत्रिया यज्ञशीलाः कर्मविशुद्धा ब्राह्मणा बभूवुः" ( भाग० ५।४।१३ ) इति। "कानीन इतिविख्यातो जातूकर्ण्यो महानृषिः। ( क्षत्रियः ) ततो ब्रह्मकुलं जात-मग्निवेश्यायनं नृप" नाभागो दिष्टपुत्रोऽन्यः ( क्षत्रियः ) कर्मणा वैश्यतां गतः" ( भाग० ९।२।२३ ) इति। एवं "पुत्रो गृत्स्नमदस्यापि शुनको यस्य शौनकः। ब्राह्मणाः क्षत्रियाश्चैव वैश्याःशूद्रास्तथैव च "एतस्य वंशे सम्भूता विचित्रैः कर्मभिर्द्विजाः" ( वायु पु० ९२।४ ) "तस्माद्दिव्यो भरद्वाजो ब्राह्मण्यात्क्षत्रियोऽभवत्"। (९९।१५७) इति च। ब्राह्मणवीर्यादुत्पन्नः क्षत्रियपालनेन भरद्वाजः क्षत्रियोऽभवत्। "गर्गाच्छनिस्ततो गार्ग्यः क्षत्राद्ब्रह्म ह्यवर्तत" "अजमीढस्य वंश्याः स्युः प्रियमेधादयो द्विजाः" (भाग०९।२१।१९) "तपसा क्षत्रमुत्सृज्य यो ( विश्वामित्रः ) लेभे ब्रह्मवर्चसम्" इत्यादीनि बहून्युदाहरणानि वर्णपरिवर्तने दृश्यन्ते। यत्तु ब्राह्मण्यां नापितात्समुत्पन्नो मतङ्गो बहुकालतीव्रतपसाऽपि ब्राह्मणत्वं न लेभे इति महाभारते अनु० २९ अध्याये दर्शितं स तपः प्राप्तब्राह्मण्यवृत्तान्तेन विरुध्यतेऽतस्तदनादरणीयम्। तपसा ब्राह्मण्यं च भविष्यादि पुराणेषु बहुधाप्रपञ्चितम्।



तथाहि "श्वपाकीगर्भसम्भूतः पिता व्यासस्य पार्थिव। तपसा ब्राह्मणो जातः संस्कार-स्तेन कारणम्" उलूकी गर्भसम्भूतः कणादाख्यो महामुनिः। तपसा ब्राह्मणो जातः संस्कारस्तेन कारणम्, हरिणी गर्भसम्भूत ऋष्यशृङ्गो महामुनिः। तपसाः ब्राह्मणो जातः संस्कारस्तेन कारणम्" ( ४२।२६–२८ ) इत्यादिकम्। अत्र संस्कारः स्वाभाविकः शमादिगुणः न तु बाह्यः। तस्यापि शमादिगुणनिमित्तकत्वात्। न च ब्राह्मणवीर्यो-त्पन्नानामेव योनिसाङ्कर्यनाशकेन तपसा ब्राह्मण्यमिष्यते। दर्शितोदाहरणेषु तथैव दर्शनात्। अब्राह्मणवीर्योत्पन्नाय तपसाऽपि तन्नेष्यते। मतङ्गश्च तथाविध एवेति वाच्यम्। वीर्यपरिणामभूतस्य देहस्य ब्राह्मण्यादिनिषेधेनैव वीर्यस्यापि तन्निषिद्धत्वात्। देहस्य च ब्राह्मणत्वादिकं तत्रैव भविष्ये निषिद्धम्। तथाहि "ये चान्ये पण्डिताः प्राहुर्देह-ब्राह्मणतां नराः। तेषां दुर्दृष्टितिमिरमपनीयानुकम्प्य च॥ न्यायाञ्जनौषधैर्दिव्यैः परिणामसुखावहैः। उपनीतैः प्रयत्नेन सुदृष्टं संविदध्महे" मूर्तिमत्वाच्च नाशित्वं नाशित्वाच्छेषभूतवत्। देहाधारे निविष्टानां ब्राह्मण्यं न प्रकल्प्यते" एकैकावयवस्तेषां न ब्राह्मण्यं समश्नुते। नचानेकसमूहेऽपि सर्वथाऽतिप्रसङ्गतः। पृथिव्युदकवाय्वग्नि परि-णामाविशेषतः। देहतः सर्वभूतानां ब्राह्मणत्वप्रसङ्गतः। देहस्य ब्राह्मणत्वं यैरतत्वज्ञैः प्रकल्प्यते। संस्कर्तॄणां शरीरस्य तेषां न ब्राह्मणता भवेत्। मृग्यमाणे प्रयत्नेन देहे तन्नोपलभ्यते। तस्मान्न देहे ब्राह्मण्यं नापि देहात्मकं भवेत्। वर्णापसदचाण्डालश्वादा-दीनां प्रसज्यते। यदि देहस्य विप्रत्वं भवद्भिरुपगम्यते" ( ४१।४९-५६ ) इति। देहस्य ब्राह्मणत्वे मृतब्राह्मणशरीरदाहे ब्रह्महत्यादोषोऽपि भवेदिति केश्चिदुच्यते।" प्रतिदिनं भुज्यमान आहारः सर्वेषां समानः। अतस्तत्सारभूत वीर्यं तत्कार्यभूतश्च देहः सर्वेषां समान एव, आकृति व्यङ्ग्या मनुष्यत्वजातिरप्येका। तदुक्तं भविष्ये "मनुष्य-भावादविशिष्यमाणास्तद्वद्द्विजा शूद्रगण न्न भिन्नाः" मनुष्यजातेर्न परो विशेषो यः कल्प्यते सर्वजनानुयायी। संस्कारयुक्ता हि क्रिया विशिष्टा द्विजन्मनां शूद्रविवेकहेतुः" ( ४०। २०-२१ ) ब्राह्मणत्वादिधर्मश्च सज्जनत्वदुर्जनत्वादिवदन्तःकरणधर्म एव। अन्तःकरण-धर्मस्याभ्यासानुसारेण पाण्डित्यादिवद्वृद्धिक्षयौ भवतः। गीताश्लोकादिकं पुनः पुनरभ्यस्य-मानं तदाकारपरिणतान्तःकरणे आरूढं भवति। अतएव यदभ्यस्यते तदेव झटिति आयाति नेतरदिति पाण्डित्यं चित्तपरिणामः। ब्राह्मणत्वादिधर्मस्याप्यस्थिरत्वमुक्तं तत्रैव। "ब्राह्म-ण्यमध्रुवामदं किल कृत्रिमत्वादकृत्रिमं भवति सामयिकत्वयोगात्। साङ्केतिकं सुकृतलेश-विशेषलब्धं वाणिज्यभेषजकृतामिव जातिभेदः" तस्मान्न गोऽश्ववत्कश्चिज्जातिभेदोऽस्ति देहिनाम्। कार्यशक्तिनिमित्तस्तु सङ्केतः कृत्रिमो भवेत्" (३२.३४) तत्राध्रुवमभ्यासवशेन वृद्धिक्षयवदित्यर्थः। सामयिकत्वयोगात् = तन्नियमाचाराणां बहुकालाभ्यासादिनाऽ-कृत्रिमं स्थिरं भवतीत्यभिप्रायः यथा वाणिज्यकरणे वणिगिति भैषज्यकरणे भिषगिति व्यवहारस्तथा पूर्वजन्मसंस्कारवशेन यत्रात्मनि शमादयो गुणास्तदनुसारेण

अध्यापनादिक्रिया च वर्तते तस्यैव पुंसो ब्राह्मणत्वादिव्यवहारो वैदिककर्मसु । यत्तुप्रदर्शितं तत्रैव मतङ्गेन्द्रसंवादे तिर्यग्योनिगतस्यापि जीवस्य पुल्कसजन्म ततः शुभाचारादिना शूद्रवैश्यक्षत्रयादिक्रमेणैवोत्तमोत्तमं जन्म बहुकालव्यवधानेन क्रमशो मिलिष्यति न तु गुणकर्मवशेनैकस्मिन् जन्मनि उत्तमवर्णप्राप्तिरिति तदप्यग्रे प्रदर्शितब्रह्मबन्धुकाण्डपृष्ठ ( शस्त्रजीवी ) ब्राह्मण जापकश्रोत्रियादिजन्मना समानमेव । तत्र खलूक्तम् "ततः षष्टिगुणेकाले राजन्यो नाम जायते । ततः षष्टिगुणे काले लभते ब्रह्मबन्धुताम्" ततस्तु द्विशते काले लभते काण्डपृष्ठताम् । ततस्तु त्रिशते काले लभतेजपतामपि ॥ ततश्चतुः शते काले श्रोत्रियो नाम जायते ॥ ( २८।१०-१३ ) इति । महता कालव्यवधानेन ब्रह्मबन्धुत्व श्रोत्रियत्वादिप्राप्तौ सत्यामपि यथा ब्रह्मबन्धुत्वादिकं न जातिस्तथा क्षत्रियवैश्यत्वादिकमपि न जातिरित्येवावगन्तव्यम् । अपिच काठकमैत्रायणीय संहितोक्तेन्द्रमनुसंवादानुसारेणापि प्रक्तनवृत्तान्तोऽप्रामाणिक इति ज्ञायते । तत्र यष्टुकामं श्राद्धदेवं प्रति, इन्द्रः ब्राह्मण वेषेणागत्येत्थमुक्तवानहं त्वा याजयानीति, ततो मनुनोक्तं कतमस्त्वं ब्राह्मणोऽसीति । ततश्चोक्तवानिन्द्रः "किं ब्राह्मणस्य पितरं पृच्छसि उत मातरं श्रुतं चेदस्मिन् वेद्यं स पिता स पितामह" इति । तदुक्तम् "तमिन्द्रो ब्राह्मणो ब्रुवाण उपैत् । सोऽ ( इन्द्रः ) ब्रवीत् । मनो यज्वा वै श्राद्धदेवोऽसि याजयानि त्वा । ( ततो मनुः ) कतमस्त्वमसि ब्राह्मणः ( ततः इन्द्रः ) किं ब्राह्मणस्य पितरं किमु पृच्छसि मातरम् । श्रुतचेदस्मिन् वेद्यं स पिता स पितामहः" ( मैं सं० ४।८।१ ) एवमेव काठकेऽपि (३०।२) अतो नेन्द्रो जन्मपक्षपातीति ज्ञायते । एतेन ब्रह्मपुराणोक्तं जन्मना वर्णपरिवर्तनमपि प्रत्युक्तं भवति । तत्र २२३ तमेऽध्याये शिवेनोक्तम्" ब्राह्मण्य देवि दुष्प्राप्यं निसर्गाद्ब्राह्मणः शुभे । क्षत्रियो वैश्यशूद्रौ वा निसर्गादिति मे मतिः" (१२) इति । तत्र निसर्गः स्वभावः स च जन्मान्तरसंस्कारात्कस्यचिज्जन्मकालत एव सज्जनत्वादिवदायाति न त्वभ्यासात् । स्वभावो दुरतिक्रम इति न्यायेन तस्य त्यागोऽपि दुष्कर एव । नचात्र निसर्गो जन्म भवितुमर्हति । अग्रे "न योनिर्नापि संस्कारो न श्रुतिर्न च सन्ततिः कारणानि द्विजत्वस्य वृतमेव तु कारणम्" इत्यादिना तस्य निषिद्धत्वात् । जन्मनो दुर्जेयत्वं तु सर्वदा जागर्त्येव । अततु स्तच्छ्लोकद्वयमध्यवर्तिश्लोकानामर्थवादत्वमेव वक्तव्यम् । वर्णाः स्वस्वकर्मसु श्रद्धालवो भविष्यन्ति, स्वाभाविकश्रेष्ठवर्णाप्सा निकृष्टवर्णजिहासा च स्वस्वकर्मानुष्ठानेन तदतिरिक्तपरित्यागेन च सफला भवति नान्यथेति ज्ञात्वा ते तदनुसारेण गच्छेयुरित्यभिप्रायेण तत्सर्वं कल्पितम् । यत्र चार्थवादत्वासम्भवस्तत्राप्रामाण्यमेव न तु सर्वप्रमाणविरुद्धार्थाङ्गीकरणम् । एतन्न्यायेनैव तपः कुर्वाणस्य शम्भूकस्यापि वधोऽवगन्तव्यः । शूद्रकृततपसः साधुत्वाङ्गीकारे तद्वंशजाः सर्वे तपसि प्रवृत्ताः स्युस्तेनास्माकं सेवका न मिलिष्यन्ति, तद्वधप्रदर्शने च भीत्या न कोऽपि तत्र प्रवर्तेतेति तत्कल्पकाभिप्रायः । अन्यथा तस्य सत्यत्वे शूद्रस्य तपो दोषहेतुश्चेत्तदा तत्कर्तुरेव हानिः सम्यगपरिपालनहेतुना राज्ञो वा सा स्यान्न तु तटस्थस्य



ब्राह्मणस्येत्यप्रामाण्यमेव । एवं स्कन्दपुराण-ब्रह्मखण्डदशमाध्यायोक्तशूद्रब्राह्मणवृत्तान्तस्याप्युक्तरीत्याऽर्थवादत्वमिष्यते । तत्र हि कस्मैचिद्विरक्तशूद्राय केनचिद्ब्राह्मणेन मन्त्रदीक्षा दत्ता तेन स द्विजो मृत्वा "कल्पकोटिसहस्राणि कल्पकोटिशतानि च । भुक्त्वा क्रमेण नरकाँस्तदन्ते स्थावरोऽभवत्" ततो गर्दभवराहसारमेयवायस - चाण्डालशूद्रवैश्यक्षत्रियब्राह्मणजन्मानि क्रमशो लब्ध्वाऽन्ते ब्रह्मरक्षसा गृहीत इत्यादिक दर्शितम् । अयमपि तापसशूद्रवधवृत्तान्तेन समानः । सेवकबाहुल्यसम्पिपादयिषैवेतत्कल्पनाबीजम् । भृगुस्मृतौ चैतद्विपरीतमेवोक्तम् । तथाहि "पुरा जातिप्रथावादो कश्चित्तु ब्राह्मणो भ्रमात् । शूद्रं मत्वा द्विजाचारं वेदं नाध्याप्य दुर्मतिः । स्वपुत्रं शूद्रमध्याप्य नारकीं चापि दुर्गतिम् । प्राप्यान्ते स पुनर्नीचयोनिष्वेव निपातितः । नास्ति किञ्चित्कुलं नीचमुत्कृष्टवाऽस्ति भूतले । तद्धि प्राक्तन संस्कारात्सर्वत्रैव समीक्ष्यते । श्रेष्ठस्य श्रोत्रियस्यापि गृहे चाण्डालसूनवः । चाण्डालस्य गृहे चापि ब्राह्मणाः सम्भवन्ति हि । ऋणानुबन्धमाश्रित्य प्राणिनः सर्वयोनिषु । समुत्पद्य विनश्यन्ति तत्क्षयादीश्वरेच्छया" ( १२-२२-२० ) इति । शूद्रस्याप्यनुष्टप्छन्दसा दीक्षा तलवकारब्राह्मणे प्रोक्तेति प्रागेव दर्शितम् । स्कान्दभृगुस्मृत्युक्तयोरन्यतरस्याप्रामाण्ये वक्तव्ये रागादिमूलकस्यैव तदिष्यते । तदन्यस्य च श्रुतिमूलकत्वेन रागादिमूलकत्वासंभवेन च प्रामाण्यम् । एतेन "भारतव्यपदेशेन ह्याम्नायार्थश्च दर्शितः । दृश्यते यत्र धर्मादि स्त्रीशूद्रादिभिरप्युतेति भागवतोक्तिविरुद्धत्वेन स्कान्ददशमोक्तस्य "न पाठयेत्तथा शूद्रं शास्त्रं व्याकरणादिकम् । काव्यं वा नाटकं वाऽपि तथाऽलङ्कारमेव वा । पुराणमितिहासं च शूद्रं नैव तु पाठयेत् । शूद्राय चोपदेष्टारं द्विजं चाण्डालवत्त्यजेत् । शूद्रं चाक्षरसंयुक्तं दूरतः परिवर्जयेत्" (१०.४१+४३ ) इत्यादेरप्यप्रामाण्यम् । न च तत्र दृश्यते इत्यस्य श्रवणे तात्पर्यमिति वाच्यम् । "विप्रोऽधीत्याप्नुयात्प्रज्ञां राजन्योदधिमेखलाम् । वैश्यो निधिपतित्वं च शूद्रः शुध्येत पातकात्" (भा० १२.१२.६४) इत्यत्राप्यध्ययनस्यैव स्पष्टमुक्तत्वात् । एतादृशवाक्यानि चान्यत्रापि बहूनि सन्ति । एतैरपि जातिवादः खण्डित एव भवति । यतो जतिवादे ब्राह्मणः प्रज्ञाभिलाष्येव न नियमेन भवति किन्तु बहवो धनाभिलाषिणोऽपि । तथा च धनाभिलाषिणो ब्राह्मणस्य भागवतपाठेन प्रज्ञाप्राप्तिश्चेद्भवति तदाऽनिष्टसिद्धिः स्यात् । गुणपक्षे च "ब्रह्म वै ब्रह्मणस्य स्वमिति श्रुत्यनुसारेण तस्य प्रज्ञाभिलाषित्वात्तत्पाठेनेष्टसिद्धिरिति वक्तु शक्यम् । ननु स्मृतीतिहासपुराणेषु वर्णानां बहुधा जन्मजातित्वोक्तिदर्शनात्तेषां क्वाचित्कैः द्वित्रादिवाक्यैर्बाधोऽर्थान्तरपरत्वं वा वक्तुं न युक्तमिति चेन्न । गौणमुख्यन्यायानुसारेण बहूनामप्यर्थान्तरपरत्वस्य युक्तत्वात् । वेदेषु विधयोऽल्पीयांसोऽर्थवादाश्च बहवस्तथाऽपि विध्यनुयायित्वमेवार्थवादानाम् । लोकेऽपि बहवो बलिनोऽपि दुर्बलैरल्पसंख्याकैरपि राजाश्रितैर्बाध्यन्ते । रागद्वेषादिदूषितैः स्वस्वरुच्यनुसारेण बहुधा विरच्य स्मृतीतिहासपुराणेषु योजितानामप्रामाण्यमपि युक्तमेव । दृश्यते हि क्वचिद-

द्वैतादिनिन्दा क्वचिन्मध्वाचार्यादि निन्दा च। पाद्मे श्रूयते "शृणु देवि प्रवक्ष्यामि तामसानि यथाक्रमम्। येषां श्रवणमात्रेण पातित्यं ज्ञानिनामपि ॥ द्विजन्मना जैमिनिना पूर्वं वेदमपार्थतः। निरीश्वरेण वादेन कृतं शास्त्रं महत्तरम्। मायावादमसच्छास्त्रं प्रच्छन्नं बौद्धमेव च। अपार्थं श्रुतिवाक्यानां दर्शयँल्लोकगर्हितम। ब्रह्मणोऽस्य परं रूपं निर्गुणं दर्शितं मया। सर्वस्य जगतोऽप्यस्य नाशनार्थं कलौ युगे" ( उत्तरखण्डे ४२ अध्याय ) इमे श्लोकाः प्रक्षिप्ता इत्युच्यते वेङ्कटाचलशर्मणा श्रीमच्छङ्कराचार्य-जीवनचरित्ररचयित्रा। न्यायं वैशेषिकं साख्यं बौद्धदर्शनादिकं च मच्छक्त्यावेशितैर्विप्रैः प्रोक्तानीत्यन्यत्रोक्तम्। यथा न्यायवैशेषिकादिशास्त्राणा मीश्वरांशभूतैः रचितत्वेऽपि तत्र युक्तत्वायुक्तत्वविचारभारः प्रमाणप्रमेयज्ञानामुपरि वर्तते तथा जन्मसिद्धवर्णजातिप्रथाया अपि परमेश्वरांशसम्भूतैः प्रणीतत्वेऽपि युक्तत्वायुक्तत्वे विचारणीये भवतो न त्वविचार्यैव तत्प्रवर्तयितृमहत्वमालक्ष्य सा ग्राह्या। सौरपुराणे मध्वाचार्य-विषये इत्थमभिहितम् "ततः कलियुगे प्राप्ते सर्वधर्मविवर्जिते। मधुनामा च विधवा क्षेत्रे विप्राद्भविष्यति ॥ गोलकः स तु पापिष्ठः पद्मपादुकमीश्वरम्। वेदान्तव्याख्यानिरतं शिष्यत्वेनार्चयिष्यति ॥ शास्त्रं पूर्णं ततोऽधीत्य स्थित आन्हिकवर्जितः। किमग्निहोत्र को यागो हेतुमेव करिष्यति ॥ गुरुस्तद्वाक्यमाकर्ण्य "ब्राह्मणो न भवेदयम्"। इति निश्चित्य तं दुष्टं वक्ष्यति श्रुतत्द्वचः। वर्णप्रश्नः कृतः (गुरुणा) ततो मधुनामाऽब्रवीद्वचः। "विधवा जननी नाथ ब्राह्मणेन तपस्विना गर्भिणी समभूत्तस्मादयं देहस्ततोऽभवत्"। "कपटेन यतः शास्त्रं मत्तोऽ ( गुरुतः ) धीतं दुरात्मना। तेन सिद्धान्त मर्यादा कदाचिन्मा स्फुरत्वियम्"। मधुनामा ( सूत उवाच ) ततः प्राप्य शापं तं दुष्टबुद्धिमान्। बादरायणसूत्राणां व्याख्यानं स करिष्यति। मध्वाचार्यस्ततो भावाद्दाक्षिणात्यो भविष्यति। प्रच्छन्नः कुत्रचित्पापी प्रचारं हि विधास्यति।" ( ४०.३१-४६ ) इति। अत्र द्वैतनिन्दाऽप्यागता। एतत्प्रत्युत्तरत्वेन शङ्कराचार्यचरित्रं केनचिन्माध्वेन लिखितं तदिदानि कुम्भकोणस्थमाध्वपुस्तकालये मिलतीति श्रूयते। अत्र शङ्कराचार्यस्य विधवापुत्रत्वं पिशाचावेशसमये सोऽद्वैतप्रचारं स्वस्थसमये द्वैतभावनया भगवत्प्रार्थनाश्लोकान्विरचयति स्मेति दर्शितम्। एतादृशरचनानां रागद्वेषादि मूलकत्वं विना नान्यन्मूलं भविष्यति। ननु द्वैताद्वैतादिमतानां सर्वसम्मतत्वाभावेन परस्पर-दूषणं प्रवर्ततां नाम वर्णजातिप्रथायाः सर्वाचार्यसम्मतत्वात्कथं सा दूष्यत इति चेन्न। दूषणे भूषणे च विषयस्य सत्यत्वंमिथ्यात्वं च हेतुर्नतु जनमत बाहुल्यं तदल्पत्वं वा। अपिचान्यथाप्रतिपत्तिरेव बुद्धिमद्भिर्दूष्यते न त्वाहार्यप्रतिपत्तिः। द्वैताद्वैतादिविषये तदाचार्याः परस्परमन्यथाप्रतिपत्ति मन्यन्तेऽतो दूषणादिकं तत्र प्रवर्तते। विषयस्य सूक्ष्मत्वेन तत्र सा सहजैव। वर्णजाति विषये च प्राचीनाचार्याणामाहार्यप्रतिपत्तिर्न तु मिथ्याप्रतिपत्तिः। बाधकालीनेच्छाजन्या प्रतिपत्तिराहार्यप्रतिपत्तिः। प्रकृते चातुर्वर्ण्यमजातिं मत्वैव ते जातित्वेनाङ्गीकृतवन्तः प्रयोजनवशात्। एतदेव हि तेषां



तद्दूषणे हेतुः। किन्त्विदानीं पामरै वर्णजातिरन्यथैव प्रतिपद्यते। अतस्ते वर्णप्रयोजकगुणादि राहित्येऽपि स्वात्मानंतत्तज्जातीयं मन्यन्ते। आहार्य प्रतिपत्तारस्तु नैवं, किन्तु ते शुभाचारद्वारा ब्राह्मणत्वादि रक्षणार्थमेव सर्वदा चेष्टां कुर्वन्ति। मनुष्यधर्मपरित्यागे दोषो भवति न तु मनुष्यत्वजातिहानिः। वर्णधर्मपरित्यागे च वर्णहानिर्वर्णान्तरागमश्च।

नन्वीश्वरास्तितावादिमते कर्मापि मानवैः। कर्तव्यमन्यथा लोकयात्रा नापि प्रसिध्यति ॥
कर्मपाटवसिद्ध्यर्थं नृणां कर्मव्यवस्थितिः। तदर्थं जन्मना जातिव्यवस्थाऽप्यस्तु सर्वदा ॥
तां विना चर्मकारादिकृत्यं कोनु करिष्यति। शौचालयेषु मूत्रादेः क्षालने को नियोक्ष्यते ॥
जातिव्यवस्थितावङ्गीकृतायां जातिकर्मसु। स्वत एव प्रवर्तेरन् तत्तज्जात्यभिमानिनः ॥
स्वपित्रादिक्रमायातकर्मजालेषु बालकाः। क्रीडाबुद्ध्या प्रवृत्तास्ते पाटवं समवाप्नुयुः ॥
अन्यथाऽसह्यबुद्धिः स्यान्नीचकर्मसु देहिनाम्। गुणैर्वर्णविवक्षायां विवादोऽपि महान् भवेत्
गुणैर्न कोऽपि नीचत्वं स्वतस्त्वङ्गीकरिष्यति। नीचोऽपि मनुतेऽत्युच्चं स्वात्मानं नृस्वभावतः
नीचजात्यभिमानेन स्वल्पवेतनतो जनाः। केचित्प्रक्षालयन्त्येव मलमूत्रादिकं स्वतः ॥११०॥
उच्चत्वाभिमाने तु रूप्यकाणां सहस्रतः। न करिष्यति तत्कर्म कथं तर्हि जगच्चलेत् ॥
तस्माज्जातिव्यवस्थेयं श्रेयसी कर्मसिद्धये। एषितव्या सदा सर्वैरिति चेदुत्तरं शृणु॥११२॥
सत्यं कर्मव्यवस्थायै जन्मजातिव्यवस्थितिः। प्राचीनयाज्ञिकैरिष्टा सर्वकार्यसुसिद्धये ११३
यथाऽऽङ्ग्लप्रभुताकाले भूस्वामित्वप्रथा मता। राजप्रथा करादानसौकर्यार्थं च सम्मता ॥
किन्त्वद्य मानवाः प्रायः त्यक्त्वा कर्मव्यवस्थितिम्। ऐच्छिकं कर्म कुर्वन्ति देहयात्राप्रसिद्धये
यदर्थमिष्यते यद्धि तदभावेऽपरं कुतः : न चेत्कर्मव्यवस्थाऽस्ति कुतो जातिव्यवस्थितिः ॥
श्रौतयागार्थमिष्टा प्राग्जन्मजातिव्यवस्थितिः। न वैदेशिकसामान्यकुक्षिहेत्वर्थकर्मणे ॥११७
साम्प्रतं मानवाः सर्वे जीविकाहेतुकर्मसु। यथेष्टं सम्प्रवर्तन्ते किमर्थमिह सेव्यताम् ॥११८॥
विवाहभोजनाद्यर्थं नैवादौ सा प्रकल्पिता। तस्मात्तदर्थमद्यापि रक्षणीया न सा बुधैः ॥
आनुलोम्येन वर्णेषु प्रातिलोम्येन चाभवत्। परस्परं विवाहादि प्राक् तज्जातिप्रथास्वपि ॥

यहाँ शंका होती है कि ईश्वर को माननेवालों के मत में भी उच्चनीच काम करना ही पड़ता है, नहीं तो दुनियाँ चलेगी नहीं। उनमें कुशलता सिद्धि के लिये कर्मव्यवस्था (एकैक काम में एकैक आदमी लगे रहे) चाहिये और उसके लिये जन्मव्यवस्था (पिता के अन्त में वह काम उसके पुत्र पौत्रादि करे और वह एक जाति बन कर रहे) चाहिये। ऐसी व्यवस्था न रहने पर, जूते वगैरः बनवाना और मलमूत्रादि धोना इत्यादि कौन करेगा। जातिप्रथा को मानने पर सब लोग अपने-अपने कामों में खुद ही बाल्य काल से लग जायेंगे और उन नीच कामों के करने में लोगों को असह्य बुद्धि भी नहीं होगी। गुणकर्मों के द्वारा वर्णों को मानने पर कोई भी अपने को नीच नहीं मानेगा और गुणों के द्वारा उच्चनीचता का निर्णय

करना और उनके द्वारा तत्तत्कार्य करवाना भी मुश्किल होगा। हजारों रुपये वेतन देने पर भी मलमूत्र धोने के लिये कोई तयार नहीं होगा जिनको जातिप्रथा के नीचजातिवाले अल्पवेतन से भी करने को तैयार होंगे। अतः इन्हीं कारणों से जन्मजाति प्रथा माननी होगी। उसका उत्तर है कि यद्यपि उन्हीं हेतुओं से ही पहले के बुद्धिमान लोग जातिप्रथा को कायम किये थे, जैसे अंग्रेजों के समय में जमीन्दारी प्रथा और राजप्रथा भूमिकरादि वसूल करने में सुविधा के लिए माना गयी थी, किन्तु आजकल लोग उस प्रथा को न मान कर अपनी इच्छानुसार जीविका का काम करने लगे और जिसके लिये वह प्रथा पहले मानी गयी थी वह काम बिलकुल आज छोड़ दिया गया है। वैदिक यागादि के लिये, लोग बचपन से ही जातिव्यवस्था के अनुसार वेदपाठादि की तैयारी करके उसे यथाशास्त्र करते थे और ऐसा करने पर उसका फल भी सर्वजनता का हितकारक होता था। किन्तु वह आजकल नहीं है तो क्यों जातिप्रथा मानी जाय। जिन कामों में लोग आजकल जातिप्रथा के अनुसार चलते हैं उन आपसी विवाह और भोजनादि के लिये यह प्रथा पहले मानी नहीं थी और पहले जातिप्रथा रहने पर भी वर्णों में अनुलोम और प्रतिलोम विवाहादि होते थे।

अपिधानीश्वरे वादे यथा कर्मानिवार्यता। न तथा सेश्वरे तस्मिन् नातो जातिव्यवस्थितिः॥
कर्मेश्वरमते तावदिष्यते कर्महेतुकम्। इहामुत्रफलं सर्वमिति तेषामवर्ज्यता॥
ईश्वरास्तित्ववादे हि तद्भक्त्या पूजनेन च। स्वेष्टसिद्धिर्भवेत्तस्मान्नास्ति तेषामवर्ज्यता॥
तदेव ब्रह्मसूत्रादिभाष्यादौ स्पष्टमीरितम्। भक्त्यादौ वर्णभेदोऽपि नास्तीत्येव प्रदर्शितम्॥
क्वचित्कर्मापि वेदोक्तं चित्तशुद्ध्यर्थमिष्यते। अनन्यगतिकत्वं तु कर्मणां नेष्यते बुधैः॥
वेदैर्विधीयमानानि कर्मणीश्वरवादिनाम्। तद्भक्त्याऽपि विकल्प्यन्ते नित्यं निष्कल्मषात्मनाम्
कारीर्या वैदिका वृष्टिं भावयन्ति तथेतरे। अखण्डभगवन्नामकीर्तनेनापि तां जनाः॥१२५
ब्राह्मणत्वाभिमानेन सर्वान् कामान् हि वैदिकाः। भावयन्ति सदा दर्शपूर्णमासेष्टितो यथा॥
तथा भागवता विष्णोर्भक्तिपूर्वकपूजया। भावयन्त्येव तान् कामानप्यब्राह्मणमानिनः॥
न वेदविधिवैयर्थ्यमेवं स्वीकारमात्रतः। अभक्तान् प्राप्य ते श्रौताः प्राप्नुयुश्चरितार्थताम्॥
अभक्तमुक्तये ब्रह्मसूत्रभाष्यविचारणा। हेतुर्न भक्तमुक्त्यर्थमिति भक्तिरसायने॥१२९॥
न पक्षपातः परमेश्वरस्य स्वतो विशिष्टान्वयजन्ममात्रात्
गुणानुरागी स हि बह्वनर्था वर्णव्यवस्थेयमतः किमर्था॥१३०
अभक्तैरङ्गसाकल्यमनुष्ठेयं द्विजादिभिः। शमादिगुणसम्प्राप्तब्राह्मणत्वादिभेदतः॥१३१
शौचालयेषु मूत्रादेः क्षालनादिकुकर्मसु। स्वतो नीचस्वभावास्तु प्रवर्तन्तामबुद्धयः॥१३२॥
सन्त्येव प्रतिवर्गं ते नीचकर्मरता नराः। कुर्वन्तु देहयात्रार्थं कर्मागत्यैव तादृशम्॥१३३॥



अग्रजात्यभिमानेन ह्यप्रवृत्तास्तु साम्प्रतम्। तद्भ्रमापगमे ते च प्रवर्तेरन् निजेच्छया १३४॥
वर्णाश्रमप्रथाशून्यभिन्नराष्ट्रेषु तादृशम्। कर्मापि क्रियते मन्दबुद्धिभिः कुक्षिहेतवे॥१३५॥
तथा भारतराष्ट्रेऽपि जातिभ्रान्त्यपसारणे। मूत्रादिक्षालनं मन्दबुद्धिभिस्तु करिष्यते १३६
जन्मना ब्राह्मणत्वाभिमानिनोऽप्यल्पबुद्धयः। निम्नभृत्यत्वमप्यङ्गीकृत्य जीवन्ति साम्प्रतम्॥
स्वात्मानं ब्राह्मणीं मत्वाऽप्यौषधालयगोगणाम्। मलमूत्राणि भृत्यर्थं प्रक्षालयति काचन॥
उच्चजात्यभिमानेऽपि लोको गत्यन्तरं विना। करोत्येवं जातिबुद्धौ नष्टायां सुतरां हि सः ९
पूर्वं राजप्रयत्नेन दुष्प्रथेयं प्रवर्तिता। तस्मादद्यापि तद्दण्डभयेनैव विनाश्यताम्॥१४०॥
राजा परप्रत्ययनेयबुद्धिः पुरोहितान्यायकृतोपदेशात्।
प्राक्पालयन् पोषयति स्म तत्तज्जातिप्रभेदाख्यमहापिशाचान्॥ १४१॥
तस्माद्धि भारतीयेषु पारस्परिकविग्रहाः। प्रवृद्धास्तेन गोभक्षिहस्तगयत्तं तु भारतम्॥१४२॥
स्वजात्युत्कर्षदुर्व्यग्रचित्ताः पुरा पुरोहिताः। न जानन्ति स्म ते स्वाग्यमत्यंजातीयसम्मताम्॥
आख्यादिभेदगदनाशगृहीतदीक्षैर्लब्धोऽपि साम्प्रतिकनेतृगणैः कथंचित्।
व्याघ्रैश्च गोमुखधरैर्हि विघट्यमानः स्वातन्त्र्यलाभमधुनाऽप्यभजन्न देशः॥ १४३॥
महात्मा गन्धिनामाऽपि श्रीमान् नेहरू महोदयः। अन्ये च बहवो नेतृगणा ह्युद्विग्नमानसाः॥
अभूवन्ननया जन्मजातिदुष्प्रथया भुवि। अतोऽचिरादियं सर्वैकारयत्नैर्विनाश्यताम् १४५

निरीश्वर मीमांसक मत में कर्म ईश्वर स्थानीय हैं। अतः इहपर लोक फल के लिये वह अनिवार्य है। सेश्वर मत में तो ईश्वर भक्ति से ही सब कुछ मिल सकता है। यह बात ब्रह्मसूत्र भाष्यादियों में भी बताया गया है। ईश्वर भक्ति में वर्णभेद की आवश्यकता नहीं। चित्तशुद्धि के लिये किसी के वास्ते कर्म एक उपाय माना गया न कि वही एकमात्र उपाय। ईश्वर भक्ति जिसको नहीं वह कर्म करे। कारीरी याग से वैदिक वर्षा बरसाते और भक्त लोग अखण्ड सङ्कीर्तन से। वैदिक अपने वर्ण भेदों से दर्शपूर्णमासादि याग करके सब फल पाते और भक्त ईश्वराराधन से। ईश्वर गुण ग्राही है न कि किसी के ऊपर पक्षपाती। ऐसा मानने पर वैदिक कर्मविधियाँ भी व्यर्थ नहीं होंगे, क्यो अभक्त के लिये कर्म और दूसरों के लिये ईश्वर पूजा कर्तव्य होगी। भक्तिरसायन में कहा गया कि अभक्तों के लिये ब्रह्मसूत्र विचार और भक्तों के लिये भक्ति ही मुक्ति हेतु है। इतने के लिये जातिव्यवस्था की आवश्यकता नहीं। शमादिगुण और वेदविद्यानै-पुण्य जिनमें हों वे ब्राह्मणोचित कर्म करे और नीचगुणवाले और विद्यारहित लोग सड़कों में झाड़ू दें। अभी जात्यभिमान से ऐसा न करने पर भी वह चला जायगा तो सब लोग अपने-अपने बुद्धिसाध्य काम ही करेंगे। जहाँ वर्णव्यवस्था नहीं उन राष्ट्रों में वैसा ही सब काम चलते और यहाँ भी

आजकल प्रायः वैसा चल ही रहे हैं। आस्पतालों में पैसा के लिए ब्राह्मणी शिष्ट रोगियों के मलमूत्र उठाती भी है। पहले राजदण्ड के भय से यह व्यवस्था चलती रही। अतः आज उसी दण्ड से ही इसका निर्मूलन होना चाहिये। इस जातिप्रथा से ही भारतीयों में परस्पर कलह और उनसे भारत परतन्त्र भी हो गया था। पहले के वैदिक, मानव जाति की सभ्यता को नहीं जानते रहे किन्तु वे ब्राह्मणों को ही मनुष्य समझते थे। जातिमत भेदादि का विनाश करने के लिये दीक्षित नेतागण के द्वारा किसी प्रकार से भारतदेश स्वतन्त्र कर दिया गया तो भी गोमुखधारी व्याघ्रों ( शेरों ) की स्वार्थ कुनितियों के कारण वह अभी तक स्वतन्त्रता का फल ( सुख ) पाया नहीं। महात्मा गान्धि जी नेहरु जी और दूसरे नेतागण इस जाति-प्रथा से बहुत रूष्ट थे। अतः इसको शासन सत्ता निर्मूलित कर दें।

या भाट्टब्राह्मणत्वादि जातिप्रत्यक्ष युक्तयः। प्रत्यक्ष लक्षणायोगात्ताः सत्याज्या मनीषिभिः ॥
न्यायादिसूत्रकारोक्तं यच्च प्रत्यक्षलक्षणम्। भाट्टस्य तत्प्रक्रियायां सङ्गतिं लभते नहि ॥
विषयेन्द्रियसंयोगादुत्पन्नाऽव्यभिचारिणी। बुद्धिरव्यपदेश्या च प्रत्यक्षेत्याह गौतमः ॥१४६
स्वसूत्रकारनिर्दिष्टमपि प्रत्यक्षलक्षणम्। तदीय ब्राह्मणत्वादिप्रत्यक्षे नैव सङ्गतम् ॥१४७
सत्सम्प्रयोगे सति पुरुषेन्द्रियैरुदीयमानामनपेक्ष्य चापरम्।
सद्वस्तु संवेदयतीं मतिं हि तत्प्रत्यक्षबुद्धिं निजगाद जैमिनिः ॥१४८॥
रूपस्पर्शवति द्रव्ये द्वीन्द्रियग्राह्यता मता। तस्मात्तन्निष्ठजातेश्च त्वक्चक्षुर्ग्राह्यता भवेत् ॥
चक्षुरिन्द्रियवेद्यत्वे विप्रत्वादेर्घटत्ववत्। तस्य त्वगिन्द्रियेणापि प्रत्यक्षत्वं प्रसज्यते ॥१५०
अनुमानादिसापेक्षा प्रत्यक्षस्यास्ति चेत्तदा। न तस्य ज्येष्ठमानत्वव्यवहारो भविष्यति ॥
प्रत्यक्षं ज्येष्टमानं हि कनिष्ठाश्चानुमादयः। सर्वेषां शास्त्रकारणां सम्मतिश्चात्र विद्यते ॥
ज्येष्ठप्रमाणसापेक्षा भिन्नमानेषु वर्तते। प्रत्यक्षमुपजीव्यैव तान्यात्मानमवाप्नुयुः ॥१५३
आप्तवाक्यादिसापेक्षा वर्णाध्यक्षे भवेद्यदि। क्लृप्तोपजीव्यताहानात्तन्मते स्याद्विपर्ययः ॥
पुत्रोऽयं देवदत्तादेरित्याप्तोक्त्या प्रबोधितः। पश्चादन्यत्र तं पश्यन् तत्वेनैवावगच्छति ॥
तज्ज्ञानमपि भट्टस्य मते प्रत्यक्षधीर्भवेत्। तत्पुत्रत्वमपि स्याच्च जातिः प्रत्यक्षगोचरः ॥१५६
नेष्टापत्तिर्यतश्चान्यैर्दृष्टे तस्मिन्न तत्त्वधीः। प्रत्यक्षविषयोऽप्येवं भवेन्नैकविधः सदा ॥
चक्षुषा वस्तुसम्बन्धे यदाकारमतिर्नृणाम्। प्रत्यक्षा सैव सर्वेषामन्यच्छाब्दमिहेष्यते ॥१५७
यस्मादेकविधं पात्रं पश्यन्तो भिन्नभाषिणः। ब्रूयुः स्वोयगिरा कुण्डं घटं बर्तनमित्यपि ॥
शब्दादप्यपरोक्षा धीरात्मन्येवेष्यते बुधैः। तत्त्वमस्यादिवेदान्तवाक्याद्द्वैतवादिभिः ॥१६०
दशमस्त्वमसीत्यादिवाक्यतोऽप्यात्मदर्शनम्। दशमाभिन्नरूपेण न त्वन्यत्र न चापरैः ॥
विप्रत्वक्षत्रियत्वादिधर्माः सन्त्यात्मवर्तिनः। कथमन्यस्य वाक्यात्ते चाक्षुषाध्यक्षगोचराः ॥
स्वकीयात्मगुणानां तु प्रत्यक्षत्वं हि मानसम्। न तु चाक्षुषप्रत्यक्षगोचरत्वं कदाचन ॥



यदि प्रत्यक्षविज्ञाता ब्राह्मणत्वादयस्तदा। आङ्ग्लेयादिष्वपीक्ष्येरन् ते मनुष्यत्वजातिवत् ॥१६६
प्रत्यक्षजातयः सर्वा गोत्वाश्वत्वादयस्सदा। दृश्यन्ते सर्वराष्ट्रेषु नैव वर्णा न चाश्रमाः ॥१६७॥
अपिचाध्यक्षगम्यत्वे तेषां प्रत्यक्षसंशयः। नोपपन्नः प्रमात्वस्य स्वतोग्राह्यत्वपक्षवत् ॥१६८॥
संशयोत्तरप्रत्यक्षं व्याप्तिज्ञाननिबन्धनम्। स्थाणु र्वा पुरुषो वेति संशयानन्तरं पुनः ॥१६९॥
स्थाणुत्वव्याप्यवक्रादिकोटरोऽयं प्रदृश्यते। तस्मात्स्थाणुरेवेति प्रत्यक्षमुपजायते ॥१७०॥
स्थाणुं दृष्ट्वाऽऽगतो मर्त्यो ब्रूते स्थाणुरसाविति। ततोऽन्यस्यापि प्रत्यक्षं स्थाणौ स्याद्दूरवर्तिनि ७१
ब्राह्मणत्वादि-प्रत्यक्षे तादृग्व्याप्तिर्न संभवेत्। ब्राह्मण्यव्याप्य शान्त्यादि गुणोऽतो ब्राह्मणस्त्विति॥
अस्मत्पक्षानुकूला स्याज्जातिवादविरोधिनी। तस्माद्भाट्टा न वर्णेषु प्रत्यक्षत्वस्य साधकाः।१७३
यथैव को हि तद्वेद यद्यमुष्मिन्न वाऽस्ति वा। संशयोऽदृश्यमानत्वात्स्वर्गस्योत्पद्यते तथा ॥१७४॥
न चैतद्विद्म इत्यादि ब्राह्मणत्वादिसंशयः। तस्याप्रत्यक्षधर्मत्वाज्जायते लोकवेदयोः ॥१७५॥
यथा शास्त्रप्रमाणेन स्वर्गास्तित्वविनिर्णयः। तथा तेनैव मानेन ब्राह्मणत्वस्वरूपधीः ॥१७६॥

ब्राह्मणत्वादि धर्मों को प्रत्यक्षजाति मानने में भाट्टमीमांसक जितनी युक्तियाँ बताते हैं वे सब प्रत्यक्षलक्षण के अन्तर्गत नहीं है। न्यायसूत्रकार और मीमांसासूत्र कार जैमिनि भी चक्षुरिन्द्रियसन्निकर्ष से उत्पन्न ज्ञान का ही प्रत्यक्ष मानते हैं न कि अनुमानादि की सहायता से होनेवाले को। रूपस्पर्श वाले द्रव्य का प्रत्यक्ष दो इन्द्रियों से ( चक्षु और त्वक् ) होता है। अतः इसमें रहने वाली जाति का प्रत्यक्ष भी उन्हीं दो इन्द्रियों से होता है। यदि ब्राह्मण-त्वादि वर्ण भी प्रत्यक्ष जातियाँ हों तब उनका प्रत्यक्ष भी उन दो इन्द्रियों से होना चाहिये किन्तु ऐसा होता नहीं। प्रत्यक्षप्रमाण के सहयोग से अन्यप्रमाण चलते हैं न कि अन्यों के सहयोग से प्रत्यक्ष। अतः प्रत्यक्ष ज्येष्ठप्रमाण माना जाता है। आप्तवाक्यादि के सहयोग से वर्णप्रत्यक्ष मानने पर सर्वसम्मत उपजीव्योपजीवक भाव नहीं रहेगा। "यह देवदत्त पुत्र है" ऐसा एक बार जिसको बता दिया जाता है वह जब कभी उसे देखेगा तो देवदत्त पुत्र के रूप से ही समझेगा। वह ज्ञान भी भट्ट के मत में प्रत्यक्षात्मक और वह देवदत्तपुत्रत्व भी प्रत्यक्ष जाति हो जायगी किन्तु यह उचित नहीं। क्यों! उसे दूसरे लोग देखेंगे तो देवदत्तपुत्र नहीं समझते हैं और ऐसे ज्ञान को प्रत्यक्ष मानने पर प्रत्यक्ष विषय भी सबके लिए एक प्रकार का नहीं रहेगा। आँखों से देखने पर बाजें, सबके लिये जैसे दीखतो हैं वही प्रत्यक्ष है और उसे कोई घट, कोई कुण्ड और कोई बर्तन जो कहते हैं वह शाब्द है। शब्द से अपरोक्ष ज्ञान आत्मा का ही अद्वैती लोग मानते हैं। ब्राह्मणत्वादि धर्म आत्मा नहीं किन्तु आत्मनिष्ठ धर्म हैं। वर्ण यदि प्रत्यक्ष होते हैं तो अपरिचित व्यक्ति को देखने पर यह अमुक वर्ण है ऐसा मालूम होना चाहिये न कि सन्देह। वर्णों के विषय में वेद

और लोक में भी सन्देह हो रहा है। संशयोत्तर प्रत्यक्ष भी व्याप्तिज्ञानाधीन होता है। वर्णप्रत्यक्ष में ऐसा व्याप्तिज्ञान नहीं रहेगा जो गुणपक्ष में हो भी सके। स्वर्ग अप्रत्यक्ष होने का कारण उसका भी सन्देह "को हि तद्वेद" इत्यादि रूप से वेद में दिखाया गया तथा वर्ण संशय भी उसी हेतु से दिखाया गया है। जैसे स्वर्ग का अस्तित्व वेद से ही सिद्ध होता है वैसे ही ब्राह्मणत्वादि के स्वरूप का निर्णय भी उसी प्रमाण से करना चाहिये।

यदप्युक्तं विलीनेषु स्वर्णतैलघृतादिषु। रूपगन्धरसैस्तत्तज्जातेर्व्यंज्यत्वमिष्यते ॥१७७॥
भस्मप्रच्छादिते वह्नौ दूरस्थाश्वगजादिषु। स्पर्शेन कण्ठशब्देन तज्जातिरुपलभ्यते ॥१७८॥
तथा योनि सदाचारैः सम्यग्राजानुपालितैः। ब्राह्मणत्वादिका जातिर्व्यज्यते धीमतामिति १७९
तन्न युक्तं यतो रूपरसगन्धादिहेतुभिः। तत्प्रदर्शितदृष्टान्तवर्तिनी जातिरूह्यताम् ॥ १८०॥
तेष्वसाधारणैरुक्तैर्गुणैस्तत्सहचारिणी। जातिस्तत्रानुमेया स्याद्ब्राह्मणत्वादिका पुनः ॥१८१॥
आचारैर्योनिसम्बन्ध-ज्ञानेनाप्यनुमानतः। न ज्ञातव्या भवेज्जातिः किन्तूपाधिस्तथाविधः ॥
नहि राजा स्वदेशस्थान् तत्स्त्रीभिर्योजयेत्सदा। नापि वर्णान् सदाचारपरान् कारयितुं क्षमः ॥
क्वचिच्छासनोल्लङ्घिदुर्जनान् तस्करानपि। सम्यग्दण्डयितुं नालं किमुताचारदर्शने ॥१८४॥
तस्मात्तदेषिता जातिर्नियतैकैकवंशगा। अनुमातुमशक्यैव राज्ञा सुष्ठ्वपि पालने ॥१८५॥
अत्र दर्शितदृष्टान्तैर्वर्णानामनुमेयताम्। उक्त्वा प्रत्यक्षजातित्वं तेषामग्रे ब्रवीत्यसौ ॥१८६॥
क्वचिदाचारतो वर्णा यदा ज्ञेया भवन्ति हि। तत्पक्षे तन्मतेऽपीष्टा न योनेर्वर्णहेतुता ॥१८७॥
तदस्माकमिहाभीष्टमतो योनिर्न कारणम्। उभयोर्वर्णहेतुत्वे दुर्ज्ञेयत्वं च गौरवम् ॥१८८॥
व्योम्नः शरीरहेतुत्वे भवेददृश्यतेति तत्। नाङ्गीकृतं यथा तद्वद्दुर्ज्ञेयाहेतुताऽत्र हि ॥१८९॥
यत्त्वग्रे पुनराचारं ब्राह्मणत्वाप्रयोजकम्। अब्रवीत्तच्च स्वीयोक्तिदूषकं भवति स्फुटम् ॥१९०॥
आचारतो वर्णसिद्धावन्योन्याश्रयदूषणम्। यदुक्तं तदसद्यस्माद्वर्णा नाचारहेतवे ॥१९१॥
यद्याचारैर्वर्णसिद्धिर्वर्णाश्चाचारहेतवे। इत्यङ्गीक्रियते चेत्स भवेदन्योन्यसंश्रयः ॥१९२॥
न चैवमिष्यते तस्मान्नान्योन्याश्रयतेह न। वर्णाश्चात्मगुणैर्ज्ञेयाः श्रौतार्थमिति चोच्यते ॥ .९३॥
यदुक्तमशुभाचाराच्छुभाचाराद्यथाक्रमम्। शूद्रत्वं ब्राह्मणत्वं च स्यादेकस्येति तन्न हि ॥१९४॥
स्वाभाविकशुभाचा ो यस्मिन् पुंसि प्रदृश्यते। न तस्मिन्नशुभाचारो मनसाऽपि भविष्यति ॥१९५॥
तादृगेवाशुभाचारः पुंसि यस्मिन् समीक्ष्यते। तस्मिन्नपि शुभाचारो बुद्धिपूर्वो न विद्यते ॥१९६॥
अतः शिष्टत्वदुष्टत्वे नियते प्रतिपूरुषम्। न तु प्रत्यन्वयं ताभ्यां न जातिरनुमीयते ॥१९७॥
तस्मात्त्राणाय शिष्टानां दुष्टानां नाशहेतवे। हरेरत्रावतारोक्तिः साध्वी सङ्गच्छते क्षितौ॥१९८॥
जघान रावण रामो ररक्ष च विभीषणम्। दुष्टत्वं वेहशिष्टत्वं नियतं नैकवेश्मनि ॥१९९॥
वस्तुतो नात्र चाचारो ब्राह्मणत्वादिकारणम्। स हि शिष्टत्व दुष्टत्वहेतुरित्युच्यते बुधैः ॥२००।
सर्वदैव ह्यनुष्ठानं नित्यनैमित्तिकाख्ययो। कोविदा ब्रूयुराचारं सर्ववर्णसमो हि सः ॥२०१॥
तस्मादाचारहीनं तं वेदा नैव पुनन्त्यपि। इति शास्त्रज्ञलोकोक्तिर्वर्तते सर्वसम्मता ॥२०२॥



यस्तु नैमित्तिकं नित्यं कर्म नैव करोति हि। ब्रूयुराचारभ्रष्टं तं न तु काम्य प्रहापिणम् २०३
त्यक्त्वाऽपि काम्यकर्माणि नित्यनैमित्तिकेष्विह। रमन्तश्च सदाचारपरत्वेन बुधैर्मताः॥२०४॥
वर्णास्तु काम्यकर्मानुष्ठानमात्रोपयोगिनः। तस्मान्नाचारतो वर्णा न ते चाचारसिद्धये ॥२०५॥
युगपत्परपीडानुग्रहौ च क्षत्रियोचितौ। न तु ब्राह्मणधर्मौ तौ नातो दोषस्तदीरितः ॥२०६॥
तेनोक्तं परपीडानुग्रहाभ्यामेक एव हि। ब्राह्मणोऽब्राह्मणश्चापि युगपत्स्यात्पुमानिति ॥२०७॥
ब्राह्मणत्वाब्राह्मणत्वे न विरुद्धे परस्परम्। सामानाधिकरण्यं च कालभेदेन दर्शितम् ॥२ ८॥
यदुक्तं तप आदीनामपि ब्राह्मण्यहेतुता। नास्तीति तत्पुराणेतिहासवाक्यतिरस्क्रिया ॥२०९॥
चाण्डालत्वं मतङ्गोऽपि त्यक्त्वा ब्राह्मण्यमाप्तवान्। स्कान्दोक्तं तपसैवेति तस्मै किं बहु कथ्यते।१०
महाकालवने लिङ्गदर्शनं गौणमुच्यते। तस्य ब्राह्मण्यसम्प्राप्तौ तप एव हि कारणम् ॥२११
तत्रोक्तं तपसा तस्य सम्प्राप्तं लिङ्गदर्शनम्। तेनासौ ब्राह्मणो जात इत्यमुख्यंहि दर्शनम् ॥२१२
कुमारिलस्य वेदादि शास्त्रसिद्धमपीश्वरम्। नाङ्गीकुर्वत एतस्मिन् कुतः पौराणिके भयम्॥२१३॥
अतश्चासौ पुराणोक्तां सृष्टिं च प्रलयादिकम्। नाङ्गीकरोति पाखण्ड स्वीयसिद्धान्त हेतवे ॥२१४
कस्य स्यात्तत्र विश्वासः शास्त्रतत्वं विजानतः। पुराणे चैव श्रद्धालोरेकं मीमांसकं विना ॥२१५॥
अत्र सृष्ट्यादिकं नाङ्गीकृत्याग्रे तन्त्रवार्तिके। तदप्यङ्गीकृत तेन मन्त्रार्थोक्त्यादिमानतः ॥२१६॥
पङ्ग्वन्धबधिरादीनां संन्यासः प्रतिषिध्यते। उपनिषत्स्वसावङ्गीचक्रे तेषामिहैव तम् ॥२१७॥
गृहस्थाश्रमकार्यार्थमसमर्था नराश्च ये। संन्यासार्हास्तु ते ह्येव भवन्तीत्ययमब्रवीत् ॥२१८॥
वर्णानामपि जातित्वमन्योन्यासङ्गतोक्तिभिः। महादुराग्रहेणाह कस्तच्चापीह विश्वसेत् ॥२१९॥

कुमारिल ने कहा कि द्रवीभूत सोना और पीतल में रूपभेद से, तथा घी और तेल में गन्ध से, उनकी जाति जैसे मालूम होती है, वैसे ही योनि सम्बन्ध से और धार्मिक राजा के द्वारा पालित जनता के आचार से ब्राह्मणत्वादि जाति भी मालूम हो जाता है, किन्तु यह ठीक नहीं, क्यों! सुवर्ण और पीतल का रूप तथा घी और तेल का गन्ध प्रत्यक्ष होते हैं। अतः उनके द्वारा सुवर्णत्वादि जाति अनुमेय होती है न कि प्रत्यक्ष। पराभिमत वर्णों की योनि तो प्रत्यक्ष भी नहीं नानुमेय। अतः योनि-सदाचारों से वर्णों का ज्ञान होना असम्भव है। धार्मिक राजा भी, जनता में कौन क्या करता है यह देख नहीं सकेगा। चोरी करने वालों को भी वह पूरी तरह से रोक नहीं सकता है तो आचारों को वह कैसे देख सकेगा। जब आचार से वर्ण माने जायँगे उस पक्ष में कुमारिल के मत में भी योनि अनावश्यक हो जाती है। यह तो हमको भी इष्ट है। अतः योनि को अलग वर्ण हेतु मानना व्यर्थ है। दोनों को वर्ण हेतु मानने पर गौरव होगा और योनि दुर्ज्ञेय होने से वर्ण भी दुर्ज्ञेय हो जायँगे। यहाँ वर्णों को दर्शित दृष्टान्तों के द्वारा अनुमेय मानकर आगे तन्त्रवार्तिक में वे प्रत्यक्षजातियाँ कहे थे। भट्टजी ने श्लोकवार्तिक में आचार को भी वर्ण

हेतु मानकर आगे कहा था कि आचार वर्ण हेतु नहीं है और ऐसा मानने पर अन्योन्याश्रय हो जायगा। इससे उनकी पहली बात खण्डित हो जाती है। अन्योन्याश्रय भी आचार से वर्ण और वर्णों के लिए आचार मानने पर ही होगा किन्तु यहाँ वह बात है ही नहीं। श्रौतार्थवाद सम्मत गुणों से, जो गुण स्मृतियों में स्पष्ट कहे गये हैं, वर्णों की सिद्धि और वैदिक यागों के लिए वर्ण (पृ० १५६) शास्त्रसम्मत है। एक ही आदमी शुभाचार से ब्राह्मण और अशुभाचार से शूद्र हो जाने की जो आपत्ति दी गयी है वह भी यहाँ नहीं। क्या? स्वाभाविक शुभाचार जिसमें है उसमें बुद्धिपूर्वक अशुभाचार नहीं रहेगा। अतएव कोई स्वत शिष्ट और कोई दुष्ट रहता है न कि एक ही शिष्ट और दुष्ट। शिष्टत्व और दुष्टत्व एकैक पुरुष मात्र नियत रहते हैं न कि एकैक कुल में। अतः गीता में भगवान् ने जैसे कहा वैसे ही रावण को मारा और विभीषण की रक्षा की थी। वस्तुतः नित्य नैमित्तिक कर्मों का यथा विधि अनुष्ठान ही आचार माना जाता है। वह अनुष्ठान सबके लिए समान है। जो इनको नहीं करेगा वह आचार भ्रष्ट माना जाता है। काम्यकर्मों का अनुष्ठान आचार कोटि में नहीं है। अतएव इनको बिल्कुल छोड़ करके भी नित्य कर्मों को करने पर आदमी आचारवान माना जाता है। चार वर्ण तो काम्यकर्मों के लिए आवश्यक हैं न कि नित्य कर्मों के लिए। अतः आचार वर्ण के लिए नहीं और वर्ण आचार के लिए भी नहीं। भट्ट ने कहा कि एक ही समय में परपीडा और अनुग्रह जो करेगा उसमें, आचार से वर्ण मानने पर, ब्राह्मणत्व और अब्राह्मणत्व दोनों विरुद्ध धर्मों की आपत्ति होगी। यह भी ठीक नहीं। परपीड और अनुग्रह क्षात्रयोचित गुण हैं न कि ब्राह्मणोचित। ब्राह्मणत्व और अब्राह्मणत्व भी काल भेद से एक ही में रहने वाले हैं न कि परस्पर विरुद्ध (पृ० ३५) दिवोदास वृषभाख्यसाम से ब्राह्मणत्व और क्षत्रित्व भी प्राप्त किया था (५६) उन्होंने कहा तपस्या से भी ब्राह्मण नहीं बन सकता, यह बात तो पुराणों की अवहेलना मात्र है। पुराणों में से यह समाचार मिलता है कि बहुत से ऋषि तपस्या से ब्राह्मण बने हैं। नापित से ब्राह्मणी में पैदा हुआ मतङ्ग भी तपस्या से ब्राह्मण बन जाने का वृत्तान्त, स्कान्द अवन्तीखण्ड ६०वाँ अध्याय में मिलता है। यज्ञदीक्षा समय में क्षत्रिय और वैश्य भी ब्राह्मण हो जाते हैं और दीक्षा छोड़ देने पर यथापूर्व रहेंगे (३९)। वेदशास्त्र प्रशिद्ध ईश्वर को भी न मानने वाले कुमारिल को पुराण प्रसिद्ध सृष्टि प्रलयादि और वर्ण-परिवर्तन को न मानने में भय भी क्या होगा? किन्तु उनके इस सिद्धान्त पर वेदतत्वज्ञ पुरुष कोई भी विश्वास नहीं करेगा। श्लोकवार्तिक में इन



विषयों को नहीं मान कर भट्ट जी ने तन्त्रवार्तिक में मन्त्रार्थवादेतिहासादि को प्रमाण मान कर ईश्वर और सृष्टि प्रलयादि को मान लिया था पंगु बहिरा और अन्धादि को संन्यासाधिकार नहीं है ऐसा उपनिषदों में लिखित है किन्तु भट्ट जी सिर्फ उन्हीं को संन्यासाधिकार माने थे। ऐसे ही परस्पर विरुद्धयुक्तियों से उन्होंने वर्णों को भी कहीं अनुमेय जाति और दूसरे जगह में प्रत्यक्षजाति बताये हैं तो भी उसको कौन मानेगा।

यदप्युक्तमिति = तदुक्तं श्लोकवार्तिके वनवादे "सुवर्णं व्यज्यते रूपात्ताम्रत्वादेरसंशयम्। तैलाद्घृतं विलीनं च गन्धेन च रसेन च। भस्मप्रच्छादितो वन्हिः स्पर्शनेनोपलभ्यते। अश्वादौ च दूरस्थे निश्चयो जायते स्वनैः॥ संस्थानेन घटत्वादि ब्राह्मणत्वादि योनितः। क्वचिदाचारतश्चापि सम्यग्राजानुपालितादिति"। अत्राचारस्य वर्णहेतुत्वमनुमेयजातित्वं च वर्णानामङ्गीकृत्याग्रे तन्त्रवार्तिके तस्य वर्णहेतुत्वं तेषां प्रत्यक्षजातित्वं चोक्तवानसौ। तथाहि "येषां पुनराचारनिमित्ता ब्राह्मणत्वादयस्तेषामपि दृष्टविरोधस्तावदस्त्येव न त्वाचारनिमित्तवर्णविभागे प्रमाणं किञ्चित्। सिद्धानां हि ब्राह्मणत्वादीनामाचारा विधीयन्ते। तत्रेतरेतराश्रयता भवेत्, ब्राह्मणादीनामाचारस्तद्दर्शनेन च ब्राह्मणादय इति। स एव शुभाचारकाले ब्राह्मणः पुनरशुभाचारकाले शूद्र इत्यनवस्थितत्वम्। तथैकेन प्रयत्नेन परपीडानुग्रहादि कुर्वतां युगपद्ब्राह्मणत्वाब्राह्मणत्वविरोधः। एताभिरुपपत्तिभिरयं प्रतिपद्यते, न तप आदीनां समुदायो ब्राह्मण्यं न तज्जनितः संस्कारो न तदभिव्यङ्ग्या जातिः, किं तर्हि मातापितृजातिज्ञानाभिव्यङ्ग्या प्रत्यक्षसमधिगम्या" इति। एतदुत्तरं मूले स्पष्टम्। आकृतिव्यङ्ग्या जातिरप्याकृत्याऽनुमेयैवेति न्यायवार्तिककारः। जातेः प्रत्यक्षत्वमेवेति वाचस्पतिमिश्राः। आकृतिरवयवसंस्थानं तच्च प्रत्यक्षं तेनाप्रत्यक्षा जातिरनुमीयत इत्याकृतिव्यङ्ग्यत्वपक्षः। वर्णास्तु न प्रत्यक्षा नाप्याकृतिव्यङ्ग्यास्तथापि कुमारिलेन तदुभयं तेष्विष्यत इत्यतिसाहसम्। (१६) अयमीश्वरमपि नाङ्गीकरोति। तदुक्तम् "सर्वज्ञवन्निषेध्या च स्रष्टुः सद्भावकल्पनेति। एवं सृष्टिप्रलयावपि निराकरोति सः। "सृष्टिसर्गविनाशानामथाऽनादित्वकल्पना। सैव युक्ता यथेदानीं भूतानां दृश्यते क्रमात्॥ प्रलयेऽपि प्रमाणं नः सर्वोच्छेदात्मके नहि" इति। तन्त्रवार्तिके च तत्सर्वमङ्गीचकार "मन्त्रार्थवादेतिहासप्रामाण्यात्सृष्टि-प्रलयाविष्येते। तत्र सृष्ट्यादौ प्रजापतिरेव योगी" त्यादिना। पङ्ग्वन्धेति, तदुक्तम् "तत्रैवं शक्यते वक्तुं येऽन्धपङ्ग्वादयो नराः। गृहस्थत्वं न शक्ष्यन्ति कर्तुं तेषामयं विधिः॥ नैष्ठिकब्रह्मचर्यं वा परिव्राजकताऽपि वा। तैरवश्यं ग्रहीतव्या तेनादाविदमुच्यते" इति। संन्यासनारदपरिव्राजकोपनिषदोश्च नपुंसकाङ्गविकलान्धबधिरादीनां संन्यासो निषिद्धः। एवं वर्णानां प्रत्यक्ष जातित्वोक्तिरप्यस्याविश्वसनीया।

भाष्योक्त "मपरो दृष्टविरोध" इति तद्वचः। समर्थयितुकामोऽसौ यदवोचत्कुमारिलः॥२२०

तदसङ्गतमत्यन्तं स्ववैदुष्यकलङ्कदम् । समर्थयन् यतोऽयुक्तमीश्वरोऽनीश्वरायते ॥२२१॥
ब्राह्मणत्वादिकं शास्त्रैर्ज्ञेयं प्रत्यक्षतो नहि। भाष्ये तु तच्च प्रत्यक्षमुक्तं तद्घटते कथम् ॥२२२॥
इत्ययं प्रथममाशङ्क्य भट्टाचार्योऽब्रवीद्वचः। "वृक्षत्वादिवदेवेदमपि प्रत्यक्षमुच्यते ॥२२३॥
शब्दसङ्केतविज्ञानात्प्राग्वृक्षत्वमनिश्चितम् । तस्मिन् सति च विज्ञातं ब्राह्मणत्वादिकं तथा २५॥
तयोर्वैषम्यमुद्घाट्य सम्यङ्निश्चित्य चोक्तवान्। पिण्डोत्पादकजातेर्हि स्मरणं कारणं त्विति।२४
एतच्च खण्डदेवेन मीमांसाभाट्टकौस्तुभे । बहुप्रपञ्चितं स्वीयैरनल्पैरपि जल्पनैः ॥२२६॥
अत्र सर्वत्र शङ्कैव प्रबला सुगमाऽपि च । तदुक्तमुत्तरं चाति-दुर्ज्ञेयं दुर्बलं ह्यपि ॥२२७॥
प्रत्यक्षा येन पिण्डस्था जातिस्तत्स्मरणं पुनः। सर्वसम्मतमानेषु प्रमाणं कतमद्भवेत् ॥२२८॥
भट्टोक्तषट् प्रमाणेषु स्मृतिर्नान्यतमा मता। अप्रमाणेन तत्स्मृत्या प्रमेयावगतिः कुतः ॥२२९॥
न च वाच्यं चक्षुरेव ब्राह्मणत्वादिभासकम्। चक्षुषः स्मरणं चानुग्राहकं तु भवेदिति ॥२३०॥
आलोकोद्भूतरूपादिसम्बन्धश्चक्षुषो यतः। सत्प्रत्यक्षे बुधैश्चानुग्राहकत्वेन सम्मतः ॥२३१॥
अनुमानादिमानानामस्त्वनुग्राहकं हि तत्। चक्षुषः स्मरणं क्वापि नानुग्राहकमिष्यते ॥२३२॥
वर्णप्रत्यक्षमात्रे स्यात्तदनुग्राहकं त्विति। वदन् भट्टो वर्णजातिं ब्रूयाल्लोकविलक्षणाम् ॥२३३॥
लोकप्रसिद्धजातिं हि सर्वेऽङ्गीकुर्वते बुधाः। तदन्यां कोऽपि भट्टाज्ञामात्राज्जातिं वदेन्न हि २३४॥
प्रत्यक्षं निर्विवादं हि तत्सर्वजनसम्मतम् । घटादिवस्तुप्रत्यक्षं सर्वेषां तुल्यमुच्यते ॥२३५॥
यदेकजनप्रत्यक्षं सर्वेषां तत्तथेष्यते । वर्णो भट्टस्य प्रत्यक्षश्चेदन्येषां स तथा भवेत् ॥२३६॥
कदाचिद्भट्टपादाः स्वं जैनमुक्त्वा च तन्मतम्। अधीतवान् किलैतच्च प्रत्यक्षत्वे कथं भवेत्२३७॥
ब्राह्मण्यं यदि प्रत्यक्षं जैना ब्राह्मणमेव तम्। जानीयुस्तदभावेन तदभावोऽपि दृष्टिगः ॥२३८॥
अप्रत्यक्षे सविवादो नास्तीत्यस्तीति वस्तुनि। चार्वाकास्तिकयोस्तस्माद्विवादोऽस्तीह चेश्वरे३७॥
उक्तं च शङ्कराचार्यैर्बृहदारण्य भाष्यके। प्रत्यक्षे न विवादोऽस्ति नास्तिकास्तिकयोरपि २४०९॥
आत्मन्यस्तीत्यतश्चात्मा न प्रत्यक्षो भवत्यतः। बौद्धादयो वदन्त्यात्मा नास्ति देहाद्विलक्षणः २४१
ते चाप्यत्र मनुष्येषु वर्णभेदमवान्तरम्। नाङ्गीकुर्वन्ति शिष्टाश्च तमङ्गीकुर्वते ह्यतः ॥२४२॥
प्रत्यक्षा नैव वर्णाः स्युः कस्यापि सूक्ष्मचक्षुषः। अनुमेयत्वमेवैषामङ्गीकार्यमनिच्छता ॥२४३॥
अतो जानश्रुतिश्चैत्ररथलिङ्गेन चोहितः । क्षत्रियत्वेन कर्णोऽपि तत्सहिष्णुत्वहेतुना ॥२४४॥
ब्राह्मणत्वेन जाबालिर्विज्ञातः सत्यवाक्यतः । न तु प्रत्यक्षतो नापि तदुत्पादकजातितः २४५॥
यद्युत्पादकसम्बन्धो मातृप्रत्यक्षगोचरः। तदा मातैव पुत्रस्थामपि जातिं विलोकयेत् ॥२४६॥
अन्येषामनुमेयश्चेदनुमेयैव साऽपि च। उक्तदृष्टविरोधोऽपि कस्य भट्टमते भवेत् ॥२४७॥
मातुरेव भवेन्नान्यजनानामिति चागतम्। श्रूयते यजमानस्य संशयश्चेत्यसङ्गतिः ॥२४८॥
द्वित्रादिजनसम्बन्धो द्वित्राहव्यवधानतः। यस्यास्तयाऽपि पुत्रस्य जातिर्ज्ञाता भवेन्न हि २४९॥
अप्रत्यक्षस्य प्रत्यक्षहेतुत्वं चक्षुरादिवत् । यदुक्तं तदयुक्तं च दृष्टान्तविषमत्वतः ॥२५०॥
चक्षुरादेः स्वरूपेण प्रत्यक्षं प्रति हेतुता । न तु ज्ञातस्य वर्णाश्च सम्बन्धज्ञानतोऽक्षिगाः॥२५१॥
प्रत्यक्षतः पूर्वपक्षः सिद्धान्तस्त्वनुमादितः । प्रत्यक्षेणेश्वराभावस्तत्सत्वमनुमादितः ॥२५२॥



न ह्यप्रत्यक्षमानेन पूर्वपक्षः प्रवर्तते। प्रत्यक्षेण च सिद्धान्तो भाट्टवर्णेषु तद्द्वयम् ॥२५३॥
पूर्वपक्षे तु वर्णानां समानाकारसत्त्वतः । शास्त्रमात्राधिगम्यत्वमुक्तं प्रत्यक्षतोत्तरे ॥२५४॥
आद्यः किं मूढचार्वाकजैनबौद्धादिकर्तृकः। अथवा वेदशास्त्रज्ञकर्तृको वेति पृच्छयते ॥२५५॥
मूढादीनां यतः शास्त्रविज्ञानं नैव विद्यते। तस्मान्नाद्यो भवेत्पक्षो द्वितीयोऽपि न संभवेत् ॥२५६
शास्त्राज्ञाः पूर्वपक्षस्य कर्तारो न भवन्ति हि। मूढादिमुखतस्तं च कारयिष्यन्ति ते क्वचित् ॥
तस्मादुत्तरपक्षोऽत्र बालमूढादि कर्तृकः। पूर्वपक्षश्च विज्ञानामिति सर्वं समञ्जसम् ॥२५८॥
ननु वर्णाः कथं मूढजनप्रत्यक्षगोचराः। रूपावयवसंस्थानभेदाभावादिहेति चेत् ॥२५९॥
यथा पण्डितपुत्रं ते पण्डितं कथयन्ति हि। आचार्यपुत्रमाचार्यं तद्गृहोत्पत्तिदर्शनात् ॥२६०॥
तथा वर्णानपि ह्यज्ञास्तत्तद्वर्णगृहोद्गतान्। दृष्ट्वा भट्टवदेवाक्षिगोचरानिव चक्षते ॥२६१॥
विद्ययैव यथा विज्ञाः पण्डितं सम्प्रचक्षते। वर्णानपि तथा शास्त्रदर्शितात्मगुणैश्च ते ॥२६२॥

यह दूसरा "दृष्टविरोध" इस भाष्य पङ्क्ति का समर्थन करने के लिये भट्टजी ने जो कुछ कहा था वह बिलकुल असङ्गत है। पहले उन्होंने यह शंका की थी कि ब्राह्मणत्वादिवर्ण शास्त्रों से ही विदित होते हैं न कि प्रयक्ष से। भाष्यकार तो उनको प्रत्यक्ष समझते हैं यह कैसे होगा? इस शंका का भट्टजी ने स्वयं उत्तर दिया कि वृक्षत्वादि की तरह वर्ण भी प्रत्यक्ष ही हैं। जैसे वृक्ष को न जानने वाला "यह वृक्ष है" ऐसा कह देने पर उसे प्रत्यक्ष कर लेता है वैसे ही मनुष्य भी यह ब्राह्मण है कहने पर उसमें ब्राह्मणत्व का भी प्रत्यक्ष कर लेता है फिर उन्होंने उस पर शंका उठाया कि एक बार वृक्ष को समझाने पर मनुष्य उस जाति के सभी वृक्षों को समझ लेता है ब्राह्मणत्वादि को तो एक व्यक्ति में समझाने पर भी दूसरे व्यक्ति में कहे विना समझ नहीं सकता, इसका भी उन्होंने अपनी तरफ से उत्तर दिया कि उत्पादकजाति को जो जानता है उत्पन्न पुत्र में वही उसी जाति का प्रत्यक्ष कर लेता है। इसको खण्डदेव ने भी बहुत विस्तारित किया था। उन सबमें शंका ही प्रबल और सुगम है। उत्तर तो अति दुर्बल और दुर्ज्ञेय भी है। उस पर हम पूछते हैं कि भट्टजी के छे प्रमाणों में वह स्मरण कौन सा प्रमाण है? अप्रमाणभूत स्मरण से प्रमेय का ज्ञान कैसा होगा? यहाँ ऐसा कहना भी उचित नहीं होगा कि वर्णप्रत्यक्ष में आँख ही कारण है किन्तु उत्पादक जातिस्मरण उसका अनुग्राहक है। क्यों? चाक्षुष प्रत्यक्ष में आलोकोद्भूत रूपादि ही आँखों के अनुग्राहक होते है न कि स्मरण। केवल वर्णप्रत्यक्ष में ही उसको कारण मानने पर वह जाति लोक प्रसिद्ध नहीं होगी। घटादि प्रत्यक्ष वस्तु में विवाद नहीं, कोई भी वस्तु किसी को प्रत्यक्ष होता है तो वह सबके लिये प्रत्यक्ष ही है। भट्ट को यदि वर्ण प्रत्यक्ष होता है तो वह सबके लिये प्रत्यक्ष ही होगा। एक समय कुमारिल

भी अपने को जैन बताकर, जैनसिद्धान्त को, खण्डन करने के वास्ते, पढ़ा था। यदि ब्राह्मणत्व प्रत्यक्ष होता है तो इनको भी वे लोग ब्राह्मण ही समझ लेते न कि जैन। श्री शंकराचार्यजी ने भी कहा था कि अप्रक्षवस्तु में ही विवाद होता है न कि प्रत्यक्ष में। अतः आत्मा के बारे में बौद्धों से हमारा विवाद है। वैसी ही वर्णों के बारे में भी बौद्धों से विवाद है। अतः ये भी प्रत्यक्ष नहीं किन्तु अनुमेय हैं। जानश्रुति को रैक्वने चैत्ररथलिंग से और कर्ण को परशुराम ने कष्ट सहिष्णुता से क्षत्रिय समझे थे और जाबालि को सत्यवाक्य से गौतम ने ब्राह्मण समझा था न कि प्रत्यक्ष से न तो उत्पादक जाति स्मरण से। जब उत्पादक सम्बन्ध माता को ही प्रत्यक्ष और दूसरों को अनुमेय है तब पुत्र गत वर्ण भी माता को ही प्रत्यक्ष होगा। दूसरों के लिये वह अनुमेय ही है। अतः सबको वर्णजाति प्रत्यक्ष ही है कहना ठीक नहीं। जिस स्त्री का दो तीन पुरुषों से सम्बन्ध रहता है उसको भी अपने पुत्र की जाति मालूम नहीं होगी। भट्ट ने कहा था कि वह सम्बन्ध अप्रत्यक्ष होने पर भी चक्षुरादि की तरह प्रत्यक्ष हेतु हो सकता है। यह भी ठीक नहीं। रूपादिप्रत्यक्ष में चक्षुरादि इन्द्रियाँ स्वरूपतः कारण होते हैं न कि ज्ञात होकर। उत्पादकसम्बन्ध तो ज्ञात होकर ही वर्णप्रत्यक्ष में कारण होता है। अत यहाँ दृष्टान्त वैषम्य है। सर्वत्र प्रत्यक्ष प्रमाण से पूर्वपक्ष और अनुमानादि से सिद्धान्त होते हैं न कि उसके विपरीत। भट्टमत में वह वर्णों में विपरीत है। यह दूसरा दृष्ट विरोध, यह भाष्यवाक्य भी भट्ट के मत में मातृदृष्ट का ही विरोध बताता है ऐसा कहना होगा। वेद में तो वर्णसंशय यजमानगत दोखता है।

भाष्योक्तमिति = शाबरभाष्ये "शास्त्रदृष्टविरोधाच्च" इत्यत्र दृष्टविरोधस्योदाहरणद्वयं दर्शितम्। तत्र वेदोक्तब्राह्मण्यसन्देहो द्वितीयम्। तत्समर्थनार्थं कुमारिलेनेत्थमभिहितम् "कथं पुनरयं दृष्टविरोधो यदा समानाकारेषु पिण्डेषु ब्राह्मणत्वादिविभागः शास्त्रेणैव निश्चीयते? नायं शास्त्रविषयो लोकप्रसिद्धत्वाद्वृक्षत्वादिवत्। कथं पुनरिदंलोकस्य प्रसिद्धम्? प्रत्यक्षेणेति ब्रूमः। कस्मात्पुनः मातापितृसम्बन्धानभिज्ञाश्चक्षुस्सन्निकृष्टेषु मनुष्येष्वनाख्यातं न प्रतिपद्यन्ते? शक्त्यभावात्। ( ब्राह्मणादिपदशक्तिज्ञानाभावात् ) यथा वृक्षत्वं प्रागभिधानव्युत्पत्तेः। नैतत्तुल्यम् ( अतुल्यस्यात्राप्रदर्शनमेव वरम् ) वृक्षत्वं प्रागभिधायकव्यापाराज्जात्यन्तर-व्यवच्छिन्नं स्वव्यक्तिष्वनुगतं शाखादिमद्रूपेण दृश्यते न तु ब्राह्मण्यम्। अपिच व्युत्पन्नशब्दोऽपि निमित्तान्तरादृते नैव प्रतिपद्यते। नैष दोषः। क्वचिद्धि काचिज्जातिग्रहणे इतिकर्तव्यता भवतीति वर्णितमेव। तेन यथैवालोकेन्द्रियानेकपिण्डानुस्यूतिशब्दस्मरणव्यक्ति-महत्वसन्निकर्षाकारविशेषादयोऽन्यजातिग्रहणे कारणं ( इदमप्रयोजकम्। उद्भूतरूपवदालोकेन्द्रियसन्निकर्षस्यैव तत्कारणत्वात् ) तथैवात्रोत्पादक-



जातिस्मरणम्। ( प्रथमतइदमेव वक्तव्यमासीत्, वृक्षत्वादिवदित्युक्त्वाऽग्रे नैतत्तुल्यमिति किमर्थम् ) अयंचोत्पाद्योत्पादकसम्बन्धो मातुरेवप्रत्यक्षोऽन्येषां त्वनुमानाप्तोपदेशाद्यवगतः कारणं भवति। न चावश्यं प्रत्यक्षावगतमेव प्रत्यक्षनिमित्तं भवति। चक्षुरादेरनवगतस्यापि निमित्तत्वदर्शनादि"ति।

यदुक्तं कुत्रचित्स्त्रीणां व्यभिचारोऽस्तु तावता। सर्वासामेव सोऽस्तीति न वक्तुं युक्तमित्यपि २६३
सत्यमेतत्किन्तु कुत्र कासां सोऽस्तीति कोऽपि वा। ज्ञातुं न शक्नुयात्तस्मान्न व्यवस्था तदाश्रिता ६४
यथा सर्वे नैव चोरा इत्येतत्सत्यमेव हि। किन्तु कश्चौर्यकृत्को वा नेत्येतज्ज्ञायते न हि ॥२६५॥
नातस्तदनुसारेण व्यवहारो विधीयते। किन्तु व्यक्त्यनुसारेण सम्यक् परिचयेन च ॥२६६॥
यथा सर्वजना मिथ्याभाषिणो भुवि नेति यत्। सत्यमेवास्ति तत्किन्तु तद्भाषीको न वेत्यपि।२६७॥
ज्ञातुं न शक्यते तस्मात्तदाश्रित्यापि मानवाः। व्यवहारं न कुर्वन्ति किन्त्वालोच्यान्यथैव ते २६८॥
एवं सर्वास्त्रियः क्वापि स्वैरिण्यो न भवन्ति यत्। तत्सत्यं किन्तु का तादृक्का वा नेत्यप्यनिश्चितम्
तस्मात्तदनुसृत्यापि व्यवस्था नैव कुत्र चित्। बुद्धिमद्भिर्विधातव्या परन्त्वन्यप्रकारतः ॥२७०॥
जन्मसिद्ध ब्राह्मणोऽहमिति वक्त्रोदितं भवेत्। न मे मात्रादयो जातु व्यभिचारिण्य इत्यपि ॥२७१॥
व्यभिचारे यतस्तासां जन्मब्राह्मण्यनिश्चयः। सुदुष्करस्ततश्चोक्तस्तदभावो भवेदपि ॥२७२॥
कथमेतत्त्वया ज्ञातमित्यन्यो यदि पृच्छति। मूकीभावस्तदा जन्मब्राह्मणत्वोपसंहृतिः ॥२७३॥
अस्मन्मते न मात्रादिव्यभिचारप्रसञ्जनम्। ब्राह्मण्यस्य स्वपित्रादिसम्बन्धाहेतुकत्वतः ॥२७४॥
जन्मसिद्धा चतुर्वर्णव्यवस्था भट्टसम्मता। स्त्रीपातिव्रत्यमाश्रित्य वाचा लोके प्रवर्तते ॥२७५॥
एषाऽपि दर्शितन्यायादङ्गीकर्तुं न शक्यते। अतः श्रौतार्थवादैश्च कार्यो वर्णविनिश्चियः ॥२७६॥
सन्दिग्धे वाक्यशेषेण निश्चयः क्रियतामिति। तन्मीमांसकसिद्धान्तः कथमत्र विसृज्यते ॥२७७॥
यथाऽहं नैव चोरोऽस्मि नात्मीया इति जानतः। तद्विश्वासयितुं नान्यान् युक्तं तत्वेन नीतितः२७८
यथाऽऽत्मसत्यभाषित्वमात्मीयानां च तद्विदः। तद्विश्वासयितुं चान्यान् नैव युक्तं भवेत्तथा २७९॥
स्वजन्महेतुनारीणां पातिव्रत्यं विजानतः। नरस्यापि न युक्तं तदन्यान् ख्यापयितुं यतः २८०॥
ततस्तदाश्रितं चापि जन्मब्राह्मण्यमात्मनः। नाख्यातुमिह मर्त्यस्य युक्तं श्रेष्ठत्वहेतुकम् ॥२८१॥
जन्मना वर्णसिद्धिं ये वदन्त्यात्महितैषिण। तैस्तत्प्रख्यापितप्रायं स्वीयमात्रादियोषिताम् ॥२८२॥
यथा स्वसत्यवादित्वमचोरत्वमपीतरैः। न विश्वास्यं स्वमात्रादिपातिव्रत्यादिकं तथा ॥२८३॥
तस्माद्धेतोस्तत्प्रयुक्तं स्वीयब्राह्मण्यमार्यकैः। न वक्तव्यमिहान्येभ्यो ज्ञेयं त्वात्मगुणैः स्वयम् २८४॥
यच्चोक्तं न नियोगेन स्त्रीणां वर्णान्तरैस्सह। प्रमादस्तु सजातीयैर्न वर्णान्तरकारकः ॥२८५॥
तदयुक्तं विवाहादिविधिर्व्यर्थो यतो भवेत्। सवर्णेभ्यः सवर्णासु विन्नासूत्पादितः सुतः ॥२८६॥
सवर्णश्चान्यथा त्वन्यश्चातुर्वर्ण्यादितीर्यते। श्रुतौ चाब्राह्मणा वा स्मो ब्राह्मणा वेति संशयः२८७॥
जन्मतो वर्णवादश्चेत्प्रमादो येन केन वा। सोऽस्त्वब्राह्मण्यहेतुः स्यादित्यङ्गीकार्यमेव हि ॥२८८॥
प्रमादोऽपि च किं वर्णैस्सहेति ज्ञायते नहि। नहि स्त्रियः प्रमादं स्वं बहिर्ब्रूयुर्मनागपि ॥२८९॥
तत्प्रमादनिरोधार्थं यत्स्त्रीरक्षणचेष्टितम्। तेनापि स्मार्तयत्नेन चौर्यवन्न स वार्यते ॥२९०॥

न कार्यं चौर्यमित्येषा राजाज्ञाऽस्ति बलीयसी । तन्निरोद्धुं नियुक्ताश्च शक्ता राजभटादयः २९१॥
जनाश्चापि स्वयं चैतद्रोद्धुं जागरिता ह्यपि । तथापि सर्वदा चौर्यं चलत्येव त्वहस्स्वपि ॥२९२॥
एवं विज्ञैर्महायत्ना विधीयन्तामहर्निशम् । तथापि सर्वथा स्त्रीणां न स्याद्वर्णार्थरक्षणम् ॥२९३॥
मनुनोक्तंस्त्रियो भर्त्रा गुप्ताश्चापि विकुर्वते । तस्मान्मीमांसका जन्मजातिं शक्ता न रक्षितुम् २९४
वंशपरम्परायाश्च लेख्यानि स्मारकान्यपि । गमयेयुर्न सावर्ण्यंपुंवीर्यादिपरम्पराम् ॥२९५॥
जारजातसुतं चापि क्वचिद्वंशक्रमागतम् । प्रख्यापयेयुरेतानि दुर्ज्ञेया लेखकैर्जनैः ॥२९६॥

कुमारिल ने कहा था कि कहीं-कहीं स्त्रियों का व्यभिचार रहने पर भी सर्वत्र वह है कहना ठीक नहीं। यह बात सत्य है तो भी वह कहाँ है और कहाँ नहीं है यह समझ में नहीं आता। अतः तदाश्रितवर्णव्यवस्था भी ठीक नहीं। जैसे सब लोग चोर नहीं हैं यह बात सत्य होने पर भी कौन चोर और कौन नहीं है इसको जान नहीं सकते। अतः उसके अनुसार (सबको चोर या किसी को भी न चोर) समझ कर व्यवहार नहीं किया जा सकता किन्तु व्यक्तिगत परिचय के अनुसार ही वह किया जाता है। एवं सब लोग मिथ्याभाषी नहीं हैं यह भी ठीक है किन्तु कौन ऐसा है कौन नहीं यह भी दुर्ज्ञेय है। अतः उसके अनुसार भी व्यवहार नहीं किया जाता किन्तु दूसरे प्रकार से, वैसे ही सब स्त्रियाँ स्वेच्छाचारिणी नहीं हैं यह बात सत्य होने पर भी कौन स्त्री ऐसी है और कौन नहीं यह भी दुर्ज्ञेय है। अतः उसके अनुसार भी वर्णव्यवस्था नहीं हो सकती। जन्मसिद्ध वर्णव्यवस्था स्त्रियों के पातिव्रत्य के ऊपर निर्भर रहती है। अतः यह भी उचित नहीं किन्तु वेदोक्तार्थवाद वाक्यों से ही वर्णों का निर्णय करना उचित है और सन्दिग्ध विषयों का ऐसा ही निर्णय करने के लिए मीमांसा शास्त्र में लिखित है। जैसे हम और हमारे लोग, चोर नहीं और मिथ्याभाषी भी नहीं ऐसा पूरा जानने वाला भी दूसरों को इस बात का विश्वास दिलवा नहीं सकता, अर्थात् हम चोर तथा मिथ्याभाषी भी नहीं, अतः आपका पैसा वगैरा हमारे पास रक्खा, ऐसा कह नहीं सकता, वैसे ही अपने शरीर के कारण माता और पितामही आदि स्त्रियों का पातिव्रत्य जानने वाला भी उसको तथा उस पर आश्रित जन्म ब्राह्मणत्व को, दूसरों से कहना उचित नहीं। जन्म से ब्राह्मण कहना, अपनी माता से लेकर पिछले सब स्त्रियों की पतिव्रतता को बताना ही है। जैसे अपना सत्यवादित्व और अचोरत्व भी दूसरों के द्वारा विश्वसनीय नहीं है वैसे ही अपना माता आदियों का पातिव्रत्य भी विश्वसनीय नहीं है। अतः तन्निमित्तक स्वकीय ब्राह्मणत्व भी दूसरों से बताने का नहीं। भट्टजी ने आगे कहा है कि स्त्रियों का प्रमाद दूसरे वर्णों से ही होता है यह नियम नहीं और अपने वर्ण वालों से होगा तो



उससे वर्ण संकर नहीं होगा। यह भी ठीक नहीं, क्यों ऐसा मानने पर विवाह-विधि व्यर्थ हो जायगा। सवर्णपुरुष से विवाहित सवर्ण स्त्री में उत्पन्न व्यक्ति ही सवर्ण है नहीं तो चार वर्णों से भिन्न वर्ण बताया गया है। श्रुति में तो ब्राह्मणत्वादि का सन्देह दिखाया गया है। स्त्रियों का प्रमाद किसी से भी हो वह जन्मवाद में अब्राह्मणत्व का हेतु मानना ही होगा। वह प्रमाद भी किस वर्ण से होता है यह भी कैसे मालूम होगा। स्त्रियाँ अपने प्रमाद को दूसरों से बतायेंगी नहीं। उसको रोकने के लिये स्मृतियों में जो उपाय बताये गये हैं (१४७) उनसे भी वह चोरी की तरह वारित नहीं होगा। चोरी नहीं करना चाहिये ऐसी राजाज्ञा है, उसको रोकने के लिये पुलिस भी नियुक्त किये गये हैं और जनता भी उस विषय में सावधान है तो भी दिन में भी चोरियाँ होती रहती हैं, वैसे ही स्त्रियों की रक्षा के लिये कितने ही उपाय किये जायें वह रक्षा पूरी तरह से नहीं हो सकती। मनुस्मृति में भी यह विषय कहा गया है। भट्ट ने कहा है कि ब्राह्मण और क्षत्रिय लोग अपनी-अपनी वंशपरम्परा का स्मरण के लिये, आदि से वंशावलि का लेख लिखते हैं, किन्तु इनसे भी वह परम्परा ठीक विदित नहीं होगी। व्यभिचार से उत्पन्न को भी वे लेख वंशपरम्परागत ही समझायेंगे। क्यों ? लिखने वालों को यह मालूम नहीं कि कौन कैसा पैदा हुआ।

यदुक्तमिति, तदुक्तं "न च स्त्रीणां क्वचिद्व्यभिचारदर्शनात्सर्वत्रैव कल्पना युक्ता। लोकविरुद्धानुमानासंभवात्। विशिष्टेन हि यत्नेन महाकुलीनाः परिरक्षन्त्यात्मानमनेनैव हेतुना। राजभिर्ब्राह्मणैश्च स्वपितृपितामहादिपारम्पर्याविस्मरणार्थं समूहलेख्यानि प्रवर्तितानि। न च भर्तृव्यतिरेककृतेन वर्णसङ्करोऽपराधेन जायते। दृश्यते ह्यपराधिनीनामपि स्वभर्तृनिमित्तः प्रसवः। तदपराधनिमित्तस्तु तासामशुभफलोपभोगो भवेन्न त्वपत्यानां वर्णसङ्करः। न च नियोगतो वर्णान्तरैरेव सहप्रमादः। सवर्णेनोत्पादितस्य नैव वर्णान्तरत्वापत्तिरिति।

शास्त्रदृष्टविरोधे तु सर्वदोषनिवारणम्। शास्त्रेषु दृश्यमानाश्च वर्णा गुणनिबन्धनाः ॥२९७॥
दर्शितः पञ्चमाध्याये सोऽर्थः श्रुतिप्रमाणतः। तस्माद्भट्टेन दुस्साध्यं भाष्यपङ्क्ति समर्थनम् २९८
अतः प्राभाकरैर्भाष्यपङ्क्तिर्नैव समर्थ्यते। वर्णानामनुमेयत्वं न प्रत्यक्षं न जातिता ॥२९९॥
अत्रैव तैर्यदप्युक्तं वर्णप्रत्यक्षवादिनाम्। मनोभ्रान्तिरितिस्पष्टं तदत्यन्तं प्रशस्यते ॥३००॥
तन्मते वर्णसन्देहो नैवदृष्टस्य बाधकः। शास्त्रदृष्टस्यैव किन्तु तदस्माभिरपीष्यते ॥३०१॥
तैरुक्तं यच्चसन्तानविशेषोत्पद्यमानता। ब्रह्मक्षत्रादिशब्दानां प्रवृत्तौ स्यादुपाधिका ॥३०२॥
सा निर्देष्टुमशक्याऽपि विज्ञेया लोकतस्त्विति। प्रागुक्तमुत्तरं चास्य ततो ज्ञेयं मनीषिभिः॥३०३॥
सर्वत्रासङ्गतिं प्रायो भाष्ये दर्शयता त्विह। वाक्ये वार्तिककारेण किमर्थं सा न दर्शिता ॥३०४॥
क्वचित्सूत्रार्थमेवान्यं क्वचिद्वरणकान्तरम्। कुत्रचिद्भाष्यकारस्य भ्रान्तिं स दर्शयत्यपि ॥३०५॥

स्वर्गो लोकान्तरे नास्तीत्युक्तं भाष्ये त्वसौ पुनः । स तत्रास्तीति व्याचष्टे युक्तमेवास्ति तस्य तत्॥
पूर्वपक्षः क्वचिद्भाष्ये सिद्धान्तःस च वार्तिके । भाष्यकारीयसिद्धान्तः पूर्वपक्षोऽस्ति वार्तिके ॥
योगमोकौ श्रुतावग्नि-चयने वेदमन्त्रतः । आदावन्ते प्रधानस्य भाष्ये चोक्तं हि ताविति॥३०८॥
पूर्वपक्षस्त्वत्र साङ्गप्रधानाद्यन्तगाविति । वार्तिकेऽयं च सिद्धान्तः पूर्वपक्षस्त्वितोऽपरः ॥३०९॥
तत्सूत्रानुगुणं भाष्यं दृश्यते न तु वार्तिकम् । तथापि तच्च भट्टस्य मनीषायै न रोचते॥३१०॥
यजमाननखश्मश्रुकेशदन्तादिशोधनम् । अध्वर्युणा वेदमन्त्रैराप उन्दन्तु वेदसे ॥३११॥
इत्यादिभिः प्रकर्तव्यमिति भाष्ये विनिश्चिते । भट्टाचार्यस्तु चाध्वर्युर्यजमानदतो नहि ॥३१२॥
प्रक्षालयेद्गृहीत्वा तान्श्मश्रुकेशान् वपेन्न हि । तत्कर्म नापितः कुर्यादित्युक्तमपहासतः ॥३१३॥
अत्र त्वसङ्गतं भाष्यं वर्णाध्यक्षत्वसूचकम् । समर्थयन् ततोऽत्यन्तं ब्रवीति बह्वसङ्गतम् ३१४॥
एतदेवानुमन्यन्ते सर्वशास्त्रविशारदाः । वाचस्पतिखण्डदेव जयन्तभट्टसायणाः ॥३१५॥
द्वैताद्वैतमहासूक्ष्मविषयेषु स्वतन्त्रया । बुद्धया विचार्यं चात्रैते परबुद्धयनुगामिनः ॥३१६॥
मानमेयपरीक्षासु दृष्टया चात्यन्तसूक्ष्मया । वस्त्ववलोकयन्तोऽत्र स्थूले गर्ते पतन्त्यमी ॥३१७॥
ब्राह्मणत्वादिका जातिर्योनिव्यङ्ग्या भवेदिति । यद्वाचस्पतिमिश्रोक्तं तत्राप्यस्त्युक्तदूषणम् ३१८
ब्राह्मण्यव्यञ्जिका योनिः केन व्यङ्ग्या भविष्यति । इत्यस्य नोत्तरं किञ्चित्समीचीनं समीरितम्
नन्वत्र व्यञ्जके योनौ ब्राह्मण्यमन्ययोनितः । तत्रापि च ब्राह्मणत्वं ज्ञेयं योन्यन्तरादिह ॥३२०॥
नानवस्था दोषयुक्ता चात्रबीजाङ्कुरादिवत् । अनादित्वात्प्रपञ्चस्य ज्ञातव्यं तच्च लोकतः ३२१
इत्थं ये मन्वते तेषामिदमुत्तरमुच्यते । बीजाङ्कुरादिकं तत्तद्व्यवहारप्रयोजकम् ॥३२२॥
प्रत्यक्षेणैव ज्ञातं सन्न बीजान्तरजन्मना । ब्राह्मणत्वादिकं त्वन्यब्राह्मणद्वन्द्वजन्मना ॥३२३॥
ज्ञातंसद्व्यवहारे स्याद्धेतुरित्यत्र दर्शिता । अनवस्था महान्दोषो योनिव्यङ्ग्यमतो नहि ३२४
व्यङ्ग्यव्यञ्जकयो रेकधर्मत्वं नोपपद्यते । तेन व्यञ्जककोटौ च ब्राह्माण्यं सम्प्रवेश्यते ३२५॥
व्यङ्ग्यमपि तदेवेति तयोरेकत्वमागतम् । तदयुक्तमतस्तच्च व्यञ्जके न प्रवेश्यताम् ॥३२६॥
गोत्वस्य व्यञ्जकं सास्ना न तु गोजन्यता मता । ब्राह्मण्यव्यञ्जकं त्वन्यत्न तु ब्राह्मणजन्यता२२७
ब्राह्मण्यव्यञ्जकाः सर्वेवेदशास्त्रप्रदर्शिताः । स्वाभाविकाः स्थिराः स्वात्मगुणा ज्ञेया हि मानवैः॥

"न चैतद्विद्म इत्यादि श्रौतब्राह्मण्य सन्देह को शास्त्रदृष्टविरोध का उदाहरण मानने पर पूर्वोक्त सब दोष वारित हो जायँगे। वर्ण, गुण निबन्धन हैं यह बात पञ्चमाध्याय में कही गयी है। अतः भाट्ट लोग भाष्यपंक्ति का समर्थन नहीं कर सकेंगे। प्राभाकर भी इस पंक्ति का ( अयमपरो दृष्टविरोधः ) समर्थन नहीं करते, किन्तु वर्णो को प्रत्यक्ष मानने वाले भाट्टों को वे भ्रान्त कहते हैं। वर्ण सन्देह को वे दृष्टविरोध नहीं मानते परन्तु ब्राह्मणादिशब्द प्रयोग में सन्तति विशेष प्रभवत्व को उपाधि मानते हैं। यह भी, जहाँ तक स्त्रीव्यभिचार न मालूम हो तो, लोक से ही विदित हो जायगा। इसका भी उत्तर हम पहले ही दे चुके हैं। जहाँ-जहाँ भाष्य असङ्गत मालूम हो वहाँ वार्तिकारने उसे



खण्डित किया और कहीं सूत्रार्थ और कहीं अधिकरण विषय को बदल दिया और कहीं भाष्यकार की भ्रान्ति भी बता दिया। भाष्यकार ने कहा कि स्वर्ग लोकान्तर में नहीं किन्तु यहीं हैं. वार्तिकार तो उसे लोकान्तर में भी बताया था। अग्निचयन के प्रकरण में योगविमोकाधिकरण में भाष्यकार के जो पूर्वपक्ष और सिद्धान्त हैं, वे वार्तिककार के सिद्धान्त और पूर्वपक्ष है। इतने स्थलों मे भाष्यकार के दोषों का प्रकाशन करने वाले वार्तिककार, यहाँ "अयमपरो दृष्टविरोध" इस वाक्य का समर्थन करते हुए भाष्यकार से भी बहुत असङ्गत बातें कहने लगे और इन्हीं को वाचस्पतिमिश्र खण्डदेवादि महापण्डित भी समर्थन करने लगे। मिश्र जी भी कहते हैं कि ब्राह्मणत्वादि जाति, योनिव्यङ्ग्य है किन्तु वह योनि जिससे व्यङ्ग्य है इस पर वे दृष्टि न रखे। कुछ लोग कहते हैं कि वह योनि भी तत्कारण ब्राह्मण योनि से व्यङ्ग्य है, जैसे बीजाङ्कुरादि में अनवस्था दोष नहीं है वैसा इस वर्णपरम्परा में भी वह नहीं होगी। उनका उत्तर यह है कि बीजाङ्कुरादि, प्रत्यक्षप्रमाण से ज्ञात होकर व्यवहार में हेतु होता है न कि अन्यबीजाङ्कुरादि जन्यत्वज्ञान से। ब्राह्मणत्वादि तो जातिवादी के मत में ब्राह्मणजन्यत्व ज्ञान से ज्ञात होकर व्यवहार में कारण होता है न कि प्रत्यक्ष से। अतः यहाँ उक्त अनवस्था बड़ा दोष हो है और योनि, दुर्ज्ञेयता का भी हेतु है। एक ही धर्म (ब्राह्मणत्व) व्यञ्जक और व्यङ्ग्य नहीं होता है किन्तु भिन्न-भिन्न। जातिवाद के मत में व्यञ्जककोटि में भी ब्राह्मणत्व का प्रवेश है। गोत्वादिजाति का व्यञ्जक सास्नादि होता है न कि गवादिजन्यता! ऐसे ही ब्राह्मणत्वव्यञ्जक वेदविद्यासहितशमादिगुण है न कि ब्राह्मणादिजन्यत्वम्।

अतः प्राभाकरैरिति, तदुक्तं प्रकरणपञ्चिकायाम् "अनयैव च दिशा ब्राह्मणत्वादि-जातिरपि निवारिता। नहि नानास्त्रीपुरुषव्यक्तिषु पुरुषत्वादर्थान्तरभूतमेकमाकारमात्म-सात्कुर्वती मतिराविर्भवति। नहि क्षत्रियादिभ्यो व्यावर्तमानं सकलब्राह्मणेष्वनुवर्तमान-मेकमाकारमतिचिरमनुसन्दधतोऽपि बुध्यन्ते। यदप्याहुः ( भट्टाः ) यद्यप्यापात-सञ्जा-तया धिया ब्राह्मण्यं नावसीयते तथापि ब्राह्मणमातापितृसम्बन्धानुसन्धानप्रभवायां बुद्धौ तच्चकास्तीति। तदपि च स्वमानसविसंवादि" (भ्रम इत्यर्थः) इति। "शिष्टाकोपेऽविरुद्ध-मितिचेत्" "न शास्त्रप्रमाणत्वात्" अपिवा कारणाग्रहणे प्रयुक्तानि प्रतीयेरन्नित्यादि सूत्राणामर्थो भाष्यवार्तिकयोर्भिन्नो दृश्यते। अत्रैव तयोरधिकरणसिद्धान्तभेदोऽप्यस्ति। "दूरभूयस्त्वादिति सूत्रे भाष्यकारस्य भ्रान्तिर्दर्शिता वार्तिके। षष्ठाध्यायप्रथमाधिकरणे स्वर्गो-लोकान्तरे नास्तीति भाष्ये तदस्तीति वार्तिके। एकादशतृतीयपादे ( १७-२० सूत्रेषु ) भाष्ये यौ पूर्वपक्षसिद्धान्तौ तौ वार्तिके विपरीतौ। एवं बहुस्थलेषु भाष्यदोषान् प्रदर्शयता कुमारिलेन "अयमपरो दृष्टविरोध" इत्यसङ्गतं भाष्यवाक्यं न दूषितं किन्तु समर्थयितुमेव

बहुधा यतितम् । ब्राह्मणत्वादिजातिर्योनिव्यङ्ग्येति न्यायजातिसूत्रटीकायामुक्तम् । अनादिपरम्परयेयं जातिर्ज्ञातव्येति सर्वेषांमतम् । सर्वस्यास्योत्तरं मूले एव स्पष्टमुक्तम् ।

यत्तूक्तं खण्डदेवेन याज्ञवल्क्यस्मृतौ पदम् । विन्नास्विति परित्याज्यं गौरवादित्यतो यथा ३२९
गवि गोजातमात्रस्य गोत्ववद्ब्राह्मणात्तथा । ब्राह्मण्यां जातमात्रस्य ब्राह्मण्यं विन्नतां विना ३३०
कुण्डगोलकयोस्तस्माद्ब्राह्मणत्वमिहेष्यते । अन्यथा हि तयोः श्राद्धे निषेधोऽसङ्गतस्त्विति ३३१
मिताक्षरायां टीकायामुक्तमस्योत्तरं वरम् । सवर्णजे सवर्णत्वं समानं पशुपक्षिणोः ॥३३२॥
ब्राह्मणत्वादिकं स्मार्तं कुण्डगोलकयोरतः । न पितृवर्णता तौ हि शूद्रवर्णसमाविति ॥३३३॥
वस्तुतस्तु न तत्स्मार्तंकिन्तु वैदिकमेव हि । जन्मसिद्धं भवेत्स्मार्तमिति तेनोदितं तथा ३३४॥
श्राद्धे निषेधमात्रेण यदि ब्राह्मण्यमेतयोः । तदा शास्त्रेषु जन्तूनां निषेधान्मर्त्यता भवेत् ३३५॥
यतः शास्त्रेषु मर्त्यानामधिकारे विनिश्चिते । प्राप्तो जन्तुनिषेधोऽपि पुनस्तेषां निषिध्यते ३३६॥
तत्सम्मतं सवर्णत्वं नेच्छामः किन्तु विन्नताम् । सर्वमानवशास्त्रीयमर्यादा खलु विन्नता ३३७॥
लक्षणं किं ब्राह्मणस्य इति पृष्टो वदेद्यदि । तद्धि ब्राह्मणजन्यत्वमित्यत्रात्माश्रयो भवेत् ३३८॥
लक्षणे ब्राह्मणस्यात्र ब्राह्मणत्वप्रवेशतः । आत्माश्रयो भवेद्दोषो नैव ब्राह्मण्यधीस्ततः ॥३३९॥
कीदृशो ब्राह्मणश्चेति पृष्टो यदि वदेदिदम् । ब्राह्मणो ब्राह्मणाज्जातः किं तेन बोधितं भवेत् ४०
न हि गौः कीदृशीत्येवं पृष्टःकोऽपीह बुद्धिमान् । गोजाता गौरिति ब्रूयादुपेक्ष्यः स्यात्तथाब्रुवन् ४१
तस्माद्ब्राह्मणजन्यत्वं त्यक्त्वा गोजन्यतामिव । सास्नादिवच्छमादेस्तल्लक्षणत्वं वदेद्बुधः ४२
शब्दसाधुत्ववद्वर्णाः प्रत्यक्षास्त्विति भट्टगीः । जयन्तभट्टस्तामेव मञ्जर्यामन्ववोचत ३४३॥
तदयुक्तं साध्वसाधुशब्दप्रत्यक्षमेकधा । विदुषां पामराणां च स्वरव्यञ्जनगोचरम् ॥३४४॥
किन्तु व्याकरणज्ञस्तत्साधुत्वासाधुते पुनः । वक्तुमर्हति नान्यश्च तस्मात्तच्छाब्दमिष्यते ३४५
गकारोत्तरमौकारविसर्गौ श्रोत्रगोचरौ । तथाविधस्य साधुत्वं शब्दशास्त्रादिबोधितम् ॥३४६॥
सवर्णपितृजन्यस्य सावर्ण्यं भट्टसम्मतम् । तज्जन्यत्वं च दुर्ज्ञेयमसर्वज्ञेन सर्वथा ॥३४७॥
एतेन सति सारूप्ये स्त्रीपुंस्कोकिलयोरपि । किञ्चिन्निमित्तमाश्रित्य यथा तद्भेदधीर्भवेत् ३४८॥
तथैव स्मृतिशास्त्रानुगृहीताध्यक्षगोचराः । वर्णास्त्वपीति तेनोक्तं परास्तं भवति ध्रुवम् ३४९॥
भट्टप्रदर्शितस्मृत्या ब्राह्मणो जन्मनेत्यपि । कथ्यतां नाम तज्जन्म भट्टोऽस्तीति न वक्ति सा ३५०
तदुक्तजन्मदुर्बोधात्सन्देहो दर्शितः श्रुतौ । समर्थितश्च तेनात्र कथं सुज्ञेयतोच्यते ॥३५१॥
दुर्ज्ञेयत्वं च वर्णस्य क्वचिदुक्त्वाऽपरत्र हि । सुज्ञेयतोच्यते तेन तत्परस्परबाधितम् ॥३५२॥
नन्वेनं व्याहतं वाक्यं प्रमाणैरपि वर्जितम् । प्रख्यातपण्डितैरेतैः किमर्थं प्रतिपादितम् ? ॥२५३॥
शृण्वितोऽप्युत्तमं चात्र नोत्तरं विद्यते यतः । अतश्च नैषधे काव्येऽप्युक्तमन्यदसङ्गतम् ३५४॥
बौद्धोक्ताक्षेपमाशङ्क्य तत्रोक्तमिदमुत्तरम् । ब्राह्मणीसङ्गमे चान्यो न विन्देत जयं त्वतः ३५५॥
अशेषब्रह्मवंशस्य विशुद्धिं विद्धि सौगत । एवं ब्राह्मणहन्ताऽपि परीक्षास्वनलेष्विति ॥३५६॥
तद्व्यासेर्व्यभिचारः स्यादर्जुने द्रोणहन्तरि । जातिवादे यतो द्रोणो ब्राह्मणत्वेन सम्मतः ३५७॥
गुणवादे क्षत्रियोऽसौ ब्राह्मणे शास्त्रधारके । क्षत्रियत्वं समायातीत्युक्तं भीष्मेण भारते ३५८॥



प्रतिलोमविवाहे च ब्राह्मणीत्वाभिमानिनीम् । अब्राह्मणत्वाभिमानी वहन्नप्युश्नुते जयम् ॥३५९
देवयानी विप्रकन्या ययातिः क्षत्रियर्षभः । तयोरपि विवाहश्च यदुवंशफलप्रदः ॥३६०॥
अद्यत्वे चाधिकास्तादृक्सम्बन्धाः सर्वतो मुखाः । एवं च नैषधोक्तोक्त्या कथं वंशविशुद्धिधीः
व्यभिचारनिमित्तश्च जयाभावः समन्ततः । प्रतिलोमेऽनुलोमे वा व्यभिचारे कृते सति ३६२॥
जलानलपरीक्षाभिर्गौणवर्णविशुद्धिधीः । भवेन्न जन्मसंसिद्ध-वर्णजातिमतिर्भुवि ॥३६३॥
तथाविधपरीक्षाभिः पूर्वकाले विशुद्धिधीः । तदानीमनलः शुद्धान् दहति स्म न मानवान् ३६४॥
इदानीं दोषिणः शुद्धान् सर्वांश्चाग्निर्दहत्यपि । अतोऽनया कथं वंशविशुद्धत्वमतिर्भवेत् ३६५॥
अतो न्यायालयेष्वद्य परीक्षा तादृशी नहि । दोषादोषविवेकार्थं कुत्रापि क्रियते बुधैः ३६६॥

खण्डदेव ने कहा कि सन्तान में सवर्णत्व सिद्धि के लिये विवाह आवश्यक नहीं । अविवाहित स्त्री पुरुष भी यदि सवर्ण हों तो उनका सन्तान सवर्ण ही होगा । जैसे गौ का बच्चा गौ ही होता है वैसे ब्राह्मण का पुत्र ब्राह्मण ही होगा । कुण्ड और गोलक भी ब्राह्मण हो हैं, नहीं तो ब्राह्मणमात्र भोक्तव्य श्राद्ध में उनका निषेध अप्रसक्त हो जायगा । उसका उत्तर याज्ञ० स्मृति के सावर्ण्यविधायक वाक्य की मिताक्षरा टीका में ही इस प्रकार है कि "सवर्णेभ्यः सवर्णासु जायन्ते हि सजातयः" यह नियम पशुपक्ष्यादि साधारण है । ब्राह्मणत्वादि वर्ण स्मार्त हैं । अतः कुण्डगोलकों को पितृवर्ण नहीं रहेगा किन्तु वे शूद्रसमान हैं । वस्तुतः वर्ण स्मार्त नहीं किन्तु वैदिक हैं । श्राद्ध में निषेध मात्र से उनमें यदि ब्राह्मणत्व सिद्ध हो तो मनुष्यमात्राधिकारक शास्त्रों में तिर्यग्जन्तुओं का निषेध रहने से उनमें मनुष्यत्व भी सिद्ध हो जायगा । हम तो सर्वजन सम्मत विवाह को ही आवश्यक मानते हैं न कि परमत सिद्ध सवर्णता को । ब्राह्मण से उत्पन्न को ब्राह्मण कहने में ब्राह्मण लक्षण में आत्माश्रय दोष आ जायगा । ब्राह्मण कैसा होता है ऐसा पूछने वालों के प्रति ब्राह्मणजन्य ही ब्राह्मण होता है कहने पर वे कुछ समझेंगे नहीं जैसे गौ का स्वरूप पूछा जाने पर गौ से उत्पन्न ही गौ है ऐसा कोई नहीं कहेगा किन्तु सास्नादि वाले को गौ कहेगा वैसे ही शमदमादिगुण वाले को ब्राह्मण कहना होगा न कि ब्राह्मणजन्य को । शब्दसाधुत्वासाधुत्व की तरह वर्ण भी प्रत्यक्ष हैं यह भाट्टों का कहना उचित नहीं । गजादिशब्द का श्रावण प्रत्यक्ष पण्डित पामरादि जनों का समान है किन्तु तदीयसाधुत्व या 'असाधुत्व को वैयाकरण ही बता सकता है न कि पामर । अतः वह साधुत्वादिज्ञान व्याकरणज्ञानजन्य होने से शाब्द माना जाता है । गकारोत्तर औकार और विसर्ग श्रावणप्रत्यक्ष गोचर हैं और ऐसे गोशब्द का साधुत्व, शब्दशास्त्र से मालूम हो जाता है किन्तु सवर्णमाता पितृजन्यत्व किसी का भी जानने लायक नहीं । अतस्तत्प्रयुक्त वर्ण

भी जन्मपक्ष में दुर्ज्ञेय हैं। भाट्ट सम्मत स्मृति तो ब्राह्मण को जन्मसिद्ध बताती है न कि इस भाट्ट में वह जन्म है। श्रुति दर्शित वर्ण-सन्देह का समर्थन करने के लिये भट्ट ने जन्म को दुर्ज्ञेय बताया था फिर वहीं दूसरे स्थले में जन्म को सुज्ञेय बताया है तो यह परस्पर विरुद्ध ही है। ये भट्टमीमांसकादि लोग महा-पण्डित हो करके भी ऐसी परस्पर विरुद्ध बातें क्यों कहे हैं इस प्रश्न का उत्तर यह है कि उससे अधिक उचित उत्तर इस जन्मवाद में है ही नहीं। इसलिये बौद्धोक्त आक्षेप का असङ्गत ही उत्तर नैषध में ( १७/८७ ) दिया गया है। बौद्ध ने कहा कि सृष्टयादि से लेकर आजतक के मातृवंश और पितृवंश की परम्परा शुद्ध होगी तो तुम शुद्ध ब्राह्मण होगे, यह तो दुर्ज्ञेय है। इसके उत्तर में कहा गया कि अब्राह्मण ब्राह्मणी से सङ्गम किया हो या ब्राह्मण को मार दिया हो तो, उसका जय नहीं होगा। नैषधकार की इस व्याप्ति का द्रोणहन्ता अर्जुन में देवयानीपति ययाति में व्यभिचार है। जातिवाद में द्रोण और देवयानी ब्राह्मणी समझी जाती है। अस्त्र शस्त्रों का धारण करने पर ब्राह्मण भी क्षत्रिय हो जाता है ऐसा भीष्म ने परशुराम से कहा था। अतः हमारे मत में द्रोणादि अब्राह्मण ही हैं। आजकल प्रतिलोम विवाह भी बहुत चलते ही हैं और उनको जय भी है। व्यभिचार से जयाभाव तो अनुलोम और प्रतिलोम में भी समान है। जलानल परीक्षा से भी गौणवर्ण की शुद्धि मालूम होगी न कि जाति की।

खण्डदेवेनेति, तदुक्तं "वस्तुतस्तु गौरवापत्तेर्न विवाहितपददानम्" गोर्गव्युत्पन्नस्य गोत्ववद्ब्राह्मणाद्ब्राह्मण्यामुत्पन्नस्यैव ब्राह्मणत्वोपपत्तेः। विन्नास्विति वचनं तु ब्राह्मणादि-विहितकर्मानधिकारमात्र प्रतिपादनपरम्। कुण्डगोलकयोस्तु सत्येव ब्राह्मण्येऽवान्तर संज्ञा-करणं कर्मविशेषविधानार्थम्। अत एव श्राद्धे तयोर्निषेधो ब्राह्मणत्वेन प्रसक्तत्वात्सङ्गच्छते" इति। एतदुत्तरंमूले स्पष्टम्। अश्वतरत्वे स्त्रीत्वे पुंस्त्वे चाकृति व्यङ्ग्यत्वस्य क्लृप्तत्वेन सर्वत्रापि जातिमात्रे आकृतिव्यङ्ग्यत्वमेव न तु सजातीयोत्पन्नत्वज्ञानव्यङ्ग्यम्। गोत्वादेर्जन्म-सिद्धत्वाङ्गीकारे गौः पूजनीयेत्यादौ, ब्राह्मणत्वादाविव सन्देह एव प्रतिव्यक्ति भवेत्। यतो लोके परमेश्वरमायया विलक्षणया कदाचिद्गर्दभादपि गवाद्युत्पत्तिः स्यादेव। श्रूयते खलु अजागर्भतोऽजमर्त्यपिण्डयोर्युगपदुत्पत्तिः। १९५८ ईस्वीये अप्रैल १३ दिवसे भगतपुरग्रामेऽजागर्भतस्तयोरुत्पत्तिर्जातेति तन्मास २३ दिवस - वीरअर्जुनपत्रिकायां लिखितम्। एतादृशोदाहरणानि सनातनधर्मालोकषष्ठपुष्पे बहूनि दत्तानि। तथा च प्रकृतेऽपि मया पूजनीया गौःगोर्गर्दभाद्वा जातेति सन्देहः स्यादेव। आकृतिव्यङ्ग्यत्वे नेयमापत्तिः। यथाकथञ्चिदुत्पन्नाया अपि तदाकृतिमात्रेण गोत्वनिश्चयान्न सन्देहः। यत्तूक्तं विश्वामित्र-स्यापि ब्राह्मण्यमर्थवादमात्रमिति। तदपि न। षष्ठषष्ठचतुर्थाधिकरणसिद्धान्तविरोधापत्तेः। तत्र हि तृतीयाधिकरणे सत्रे ब्राह्मणमात्रस्याधिकारः चतुर्थे च सत्रे विश्वामित्रतत्समान-



कल्पानामेवाधिकारः "विश्वामित्रस्य हौत्रनियमात् भृगुशुनकवसिष्ठानामनधिकार" ( ६.६.२६ ) इति सूत्रेण निर्णीतः। तस्याब्राह्मणत्वे स सिद्धान्तो नोपपन्नः स्यात्।

ब्राह्मणत्वादिवर्णानां निमित्तादि विमर्शनम्। महादुर्गन्धमित्येवं मत्वा केचित्त्यजन्ति तत् ३६८॥
शास्त्रीयं तन्निमित्तं च महासुन्दर मस्त्यपि। तथापि स्वानभीष्टं तन्मत्वा नैव स्पृशन्ति च॥३६९
सिद्धवद्ब्राह्मणत्वादि वर्णानादाय केवलम्। स्वस्मिन्नेव च ब्राह्मण्यं मत्वाऽन्येष्वन्यवर्णताम्।७०
तदुच्चत्वादिकं शास्त्रे योग्यत्वायोग्यते पुनः। समाश्रित्य प्रजल्पन्ति महागर्वेण वञ्चकाः॥३७१
एतद्वशेन देशस्य शास्त्राणां संस्कृतस्य च। दुर्दशा महती जाता सुगुणग्रहणस्य च ॥३७२॥
आचार्याश्चापि केचित्तु मध्यकाले तथाविधाः। एतद्देशस्य दौर्भाग्याज्जाता जीवन्ति केचन३७
मतभेदेन पार्थक्यं पूर्वमासीन्मनीषिषु। मतैक्येऽप्यद्य तज्जातिभेदेन स्थाप्यतेऽबुधैः ॥३७४॥
मतभेदेऽपि मांसादि भक्षित्वेऽप्यतिदुर्गुणे। मूर्खत्वेऽपि च जात्यैक्यादेकत्वं स्थापयन्ति ते॥३७५॥
तदन्यजनसङ्घर्षे स्वीयसङ्घबलार्थिनः। सुखजीवन लाभार्थं राष्ट्रशैथिल्यकारिणः ॥३७६॥
एवं सर्वस्वदेशीयजनैकत्वे महासुखम्। भिन्नराष्ट्रियसङ्घर्षे जयः सर्वसुखप्रदः ॥३७७॥
तथापि जन्मसंसिद्धां नीचबुद्धिमिमां खलाः। न त्यजन्ति विहायापि तदन्योच्चत्वकारणम्॥७८
उच्चत्वकारणं यच्च तद्वेदाध्ययनादिकम्। तदुक्तमग्निहोत्रादिकर्म त्यक्त्वाऽप्यनापदि॥३७९॥
कृष्यर्थवेतनग्राहि सेवकाग्रेसरा ह्यपि। स्वात्मानं ब्रुवतेऽप्युच्चजातिं नीचपथे स्थिताः॥३८०॥
सर्वदुर्गुणदूरत्वे वैदुष्यादौ च सत्यपि। काकदृष्ट्या भिन्नजातिं ज्ञात्वा पृथग्भवन्ति ते ॥३८१॥

ब्राह्मणत्वादि वर्णों के निमित्त का विचार करने पर बहुदुर्गन्ध होगा समझ कर कुछ लोग उस प्रश्न को उठाते नहीं किन्तु केवल उन वर्णों का प्रसङ्ग उठा कर और अपने को जन्मसिद्ध ब्राह्मण समझ कर उच्च-नीच भावों को बहुत बताते हैं। ऐसे लोगों के द्वारा इस देश की वेद-शास्त्रों की और संस्कृत भाषा की दुर्दशा बहुत हो गयी और गुणग्राहित्व तो बिलकुल नष्ट हो गया। ऐसा स्वभाव वाले कुछ आचार्य भी इस देश को दुर्भाग्यता के कारण मध्यकाल में पैदा हो गये हैं और अब भी ऐसे लोग कुछ जीवित हैं। पहले मतभेद से ही आपस में भेदभाव रखते थे किन्तु आजकल मत में एकता रहने पर भी जातिभेद से भेदभाव रखते हैं। मतभेद हो मद्यमांसभक्षणादि दुर्गुण भी हो और मूर्खता भी हो, इन सबके रहने पर भी जाति एक होने पर सब एक हो जाते हैं। इसका कारण यह है कि दूसरों के सामने अपना संघ बल और दूसरों की अपेक्षा अपने जाति वालों को सुखी बनाना। देश के सारे लोग सारी जनता से एकता रखने पर उससे भी अधिक सुख सबको मिल सकता और अन्य राष्ट्रों के सामने अपना राष्ट्र भी उन्नत रह सकता है तो भी वे स्वभावसिद्ध उस नीच बुद्धि को छोड़ते नहीं और सर्वदुर्गुण-रहित हो और विद्वान् भी हो यदि वह भिन्न जाति का मालूम पड़ेगा तो उससे वे अलग ही रहते हैं।

अर्थवादीय सूत्राणामर्थोऽस्मत्पक्षसम्मतः। प्रागेव दर्शितोऽन्यस्य तत्र चेदरुचिर्भवेत् ॥३८२॥
प्रकारान्तरतस्तेषामर्थः प्रकरणानुगः। प्रदर्शयिष्यते येन जातिवादनिवारणम् ॥३८३॥
स्त्र्यपराधादिसूत्रस्थस्त्री-शब्दो बुद्धिलक्षणः। कर्तृशब्दश्चतुर्वर्णव्यञ्जकात्मगुणार्थकः ३८४॥
पुत्रशब्दश्चतुर्वर्णपरो लक्षणयैव हि। तथा च स्त्र्यपराधेन ह्यपराधो विवक्षितः ॥३८५॥
तेन कर्तुः शमादेश्च पुत्रो वर्णोऽन्यथेद्यते। अतो ब्राह्मणसन्देहसंभवो दर्शितः श्रुतौ ॥३८६॥
आर्षेयप्रवरे शेष स्तस्मान्नास्याप्रमाणता। या च मीमांसकैरिष्टा साऽस्माकमपि सम्मता ३८७॥
वर्णप्रयोज्यकर्माणि कर्तुं सन्नद्धचेतसः। मत्सङ्कल्पितवर्णोऽस्ति नवा मयीति संशयः ३८८॥
वर्णान्तरगुणाः स्वात्मबुद्धेरेवापराधतः। मिश्रिता यदि चेत्तर्हि वर्णो भिन्नोऽपि संभवेत् ॥३८९॥
यादृशं चिन्तयेत्कर्म बुद्धिस्तादृग्गुणी पुमान्। गुणानुसारतो वर्णो वैदिकः संभवेदतः ॥३९०॥
कादाचित्कमनीषापराधशङ्कावशेन हि। वर्णशङ्काऽपि कर्मानुष्ठानदेशे भविष्यति ॥३९१॥
नन्विदं महदाश्चर्यं यद्बुद्धेः स्त्रीपदार्थता। नहीदं सूत्रकाराभिमतं भवेत्कथंचन ॥३९२॥
प्रतिज्ञा भाष्यकारेण कृता "सूत्रपदानि च। येष्वर्थेषु प्रसिद्धानि तत्पराण्येव तानि हि ॥३९३॥
नाध्याहारादिभिस्तेषामन्यार्थ परिकल्पना। न परिभाषितव्योऽर्थो गौरवादि"ति चेच्छृणु ३९४॥
अर्थानुसारतः शब्दयोजना क्रियते बुधैः। न तु शब्दानुसारेण वस्तुनः परिवर्तनम् ॥२९५॥
तस्माच्छब्दार्थयोर्नित्यसम्बन्धं परिरक्षितुम्। औत्पत्तिकपदस्यापि स्वतोऽनित्यार्थकस्य हि ३९६॥
नित्यार्थकत्वमाख्यातमेवं गुणपदं स्तुतिम्। निन्दां रूपपदं गुप्तरूपं च लक्षयेदिति ॥३९७॥
प्रजापतिर्दुहितरं स्वामभ्यैदुषसं स्वयम्। इत्यादेरप्यशुद्धार्थवारणायेतरार्थता ॥३९८॥
तन्निमित्तपरीक्षार्थसूत्रेऽध्याह्रियतेऽपि नञ्। वृत्तौ, भाष्ये पदान्येव, चैकदेशान्वयोऽपि च ३९९॥
लोके सन्नियमेत्यादिसूत्रे तद्वयमस्त्यपि। तत्र सर्वत्र चाश्चर्यं तव कस्मान्न जायते ॥४००॥
त्वन्मतेऽप्यत्र स्त्रीशब्दो मातरं लक्षयत्यपि। बीजिनं कर्तृशब्दश्च वर्णं पुत्रपदं त्वपि ॥४०१॥
व्यभिचारं चापराधशब्दो दर्शन गीरपि। शाब्दबोधनमाचष्टे गौण्या लक्षणयाऽपि वा ॥४०२॥
अर्थोपपत्तये गौणी लक्षणा वेष्यते बुधैः। अतश्च स्त्रीपदस्यात्र बुद्धौ युक्तैव लक्षणा ॥४०३॥
अथवा लोकसिद्धार्थो दृष्टान्तत्वेन दर्शितः। स्त्र्यपराधाद्यथा पुत्रो बीजवप्तुरिहेष्यते ॥४०४॥
तथा बुद्ध्यपराधोत्थस्वकीयात्मगुणोचितः। वर्णः स्यादिति शङ्का निर्दिष्टसंशयकारणम्॥४०५॥
स प्रकृतिः स्यादित्यादि सूत्रे प्रकृतिवद्भवेत्। इति प्रकृतिशब्दस्य व्याख्या मीमांसकैर्मता॥४०६॥
तथैव स्त्र्यपराधादि सूत्रेऽपि स्त्र्यपराधतः। कर्तुश्च पुत्रवद्बुद्धेर्वैचित्र्याद्वर्णभिन्नता ॥४०७॥
स्त्रीशब्दः कुत्रचिद्ग्रन्थे नास्ति किन्त्वपराधतः। कर्तुश्च दृश्यते पुत्र इति पाठः प्रदृश्यते ४०८॥
अस्मन्मतेऽपराधोऽत्र बुद्धेस्त्वन्मते पुनः। मातुरित्येव वक्तव्यं लक्षणा नोभयोरपि ॥४०९॥
स्त्रियं स्त्रीसङ्गिनं ध्यायन् स्त्रीसङ्गी पुरुषो भवेत्। ब्रह्मध्यायन् ब्रह्मरूप इत्येतत्सम्मतं खलु।४१०
महत्यप्यात्मनीशाने स्वीयबुद्धिगुणैरिह। अणुत्वादिभ्रमश्चेष्टः संसारित्वादिविभ्रमः ॥४११॥
सर्वेऽपि प्राणिनो बुद्धेरपराधवशादिह। उच्चनीचत्वमापन्नाः स्त्र्यपराधोऽपि बुद्धितः ४१२॥
ब्राह्मणाचार कर्माणि त्यक्त्वा क्षात्रगुणानिह। स्वीयबुद्धिर्यदा ध्यायेत्तता क्षात्रगुणोदयः ४१३॥



तेन ह्रासः शमादीनां ब्राह्मण्ये संशयोऽपि च। कादाचित्कमनषीपराधकार्यमितीर्यते ४१४॥
नन्वेवमपि सन्देहो गुणपक्षे न संभवेत्। दुर्ज्ञेयजन्मपक्षे तु स स्यादेवेति चेच्छृणु ॥४१५॥
उक्तमुत्तरमेतस्य स च पक्षद्वये भवेत्। प्रवरानुमन्त्रेणासौ जन्मपक्षे न वार्यते ॥४१६॥
यथा वैदिकमन्त्रेण घटः पटो भवेन्न हि। तथाऽन्यवीर्यजो मन्त्राद्ब्राह्मणो न भविष्यति॥४१७॥
यथैव वेदपाठस्य पदपादाक्षरेषु च। उच्चारणाद्यपभ्रंशे विशुद्धिः शान्तिपाठतः ॥४१८॥
न त्वपभ्रंशकाव्यादि पाठे शान्त्यादिमन्त्रतः। तस्य वैदिकपाठत्वसिद्धिश्चेह भविष्यति ॥४१९॥
तथाऽत्मगुणवर्णस्य विशुद्धिर्मन्त्रपाठतः। न त्वन्यवीर्यजत्वे तद्विशुद्धिर्वेदपाठतः ॥४२०॥
यथा भिन्नकपालस्य सन्धानं मन्त्रहोमतः। न शक्यमिति निर्णीतं तथाऽन्यवीर्यं संक्षयः ४२१॥
यदि शाबरभाष्यानुसारेणाब्राह्मणोऽपि च। ब्राह्मणः स्यान्मन्त्रपाठादिति चेद्भवतो मतम् ४२२॥
तर्हि तन्मन्त्रमुच्चार्य भवन्तु ब्राह्मणाः समे। कुर्वन्तु ब्राह्मणान् सर्वान् भवन्तो मन्त्रपाठतः ॥४२३
तदाऽपि जन्मपक्षस्य हानिरङ्गी कृता भवेत्। आदावेव कुतो जातिवादो नेह विरम्यते ॥४२४
दूरभूयस्त्वसूत्रादावपीदृगर्थवर्णनम्। अगत्या भवतेष्टं चेदत्र चैवं कुतो नहि ॥४२५॥
दूरभूयस्त्वमित्यस्य वन्हौ सुदूरवर्तिनि। असम्यग्दर्शनं यत्तत्तुल्यादर्शनलक्षणा ॥४२६॥
यत्तूक्तं "दृश्यते भूयान् धूमोऽह्नि दूरवर्तिभिः। रात्रावग्निश्च तस्मात्तदन्यादर्शनमन्यदा"॥४२७॥
तदयुक्तं यतो दृष्टविरोधोऽग्नेरदर्शने। दिवा रात्रौ च धूमस्य न तु धूमाग्निदर्शने ॥४२८॥
अतस्तादृग्विरोधोक्तिर्वेदे कथं स्थितेति च। शङ्कोपपादकत्वेन सूत्रं नेयं बुधैरिह ॥४२९॥
यत्तूक्तं कौस्तुभे "व्योम्नि दूरस्थत्वाददृश्यता। वन्हावारोप्य तामेव प्रोक्तं न ददृशेत्वि"ति ४३०
तदप्यत्र न सुष्ठ्वस्ति यतो व्योम्नोऽन्तिकेऽपि च। अदृश्यत्वमतो दूरभूयस्त्वादित्यसङ्गतम्॥४३१॥
कुतूहलाख्यवृत्तौ तु दूरान्नक्तमिति श्रुतौ। यदीरितं तदेवात्र सूत्रे चाप्यागतंत्विति ॥४३२॥
एतच्चायुक्तमत्यन्तं यतो दृष्टविरुद्धता। नोपपन्ना न वा सूत्रं तदुपपादकं भवेत् ॥४३३॥
आकालिकेप्सा सूत्रं च देशकालान्तरोद्भवे। गौणं हि नान्यथा स्वर्गसंशयस्योपपादकम् ४३४॥
नास्याप्येतत्कृतव्याख्या श्रुतिसूत्रार्थसङ्गता। अतो गौणत्वसाम्येऽपि युक्तं युक्तार्थवर्णनम्४३५॥

अर्थवादाधिकरण सूत्रों का अर्थ हम पहले ही ( १५० ) संग्रहरूप से कह दिये हैं। उसमें यदि किसी का अरुचि हो, उसके लिए हम दूसरे प्रकार से उनका अर्थ यहाँ बता रहे हैं। 'स्त्र्यपराधात्कर्तुश्च पुत्रदर्शनम्' इस सूत्र में स्त्री शब्द बुद्धि को कर्तृ शब्द शमादिगुणों को और पुत्र शब्द वर्णों को गौणो-वृत्ति से कहते हैं। अर्थात् बुद्धि के अपराध से वर्णप्रयोजक गुणों में परिवर्तन उसके अनुसार वर्ण में परिवर्तन होता है। अतः श्रुति में 'न चैतद्विद्म' इत्यादि वर्णसन्देह दिखाया गया है। याग करने को सन्नद्ध यजमान का यह संशय हो रहा है कि हम ब्राह्मण हैं या अब्राह्मण। यहाँ ब्राह्मण शब्द से चार वर्णों का बोध होता है। मनुष्य, जैसे कर्म का चिन्तन करता है वैसे ही गुण और बुद्धि उसमें होते हैं। अतः कहा गया है "बुद्धिः कर्मानुसारिणी" ब्राह्मण भी

यदि क्षत्रियोचित गुणकर्मों का चिन्तन करता हो तो उसमें क्षत्रियोचित गुण आ सकते हैं और उनसे पूर्ववर्ति ब्राह्मणोचित गुणों की क्षति और उससे ब्राह्मणत्व को हानि संभावित है। अतः ब्राह्मणत्वादि वर्णों में संशय सबको होता है। उसी का श्रुति में अनुवाद, प्रवरानुमन्त्रण-प्रशंसा के लिये किया गया है। भाष्य में लिखा है कि उस मन्त्र को बोलने पर अब्राह्मण भी ब्राह्मण हो जाता है। अतः उसे बोले (१४९) इस अभिप्राय से वह संशय दिखाया गया है। यहाँ शंका होती है कि उस सूत्र के पदों का गौणार्थ बताने का क्या कारण है? भाष्यकार ने शुरू में ही प्रतिज्ञा की थी कि सूत्रों के पद जिन-जिन अर्थों में प्रसिद्ध हैं वे ही अर्थ उनको बताये जायँगे न कि दूसरे अर्थ। उसका उत्तर है कि जैसा अर्थ ( वस्तु ) रहता है वैसा शब्द का अर्थ बताया जाता है न कि शब्द के अनुसार अर्थ। अतएव मीमांसक भी औत्पत्तिक शब्द का अर्थ नित्य बताते हैं जिसका अर्थ अनित्य कहना उचित है। ऐसा नहीं बताने पर शब्द और अर्थ का सम्बन्ध नित्य सिद्ध नहीं होगा जो उनका मुख्य सिद्धान्त है। ऐसे ही बहुत सूत्रों का गौणार्थ और अविद्यमान पदों का अध्याहार भी किया गया है। प्रकृत स्त्र्यपराध सूत्र में भी सब पदों का गौणार्थ बताया जाता है। अथवा उस सूत्र का अर्थ यह भी हमारे मत में हो सकता है कि जैसे स्त्री के अपराध से पुत्र दूसरों का हो जाता है वैसा ही बुद्धि के अपराध से अर्थात् स्ववर्ण के आचार-विचारों का चिन्तन छोड़कर यदि बुद्धि दूसरे वर्णों का चिन्तन करेगी तो दूसरे वर्णों के गुण और उनके द्वारा वर्ण भी बदल सकता है। स्त्री और स्त्रीसङ्गी का चिन्तन करने वाला स्त्रीसङ्गी हो जाता है, ऐसा भागवत में लिखा है और ब्रह्मचिन्तन करने वाला ब्रह्मस्वरूप बन जाता है तो वर्ण भी बुद्धि के अनुसार बदलने में आश्चर्य नहीं और स्त्री का अपराध भी बुद्धि के अपराध से ही होता है! जैसे "स प्रकृतिः स्यादधिकारात्" ( ६-४-४० ) सूत्र में प्रकृति शब्द का अर्थ "स्वप्रकृतिवत्" बताया गया है वैसा प्रकृत में "स्त्र्यपराधात्कर्तुश्च पुत्रदर्शनवत् बुद्ध्यपराधाद्वर्णदर्शनम्" ऐसा कहना उचित ही है। गुणपक्ष में वर्णसन्देह नहीं होगा इस शंका का उत्तर पहले ही हम कह चुके हैं। वर्ण सन्देह उभय पक्ष में भी हो सकता है किन्तु जन्मजाति के मत में प्रवरानुमन्त्र पाठ से उसका नाश नहीं होगा। क्यों? मन्त्र बोलने से जैसे घट पट नहीं हो सकता वैसा ही अन्यवीर्य से उत्पन्न भी प्रवरामन्त्र से ब्राह्मण नहीं हो सकेगा। अतएव मीमांसाषष्ठचतुर्थपाद में "भिन्ने जुहोति स्कन्ने जुहोती"ति प्रायश्चित्त होम प्रस्ताव में भिन्न कपालों का सन्धान "गायत्र्या वा शताक्षरया सन्दधामीति" मन्त्रपूर्वक होम से नहीं हो सकता, ऐसा



"नाशेषभूतत्वात् ( ६।४।१६ ) इति" सूत्रद्वारा निर्धारित है। यदि शाबर-भाष्यादिवाक्य के अनुसार उस मन्त्रपाठ से अब्राह्मण भी ब्राह्मण बन जायगा तो उसीको बोल कर सबको ब्राह्मण बनवा सकते हैं। अथवा उस मन्त्र को बोल कर सब लोग स्वयं ब्राह्मण बन सकते हैं। इस पक्ष में भी जन्मजातिवाद व्यर्थ ही है। जैसे वेदपाठादि में अक्षर और पदों के उच्चारण में त्रुटि होगी तो "यदक्षरपदं भ्रष्टम् इत्यादि शान्तिपाठ से उसकी शुद्धि मानी जाती है न कि देशभाषापद्यपाठ में वेदपाठत्वसिद्धि।

यत्तूक्तमिति (४२७) दूरभूयस्त्वादित्यस्यार्थो वार्तिके इत्थमभिहितः "दूरस्थैर्भूम्ना दिवा धूम एव गृह्यते रात्रावर्चिरिति केन चिदंशेन स्तुत्यालम्बनमि"ति। तदयुक्तं यतः "धूम एवाग्नेर्दिवा ददृशे नार्चिः, तस्मादर्चिरेवाग्नेर्नक्तं ददृशे न धूमः" इत्यत्र दिनेऽग्नेः रात्रौ धूमस्य च यददृश्यत्वमुक्तं तदेव दृष्टविरोधित्वेन "शास्त्रदृष्टविरोधाच्चे"ति सूत्रे उदाहृतम्। तद्विरोधोपपादनार्थमिदं सूत्रं "रूपात्प्राया"दित्यादिकमारब्धम्। तत्र रूपादित्यस्यार्थो यथा लक्षणया स्तेननिष्ठप्रच्छन्नकारित्व-सदृशप्रच्छन्नकारित्वरूपात्, मनोऽपि स्तेनमिति वर्णयित्वा तदुपपत्तिरुक्ता तथा दूरभूयस्त्वादित्यादि सूत्राणामपि लक्षणया दूरभूयस्त्व-हेतुकवह्न्यादिनिष्ठासम्यग्दर्शनसदृशासम्यग्दर्शनाद्वह्निर्नदृश्यत इति वक्तव्यम्। सायंप्रात-र्होमाग्निधूमयोः पुरस्थित्वेऽपि दिवा सूर्यतेजसा रात्रावन्धकारेण चाभिभूतौ वह्निधूमौ-सम्यङ् न दृश्येते इति वक्तव्ये न दृश्येते इत्युक्तं सूर्याग्निदेवतयोः प्रशंसार्थम्" यत्तु खण्डदेवेनोक्तं "न ददृशे इति वाक्ये मुख्यो दर्शनाविषय आकाशादिरित्यर्थः। तद्गतस्य दूरस्थवृत्तिभूयस्त्वप्रकारकदर्शनाविषयत्वरूपस्य गुणस्यैकसम्बन्धिदर्शनेनापरसम्बन्धि-स्मरणमिति न्यायेनोपस्थितस्याग्न्यादौ योगादेव गौणत्वोपपत्तेर्न गुणांशेऽपि लक्षणेति तत्वमि"ति। तन्न, आकाशस्य समीपेऽप्यदृश्यमानत्वाद्दूरभूयस्त्वेन तस्यादृश्यत्वकथना-सङ्गतेः। कुतूहलवृत्तौ च "दूरान्नक्तं ददृशे" इति श्रुतिस्थदूरशब्द एव सूत्रे प्रयुक्त इत्युक्तम्। तदपि न। रात्रावग्निदर्शनस्य दृष्टविरोधित्वाभावात्। "आकालिकेप्से"ति सूत्रमपि "को हि तद्वेद यद्यमुष्मिन् लोकेऽस्ति वा नवेति सन्देहस्योपपादकम्। एतदुप-पादकत्वमपि सूत्रस्य कालान्तरभावित्वार्थकत्वे सङ्गच्छते न तु वर्तमानकालेप्सार्थकत्वे। लघुचन्द्रिकायामपि प्रत्यक्षबाधोद्धारे दर्शितसूत्राणामर्थो वार्तिककारानुसारेणैवोक्त इति दर्शितदोषस्तत्राप्यनुसन्धेयः। प्रजापतिरिति "प्रजापतिरुषसमभ्यैत्स्वां दुहितरमित्यस्य व्याख्या तन्त्रवार्तिके सूर्यस्योदयकाले किरणनिक्षेपपरत्वेन दर्शिताऽनुपपत्तिपरिहाराय। "तस्य निमित्तपरीष्टि" रिति ( ३ ) सूत्रे वृत्तिकारो नञमध्याहृत्य तस्य प्रमाणस्य निमित्तपरीक्षा न कर्तव्येत्युक्तवान्। एवं "लोके सन्नियमात्प्रयोगसन्निकर्षः स्यादिति ( २६ ) सूत्रस्य लोकेऽर्थेन्द्रियसन्निकर्षात् तदर्थप्रतिपादकशब्दप्रयोगः सन्नियमः = सन्निबन्धन इत्यभिप्रायं वर्णितवान् भाष्यकारः। अत्र सन्निकर्ष इति प्रथमान्तस्य

पञ्चम्यन्तत्वेन सन्नियमादिति पञ्चम्यन्तस्य प्रथमान्तत्वेन च विपरिणामः कृतः। प्रयोग-सन्निकर्ष इति समासैकदेशे प्रयोगे सन्नियमादिति प्रथमान्तत्वेन विपरिणतस्यान्वयः कृतोऽनुपपत्ति परिहारायैव। एवं जन्मना वर्णव्यवस्थायाः सर्वप्रमाणविरुद्धत्वादापाततस्तद्व्यवस्थाबोधकसूत्रस्य कथंचिदर्थान्तरपरत्ववर्णनमत्यन्तमुचितमेव।

ननुशब्दप्रयोगस्य स्वाधीनत्वेऽपिजैमिनिः। अतदर्थकशब्दानि कुतः सूत्राणि निर्ममे ॥४३६॥
भवतैवास्य प्रश्नस्य प्रवक्तव्यमिहोत्तरम्। यतो भवन्मते तानि न प्रसिद्धार्थकान्यपि॥४३७॥
गौण्या लक्षणया वाऽपि शब्दानामर्थनिर्णयः। प्रकृतार्थानुसारेण क्रियते पण्डितोत्तमैः ॥४३८॥
यदि जैमिनि सूत्राणां प्रसिद्धार्थपरिग्रहः। तदा भाष्योक्तदृष्टान्तान् त्यक्त्वैवान्यानुदाहरेत् ॥३९
क्वचिद्वेदान्तसूत्रेष्वप्ययं न्यायः प्रवर्तते। प्रायो लोकप्रसिद्धार्थपरशब्दचयेष्वपि ॥४४०॥
अस्माकं त्वपशूद्राधिकरणादितरत्र हि। नैवाग्रहो यथासूत्रश्रुत्यर्थादिविचारणे ॥४४१॥
आग्रहस्त्वपशूद्राधिकरणार्थविचारणे। तुच्छस्वार्थप्रयुक्तान्य-बह्वनर्थविनाशके ॥४४२॥
यदर्थं कल्पिता जातिः सर्वशास्त्रार्थमोषतः। सोऽपि नाद्य चलत्यत्र तत्र हेतुः प्रथैव सा ॥४४३॥
उच्चनीचश्रौतकार्ये निर्विवादपुरस्सरम्। सम्प्रवर्तयितुं मर्त्यान् कल्पितेयं प्रथा पुरा ॥४४४॥
तया केचिज्जन्मनैव कृतार्था नैव कर्मसु। प्रवर्तन्ते तदन्ये तु तत्र चानधिकारतः ॥४४५॥
संस्कृतं वेदशास्त्राणि नाधीयन्तेऽधिकारिभिः। वञ्चितैश्चेह वाञ्छद्भिरप्यत्रानधिकारतः ।४६
अधिकारित्वाभिमानो म्लेच्छाभाषामधीत्य च। जीविकां नयति श्रेष्ठजातीयं स्वंविचिन्तयन्।
स्वात्मानोऽनधिकारित्वविभ्रमोऽगतिकस्तथा। समानत्वेऽपि सर्वेषामुच्चनीचविजातिधीः ४८
शास्त्रेषु शूद्रनिन्दा च जातिबुद्ध्या प्रवर्तते। ब्राह्मणस्य प्रशंसाऽपि तस्मादन्योन्यविग्रहः ॥४९॥
व्यक्तिबुद्ध्या दूषणादिर्दूष्यदोषनिवारकः। स एव जातिबुद्ध्याचेत्तत्तज्जातीयकोपकृत् ॥५०॥
व्यक्त्योर्वैरमनित्यं स्याज्जात्योर्वैरं तु शाश्वतम्। राष्ट्रराष्ट्रियवृद्धेस्तदतीव प्रतिबन्धकम् ॥५१
शूद्रत्वब्राह्मणत्वादिजातिभ्रान्तिनिवारणम्। विना शास्त्रीय-विद्यानामुन्नतेर्नैव संभवः ॥५२॥
जातिभ्रमविनाशे तु स्तुतिनिन्दे समञ्जसे। दुष्टसज्जनयोर्निन्दा-प्रशंसादिवदिष्टदे ॥४५३॥
तस्मादस्मन्महायत्नस्तदर्थं सम्प्रवर्तते। क्वचिच्चभाष्यकारादिमतं त्यक्त्वाऽप्यसङ्गतम् ॥४५४॥
असङ्गतौ स्मृतेर्वाक्यं श्रुतेरपि विसृज्यते। अर्थान्तरपरं वा स्यात्किमुतोक्तिर्गुरोरिह ॥४५५॥
प्राचीनाचार्यसिद्धान्तान् क्वचित्त्यक्त्वाऽपि नूतनाः। न्याये व्याकरणादौ च तदन्यान् सम्प्रचचक्षिरे
तस्माद् व्याकरणे न्याये मीमांसादर्शनादिषु। प्राचीनत्वनवीनत्व प्रभेदः परिदृश्यते ॥४५७॥
पाणिनेर्बहुसूत्राणि भाष्यकारोऽप्यदूषयत्। प्रामाण्यं च महर्षीणामुत्तरोत्तरमिष्यते ॥४५८॥
गुरोरपि मतं प्राज्ञो रघुनाथशिरोमणिः। श्रीप्रभाकरमिश्रश्च दूषयामास निर्भयम् ॥४५९॥
शिष्येण गुरुसेवा हि कर्तव्या परमादरात्। गुरूक्तस्याप्ययुक्तत्वे दूषणेनाप्यदोषभाक् ॥४६०॥
नैतावता गुरुद्रोही नव्यसिद्धान्तकर्तृषु। मन्यते किन्तु युक्तत्वात्तत्सिद्धान्तोऽपि गृह्यते ॥४६१॥
तद्वदस्मद्वचस्यार्यवाचः क्वचिद्विरोधिनि। बहुप्रयोजनत्वेन तिरस्कारो न मन्यताम् ॥४६२॥

**शब्दप्रयोग स्वाधीन रहने पर भी जैमिनि ने क्यों अप्रसिद्धार्थक पदों से**



**सूत्र बनाये ? इस प्रश्न का उत्तर भी जातिवादी को ही देना चाहिये। उनके मत में भी वे अप्रसिद्धार्थक ही हैं। गौणी या लक्षणा के द्वारा शब्दों का संगत अर्थ ही बताया जाता है। यदि जैमिनि सूत्रों का प्रसिद्धार्थ ही बताना हो तब भाष्योक्त दृष्टान्तों को छोड़ कर दूसरे दृष्टान्त वाक्यों को ढूँढ़ना होगा। यह बात वेदान्तसूत्रों में भी कहीं-कहीं है। हमको तो अपशूद्राधिकरण से अतिरिक्त विषय में आग्रह नहीं है। उसमें आग्रह भी इसलिये है कि उस अधिकरण का दूसरे लोग प्रमाणविरुद्ध अर्थ समझ रहे हैं जिसको हटाना लोककल्याण के वास्ते आवश्यक है। जिसके लिये वह अर्थ मध्यकाल में माना गया है वह काम भी आजकल नहीं हैं। उच्च-नीच वैदिक कामों में निर्विवाद से प्रवृत्ति करवाने के लिये चार वर्ण, चार जातियाँ मानी गयी हैं जिसका फलस्वरूप अनन्त जातियाँ बन गयी हैं। कुछ लोग जन्म से ही आदर सन्मानादि पाकर तृप्त ही गये। अतः शास्त्रविद्या के द्वारा सन्मानादि आवश्यक नहीं पड़ा। अतः वे वेदशास्त्र छोड़ दिये। दूसरे लोगों को उनमें अधिकार नहीं मिलने से वे भी उनको छोड़ दिये। अधिकारी और अनधिकारी दोनों म्लेच्छ भाषायें पढ़कर जीवन बिताने में समान होने पर भी उच्चनीच जातिभेद रह गया है। संस्कृत ग्रन्थों में जातिबुद्धि से शूद्रनिन्दा और ब्राह्मण प्रशंसा अत्यधिक हैं। अतः शूद्रभ्रमवाले सब, संस्कृत छोड़ दिया और वेदशास्त्रों को मानते भी नहीं। अतः उनसे शूद्रत्वभ्रम हटाने के लिये उन जातिभेद समर्थक वाक्यों का यथार्थ अर्थ बताना आवश्यक हो गया है। शूद्रत्वादिभ्रम हट जायगा तो वे स्तुतिनिन्दा भी सज्जन-दुर्जनों की स्तुतिनिन्दा की तरह आपत्तिजनक नहीं होंगी। अतः हम वर्णजातिभ्रम को हटाने के लिये यहाँ विशेष यत्न, जिससे भाष्यकारों के मत में आंशिक विरोध पढ़ने पर भी, कर रहे हैं। न्याय व्याकरण और मीमांसादि में भी प्राचीन और नवीन शास्त्रकारों में मतभेद बहुत हैं। पाणिनि के बहुत सूत्रों का भाष्यकार पतञ्जलि ने खण्डन किया था और रघुनाथ शिरोमणि और प्रभाकर मिश्र भी अपने-अपने गुरु के सिद्धान्तों को इनकार कर दिया। इतने मात्र से उनको गुरुद्रोही कोई समझते नहीं बल्कि उनको अच्छी तरह मानते भी हैं। शिष्य का कर्तव्य है कि गुरुजी की सेवा करना न कि उनकी अयुक्त बातों को भी मान लेना। जहाँ कहीं न्यायविरुद्ध बात होगी तो वहाँ गुरुमत को भी हटा कर न्यायसंगत बात कहने में शिष्य दोषी नहीं रहेगा। ऐसे ही वर्ण जातिवाद में हमारी बातों में भी कहीं भाष्यकार का विरोध हुआ हो वह भी ग्राह्य ही है।**

उच्चनीचेति—"ब्राह्मणोऽभिषिञ्चति शूद्रः प्रक्षालयति" सोममित्यर्थः। "अथास्य

पाद्यमिति प्राह, तेनास्य शूद्रः शूद्रा वा पादौ ( यजमानस्य ) प्रक्षालयति" ( सत्या० श्रू० १२ ) इति । ब्राह्मणः शूद्रश्च यज्ञमण्डपेऽन्तर्वेदि बहिर्वेदि च स्थित्वाऽऽर्द्रचर्मविषये विवादं कुर्वाते ।" तदुक्तं "आर्द्रे चर्मन् व्यायच्छेते इन्द्रियस्यावरुध्यै" ( तै० ७.५.९ ) इति । एतदेव तदीयब्राह्मणे ( १.२.६ ) प्रदर्शितम् "देवासुराः संयत्ता आसन्, त आदित्ये व्यायच्छन्तः, तं देवाः समजयन् । ब्राह्मणश्च शूद्रश्च चर्मकृते व्यायच्छेते दैव्यो वर्णो ब्राह्मणः, असुर्यः शूद्रः, इमेऽरात्सुरिमे सुभूतमित्यन्यतरो ( ब्राह्मणः ) ब्रूयात् । इमे उद्वासी कारिण इमे उद्वासी कारिण इमे दुर्भूतमक्रन्नित्यन्यतरः ( शूद्रः ) । यदेवैषां सुकृतं या राद्धिः तदन्यतरोऽभिश्रीणाति, यदेवैषां दुष्कृतं या राद्धिः तदन्यतरोऽपहन्ति । अस्य सायण-भाष्यं "देवाश्चासुराश्चायमादित्योऽस्माकमेव भूयादिति कलहं कृतवन्तः । तत्र देवानां जयोऽभूत् । अतोऽत्रापि वेदिमध्ये ब्राह्मणः, बहिः शूद्रश्चावस्थाय किञ्चिदार्द्रं चर्म परिमण्डलाकारं गृहीत्वा कलहं कुर्याताम् । तत्र देवतास्वरूपो ब्राह्मणः असुरस्वरूपः शूद्रः । तस्मिन् कलहावसरे इमेऽरात्सुरिमे सुभूतमिति मन्त्रं ब्राह्मणो ब्रूयात् । तदर्थश्च इमे यजमानाः सत्रे समृद्धिं गताः शोभनं कर्म कृतवन्त इति । शूद्रस्तु मन्त्रान्तरं "इमे उद्वासी कारिण इमे दुर्भूतमक्रन्निति ब्रूयात् । तदर्थश्च इमे यजमानाः कर्मव्याजेन धन-हानिं कृत्वा देशमेतमुद्वासं निवासशून्यं कुर्वन्ति इति । एवं सति तेषां यजमानानां यत्सुकृतं परलोकहितं या चेह लोके समृद्धिस्तदुभयमन्यतरो ब्राह्मणः सम्पादयति । यदन्यत्किञ्चित्प्रमादकृतमेषां दुष्कृतं या चैषामसमृद्धिर्दारिद्र्यरूपा तदुभयमन्यतरः शूद्रो विनाशयती"ति। नाटके उच्चनीचपात्रवदत्रापि यज्ञरूपनाटके शूद्रस्य नीचपात्रत्वेन प्रवेशो दृश्यते। एवं व्रीह्याद्यवहननपेषणादिकं मण्डपादिनिर्माणं वेदिगर्तादिखननादिकंचापि कायक्लेशात्मकं वैदिकं कर्म शूद्रकर्तृकनेव दृश्यते । तच्च जातिव्यवस्थाकरणं विना सम्यङ्न चलतीत्यनु-भवपूर्वकं ज्ञात्वा मध्यकालिका याज्ञिका वर्णजातिव्यवस्थामकुर्वन् । ततः पूर्वं तु व्यवस्थां विनैव स्थूलबुद्धिभिरेवैतत्कार्यं क्रियते स्म ।

यद्यप्यधिक्रिया श्रौते शूद्रस्यात्र निषिध्यते। न त्वस्मन्मतशूद्रत्वमतो नापत्तिरत्र नः ॥४६३॥
पशुतुल्यस्य शूद्रस्य वैदिकेऽधिक्रिया यदि। तदा पशोरिवैषाऽपि स्यादत्र निष्प्रयोजना ॥४६४॥
पशुतुल्यत्वमेवास्य स्वरूपं दर्शितं श्रुतौ। ततो विद्यास्वयोग्यत्वं पशूनामिव कथ्यते ॥४६५॥
विद्याभावेन शूद्रस्य चाधानादिक्रियास्वपि। नाङ्गीकृतोऽधिकारश्च तदस्माभिरपीष्यते ॥४६६
तस्यादमन्त्रको यज्ञः शूद्रस्याभिहितः स्मृतौ। मन्त्रोच्चारणसामर्थ्ये सत्येवं न नियम्यते ४६७
न हि चक्षुष्मतो रूपदर्शनं प्रतिषिध्यते। निषेधेऽपि च तत्तेन पाल्यते न मनागपि ॥४६८॥
वेदविद्यावतां श्रौते स्मार्ते वा योग्यता भवेत्। विद्या च यस्य सामर्थ्यं ग्रहणे धारणेऽपि च ६९
वचनाद्रथकारस्य चाधानं बोधयन्मुनिः। तदन्येषां तु सामर्थ्यादित्यङ्गीकृतवानपि ॥४७०॥
अन्यथा वचनादेव त्रिवर्णाधिकृताविह। रथकारस्य तन्मात्रादाधानाङ्गीकृतिर्वृथा ॥४७१॥
पूर्वसंस्काररहीनस्य पशुत्वान्मर्त्यजन्यनि। अपूर्वत्वेनागतस्य न तद्ग्रहणधारणे ॥४७२॥



अन्तःसंस्कारशून्यस्य बाह्यसंस्कारयोग्यता। नेष्टोपनयने चेत्सा कथमस्माभिरिष्यते ॥४७३॥
ननु दर्शितशूद्रस्य स्वतः प्रवृत्त्यसंभवे। शास्त्रेषु तन्निषेधोक्तिर्नैव स्यात्सङ्गतेति चेत् ॥४७४॥
स्वतः प्रवृत्त्यभावेऽपि मीमांसादर्शनेरिता। सङ्गतैव निषेधोक्तिस्तिर्यग्जन्तुनिषेधवत् ॥४७५॥
केनापि पूर्वपुण्येन यदाऽस्य हृत्प्रफुल्लते। ग्रहणे धारणे शक्तिस्तदा स्यादेव योग्यता ॥४७६॥
तदानीं तस्य शूद्रत्वमपि नश्यत्यतस्त्वसौ। शास्त्रेष्वधिकरोत्येव मन्त्रोच्चारणपूर्वकम् ४७७॥
यथा प्रतिसमाधेयचक्षुराद्यङ्गविकृतेः। सम्मतः पुरुषस्याधिकारस्तथाऽस्य सोऽस्त्यपि॥४७८॥
यथा वा निर्धनावस्थाकाले नाधिक्रिया मता। तस्यैव प्राप्तवित्तस्य साऽपीष्टा श्रौतकर्मसु ॥४७९॥
यथा वेदान्त विद्यायामविरक्तानधिक्रिया।तस्य कालान्तरे रागो वीतश्चेत्साऽपि सम्मता ॥४८०॥
तथैव पशुतुल्यत्वदशायामस्त्वनर्हता। तस्य कालान्तरे सूक्ष्मबुद्धिश्चेदर्हता भवेत् ॥४८१॥
विद्याग्रहणकालातिक्रमोऽपीष्टस्तु सेश्वरैः। आङ्लविद्याप्रवेशादाविव कैश्चित्स नेष्यते ४८२॥
अभिप्रायान्तरं चाङ्ग्ले बाल्यावस्थानियामकम्। आत्मविद्याप्रवेशे तु नैवावास्था नियामिका॥
आङ्ग्ले चोच्चपरीक्षायामुत्तीर्णायोच्चवेतनम्। दातव्यमिति निर्णीतमकिञ्चिदपि कुर्वते ४८४
त्रिंशद्वर्षस्तदारम्भकक्षायां चेत्प्रवेश्यते। तर्ह्यसौ स्थविरो भूत्वा किमुत्तीर्य करिष्यति? ४८५॥
इत्यभिप्रायतस्तत्र बालकः सम्प्रवेश्यते। तदुत्तीर्य युवा राष्ट्र-सेवां कुर्यात्सवेतनः ॥४८६॥
नाभिप्रायान्तरं तस्मादल्पवयःप्रवेशने। नाप्याङ्ग्लाध्ययनं युक्तं न स्याद्वृद्धस्य धीरिति ॥
एवं मीमांसकैरष्टवर्षो वेदे प्रवेश्यते। अन्यथाऽऽधानकालातिक्रमणं संभवेदिति ॥४८७॥
जातपुत्रः कृष्णकेशो वह्न्याधानं करोत्विति। विधेरुल्लङ्घनं चापि भवेदिति तदाशयः ॥
यद्यप्यत्र न कालस्य विशेषः श्रूयते श्रुतौ। तथाऽपि लक्षणाऽवस्थाविशेषे चाश्रितैव तैः ॥
अन्यथा कस्यचित्पुत्रः कृष्णकेशत्वमेव वा। न स्याच्चेदव्यवस्थेति विंशद्वर्षवयस्कता ॥
व्याकरणादिशास्त्राणि यद्यध्येयानि जैमिनेः। इच्छाऽपि पूरणीया चेन्न तद्द्वयोऽप्यलं भवेत् ॥
अधीत्य स्नायादित्यार्षं स्नानाध्ययनयोः क्रमम्। बाधित्वा धर्मजिज्ञासा कर्तव्यैव भविष्यति ॥
बुद्धिमांश्चेत्स जिज्ञासुस्त्रिशद्वर्षवयस्यपि। लक्षणा जातपुत्रादेर्विधिवाक्ये भवेदपि ॥४९३॥
यद्यसौ मन्दबुद्धिश्चेच्चत्वारिंशच्छरद्वयाः। श्रौताग्नीनादधीतेति वक्तव्यं तैरनिच्छया ४९४
पशुहिंसादिवाक्यानां प्रतीतार्थानुसारिणा। मीमांसकेन चात्रापि ग्राह्यस्तादृश एव हि ४९५
जातपुत्रः कृष्णकेशो यः कोऽपि स्यान्महीतले। स एवाधास्यतीत्यग्नि वक्तव्यं स्याच्छुतीच्छया
युक्तायुक्तार्थचिन्ता चेत् स्व-बुध्या कर्तुमिष्यते। पशवोऽपि न हिंस्याः स्युः स्प्रष्टव्या वा भवन्ति ते ॥
आलम्भनपदस्यापि स्पर्शार्थत्वमपि क्वचित्। निर्णीतं खलु तच्छास्त्रे सर्वत्रैव तदस्त्विह ॥
तन्मते वैदिकं कर्म सर्वेषामनिवारितम्। तत्सिद्धान्तस्य रक्षार्थमीश्वरो नेष्यतेऽपि तैः ॥
आश्रमान्तरमप्येतैर्नेष्यते कर्महेतवे। व्यासादिभिः स सिद्धान्तो बहुधाऽपि प्रदूषितः ५००॥
आत्मविद्याविहीनत्वमात्महत्यादिसन्निभम्। नावेदवित्तं बृहन्तं मनुते हीत्यपि श्रुतिः ॥५०१
मार्कण्डेयस्मृतावुक्तमवैदिकप्रमाणतः। मोक्षोपायो न प्रशस्तस्तस्माद्वेदाश्रयस्त्विति ॥५०२
धनित्वं निर्धनत्वं वा यथाऽवस्थाविशेषगम्। कस्य चिन्नियतं कस्य चिन्न यावत्स्वजीवितम् ॥

तथा वर्णो द्विजत्वं वा पुंसोऽवस्थाविशेषगम् । कस्यचिन्नियतं नैजगुणैः कस्यचिदस्थिरम् ॥
देहस्य प्रथमोत्पत्तौ द्विजत्वं नास्ति कस्य चित् । अतस्त्रैवर्णिकत्वं च तद्व्याप्यं नैव संभवेत् ॥
तस्मादेव ह्यतिस्पष्टं चख्यौ लघ्वाश्वलायनः । गायत्र्या उपदेशेन ब्राह्मणो भवतीत्यपि ॥
यदि त्रैवर्णिकत्वं चेद्भवेत्पूर्वं द्विजत्वतः । द्विजत्वव्याप्यता तस्मिन् न स्यादेवेत्यसङ्गतिः ॥
शूद्रत्वमपि मर्त्येषु नियतं नास्ति कस्य चित् । तस्माद्द्विजत्वतः पूर्वं सर्वेषां शूद्रता मता ॥
अतो वर्णाश्रमत्यागः स्वात्मानन्दानुभूतये । मैत्र्युपनिषद्युक्तोऽस्थिरत्वादेव सङ्गतः ॥५०९॥
अन्यथाऽसङ्गतः स स्याद्यदि वर्णः स्थिरो भवेत् । स्थिरस्य दुष्करस्त्यागस्तस्माद्वर्णश्च न स्थिरः ॥
स्थिरं यच्चमनुष्यत्वं तत्त्यागो नोपदिश्यते । अशक्यत्वान्नृभिः कर्तुं तत्त्यागस्य प्रयत्नतः ॥
तस्मादाश्रमवद्वर्णः परिवर्तयितुं क्षमः । दीक्षायां क्षत्रियो वैश्यो भवेतां ब्राह्मणावपि ॥५१२॥
शस्त्रधारणवेलायां ब्राह्मणः क्षत्रियो भवेत् । वेदस्य च परित्यागे सान्वयः शूद्रतां व्रजेत् ॥
चाण्डालत्वं परित्यज्य मतङ्गो ब्राह्मणोऽभवत् । स्कान्दोक्तं तपसैवेति वक्तव्यं किमतः परम् ॥
यथाऽप्रतिसमाधेय-श्रोत्राद्यङ्गविलोपिनः । नाधिकारः सदा मन्दबुद्धेरेवमिहेष्यते ॥४१५॥
एतेनैवाशयेनापशूद्राधिकरणं कृतम् । नाशयान्तरमेतस्मात्सूत्रे भाष्ये च वीक्ष्यते ॥४१६॥
तथाऽपि राजसूयान्तर्गतावेष्टौ यदुच्यते । राजत्वस्यापि जातित्वं भाष्ये तच्च न मृष्यते ॥
राजा हि पालनस्याधि-कारित्वेनैव सम्मतः । अतो यवनराजेति म्लेच्छराजेति चोच्यते ॥
न राज्ञः प्रतिगृह्णीयादराजन्य-प्रसूतिनः । इत्यादिभिरपि स्पष्टमराजन्योऽपि भूपतिः ॥
राजन्यः शौर्यधैर्यादिगुणोऽधीतश्रुति र्भवेत् । न राजन्यत्वमप्यस्ति जातिरित्युक्तमेव हि ॥

यद्यपि अपशूद्राधिकरण में शूद्र श्रौतकार्यों में अधिकारी नहीं माना गया न कि वह जन्मसिद्ध। शूद्र विद्याशून्य है। अतः विद्यासाध्य कर्मों में वह अधिकारी न ही है। वेद में शूद्र पशुतुल्य बताया गया है। ऐसे व्यक्ति सब परिवारों में देखे जाते हैं। अतः उनको अमन्त्रक यज्ञ कहा गया है। विद्वानों का ही वैदिक कर्मों में अधिकार माना गया है। पढ़ने में और याद रखने में जिनमें शक्ति है उन्हीं को विद्या आती है। जो पशुजन्म से इस समय मनुष्य-जन्म में आया है ऐसे संस्काररहित व्यक्ति को विद्या प्राप्ति नहीं होगी। अतः उपनयन संस्कार भी उसे नहीं माना है। यदि किसी पूर्व पुण्यवश उसका हृदय विकसित होकर उसमें विद्याग्रहण शक्ति आयेगी तो उसको भी सब में अधिकार होगा। जैसे अन्ध और बहिरादि का अधिकार नहीं है तो भी जब औषधि से अन्धावस्था नष्ट हो जायगी तो वे भी अधिकारी माने गये हैं जैसे प्रापंचिक पुरुष को ब्रह्म विद्या में अधिकार सम्मत नहीं है तो भी जब कभी उसमें वैराग्य उत्पन्न होगा तो उसको वह माना गया है। वैसे ही पशुतुल्य अवस्था नष्ट हो जायगी तो शूद्र का अधिकार शास्त्रन्याय सिद्ध है। विद्याग्रहण काल ( उपनयन ) का अनिक्रमण भी ईश्वर वादी के मत में दोष नहीं है।



हैस्कूल प्रवेश की तरह मीमांसक लोग उस काल में भी नियम रक्खे हैं। उसका अभिप्राय भी दूसरा ही है न कि बाद में अंग्रेजी और वेद को पढ़ने में निषेध। अंग्रेजी में "ऐ० सी० यस्" पास करने वालों को 'काम करे या न करे' वेतन देने का नियम था। अतः बाल्यावस्था में ही प्रवेश मानने पर वह जल्दी पढकर देश सेवा भी करते हुए वेतन लेता रहैगा, इतना ही उस नियम का अभिप्राय ऐसे ही वेद व्रत में आठवां वर्ष के नियम का अभिप्राय भी दूसरा ही है न कि बाद में पढ़ना दोष। उसी अभिप्राय की सिद्धि के लिये मीमांसक ईश्वर को और गृहस्थभिन्न आश्रम को भी नहीं मानते हैं। आत्मज्ञान तो सबके लिये अनिवार्य है और वह नहीं रहेगा तो आत्महत्या का समान दोष बताया गया और उस ज्ञान का सम्पादन भी वेदवाक्यों से होगा तो, श्रेष्ठ ( मा० स्मृ० ) माना गया है। अतः वेद पढ़ना सबको आवश्यक है जैसे धनी या दरिद्र होना एक अवस्था विशेष ही है। वह अवस्था किसी का नित्य ( जीवितान्त ) भी रहेगा और किसी का अनित्य है, वैसे ही चार वर्ण और द्विजत्व भी एक अवस्था विशेष है। अतएव वे किसी का नित्य और किसी का अनित्य भी रहेंगे। शरीर की पहली उत्पत्ति के समय में द्विजत्व नहीं, अतः तद्व्याप्य वर्ण भी उस समय नहीं रहेंगे। इसलिये लघ्वाश्वलायनस्मृति में कहा गया है कि "ब्राह्मणोऽहं भवानीह गुरोऽहं ते प्रसादतः। गायत्रीं मामनुब्रूहि शुद्धात्मा सर्वदाऽस्मि हि ( १०-३० ) शूद्रत्व भी मनुष्यों में हमेशा नहीं रहेगा। किन्तु उपनयन संस्कार तक सभी शूद्र ही रहेंगे। यही बात स्का० पु० ब्रह्मखण्ड में कहा गया है कि "यस्य ( उपनयनस्य ) प्रभावाद्विप्रेन्द्र मानवो द्विज उच्यते। जन्मना जायते शूद्रः संकाराद्द्विज उच्यते ( ७-३० )। ऐसे श्लोक पहले बहुत स्मृतियों में रहते थे किन्तु बाद में छपवाते समय स्वार्थपरायण लोग उनको निकाल कर उनके स्थान पर "जन्मना ब्राह्मणो ज्ञेयः संस्काराद्द्विज उच्यते" इत्यादि लिखे थे। एवं "जन्मना जायते शूद्रः कर्मणा जायते द्विजः। विद्यया याति विप्रत्वं ब्रह्मजानाति ब्राह्मणः" ( विद्यारण्यकृतशङ्करदिग्विजये १५ सर्गे ) दीनानाथशास्त्रिणोदाहृतश्च सनातनालोक ६ पुष्पे ) और पूना आनन्दाश्रम मुद्रित यतिधर्मसंग्रह में भी ऐसा श्लोक मिलता है। ये वर्ण अस्थिर होने से इनका त्याग भी मैत्रायणीयोपनिषद् में "वर्णाश्रमाचारयुता विमूढाः कर्मानु-सारेण फलं लभन्ते। वर्णादिधर्मं हि परित्यजन्तः स्वानन्दतृप्ताः पुरुषा भवन्ति" ऐसा कहा गया है। स्थिर जो मनुष्यत्व है उसका त्याग कहीं भी मिलता न हि। यदि कोई जिन्दगी भर पशुतुल्य अवस्था में ही रहेगा तो उसके लिये वेदाधिकार असंभव ही है। इसी ध्येय से अपशूद्राधिकरण की रचना की गयी

थी। वहाँ के सूत्र भाष्यों से भी इतना ही मालूम पड़ता है, तथापि राजसूय प्रकरणस्थ अवेष्टि अधिकरण के भाष्य में जो कहा गया कि राजा भी क्षत्रिय जाति का ही होता है, वह ठीक नहीं। जो शासन करता है उसीको ही लोग राजा मानते हैं। अतः मुसलमान राजा अंग्रेज राजा इत्यादि व्यवहार लोक में है। क्षत्रियत्व भी जाति नहीं है यह पहले भी कहा गया। जो शौर्य धैर्यादिमान हो और वेद पढ़ा हुआ हो वही क्षत्रिय है न कि क्षत्रिय से उत्पन्न।

पशुतुल्यस्य शूद्रस्येति "तस्माच्छूद्रो बहुपशु" रित्यत्र दर्शितम्। अत एव तस्यामन्त्रको यज्ञः "नमस्कारेण मन्त्रेण नामसङ्कीर्तनेन च। देवास्तस्य च तुष्यन्ति पञ्चयज्ञादिकैः शुभैः॥ स्नानं च तर्पणं चैव वन्हिहोमोऽप्यमन्त्रकः। ब्रह्मयज्ञोऽतिथेः पूजा पञ्चयज्ञान्न संत्यजेत्। (स्का० ख० ३।९) इति। दानं च दद्याच्छूद्रोऽपि पाकयज्ञैर्यजेत च। पित्र्यादिकं च तत्सर्वं शूद्रः कुर्वीत तेन वै॥ अमन्त्रयज्ञोऽह्यस्तेयं सेवा स्वामिन्यमायया" (वि० पर्व० ३।८) इति। पाकयज्ञाश्चापस्तम्बसूत्रव्याख्याने दर्शिताः "औपासनहोमो वैश्वदेवं पार्वणमष्टका मासि श्राद्धं सर्पबलिरीशानबलिरिति सप्तपाकयज्ञसंस्था" इति। शक्तिहीनस्य सर्वस्याप्यमन्त्रकं कर्म लौगाक्षिस्मृतावुक्तम् "एवं कर्तुं शक्तिहीनो मन्त्र-संस्कारदुर्भगः। तूष्णीममन्त्रकं सर्वं कुर्यादिति विधिस्स तु" इति। यथा चक्षुष्मतो रूप-दर्शनं निषेद्धुं न शक्यते तथा मन्त्रोच्चारणशक्तिमतोऽमन्त्रकयज्ञविधानमपि न संभवेत्। पशूनामिव शूद्राणामपि समन्त्रको यज्ञो निषिद्धः (मी० द० ६.१)। तत्रैव प्रतिसमाधे-याङ्गलोपस्याधिकारोऽप्रतिसमाधेयाङ्गलोपस्यानधिकारश्चोक्तः। जातपुत्रः कृष्णकेशोऽग्नीनादधीतेति श्रौतविधेर्विंशद्वर्षवयस्क आदधीतेत्यर्थो लक्षणयाऽङ्गीकृतः। अत एवाष्ट-वर्षबालको वेदे प्रवेश्यते येन स द्वादशवर्षपर्यन्तं स्वाशाखामधीत्य विवाहितः सन्नाधानं कुर्यादिति। अधीत्य स्नायादित्यापस्तम्बादिगृह्यसूत्रमपि वेदाध्ययनानेन्तरं गुरुकुलान्निवृत्ति बोधयति। यदि तदध्ययनानन्तरं व्याकरणादिकं पठनीयं चेदध्ययनस्नानयो रानन्तर्यस्य बाधो जातपुत्रेत्यादे स्त्रिंशदादिवर्षवयस्के लक्षणा चाङ्गीकार्या भविष्यति। एतादृश-नियमबन्धनं च निरीश्वरमीमांसकानामेव मते न तु सेश्वर मीमांसकानाम्। एतेषां तु नाधाने नाप्युपनयने वा वयोनियमः किन्तु यदा चाध्ययनादिशुभेच्छा तदैव जाबालिवत् तत्सर्वं कर्तुं शक्यते, इदानीमप्येतदेव प्रचलति। अनधीतवेदैरपि मीमांसावेदान्तादिकं पठ्यते पाठ्यते च कतिपयस्मृतिकारपरिकल्पितशृङ्खलाबन्धनं विनैवेत्यलम्।

राज्ञोऽपत्यं च राजन्यः स हि राजानुवर्त्त्यपि। प्रजापालनकार्येषु शौर्यधैर्यादिभिर्गुणैः॥५२२
वेदस्य ब्रह्मणोऽपत्यं ब्राह्मणश्चेति कथ्यते। अपत्यत्वं न सूनुत्वं किन्त्वाज्ञाकारिताऽत्रहि॥५२३
अपत्यत्वस्य नानात्वात्प्रत्ययोऽपि भविष्यति। अर्थस्यान्यप्रमाणत्वात्तच्छास्त्रं न नियामकम् ५२४
मन्त्रस्य ब्रह्मणोऽपत्यं ब्राह्मणंचापि वर्तते। अत्राप्यपत्यशब्दार्थस्त्वन्य एवेह विद्यते॥५२५



अत्रापत्यमिवापत्यमिति व्युत्पत्तिरिष्यते। लोकप्रसिद्धशब्दस्य गतिरेवं प्रकल्प्यते॥५२६॥
यदा राजा च वेदोऽपि न जातिश्चेत्तदुद्भवे। राजन्यब्राह्मणादौ च जातिभेदः कथं भवेत्॥५२७
सृष्टिकृद्ब्रह्मपुत्रत्वं सर्वसाधारणं ह्यतः। तादृग्व्युत्पत्तिमाश्रित्य सर्वे स्युर्ब्राह्मणा भुवि॥५२८
राजन्येषु च तादृक्षु योऽस्त्यत्यन्तबलाधिकः। स राजा क्रियते लोके भिन्नराष्ट्रेष्वपीदृशः ५२९
तादृशस्यैव वेदेषु श्रद्धालोरिह सम्मतः। राजसूयाधिकारोऽपि चाभिषिक्तस्य भूपतेः ५३०
अभिषिक्तस्य राजत्वमन्यथा क्षत्रियस्त्वसौ। याजमान्यं यथा दीक्षां प्राप्तस्यैव तथा भवेत्॥५३१
राजानमभिषिञ्चेति प्रयोगो भाविनं नृपम्। राजशब्दः समाचष्टे चौदनं पचतोति वत्॥५३२
वृणोते ऋत्विजो यूपं छिनत्तीति श्रुतिष्वपि। गृहस्थः सदृशीं भार्यामुपेयादिति च स्मृतौ ५३३
प्रयोगा बहवः सन्ति भाविनीं वृत्तिमाश्रिताः। तद्वदेवादधीताग्नीन् ब्राह्मणादिरिति श्रुतौ ५३४
अङ्गीकारे च कस्यापि न काचिद्धानिरापतेत्। कुतो वृथा जातिवादो रक्षितव्यो भवेदिह ५३५
शब्दानां भाविनी वृत्तिर्भाष्यवार्तिकसम्मता। ऋत्विग्वरणयूपादौ साऽस्तु वर्णपदेष्वपि॥५३६
यदुक्तं वार्तिके मातापितृजा ऋत्विजस्त्विति। अध्ययनेन चार्त्विज्यं नमनं वरणादिति ५३७
तच्चापि देवदत्तादिर्जातो दास्यादिगर्भतः। इत्यादाविव संज्ञैव भाविनी वरणोत्तरा॥५३८
न क्वापि देवदत्तादि संज्ञा तज्जन्मकालिकी। किन्तु पश्चात्स्वपित्रादिकृतैवेति प्रदृश्यते ५३९
पौर्वापर्यस्य वेदानां पर्यालोचनया यथा। ऋत्विक्त्वं वरण देव भरणाच्चेतिवार्तिके॥५४०
तत्पर्यालोचनेनैव ब्राह्मणत्वादिकं तथा। पशुपक्ष्यादिवज्जन्म-सिद्धा जातिर्भवेन्नहि॥५४१॥
किन्तु प्राग्दर्शितश्रौतस्मार्तनैजगुणैस्तथा। आधानादिक्रियाभिश्च सिध्येदुत्पत्यनन्तरम् ५४२

राज्ञोऽपत्यं राजन्यः यहाँ अपत्यशब्द का अर्थ पुत्र नहीं किन्तु शासन व्यवस्था में शौर्यधैर्यादि के साथ राजा की आज्ञा से पालन करने वाला है। एवं ब्राह्मण भी ब्रह्म (वेद) की आज्ञा पूरी तरह से पालन करने वाला है न कि ब्रह्माजी का पुत्र। सृष्टिकर्ता ब्रह्माजी के पुत्र सभी हैं। ब्राह्मणरूप वेदभाग भी मन्त्ररूप ब्रह्म का सन्तान ही कहा जाता है। ऐसे राजन्यों में अत्यधिक बलशाली, राजा चुना जाता है और अभिषेक के बाद ही राजा माना जाता है। वेदों में श्रद्धालु राजा ही राजसूयाधिकारी है। राजानमभिषिञ्च-दित्यादि प्रयोगों में राजशब्द भावी राजा को बताता है। एवं 'ऋत्विजो वृणोते यूपं छिनत्ति घटं कुरु' इत्यादि स्थलों में ऋत्विगादि शब्द, वरणानन्तर भावि ऋत्विगादि को बताते हैं। ऐसे ही "वसन्ते ब्राह्मणोऽग्नीनादधीत" इत्यादि में ब्राह्मणादि शब्द "गृहस्थः सदृशीं भार्यामुपेयादित्यादि" की तरह भावि ब्रह्मणादि को बताते हैं। ऋत्वगादि शब्दों में भाविनीवृत्ति भाष्यवार्तिक सम्मत भी है। आगे वार्तिक में ऋत्विक, मातापितृजन्य है जो कहा गया था वह भी दासी गर्भ से देवदत्तादि पैदा हुआ है इत्यादि की तरह वरणोत्तर भावि संज्ञा ही है। देवदत्तादि नाम भी उत्पत्ति काल में नहीं किन्तु बाद में

पित्रादि के द्वारा रखा जाता है। एवं श्रौतविधियों में आये हुए ब्राह्मणादि शब्दों की भी भाविनी वृत्ति मानने पर सब कुछ ठीक हो जाता है तो उन्हीं के आधार पर जन्मसिद्ध जाति मानना बेकार है। जैसे वार्तिक में कहा गया है कि वेद की पौर्वापर्यपर्यालोचना करने पर ऋत्विक्त्व की सिद्धि, वरणभरणादि से ही होती है वैसे ही वेदपौर्वापर्य की समालोचना करने पर ब्राह्मणत्वादि वर्णों की सिद्धि भी स्वाभाविक आत्मगुणों से और आधानादिक्रियाओं से ही होती है।

मन्त्रस्य ब्रह्मण इति, उक्तं च गजानन शर्मणा तै० संहिताभूमिकाकर्त्रा "ब्रह्मसंज्ञितस्य मन्त्रभागस्यैव मुख्यं वेदत्वं, विधिभागस्य तु ब्रह्मण इदं ब्राह्मणमिति मन्त्रसम्बन्धित्वादगौणं वेदत्वमिति। प्रकृते वर्णपरकब्राह्मणशब्दोऽपि ब्रह्मसम्बन्धित्वेनापि वा ब्रह्मशब्दादण् प्रत्यये कृते, निष्पद्यते। ब्रह्मसम्बन्धित्वं चात्रात्यादरेण तदाज्ञापालनमेव। "ब्रह्म वै ब्राह्मणस्य स्व" मित्युक्तेः। न च ब्रह्मब्राह्मणयोर्वेदत्वसाम्येन सम्बन्धसत्वेऽपि विभिन्नजातीययोर्ब्रह्मब्राह्मणयोः कथं सम्बन्ध इति वाच्यम्। आज्ञाकर्तृत्वतत्पालयितृत्वरूपसम्बन्धस्य सत्वात्। वेदापौरुषेयत्ववादे विधिरूपाज्ञाकर्तृत्वं वेदस्यैव। अत एव "ग्रहं सम्मार्ष्टीत्यत्रैकत्वस्योद्देश्यगतत्वेनाविवक्षितत्वं पशुना यजेतेत्यत्रैकत्वस्य विधेयगतत्वेन विवक्षितत्वं चेति सिद्धान्तः, "विवक्षितगुणोपपत्तेः" ( ब्र० १।२।२ ) इति सूत्रं चोपपद्यते। यथाऽपत्यं पुत्रादिः, पितुराज्ञां पालयति तथा ब्राह्मणे, ब्रह्मा ( वेद ) ज्ञापरिपालकत्वेन राजन्ये राजाज्ञापालयितृत्वसत्वेन च तयोः ब्रह्मराजापत्यत्वोपचारः। वैयाकरणविवक्षितापत्यत्वमपि ब्राह्मणराजन्यादिष्वेतादृशमेव। शब्दस्यैव तैः ब्रह्मत्वाङ्गीकारेणान्यादृशापत्यत्वस्यासम्भवात्। अभिषिक्तस्येति, अत एव "राजेत्येतानभिषिक्तानाचक्षते "इत्युदाहृतं भाट्टदीपिकायाम् ( २।३।३ ) तन्त्रवार्तिके च 'यदा तु वृक्षादिवत्ते लौकिकव्यवहारेष्वप्रसिद्धास्तदाऽर्थादयमर्थो भवति, वरणेन ऋत्विजः करोतीति" भाविनि संज्ञेत्यग्रिमेणान्वयः। एतेन अध्वर्युं वृणीते इति तद्विशेषवचनानि व्याख्यातानि। वेदपौर्वापर्यपर्यालोचनात्तु ते वरणेन क्रियन्ते" इत्यादिकमुक्तम्। एवं वर्णाश्चापि वेदपौर्वापर्यपर्यालोचने सति गुणक्रियादिसिद्धोपाधय इत्येव ज्ञायते न तु जन्मसिद्धजातय इति।

ननु ऋत्विक्समानत्वे वर्णानां वरणं श्रुतौ। न श्रुतं नापि चाचारे कुतो दृष्टमिहेति चेत्॥५४३
वरणं वर्णशब्देन प्रोक्तमेवेति ते पृथक्। न व्रियन्ते हि शास्त्रीयकर्मादाविति चोच्यते ॥५४४
उक्तार्थानामप्रयोगो दृश्यते लोकवेदयोः। तस्माद्वर्णान्वृणोतीति प्रयोगो नास्ति वैदिकः ५४५
न हि दानं ददातीति यागं वा यजतीत्यपि। प्रयोगो दृश्यते किन्तु धनं ददाति चोच्यते ॥५४६
नन्वौणादिकशब्दानां नोत्पत्त्यर्थौ विवक्ष्यते। अन्यथा गोनरादीनां गत्याद्यर्थकता भवेत् ॥५४७
वृणोतेर्वरणार्थस्य कृवृञ्चित्यादिसूत्रतः। न प्रत्यये कृते वर्णशब्दोऽभूदिति चेच्छृणु ॥५४८॥



बहूनामप्युणाद्यन्तशब्दानां यौगिकार्थता। दृश्यतेऽतो न सर्वत्र नियमश्चेष्यते हि सः ॥५४९॥
वधको भीरुको भीरुर्वदान्यो जनिरित्यपि। कृषकः क्रयिकश्चेति शब्दाश्चौणादिका मताः ५५०
यौगिकार्थं विहायान्यस्तेषामर्थो न विद्यते। अतश्च वर्णशूद्रादिशब्दानां यौगिकार्थता॥५५१॥
गोशब्दस्यापि योगार्थो दर्शितस्तन्त्रवार्तिके। सास्नादिमद्व्यक्तिगौश्च प्रवृत्तौ हेतुरित्यपि॥५५२
वधकादिपदानां चेद्रूढत्वं परसम्मतम्। तर्हि वर्णविशेषाभिधायकानां तदस्त्विह ॥५५३॥
वधादिकर्तरि स्युश्चेद्रूढाः शब्दा यदीह ते। तदा शूद्रादिशब्दानां शोकादिमति रूढता॥५५४॥
ननु वर्णान्वृणोतीति वरणं मास्तु कर्मसु। ब्राह्मणान् क्षत्रियादींश्च वृणोतीति कुतो नहि ॥५५५
श्रूयतां ब्राह्मणाश्चर्त्विक्शब्देनैव वृताः श्रुतौ। तदन्ये यजमानाश्च न तद्वरणमिष्यते ॥५५६॥
सत्रेषु यजमानानामृत्विक्त्वेऽपि न सम्मतम्। वरणं नमनाभावादिति मीमांसकाशयः॥५५७॥
यद्युच्यतेऽब्राह्मणोऽपि शमिता श्रुतिसम्मतः। स च जैमिनिसम्मत्या भवेदृत्विगपीति चेत् ५५८
तदोपनयनं तस्य वरणं श्रुतिबोधितम्। तदन्यो यजयानः स्यान्नातस्तद्वरणं पृथक् ॥५५९॥
तस्योपनयन-श्रुत्या शूद्रत्वमवगम्यते। अन्यथा तूपनीतः स्यात्प्रागेवेति विधिर्वृथा ॥५६०॥
पशोर्हिंसा बन्धनं च गोदोहनादिकर्मवत्। युज्यते शूद्रवर्णस्य नाध्वर्योर्नापरस्य वा ॥५६१॥
अथवा नियता वर्णहेतवो हि गुणाः क्वचित्। उद्बुद्धाः पूर्वसंस्कारात्सज्जनत्वादिवज्जने ५६२
सज्जनानां यथा नास्ति वरणं शब्दतो भुवि। किन्तु कार्यानुसारेण मनसा वरणं तथा ॥५६३
यत्र व्यक्तिविशेषे यद्वर्णहेतुगुणोदयः। तद्वर्णत्वेन यज्ञेषु मनसा स वृतो भवेत् ॥५६४॥
अधीतसर्ववेदस्य होतृत्वादिचतुष्टयम्। संभवेदिति कर्मादौ व्रियतेऽन्यतमः पृथक् ॥५६५॥
आर्त्विज्यहेतवो वेदाश्चत्वारोऽप्यनिवार्यतः। अध्येयाः सन्त्यतस्सर्वब्राह्मणार्हं चतुष्टयम् ॥५६६
तस्मात्तस्य च यागादौ वरनेन पृथक्कृतिः। नाटकेषु च पात्राणामिवावश्यक्यभूदिह॥५६७॥
सर्ववर्णनिमित्तास्ते गुणाः सर्वे समेषु न। किन्तु केचित्क्वचिद्व्यक्तावतो वर्णा गुणैः पृथक् ५६८
गुणैरेव पृथग्यस्मात्कृता वर्णास्ततः पुनः। वरणेन न वर्णानां पृथक्करणमुच्यते ॥५६९॥

यहाँ यह शंका की जाती है कि ब्राह्मणादि वर्ण यदि ऋत्विक्समान हैं तो 'ऋत्विजो वृणीते" जैसा विधि है वैसा "वर्णान्वृणीते" ऐसा भी विधि होना चाहिये किन्तु शास्त्रों में वैसा विधि नहीं है। उसका उत्तर है कि वर्ण शब्द से ही वरण कहा जाता है। "उक्तार्थनामप्रयोग" इस नियम के कारण वर्णोंका वरण कहा गया नहीं है। अत एव लोक में दानं ददाति ( दान देता है ) यागं यजते इत्यादि प्रयोग नहीं किन्तु धनं ददाति ( धन देता है ) विष्णुं यजते इत्यादि हैं। यहाँ और एक शंका उठती है कि औणादि शब्दों का यौगिकार्थ नही लिया जाता है। अतः गौ नरादि शब्दों का अर्थ गति और प्रापणादि नही होते है। प्रकृत में वर्ण शब्द भी "कृवृजॄ" इत्यादि उणादि सूत्र से उत्पन्न है। अत इसका भी अर्थ व्रियते इति वर्ण यह अर्थ कहना ठीक नही है। उसका भी उत्तर यह है कि वधकः भीरुकः भीरुः जनिः इत्यादि बहुत से

उणादि शब्दों के यौगिकार्थं लिये जाते हैं। अतः वह नियम सर्वत्र मान्य नहीं। इसलिये प्रकृत में वर्णं शब्द का यौगिकार्थं ही लिया जाता है। कुमारिल भट्ट ने गो शब्द का भी प्रवृत्ति निमित्त सास्नादिमद्गमन ३।७।३७ बताया था। यहाँ तीसरी शंका की जाती है कि वर्णान्वृणीते ऐसा प्रयोग, पूर्वोक्त कारण से न हो किन्तु ब्राह्मणादीन्वृणीते ऐसा वरण शास्त्रों में क्यों नहीं? उत्तर यह है कि ब्राह्मण ही यागों में ऋत्विक् होते हैं। अतः ऋत्विजो वृणीते इसी से ब्राह्मणों का वरण हो जाता है। क्षत्रिय और वैश्यादि यजमान ही होते है और यजमान का वरण नही है। यदि कोई कहे कि शमिता अब्राह्मण भी होता है और वह प्रसिद्ध ऋत्विजों के अन्तर्गत ही है न कि बाहर तो "शमितारमुपनयीत" इस उपनयन विधि से ही उस अब्राह्मण ऋत्विक् का वरण सिद्ध हो जाता है। कर्म मध्य में उपनयन श्रवण से शमिता शूद्र मालूम पड़ता है, नहीं तो बचपन में ही वह हो गया होता। मीमांसक मत में पशुहिंसा, हमारे मत से केवल पशुबन्धन भी, गोदोहनादि की तरह शूद्र का ही कर्म होते हैं न कि अध्वर्यु का न दूसरों का। अथवा ब्राह्मणादि वर्णों का वरण न होने में कारण दूसरा भी हो सकता है। वर्ण हेतु गुण सञ्जनत्वादि की तरह नियत होते है। अतः प्रसंग आने पर सज्जनों का वरणं जैसे मन से ही होता है नकि शब्दों से वैसे ही ब्राह्मणादि का वरण मन से किया जाता है न कि शब्द से। चार वेदों को पढना ब्राह्मणों का कर्त्तंव्य है। अतः वे प्रत्येक व्यक्ति हौत्रादि कर्म कर सकते हैं। इसलिये उनका पृथक्करण के लिये वरण किया जाता है। सर्ववर्णनिमित्त गुण सब में नही रहते किन्तु किसी-किसी में किसी वर्ण का। जिसमें जिस वर्ण के गुण हों वह उन गुणों से स्वयं पृथक् हो जाता है। अतः वरण से उनके पृथक्करण की आवश्यता नहीं।

गोशब्दस्येति, "यथा सास्नादिमद्गमनं गोशब्दस्य" ( ३।७।३७ ) प्रवृत्तिनिमत्त-मित्यनुवर्तते। वस्तुतः सास्नादिमत्वमेव तत्प्रवृत्तिनिमित्तं न तु गमनम्। अप्रयोजकत्वात्। ऋत्विजामेव वरणं न तु यजमानस्य। अतः सत्रेषु यजमानानामृत्विक्त्वेऽपि (१०।६।४५) तेषां वरणं नास्तीति ( १०।२।३४ ) दर्शितम्। ननु शमिता ऋत्विगेव ( ३।७।२९ ) स चाब्राह्मणोऽपि भवति। "वैकर्तं च क्रोम च शमितुः, तद्ब्राह्मणाय दद्याद्यद्यब्राह्मणः शमिता स्यात्" (ऐ० ७।१।१) इत्युक्तेः। तस्य च वरणं न श्रूयते इति चेन्न। "शमितार-मुपनयीतेत्युपनयनविधेरेव वरणविधित्वाङ्गीकारात्। न चाब्राह्मणस्य दक्षिणा नास्तीति वाच्यम्।" हिरण्यं ब्रह्मणे ददाति तेजस्तेन परिक्रीणानि, त्रिसृधन्वं राजन्यायौजस्तेन परिक्रीणात्युष्ट्रा वैश्याय पुष्टिं तेन परिक्रीणाति माषकमण्डलुं शूद्रायायुस्तेन परिक्रीणाति ( काठकसं० ३७।१ ) इत्यादौ सर्वेभ्योऽपि दक्षिणाया उक्तत्वात्। यत्तूक्तं भाश्ये-



वार्तिके चाब्राह्मणस्य ऋत्विक्त्वाभावात् "यद्यब्राह्मणः स्यादिति यजमानविषयं कल्प्यत इति। तन्न, यजमानस्य शमितृत्वानङ्गीकारात्। अध्वर्युकाण्डे पठितपशुहिंसायाः अध्वर्योः परावर्तनेन तत्कर्तृकत्वाभावात् ऋत्विगन्तरेणैव शमित्रा तस्याः क्रियमाणत्वात्। अध्वर्युपरावृत्तिश्च दर्शिता जैमिनिसूत्रसुबोधिनीवृत्तौ "परावर्ततेऽध्वर्युः संज्ञप्यमाना"दिति तृतीयसप्तमपादे शमित्रधिकरणे। अत एवोक्तं "प्राशितायां जाघनीशेषं पत्नी अध्वर्यवे ददाति बाहुं शमित्रे तं स ब्राह्मणाय ददाति यद्यब्राह्मणो भवतीति ( सत्या० श्रौ० )। तट्टीकायां च "एतेन शमिता ब्राह्मणो वाऽन्यो वेति दर्शितम्। कलौ ब्राह्मणस्य शामित्र प्रतिषेधादन्यस्यैव द्विजस्य तदभावे आर्याधिष्ठितस्य शूद्रस्यापि, पाककर्तृत्वं तस्य धर्मेषु स्वयमेव वक्ष्यतो"त्युक्तम्। पाककर्तृत्वं च "आर्याधिष्ठिता वा शूद्रा अन्नस्य संस्कर्तारः" ( २१ ) इति। अत एव विराटराजगृहे भीमसेनः स्वात्मानं शूद्रमुक्त्वा पाचको बभूव। अयं भाग इदानीं मुद्रित भारतग्रन्थान्निष्काशितः किन्तु हस्तलिखितपुस्तकेषूपलभ्यते। दर्शितश्चायं पाठ भेदः पूनाभण्डारकारमुद्रापितग्रन्थे, स च काश्यामपि गोयनकादिपुस्तकालयेषु द्रष्टुं शक्यते। एतेन ब्राह्मणमात्रस्यैवार्त्विज्यमिति यदुक्तं द्वादशान्ते तदनादरणीयमेव।

अवेष्टौ ब्राह्मणादीनामस्तु नामाधिकारिता। आधानेऽसर्वशेषत्वमपि स्यान्नाम नस्ततः ५७०॥
न किञ्चिद्बाधते चातुर्वर्ण्योपाधित्ववादिनाम्। यत्रचैतद्विरोधोक्तिस्सैव यत्नेन दूष्यते ५७१॥
यच्चाग्रे रथकर्तृत्वसंभवाद्ब्राह्मणादिषु। वर्षास्वाधानमप्येषां भवेदिति विशङ्कितम् ॥५७२॥
तदयुक्तं ब्राह्मणत्वं यतो रथं प्रकुर्वतः। शास्त्रेण बाधितं चातः सा शङ्केव न सङ्गता ५७३॥
शिल्पवृत्तिर्हि शूद्रस्य जीविकात्वेन सम्मता। सा ब्राह्मणस्य ब्राह्मण्यनाशिकैवेति निश्चितम्
अतश्च रथकारत्वं रथमेव प्रकुर्वतः। अध्वर्युत्ववदाध्वर्यं श्रौतकर्मसु कुर्वतः ॥५७५॥
पादरक्षौ प्रकुर्वाणश्चर्मकारो निगद्यते। स च ब्राह्मणपुत्रो वा शूद्रपुत्रोऽपि वा भवेत् ५७६॥
करोति यादृशं कर्म तन्नाम्नाऽऽहूयते जनैः। पुरोहितोऽध्यापकादिव्यवहारस्तथापि च ५७७॥
भ्रातॄणामप्यन्यतमो वणिग्वैद्योऽपरो भुवि। ज्योतिषो वैदिकश्चान्यो राजभृत्यश्च दृश्यते५७८॥
तेषु यो वैदिको दृष्टः स एव ब्राह्मणो मतः। तदन्येऽब्राह्मणाः प्रोक्ताः श्रुतिस्मृत्यादिकोविदैः
सृष्ट्यादौ रथकारत्वं जन्मसिद्धं न चाभवत्। किन्त्वैच्छिकं रुच्यधीनं तस्मादद्यापि तत्तथा ॥
पञ्चस्याप्यनादित्वमाश्रित्योत्पत्तिसिद्धताम्। वदन् मीमांसको लोके वैदिकत्वं जहात्यपि ॥
जगदुत्पत्तिसंहारौ सर्वश्रुतिसमीरितौ। स्वकीयाक्षिपिधाने च जगदन्धं भवेन्न हि ॥५८२॥
यैस्तूत्पत्तिलयाविष्टौ तन्मते रथकारता। शूद्रत्वादिकमप्यग्रे निसर्गात्कस्य चिद्भवेत् ५८३॥
वर्णोत्पत्तिर्मुखादिभ्यो वन्ध्यापुत्रोद्भवोपमा। कुमारिलेनापि तस्यास्तथाविधत्वमिष्यते ५८४॥
वस्तुतो जातिसूत्रस्य स्यादुदाहरणान्तरम्। कार्यकारणयोर्यत्र सामानाधिकरण्यतः ॥५८५॥
एकत्वमुच्यते वेदे तत्राशङ्क्य विरुद्धताम्। तज्जन्यत्वेन चैकत्वमुक्तमित्येव वारयेत् ५८६॥
मनुतो मानवोत्पत्तिर्जाता गोऽश्वादिजन्तुवत्। त्रेतायां वर्णभेदश्च यज्ञार्थो गुणकर्मभिः ५८७॥
स्कान्दे भागवते चोक्तं मर्त्यांश्चैकविधान् प्रभुः। जनयामास न त्वेतान्वर्णभेदपुरस्सरम् ५८८॥

मध्ये कालवशादङ्गीकृता जातिव्यवस्थितिः । तत्कार्यनाशतो नष्टा नेदानीं क्वापि दृश्यते ५८९
वाणिज्ये राजभृत्यत्वे श्रौताध्यापनवर्जने । स्कान्दे प्रोक्तं क्रियालोपे ब्राह्मण्यं न भवेदिति ५९०
मार्कण्डेयस्मृतावेवमब्राह्मण्यं च षड्विधम् । राजभृत्यादि भेदेन सर्वेऽद्याब्राह्मणा ह्यतः ५९१॥

अवेष्टि में ब्राह्मणादि का अधिकार हो और आधान भी सर्वयज्ञाङ्ग न हो, उससे हमारा कुछ बिगड़ता नहीं। जहाँ चार वर्ण जन्मसिद्ध जातियाँ कही जाती हैं, उसीको हम खण्डन करते हैं। षष्ठाध्याय के पहले पाद में जो कहा गया है कि रथकारशब्द भी रथं करोतीति उत्पत्ति से ब्राह्मणादिपरक नहीं किन्तु रथकारत्व एक जाति है, यह ठीक नहीं, क्यों! जब शिल्पवृत्ति शूद्र की ही है, तब रथकार ब्राह्मणादि भी हो सकते यह शंका होगी कैसे ! जो रथ बनाता है वही रथकार है चाहे वह ब्राह्मण पुत्र हो या शूद्रपुत्र। चार भाइयों में एक व्यापारी, दूसरा वैद्य, तीसरा सरकारी नौकर और चौथा वैदिक कर्म करनेवाले होते हैं तो उनमें वैदिक ही ब्राह्मण और बाकी सब अब्राह्मण ही हैं। सृष्टि के आदि में रथकार जन्मसिद्ध नहीं रहा किन्तु बाद में अपनी रुचि के अनुसार। अतः वह आज भी वैसा ही रहेगा। प्रपंच को अनादि मानकर उसको जन्मसिद्ध माननेवाला, वैदिक नहीं होगा। वेद में प्रपंच की उत्पत्ति और प्रलय बताये गये हैं। उसमें मीमांसक अपने आँख बन्द करेगा तो भी जगत अन्ध नहीं होगा। जो जगत के उत्पत्ति प्रलय मानते हैं उनके मत में रथकार तन्तुवाय और शूद्र, जन्म सिद्ध नहीं होंगे। ब्रह्ममुखादि से वर्णों की उत्पत्ति, वन्ध्या पुत्र समान मानी जाती है और कुमारिल भट्ट भी इस बात को "तत्सिद्धिजातिसारूप्येत्यादिशूत्र वार्तिक में मान लिया था। मनुशतरूपा से गवादि की तरह मानवजाति पैदा हुई थी और उसमें यज्ञादि के लिये वर्णभेद गुणकर्मों से इस २८ वाँ त्रेतायुग में माना गया था और धीरे-धीरे वह जाति का रूप धारण कर लिया था। जिसके लिये वह ऐसा माना गया था वह काम आजकल बिलकुल छोड़ दिये गये हैं। अतः तदर्थ वर्णजाति भेद भी वस्तुतः नष्ट ही हैं। जाति सूत्र का उदाहरण भी जहाँ कार्य कारण का अभेद विवक्षा से सामानाधिकरण्य दीखता है वही है, जैसे 'अन्नं प्रजाः" पशवो हि यज्ञः।

वाणिज्य इति काशीखण्डे प्रोक्तं वाणिज्ये राजसेवायां श्रौताध्ययनवर्जने । कुविवाहे क्रियालोपे कुलभ्रष्टो भविष्यतीति । अत्र कुलभ्रष्टत्वं ब्राह्मणस्यैव । अन्येषां वाणिज्यादीनां वृत्तित्वात् । अत एव "अब्राह्मणास्तु षट् प्रोक्तास्तान्वक्ष्यामि क्रमेण वः । आद्यो राजभृतस्तेषां द्वितीयः क्रयविक्रयात् ॥ तृतीयस्तु सदा सर्वयाजनेनैव केवलम् । सर्ववर्णसमायुक्तः



ग्रामयाजी तुरीयकः । पौरोहित्यकरस्तेन जीवन्नब्राह्मणः परः ( पञ्चमः ) । नोपासीत द्विजः सन्ध्यां स षष्ठोऽब्राह्मणः स्मृतः ।" इति । एतेनेदानीं प्रायः सर्वेऽब्राह्मणा इत्येव ज्ञायते ।

## शास्त्राधिकारनिर्णयो नाम सप्तमोऽध्यायः

अधिकारो हि सर्वत्र कर्मस्वेव परीक्ष्यते । न तु विज्ञानसंवृद्धिहेत्वभ्यासे विचक्षणैः ॥१॥
पूर्वमीमांसकैश्चापि कर्मस्वेव ह्यधिक्रिया । तदभावश्च केषांचित्कुत्रचित्कर्मणीरिता ॥२॥
अधिकारमनालोच्य सर्वे चेत्सर्वकर्मसु । प्रवेश्यन्ते तदा हानिर्महती संभविष्यति ॥३॥
कश्चिदेव हि कस्मिंश्चित्कर्मण्येव पुमानिह । अधिकारी न सर्वत्र सर्वे स्युरधिकारिणः ॥४॥
वस्त्रनिर्माणविज्ञाने कटके स्वर्णकर्मवित् । केशकर्तनवित्क्षौरे चाधिकारी निगद्यते ॥५॥
वानं च यो न जानाति स चेद्वातुं प्रवर्तते । तन्तून् विमिश्रितान् कुर्याद्विभक्तुमपि दुष्करान्॥६॥
अतो वानं तु यो वेत्ति सोऽधिकारी पटे भवेत् । वस्त्रवानादिविद्यासु तत्संस्कार्यधिकारभाक्॥७॥
सारथ्यकर्मविल्लारीमोटरादिषु सारथिः । यतोऽतज्ज्ञश्च लार्यादौ सारथिश्चेन्मृतिर्नृणाम्॥८॥
सारथ्यकर्मविज्ञानप्राप्त्यभ्यासे तु सर्वकः । तत्संस्कारी तदुत्साही भविष्यत्यधिकारवान् ॥९॥
यद्यसंस्कारवान् तत्तद्विद्याभ्यासेऽनुमन्यते । तदा न कस्यचिद्धानिरनुमन्तुर्मतस्य वा ॥१०॥
न हि तत्तत्क्रियाभ्यासे कुविन्दादिसुतात्परः । तत्तत्संस्कारवान् न स्यादिति वक्तुं च शक्यते।११
कुविन्दश्चोत्तमर्णस्सन्नधमर्णस्तु वाडवः । मृतौ चेत्प्रथमः पुत्रो जन्मान्तरे पिताऽपरः ॥१२॥
कुविन्दो ब्राह्मणापत्यं पूर्वसंस्कारहेतुना । व्यूतौ नैपुण्यमाप्नोति न तु ब्राह्मणकर्मणि ॥१३॥
व्याकरणादिशास्त्राणामप्यध्यापनकर्मणि । अधिकारो स एव स्याद्यस्तानि प्रागधीतवान् ॥१४॥
व्याकरणादिकमध्येतुं स समर्थो भविष्यति । यस्य तादृशसंस्कारः पूर्वजन्मत आगतः ॥१५॥
एवं वेदशास्त्रोक्तकर्मसूच्चावचेष्वपि । तत्तद्वेदविद्वांसो भविष्यन्त्यधिकारिणः ॥१६॥
तत्तद्वेदसमभ्यासे त्वधिकारी स एव हि । यस्य प्राक्तनसंस्कारस्तत्तद्वेदे समुत्कटः ॥१७॥
यद्यसंस्कारवान् वेदमध्येतुं सम्प्रवर्तते । जातिवाद्यपि वा तं चेत्प्रवेशयत्यसंस्कृतम् ॥१८॥
समध्येतुमशक्तस्सन् निवर्तेत स्वयं पुमान् । तावता कस्यचिद्धानिर्दोषो वा न भविष्यति ॥१९॥
पुण्यं वा दुष्कृतं वाऽपि कर्मभिः साध्वसाधुभिः न तु तज्ज्ञानमात्रेण इति सर्वत्र निश्चितम् ॥२०॥
दानधर्मादिकं सर्वे कर्तुं जानन्ति मानवाः । तथापि ते न दानादि पुण्यमीषदिहाप्नुयुः ॥२१॥
किन्तु ये दानधर्मादि नित्यं कुर्वन्ति कर्म ते । लभन्ते सुकृतं लोके सुखादीष्टफलप्रदम् ॥२२॥
वधं चौर्यं बालहत्यां मिथ्याभाषणमप्युत । कर्तुं सर्वेऽपि जानन्ति तावता ते न पापिनः ॥२३॥
किन्तु चौर्यादिकं कर्तुं साहसं ये च कुर्वते । त एव पापिनश्चेति प्रसिद्धं लोकवेदयोः ॥२४॥
एवं वेदान् तदुक्तं वा कर्मजातं विदन्त्वमी । न तावता पुण्यपापफलभाजो भवन्ति ते ॥२५॥

अधिकारी और अनधिकारी की परीक्षा कर्तव्य कर्मों में ही होती है न कि उन कर्मों के जानने में, पूर्वमीमांसक भी वैदिक कर्मों में हो किसी का अधिकार किसी का अनधिकार बताते हैं। अधिकारि परीक्षा के बिना सभी कर्मों में

सभी का प्रवेश मानने पर बहुत ही अनर्थ हो जायगा। कपड़ा बुनाना या लारी चलाना जो ठीक जानता है उसी का उस काम में नियुक्ति होती है। अनभिज्ञ को उस में नियुक्त करने पर वह सूत को ही खराब कर देगा, या किसी के ऊपर लारी चला देगा। अंत: उस में अधिकारिपरीक्षा आवश्यक होती है, किन्तु उस विद्या का अभ्यास करने में ऐसी परीक्षा नही होती है। जिस में जिस की रुचि हो वह उस काम सीख सकता है। एवं व्याकारणादि शास्त्र के अध्यापन ( पढाना ) के लिये वही अधिकारी माना जाता है जो उस शास्त्र को ठीक जानता हो, किन्तु उसके अभ्यास ( पढ़ना ) में जिन की रुचि हो वे सभी अधिकारी होते हैं। इसी प्रकार वेदविद्याओं में भी अभ्यास ( जानने ) के लिये अधिकारिपरीक्षा नही किन्तु वेदों को ठीक अभ्यास करने के बाद उनको पढाने में अधिकार की परीक्षा होती है। यहाँ यह कहना भी उचित नही कि ब्राह्मण पुत्र ही वेद पढ़ने में तेज होगा न कि दूसरे का पुत्र। क्यों ? पिता पुत्रादि सम्बन्ध, पूर्वजन्म का ऋणानुसार होता है और विद्या का संस्कार पूर्वजन्म के कर्मों के अनुसार होता है। पूर्वजन्म में शूद्र से ब्राह्मण ऋण लेकर चुकाया नही हो तो वह शूद्र, जन्मान्तर में उस ब्राह्मण का पुत्र होगा किन्तु पूर्व जन्म में न पढ़ने के कारण वह ब्राह्मण पुत्र होने पर भी मूर्ख ही रहेगा। इसी प्रकार ब्राह्मण भी ऋणसम्बन्ध से शूद्र पुत्र हो सकता है। ब्राह्मण, पूर्वजन्म में पठित हो तो वह शूद्रपुत्र होने पर भी शास्त्रों में कुशल ही रहेगा। अतः पुत्र की बुद्धिमत्ता में पिता के वर्ण से कोई सम्बन्ध नही, यह बात सभी को अनुभवगोचर ही है। यदि कोई पूर्व संस्कारशून्य पुरुष, वेदशास्त्र पढ़ने को तैयार होगा तो कुछ बिगड़ता नहीं। वेद पढ़ना उससे होगा नहीं तो वह स्वयं ही छोड़ देगा। पुण्य और पाप भी तत्तत्कर्म करने से होते है न कि उनके ज्ञान मात्र से। दानधर्मादि करना सभी प्रायः जानते हो हैं तो भी उतने से उनको पुण्य नही मिलेगा किन्तु दानधर्मादि करने से, एवं चोरी शिशुहत्या और झूठ बोलना, सभी जानते हैं उतने से उनको पाप भी नही होगा किन्तु चोरी इत्यादि करने से। एवं वेदशास्त्र पढ़ने से और वैदिक कर्मों का विधान जानने से भी न किसी को पुण्यं होगा, अतएव न पाप भी होगा।

यत्पुण्यं तद्वेदशास्त्र-विहितानुष्ठितेर्भवेत्। पापं च तन्निषिद्धानुष्ठानादेव नृणामिह ॥२६॥
एतच्चापि निषेध्यानुष्ठानं स्याद्यत्र रागतः। तत्रैव पापसंस्पर्शः क्रतुवैगुण्यमन्यथा ॥२७॥
प्रतिषिद्धस्य चौर्यादेरनुष्ठानं हि रागतः। तन्निषेधश्च शास्त्रेण तस्मात्पापं ततो भवेत् ॥२८॥
विहितौ प्राग्दानहोमौ द्विजमात्रस्य शास्त्रतः। दीक्षितस्य निषिद्धौ तौ न पापं चेदनुष्ठितौ ॥२९॥



किन्तु तेन क्रतोरेव वैगुण्यं संभविष्यति। तेनापि च फलाभावस्तत्क्रतोरेव नान्ययोः ॥३०॥
दीक्षितकृतदानादेरवश्यं तु फलं भवेत्। तस्यापि श्रुति शास्त्रेण विहितत्वाद् द्विजान् प्रति ॥३१॥
एवं शूद्रस्य मर्त्यत्वात्तत्सामान्येन शास्त्रतः। वेदशास्त्रे गतिः प्राप्ता द्विजवन्न तु रागतः ॥३२॥
शास्त्रेण चेन्निषिद्धा सा दीक्षितंप्रतिहोमवत्। तथापि तत्र शूद्रस्य प्रवृत्तावप्यघं न हि ॥३३॥
किन्तु वेदज्ञशूद्रानुष्ठितयज्ञादितः फलम्। स्वर्गपश्वादिकं न स्यान्न्यायादेव च दर्शितात् ॥३४॥
स्वर्गादिव्यतिरिक्तं च वेदविद्यादि यत्फलम्। द्विजसाधारणं तत्स्याद्बाधकाभावहेतुना ॥३५॥
एवं वेदाधिकारस्य सिद्धौ शूद्रस्य वैदिकः। वेदाङ्गभूतः संस्कारः स्यादेव ब्राह्मणादिवत् ॥
तस्माद्वैदिकविज्ञानं सम्पिपादयिषुर्नरः। यः कोऽपि वेदशास्त्रेषु निर्भयं सम्प्रवर्तताम् ॥३७
न चैतदपि धीमद्भिर्वक्तुं शक्यं यदत्र हि। ब्राह्मणात्मज एव स्यात्तादृक्संस्कारवानिति ॥३८
यतः प्राग्जन्म सम्बद्धाद्दर्शितादृणहेतुतः। वेदविद्ब्राह्मणोऽपीह वृषलस्य सुतो भवेत् ॥३९॥
तं जातिवादी मन्येत वृषलं वेदसंस्कृतिम्। एकदा श्रावमात्रेण धारयन्तमपि श्रुतिम् ॥४०
एवं शूद्रमपि ब्रह्मकुले ऋणविशेषतः। उत्पन्नं वेदसंस्कारशून्यं प्राग्जन्मतोऽपि च ॥४१॥
तं ब्राह्मणं जातिवादी मन्येतैकमपि श्रुतेः। वाक्यं धारयितुं नैव समर्थं पठितुं मुहुः ॥४२॥
अतो जाति प्रथायां हि महती चाव्यवस्थितिः। तां त्यक्त्वा वेदविद्यासु प्रवेश्यन्तां समे जनाः ॥
गोपनं शास्त्रविद्यानां क्षीणताहेतुरुच्यते। तस्मात्सर्वान् जनान्सर्वा विद्याश्चाध्यापयन्तु ते ॥
ननु रहस्य विद्येति प्रसिद्धं शिरसः श्रुतेः। तेन विद्याप्रवेशेऽपि चाधिकारी परीक्ष्यते ॥४५॥
स्वीयराष्ट्रस्थितिश्चान्तर्वर्तिनी स्वस्य शत्रवे। न ज्ञाप्यते ततः सर्वं सर्वैर्ज्ञेयं नहीति चेत् ॥
तत्राप्यनिष्टकर्माणि करिष्यन्तीति भीतितः। तद्रहस्यं च सा नीतिः नाम्येभ्यो ज्ञाप्यते स्वतः ॥
खला रहस्यविद्यातः सिद्धिं प्राप्याणिमादिकाम्। रावणादिवदेवान्यान् हिंसिष्यन्तीति गोप्यते ॥
शत्रवः परराष्ट्रस्य स्थितिं ज्ञात्वा च दुर्बलाम्। बलादेवाक्रमिष्यन्तीत्यतो न ज्ञाप्यते स्वतः ॥
यत्र तादृग्भयं नास्ति तस्मै सर्वं प्रकाश्यते। तस्मात्सर्वत्र कर्माभिप्रायतो योग्यतेक्ष्यते ॥
भृगुमरीचिस्मृत्यादौ सर्वमेतत्प्रदर्शितम्। व्यासजैमिनिसूत्राणामपीदमुपपद्यते ॥५१॥
तत्रादौ जैमिनेश्चाधिकारसूत्रार्थवर्णनम्। कृत्वाऽन्ते व्याससूत्राणां तात्पर्यं वर्णयिष्यते ॥५२॥

परन्तु पुण्य, विहितानुष्ठान से और पाप निषिद्धानुष्ठान से होता है। वह भी निषिद्धानुष्ठान जहाँ राग से होता हो। चोरी करना और झूठ बोलना, राग से होते हैं। अतः वे शास्त्र से निषिद्ध भी हैं। ऐसे निषिद्धों के करने से पाप होता है। सामान्यतः शास्त्र से विहित का विशेषावस्था में निषेध होने पर भी उसके करने से क्रतुवैगुण्य हो होगा न कि पाप। दान होमादि द्विजों को विहित हैं और दीक्षित के लिये वे निषिद्ध हैं। यदि दीक्षित दानादि करेगा तो क्रतुवैगुण्य होगा न कि पाप। दानादि का फल तो मिल ही जायगा इसी प्रकार मनुष्य मात्र के लिए सामान्यरूप से वेदशास्त्रों में अधिकार, "अपिवा तदधिकारान्मनुष्यधर्मः स्यात्" अस्य शाबर भाष्यं "मनुष्याधिकारं

शास्त्रं समधिगत"मिति "धर्मो मनुष्याः, मनुष्येभ्य एवयज्ञं प्राह" (गोपथ २।१३). इत्यादि प्रमाणों से सिद्ध है और जातिवादी के मत में वह अधिकार शूद्र के लिये निषिद्ध हैं तो ऐसे निषिद्धाचरण शूद्र करेगा तो भी पाप नहीं होगा और उसका याग भी फलप्रद नहीं होगा किन्तु उस निषिद्धाचरण का फल अर्थात् वेदशास्त्र पढ़ने का जो फल है अर्थज्ञानादि, वह मिल ही जायगा। शूद्र का भी इस प्रकार शास्त्राधिकार मिल जाने का कारण शास्त्रांग भूत उपनयन भी उसको प्राप्त है। अतः वेद पढने में उत्साही सब भयरहित होकर उसे पढ़ें। शास्त्रों को गुप्त रखने से उनका ह्रास ही होगा। अतः पण्डित भी सबको पढ़ावें। किसी चीज को भी जानने में दोष या पुण्य नहीं, किन्तु उसके करने में ही है। उपनिषद इत्यादि रहस्यविद्या के ज्ञान से सिद्धि पाकर यदि कोई रावणादि की तरह दूसरों को धोखा देनेवाला हो तो, ऐसे व्यक्ति से भी वह विद्या विपरीत काम के कारण से ही छिपी जाती है। जहाँ वैसे दुष्कर्म की संभावना नहीं उसके लिये सब रहस्य बताया जा सकता है। यह बात भृगुस्मृति में कही गयी है।

भृगुमरीचेति "अधिकारादिचर्चा हि कर्मसु क्रियते सदा। न ज्ञाने नापि तद्धेतुपठनादौ मनीषिभिः ॥ ज्ञाने तत्साधने शास्त्रविद्याभ्यासे तु केवलः। प्राक्तनस्त्वात्मसंस्कारो ह्यधिकारस्य कारणम् ॥ यस्य प्राक्तनसंस्कारो यच्छास्त्राधिगमोचितः। तस्य तत्राधिकारस्तु जन्मसिद्धः प्रकीर्तितः ॥" ( २।२३-५ )

अविशेषाच्चतुर्वर्णान् शास्त्रं चाधिकरोत्यपि। इति जैमिनि सिद्धान्तः सूत्रे सम्यक् प्रदर्शितः ॥
यत्तु सूत्रमिदं भाष्ये पूर्वपक्षपरं मतम्। तन्न, व्याससमृतेर्यस्माद्विरुद्धं स्यात्तथा सति ॥५४॥
व्याससमृताविदं प्रोक्तं यच्छूद्रो धर्ममर्हति। कर्तुं वर्णत्वसामान्यादित्यतो युक्तमेव तत् ॥५५॥
अत्रात्रेयः पूर्वपक्षी सिद्धन्तो बादरिर्मुनिः। शूद्रस्याद्यस्त्वनर्हत्वं द्वितीयोऽर्हत्वमिच्छति ॥५६॥
अपिवेति गिराऽऽरब्धं सूत्रं सिद्धान्तसूचकम्। इत्ययं नियमो नास्ति पूर्वपक्षपरं ह्यपि ॥५७॥
नामाप्यस्यापशूद्राधिकरणं त्विति समन्त्रकम्। प्रयोगमभिसन्धाय कैश्चिदेवाभिधीयते ॥५८॥
अमन्त्रकप्रयोगे च शूद्राधिकरणं त्विदम्। पश्वाद्यनधिकारस्य प्रत्युदाहरणं भवेत् ॥५९॥
पशोरनधिकारे हि पशुतुल्यस्य सोऽस्ति वा। न वेति संशये चादोऽधिकरणं प्रवर्तितम् ॥६०॥
अत्रिगोत्रसमुत्पन्नपण्डिताभिमतं त्विदम्। अग्न्याधाने त्रिवर्णानां निर्देशादित्यधिक्रिया ॥६१॥
तत्राहिताग्निरेव स्याद्वैदिकेष्वधिकारवान्। किन्त्वनाहितवह्नेश्च क्वचिदिष्टावधिक्रिया ॥६२॥
इष्टा वाऽनाहिताग्नेर्हि कर्तव्येष्टिश्च वर्तते। यच्चतुर्होतृहोमादि नातोऽनिर्देशदूषणम् ॥६३॥
अद्यनिर्देशमात्रेण शूद्रस्यानधिकारिता। तदाऽथर्वणवेदस्य न स्याद्धर्मे प्रमाणता ॥६४॥
मन्त्रप्रयोगे सर्वत्र त्रयो वेदाः प्रदर्शिताः। न त्वथर्वणवेदश्च तावता किं स नेष्यते ॥६५॥
विद्याश्चतस्र इत्यत्र वेदत्रयं प्रदर्शितम्। त्रैविद्याः सोमपा यज्ञैः स्वर्गं प्रेप्स्यन्त्यपीरितम् ॥६६॥



यज्ञं व्याख्यातुकामेन हिरण्यकेशिनेरितम्। श्रौतसूत्रे त्रिभिर्वेदैर्यज्ञो विधीयते त्विति ॥६७॥
वेदोत्पत्तिप्रसङ्गेऽपि त्रयो वेदाः प्रदर्शिताः। ऋग्वेदोऽग्ने यजुर्वेदो वायोः साम च सूर्यतः ॥
सूर्योऽशून्यस्त्रिभिर्वेदैरेति पूर्वाह्णमध्यगः। सायाह्नगश्च ऋग्भिर्यजुर्भिस्सामभिः क्रमात् ॥६९॥
ऋग्यजुस्सामगैर्मन्त्रैरग्निहोत्रं प्रवर्तते। तैरेव क्रतवोऽपीति चाब्रवीद्वृद्धगौतमः ॥७०॥
वेदत्रयस्य मीमांसा-शास्त्रे लक्षणमुच्यते। पादार्थाभ्यां वृत्तबद्धा ऋचः सामानि गीतयः ॥
वृत्तगीतविहीनाश्च यजुर्मन्त्राः प्रकीर्तिताः। नात्राप्यथर्ववेदस्य नाम निर्दिश्यते बुधैः ॥७२॥
स्वरेऽप्युच्चैर्ऋचोपांशु यजुषा क्रियते त्विति। उच्चैः साम्नेति चाख्यातं नामेहाथर्वणस्य न ॥
सर्वत्र सर्वथाऽथर्ववेदनाम न दर्शितम्। एतावता किमेतस्य नेष्यते धर्ममूलता ? ॥७४॥
यदि वेदत्वसामान्यात्क्वचित्किञ्चित्प्रदर्शनात्। तस्यापि धर्ममूलत्वमिष्यते चेदिहापि च ॥
शूद्रे वर्णत्वसामान्यात्क्वचित्किञ्चित्प्रदर्शनात्। श्रौतकर्माधिकारः स्यादनिषिद्धस्थलेष्विह ॥
नैवाप्रदर्शनं दोषः किन्त्वत्र प्रतिषेधनम्। न तद्धि शूद्रवर्णस्य दृश्यते श्रुतिसागरे ॥७७॥
आधानेऽप्यविधानेन नोक्ताऽन्यैरधिकारिता। न तु तत्प्रतिषेधेन तस्माच्छूद्रस्य सा भवेत् ॥
बहुष्वपि प्रयोगेषु द्विजानामप्यधिक्रिया। नैव विधानतः किन्तु निषेधाभावमात्रतः ॥७९॥
"तस्याच्छूद्रोऽनवक्लृप्त" इत्युक्ति र्न निषेधिका। किन्त्वर्थवाद अन्येषां प्रशंसार्थं प्रदर्शिता ॥
यथाऽन्येऽपशवस्सन्ति गो अश्वेभ्य इति श्रुतौ। अजादावपशुत्वोक्तिः प्रशंसा गोऽश्वयोरिह ॥
न त्वजादौ पशुत्वस्य निषेधार्थं तदिष्यते। तथैव प्रकृते वर्णत्रयस्य स्तुतिरुच्यते ॥८१॥
तद्यथैवाश्वशीर्षादेरुपधानस्थलान्वितम्। न त्वन्यत्र च तत्राप्यपशोरालम्भदर्शनात् ॥८२॥
तथा यज्ञेऽनवक्लृप्तिरग्निष्टोमादिसप्तके। एकाहाहीनसत्रेषु पर्यवस्यति नापरे ॥८३॥
ब्राह्मणः क्षत्रियो वैश्यश्चाग्निष्टोमे प्रशस्यते। न तु शूद्रोऽमन्त्रकेऽपीत्येवं स पर्युदस्यते ॥८४॥
पुराकल्पसजातीयवाक्यत्वादर्थवादता। ब्रह्मणादसमुत्पन्नस्तस्माच्छूद्रे न यष्टृता ॥८५॥
मन्यसे चेन्निषेधं तं शूद्रो नैव यजेदिति। तदाऽस्यार्थान्तरं ज्ञेयमथर्वणनिषेधवत् ॥८६॥
तस्मादथर्वणेनार्यो न शंसेदित्यमुष्य च। त्रयीकर्मसु शंसेन्न इत्यर्थः खलु वर्णितः ॥८७॥
एवं शूद्रोऽनवक्लृप्त इति चेत्प्रतिषेधकम्। तदाऽग्निष्टोममात्रे स्याच्छूद्रस्य प्रतिषेधनम् ॥८८॥

जैमिनी महर्षि 'चातुर्वर्ण्यमविशेषात् ( ६।१।२५ ) इस सूत्र में कहते हैं कि वेदोक्त चार वर्णों का तत्तद्वैदिक कर्मों में अधिकार है। यह व्याससमृति के अनुसार ही है। उसमें दिखाया गया है कि वर्ण वैदिक कर्मों के लिये हैं और शूद्र भी वर्णों में एक है। अतः वह भी मन्त्र के बिना यागादि कर सकता है। भाष्य में इसको पूर्वपक्ष सूत्र मानकर जो कहा गया है वह उक्त व्याससमृति का विरुद्ध है। इसमें आत्रेय पूर्वपक्षी और बादरि महर्षि सिद्धान्ती है। पहला, शूद्र को अधिकारी नहीं मानता और दूसरा उसे मानता है। इस अधिकरण का अपशूद्राधिकरण नाम भी समन्त्रक प्रयोग के अभिप्राय से कहा गया है। अमन्त्रक प्रयोग की दृष्टि में तो यह शूद्राधिकरण ही है। पहले अधिकरण में पशुओं का

शास्त्रों में अधिकार नहीं माना गया। इस में पशुतुल्य शूद्र का अधिकार सिद्ध किया जाता है। आत्रेय का अभिप्राय यह है कि अग्नि के आधान प्रकरण में त्रैवर्णिकों का निर्देश है। अतः तन्मात्र का ही अधिकार होगा। यह तो ठीक नही, क्यों ? अनाहिताग्नि का भी कर्तव्य चतुर्होतृहोम है। यदि अनिर्देश मात्र से शूद्र का अधिकार नही है तो अथर्वण वेद भी धर्म में प्रमाण नही होगा, क्यों ? यज्ञ प्रयोगों में सर्वत्र तीन वेदों का ही निर्देश किया गया न कि अथर्वण वेद का। एतावता क्या ? उसका धर्म में प्रामाण्य नही हे ? वेदत्व उसमें रहने से और उसका भी कहीं निर्देश किया जाने से यदि प्रामाण्य है, तो शूद्र वर्ण है और कहीं २ उसका निर्देश भी है। अतः उसका भी अधिकार अनिषिद्ध स्थल में होगा। अनिर्देश मात्र अनधिकार कारण नहीं किन्तु निषेध ही है। शूद्र का निषेध श्रुतियों में नहीं दीखता है। आधान में शूद्र का निषेध भी नहीं और विधान भी नही। बहुत प्रयोगों में द्विजों का भी अधिकार, विधान से नही किन्तु निषेधाभाव से ही है।" तस्माच्छूद्रो यज्ञेऽनवक्लृप्त" यह भी निषेध नहीं किन्तु त्रैवर्णिक प्रशंसा के लिये अर्थवाद है। जैसे "अथान्येऽपशवो" यह गोऽश्वप्रशंसार्थक अर्थ वाद है न कि अजादि में पशुत्व का निषेधक। यह भी गवादि शीर्षविधान स्थल में ही है। तदन्यत्र तो अजादि का भी विधान है वैसे ही "शूद्रोऽनवक्लृप्त" यह वाक्य अग्निष्टोमादि सप्तक में और एकाहीन सत्रों में ही त्रैवर्णिक प्रशंसार्थ है न कि शूद्र का सर्वत्र पर्युदास। यह पुराकल्प रूप अर्थवाद है। यदि कोई इसको निषेध मानेगा तो अथर्वण निषेध की तरह इसका भी दूसरा अर्थ बताना होगा।

चातुर्वर्ण्यमविशेषादित्यनेन जैमिनिः कर्मसु सर्वाधिकारं मनुते। व्यासादिस्मृतिसम्मतत्वात्तद्युक्तमेव। अग्रे सूत्राणि द्रष्टव्यानि क्रमशः। व्यासस्मृता विति, तदुक्तं "शूद्रो वर्णश्चतुर्थोऽपि वर्णत्वाद्धर्ममर्हति। वेदमन्त्रस्वधास्वाहावषट्कारादिभिर्विना (१।६) इति। सर्वं कर्मामन्त्रेण कर्तव्यमित्यर्थः। मन्त्रोच्चारणसामर्थ्यहीनस्याशुद्धोच्चारणापेक्षयाऽमन्त्रेण करणमेव वरमित्यभिप्रायः। अपिवेति, "अपिवाऽन्यायपूर्वत्वाद्यत्र नित्यानुवादवचनानि स्युः' अपि वा कर्मवैषम्यादित्यादीनां पूर्वपक्षसूत्रत्वात् "अपिवाऽन्यार्थदर्शनादपि वा वेदनिर्देशादित्यादिसूत्रयोरपि पूर्वपक्षत्वमुप पद्यते। "एषा वाऽनाहिताग्नेरिष्टिर्यच्चतुर्होतारः इति वचनप्रामाण्यात्, प्रजाकामं चतुर्होत्रा याजयेदिति विधि विहितेष्टिरनाहिताग्नरेवेति षष्ठाष्टमे निर्णीतम्। विद्याश्चतस्र इति, अन्वीक्षकी त्रयी वार्ता दण्डनीतिश्च शाश्वती। विद्या ह्येताश्चतस्रः स्युर्लोकसंस्थितिहेतवः। त्रयी विद्या ऋचः सामानि यजूंषि, यज्ञं व्याख्यास्यामः स त्रिभिर्वेदैर्विधीयते, त्रयो वेदा अजायन्त, वेदैरशून्यैस्त्रिभिरेति सूर्यः (तै०, ब्रा०) यदृचा हौत्रं क्रियते यजुषाऽध्वर्यवं साम्नोद्गीथं



त्रयी विद्या भवन्ति, अथ केन ब्रह्मत्वं क्रियते त्रय्या विद्ययेति ब्रूयादित्यादि ष्वथर्वणस्य निर्देशो नास्ति, तथापि तस्य प्रामाण्यं यथाऽङ्गीक्रियते तथा शूद्रस्याधानप्रकरणेऽनिर्देशेऽपि तस्याधिकारः स्यादेव, क्वचिन्निर्देशस्यो भयत्र समानत्वात्। न चानिर्देशमात्रेण तस्यानधिकार, किन्तु "तस्माच्छूद्रो यज्ञेऽनवक्लृप्त" इति निषेधेनेति वाच्यम्। परमते तस्य निषेधत्वाङ्गीकारेऽप्यथर्वणनिषेधस्येवार्थान्तरपरत्वस्यापि वक्तुमुचितत्वात् "तस्मादथर्वणेन न शंसेदिति निषेधस्य, "अथर्वणवेदाधीतैर्मन्त्रैः त्रैवेदिकं कर्म न मिश्रयेदित्यत्रैव तात्पर्यमिति मनुस्मृतेर्मेधातिथिभाष्ये वर्णितं तद्वद्यज्ञे शूद्रनिषेधस्यापि प्रकरणादग्निष्टोममात्रविषयकत्वमेव स्यात्। तस्मादात्रेयमतं "निर्देशाद्वा त्रयाणां स्यादग्न्याधेये ह्यसम्बन्धः क्रतुषु ब्राह्मण श्रुतेरित्यात्रेय "इति सूत्र निर्दिष्टं न साधु। (तत्र ब्राह्मणशब्दस्त्रैवर्णिकपरः)। अनिर्देशस्यानधिकारहेतुत्वाभावात्।

तस्मादबादरिराचार्यः शूद्रस्याप्यधिकारिताम्। प्रकारान्तरतो ब्रूते निषेधाभावहेतुना ॥८९॥
आचार्योऽयं ब्रवीत्यत्र चाधानं कामहेतुकम्। न तु ब्राह्मणवामन्तकालवैशिष्ट्यचोदितम् ॥९०॥
जातपुत्रादिवाक्येन प्राप्ते चाधानकर्मणि। ब्रह्मवर्चसकामादिनिमित्ते चर्तुरिष्यते ॥९१॥
कालाधानयोरेवं प्राप्तौ ब्राह्मण्यवर्चसी। अभिन्ने इति चाख्याति ब्राह्मणाधानचोदना ॥९२॥
न वाक्यभेदशङ्काऽत्र कर्तुं युक्ता मनीषिभिः। यतश्चाप्राप्तवैशिष्ट्यमेकयत्नाद्विधीयते ॥९३॥
प्राप्तेकर्मणि नानेको विधातुं शक्यते गुणः। अप्राप्ते त्वेकयत्नेन बहूनां विधिरिष्यते ॥९४॥
एवं वाक्यार्थसम्पत्तौ वयोमात्रार्थलक्षणा। जातपुत्रादिवाक्यस्य न युक्ताऽऽश्रयितुं बुधैः ॥९५॥
तन्मते विधयः श्रौताः प्राप्य वर्णत्रयं यथा। चरितार्था न शूद्रं ते नाक्षिपन्ति तथैव नः ॥९६॥
जातपुत्रान् कृष्णकेशान् नरान् प्राप्यैव निर्वृताः। अन्यान् ते नाक्षिपन्तीति प्रवक्तुमपि शक्यते ९७॥
जगत्यस्मिन्विशालेऽपि बहवश्च तथाविधाः। जातिप्रथा—परित्यागे मिलिष्यन्ति न संशयः॥९८॥
अयं बादरिराचार्यो मीमांसकद्वयेन च। इष्टः प्रमाणिकत्वेन तस्मात्तद्वचनं प्रमा ॥९९॥
आत्रेयोऽपि क्वचिन्नेष्टो जैमिन्यादिमहर्षिभिः। तस्मादस्माभिरप्यत्र स्वीक्रियते न तन्मतम् १००॥
याज्ञिकैर्नैमित्तिकत्वमाधानस्येष्यते त्विति। आधानपद्धतावुक्तं तस्माद्बादरिवाक् सती १०१॥
य एवमग्निमाधत्ते विद्वानप्यथ चाग्नयः। आधातव्या इति स्याद्वा सामान्याधानचोदना १०२॥
एतत्सूत्रस्य भाष्यं हि समीचीनं प्रतीयते। काम्यकर्मानुसारेण सामग्री संग्रहो यतः १०३॥
नरसामर्थ्यमप्यत्र कारणत्वेन विद्यते। सामग्रीसंग्रहःपुम्भिर्यथाशक्ति करिष्यते ॥१०४॥
गृहनिर्माणकामो हि काष्ठेष्टकादिसञ्चयम्। कुर्याद्भोजनकामश्च स्वेष्टद्रव्यादिसंग्रहम् ॥१०५॥
राजभृत्यत्वकामश्च पठत्याङ्ग्लेयभाषितम्। नावैदिकमधीयीत निषेधेऽपि च जाग्रति ॥१०६॥
नियोज्यालाभतो वेदशास्त्राध्ययनकर्मणि। अध्यापनविधिद्वारा तदध्ययनमिष्यते ॥१०७॥
यथाऽऽचार्यत्वकामश्च बहूनध्यापनाय हि। सञ्चिनोत्यन्यथा स्वेष्टं न सिध्येदिति चिन्तया १०८॥
तथा स्वर्गादिकामोऽपि तत्फलप्रदकारणम्। यद्यछ्रुतिसमादिष्टं तत्तत्सम्पादयेत्पुरा ॥१०९॥
सिद्धे च काम्यकर्मार्थितयाऽऽधाने पुनर्विधिः। द्रव्यसंग्रहवच्छ्रौतो भवत्यत्र नियामकः ११०॥

नन्वेवं राजसूयादिभागो ब्राह्मणवैश्ययोः । तदन्यः क्षत्रियादेश्च नाध्येय इतिचेच्छृणु ११११॥
ब्रह्मयज्ञे जपार्थं तत्कृस्नवेदगलग्रहः । वेदार्थज्ञानमाक्षेपाद्भवेदद्वैतिनामिव ॥ १२॥
ते त्वाहुरक्षरप्राप्तिं स्वाध्यायविधिचोदिताम् । तदर्थज्ञानमाक्षेपात्क्रतुवाक्यैश्च लभ्यते ११३॥
तथापि कृत्स्नवेदार्थो योऽर्थज्ञो भद्रमश्नुते । इत्यादिभिश्चार्थवादैर्वेदितव्यो भवेदिति॥ ११४॥
तदज्ञाने च निन्दाऽपि भारवाहकतादिना । तस्मादपि च वेदार्थो ज्ञातव्यो वेदपाठकैः ॥११५॥
स्वकण्ठे यो गृहीतः स्यात्स्वाध्यायो वेदविस्तरः । स चाध्येयो ब्रह्मयज्ञे तत्रोक्तफलहेतवे ॥११६॥
स्वाध्यायः स्वशाखेतिनामचोत्तरकालिकम् । वेदव्यासकृताद्वेदविभागादिति बुध्यताम् ॥११७॥
यो यावतीं च गेहादिसामग्रींसमुपार्जयेत् । स तादृग्गृहविस्तारं कर्तुं शक्तो यथाभवेत् ॥११८॥
तथा स्वर्गादिसामग्रीं यावतीं यः समार्जयेत् । तथैव देवतां भक्त्या तावत्फलाय तोषयेत् ॥१२०॥
स्वर्गोनानाविधिः प्रोक्तो ज्योतिष्टोमादिहेतुकः । हेतुभेदात्फलभेदः प्रत्यक्षेणापि दृश्यते ॥१२०॥
वेदाध्ययनशक्तिश्च शूद्रस्य दुर्लभा यदि । अमन्त्रकं बहिर्द्रव्यैः कर्मकृत्वेश्वरं भजेत् ॥१२१॥
अध्येतुमसमर्थश्च ब्राह्मणत्वाभिमान्यपि । अमन्त्रकैर्बहिर्द्रव्यैरेव कुर्याद्धि वैदिकम् ॥१२२॥
यन्मते देवता नास्ति तत्प्रीतिः सुतरां नहि । तन्मते वक्ररीतिः स्याद्या सर्वानर्थकारणम्॥ १२३॥
आस्तिकानामयं मार्गो लोकवेदसमादृतः । तस्मादयं सर्वदैव सर्वत्रापि प्रवर्तते ॥१२४॥
अतः सर्वाधिकारं स्याच्छास्त्रं शक्त्यनुसारतः । प्रयोगोऽमन्त्रको मन्त्रपूर्वको वेति बादरिः २५॥

अतः शूद्र को अधिकारी बताते हुए बादरि कहते है कि आधान काम्य है । जात पुत्रादि वाक्य से आधान प्राप्त है । अतः ब्राह्मणादि विधि नैमित्तक है । आधान पद्धति में भी वैसा ही कहा गया है । यह बादरि महर्षि उभय मीमांसक सम्मत होने से प्रामाणिक है । बादरि सूत्र का भाष्य भी ठीक ही है । जैसे भोजनार्थी तदुपयोगी वस्तुओं को जुटाता है वैसे स्वर्गकाम भी तदनुकूल आधान और विद्याभ्यास भी स्वतः कर लेता है । सभी के लिये सब वेदों का अध्ययन, ब्रह्मयज्ञ प्रकरण गत फल विधि से ही प्राप्त है । स्वशाखाध्ययन सिद्धान्त भी व्यासकृतवेदविभाग के बाद ही आया है न कि उससे पहले । स्वर्ग भी कर्मभेद से भिन्न २ माना गया है । अतः जो जितनी सामग्री से याग करेगा उसका उतना ही स्वर्ग मिलेगा । सेश्वरमत में मन्त्र के बिना भी भक्ति से और प्राप्त वस्तुओं से देवताऽनुग्रह और तदनुसार फल मिल सकता है । अतः शास्त्र में सब का अधिकार है ।

दर्शितास्वारस्याद्बादरिराचार्यः सर्वाधिकारं ब्रूते "निमित्तार्थेन बादरिस्तस्मात्सर्वाधिकारं स्यादित्यादिना । भाष्यकारोऽस्य पूर्वपक्षसूत्रत्वं मत्वैवमुक्तवान् "य एवं विद्वानग्निमाधत्ते इत्यनेन सामान्यत आधानप्राप्तौ ब्राह्मणादयो वसन्तादावादधीरन्निति कालविधानपराः "तस्माद्ब्राह्मणो वसन्तेऽग्निमादधीतेत्यादिविधय" इति । किन्त्वस्य सिद्धान्तसूत्रत्वेनेदं भाष्यं समीचीनमेव । दशमचतुर्थे "अस्त्याधानं "य एवं विद्वानग्निमाधत्ते" इत्युक्त्वा स्वेनैवास्याधानविधित्वाङ्गीकारात् । न चास्य यच्छब्दघटितत्वेन विधिशक्तिविनाशकत्वमिति वाच्यम् । "य एवं विद्वान् षोडशिनं गृह्णाती"तिवदस्यापि विधित्वे बाधकाभावात् । याज्ञिकास्तु "अग्नय आधातव्याः" ( तै० आ० ) इत्यस्य सामान्यतः आधानविधायकत्वमङ्गीकुर्वन्ति । प्रदर्शितं चैतदाधानपद्धतौ । तथाहि "याज्ञिकास्तु ब्राह्मणादि श्रवणं निमित्तार्थमेवेति मन्यन्ते, युक्तं चैतत् । तथाहि तैत्तिरीयके "अग्नय आधातव्या" इत्यस्त्याधानविधिः । तथा वाजसनेयकेऽपि संभरणकाण्डे "अग्नीनादधीतेति । एवमाधानस्य प्राप्तावपि "तस्माच्छूद्रो यज्ञेऽनवक्लृप्त इति निषेधेन शूद्रस्याधानं नास्ती"ति यदुक्तं तत्रैव, तदयुक्तम् । तस्यार्थवादत्वेन निषेधविधित्वाभावात् विहितमेवाधानं शूद्रस्यापि विशेष नाम्ना "वर्षासु रथकारोऽग्नीनादधीतेत्यनेन । यथा दशमद्वितीये "द्यावापृथिव्यां धेनुमालभेतेत्यादौ धानकर्मत्वादि-विशेषवाचकानां धेन्वादिशब्दानां गोसामान्य परकत्व मुक्तं तथा रथकर्तृत्वबोधकरथकारशब्दस्यापि सामान्यतः शूद्रपरत्वमेव । रथ निर्माणादि शिल्पस्य शूद्रवृत्तित्वेन स्मृतिष्वङ्गीकारात् । न हि रथकारो नाम पृथग्वर्णः । वर्णानामेव कर्माधिकारसद्भावात् वर्णोल्लेखप्रसङ्गे शूद्रादि चतुर्णामेव वर्णत्वाङ्गीकारात् । एवं निषादस्थपतिं याजयेदित्यत्र निषादशब्दोऽपि सामान्यतः शूद्रमेव बोधयति । एकविंशेनातिरात्रेण प्रजाकामं याजयेदित्यादाविवात्रापि याजयेदित्यस्य यजेतेत्येवार्थः । स च शूद्रोऽस्मन्मते पशुतुल्यत्वेनामन्त्रेणाधानादिकं करोति जातिवादिमते प्रतिभाशालित्वस्यापि सम्भवात् मन्त्रैरेव तत्करिष्यति । तस्याहिताग्नित्वेनोत्तरकर्मस्वप्यधिकारः । प्राभाकरैस्तथैवाङ्गीकारात् । जातपुत्रः कृष्णकेशोऽग्नीनादधीतेति वा सामान्यत आधानप्रापकम् । तत्र जातपुत्रादिविशिष्टाधानेन न वाक्यभेदः । प्राप्ते कर्मण्यनेकगुणविधाने वाक्यभेदः प्राप्ते तु युगपदेव गुणविशिष्टकर्मविधाने न वाक्यभेद इति सिद्धान्तात् । अयं बादरिः "वर्णे तु बादरिर्यथाद्रव्यमित्यादिसूत्रे जैमिनिना "अनुस्मृतेर्बादरित्यादौ व्यासेन च प्रामाणिकत्वेनेष्टः । आत्रेयमतमपि क्वचि"न्मुख्यानन्तरमात्रेय इत्यादौ न जैमिनिनाऽङ्गीकृतम् । अतोऽत्र वयमप्यात्रेयसम्मतं त्रैवर्णिकमात्राधिकारं नेच्छामः । नन्वेवमिति, क्रतुविधिभिराधानाक्षेपपक्षेऽपि विषेशविधयो वसन्तादिकाल गोचरा एव भवन्ति । नचैतत्पक्षे ब्राह्मणेन राजसूयादिप्रकरणं क्षत्रियेण बृहस्पतिसवादिकं च पठितव्यं न भविष्यतीति वाच्यम् । ब्रह्मयज्ञजपार्थत्वेन कृत्स्नवेदाध्ययनस्य "योऽर्थज्ञ इत्सकलं भद्रमश्नुते "इत्यादिना चार्थज्ञानस्य सिद्धेः । अध्ययनविधेरक्षरग्रहणमात्रपर्यवसानत्ववादिभिरद्वैतिभिरेवमेवार्थज्ञानसिद्धिरिष्यते । तदुक्तं सायणेन काण्वसंहिताभाष्यभूमिकायाम् "अर्थावबोधस्याध्ययन-विधप्रयुक्त्यभावेऽपि बिध्यन्तरप्रयुक्तत्वेन तस्यादृष्टस्य सिद्धेः । विध्यन्तरं चैवमाम्नायते "योऽर्थज्ञ इत्सकलं भद्रमश्नुते नाकमेति ज्ञानविधूतपाप्मेति । तत्रैव "स्वाध्यायोऽध्येतव्य" इत्यस्य ब्रह्मयज्ञप्रकरणगतत्वेन नेदमध्ययनविधायकं किन्तु स्मृतिषु ब्रह्मचारिप्रकरणेऽध्ययनविधेः सत्वात्तन्मूलभूतासु श्रुतिष्वनुमीयतेऽध्ययनविधि"रित्युक्तम् । एवं कल्प्यमानो विधिः सामान्यतो

वेदाध्ययनविधायक एव कल्प्यते न तु स्वशाखामात्रविधायकः। स्वशाखाप्रवादोऽपि व्यासकृतवेदविभागोत्तरकालिक एव। स्वर्गोनानेति। षष्ठाद्यपादे दर्शपूर्णमासज्योतिष्टोमादि-कर्मभेदेन तत्साध्यः स्वर्गोऽपि भिन्न एवेति टुप्टीकायामुक्तम्। अतः शूद्रैरपि स्वशक्त्यनु-सारेण कर्माणि कर्तुं शक्यन्ते। फलमपि तदनुसारेण किञ्चित्कालन्तरे भविष्यतीति बादरेराशयः।

अत्रात्रेयः पुनर्ब्रूते त्वपिवाऽन्यार्थदर्शनात्। यथाश्रुति प्रतीयेत त्रिवर्णाधिक्रियेति च ॥१२७॥
अस्य भाष्यानुसारेण चायमर्थः प्रतीयते। बार्हद्गिरादिसामानि ब्राह्मणादित्रिकं प्रति ॥१२८॥
विधीयन्ते यतस्तस्मात्तेषामेव ह्यधिक्रिया। न तु चतुर्थवर्णस्य व्रतादेरप्यभावतः ॥१२९॥
एतद्वार्तिककारोऽनु-दाहरणमवोचत। उदाहरणमन्यच्च सूत्रानुगमनुक्तवान् ॥१३०॥
एतेन ज्ञायते सूत्रमिदं चासङ्गतं त्विति। प्रायः सर्वत्र मीमांसासूत्राण्येतादृशानि हि ॥१३१॥
कामनैव निमित्तं हि बार्हद्गिरादिसामसु। ततो ब्राह्मण्यसिद्धिः स्यादिति प्रागत्र दर्शितम् ॥१३२
वस्तुतस्तु तदर्थस्तन्मते वर्णत्रयश्रुतेः। अग्निष्टोमे हि तस्यैव प्रतीयेत यथा श्रुति ॥१३३॥
बादरिश्चाब्रवीदग्निष्टोमादन्यत्र वैदिके। पक्षे निर्देशतः शूद्रो भवेदेवाधिकारवान् ॥१३४॥
मस्तु तस्य व्रतं प्रोक्तं विवादे चर्महेतुके। दृष्टो हविष्कृदाह्वाने निर्देशश्चेत्यधिक्रिया ॥१३५॥
पयो व्रतादिसंस्कारः सामर्थ्यार्थो निगद्यते। यस्य यद्वस्तु निर्दिष्टं सामर्थ्यं तस्य तेन हि ॥१३६॥
न च वैगुण्यशङ्काऽत्र काम्यत्वाच्छ्रौतकर्मणाम्। कथं चित्फलकामेन कर्मानुष्ठानमिष्यते ॥१३७॥
यद्यप्यस्त्यङ्गसाकल्यं काम्येष्वेव फलेप्सुभिः। अनुष्ठेयं तथाऽप्यत्र यावन्निर्देशमिष्यते ॥१३८॥
स्त्रीणामप्यधिकारो हि यावन्निर्देशमिष्यते। निर्विद्यानां तथा शूद्रो निर्विद्योऽधिकरिष्यति ॥१३९
पत्नीं वाचयतीवायं शूद्रोऽपि वाचयिष्यते। सर्वथा ह्यधिकारस्तु सर्वेषामपि सिध्यति ॥१४०॥
काम्यत्वादिति सूत्रस्य भाष्योक्तार्थो न युज्यते। शूद्रोऽपि यद्यभीवर्तं सामात्र कामयिष्यते ॥१४१॥
ऋत्वन्तरे तदा कस्मादाधानं न स कामयेत्? तदप्यनारम्य किञ्चित्पठितं भवतेष्यते॥१४२॥
काम्यत्वादिति शब्दस्य कामित्वार्थनिरूपणम्। अन्याऽप्यमिति तद्भाष्यमुपेक्ष्यार्थान्तरं श्रितम् ॥
इतः परं चतुस्सूत्र्या चात्रेयमतपोषणम्। अपिवा वेदनिर्देशादशूद्राणामधिक्रिया ॥१४४॥
यज्ञियत्वेन निर्दिष्टास्त्रयो वर्णाः श्रुतिष्विह। तस्मादप्यपशूद्राणामित्यात्रेयोऽब्रवीद्वचः ॥१४५॥
यज्ञियत्वं न जातिः स्यादयज्ञियत्वमेव वा। अतः केशादिवपनाद्यजमानोऽस्ति यज्ञियः ॥१४६॥
अयज्ञियस्ततः पूर्वमित्यर्थादेव सिध्यति। यथा यत्नवशान्मेधा यज्ञियत्वं तदा नृणाम् ॥१४७॥
मेधायज्ञमिति प्रोक्तं तैत्तरीये प्रसङ्गतः। मेधाविनो यज्ञियाः स्युरमेधावी त्वयज्ञियः॥१४८॥
काठकेऽपि च यो मेध्यः स एव यज्ञियस्त्विति। प्रोक्तं तेनापि विज्ञातं यज्ञियत्वं न जन्मतः॥१४९॥
नत्रोऽयज्ञिय इत्यत्र स्वल्पार्थकत्वमिष्यते। नारी त्वनुदरेत्यादाविव स्यान्न तु भिन्नता ॥१५०॥
मेधा कस्य चिदाबालं पश्चादेवेतरस्य च। तदन्यस्य च नैकस्मिन् जन्मन्यपि भविष्यति ॥१५१॥
मेधाविनो वैदिकानि कुर्वीरन्वेदमन्त्रतः। अमन्त्रतस्त्वमेधावी कुर्वीत्तान्येव भक्तितः ॥१५२॥
समन्त्रकप्रयोगाणां फलं श्रुत्युक्तमिष्यते। अमन्त्रकप्रयोगस्य चात्मशुद्धिर्भवेत्फलम् ॥१५३॥



यच्चोपनयनस्मार्तवाक्यजातमुदाहृतम्। भाष्ये तस्य न निर्देशो वेदेषु चेत्युपेक्षितम् ॥१५४॥
यावान् श्रुतपरित्यागे दोषस्तावान् प्रकल्पने। अश्रुतस्येति स्वेनोक्तं तत्तेनैवात्र विस्मृतम् १५५॥
योऽवेदं वेदमित्याह स शूद्रत्वमिहाप्नुयात्। इति मार्कण्डमुन्युक्तं किं नैतद्वेत्ति भाष्यकृत्?१५६॥

**आत्रेय फिर कहते हैं कि बार्हद्गिरादि साम तीन वर्णों के प्रति विहित होने से उनका ही अधिकार है। इन सामों को वार्तिक कार यहाँ अनुदाहरण बताते हैं और उचित उदाहरण वे बताये भी नहीं। वस्तुतः ये साम भी ऐच्छिक हैं (पृ० ५१ से)। बादरि कहते हैं कि अग्निष्टोम से अन्यत्र शूद्र का भी अधिकार का निर्देश है। फिर आत्रेय का कहना है कि त्रैवर्णिक ही यज्ञय होते हैं। अतः उन्हीं का अधिकार है। वस्तुतः मेधावी यज्ञिय कहा जाता है और यजमान भी दीक्षा के बाद ही यज्ञिय होता।**

अत्रात्रेय इति, तदुक्तं "अपि वाऽन्यार्थदर्शनाद्यथा श्रुति प्रतीयेत" (२८) भाष्यीय तदर्थश्च बार्हद्गिरादिसामानि त्रैवर्णिकार्थं दर्शितानीत्यतो यथा श्रुति त्रैवर्णिकाधिकार एव ज्ञायते इति। एतद्विषये कुमारिलः कथयति "बार्हद्गिरं गवानयने समाम्नायाते अभीवर्तो ज्योतिष्टोमे, पार्थुरश्ममश्वमेधे, विदेशपाठादनुदाहरणमि"ति। उचितमुदाहरण-मप्यसौ नोक्तवान्। अनिर्देशमात्रं नानधिकारकारणमिति पूर्वसूत्रे सोदाहरणमस्माभिर्दर्शितं तदत्राप्यनुसन्धेयम्। ततो बादरिः ब्रूते "निर्देशात्पक्षे स्या"दि(२९)ति। अग्निष्टोमादन्यत्र दर्शादि हविष्कृदाह्वानादौ शूद्रस्य निर्देशात्तस्याप्यधिकार इति। एतादृशनिर्देशेनैव स्त्रीणा-मधिकारः साधितः। एवं शूद्रस्यापि तावन्मात्र निर्देशात् स स्यादिति भावः। यत्तु भाष्ये "य एवं विद्वानग्निमाधन्ते"इत्याधानसामान्यविधायकं वाक्यमुदाहृतं तच्च शूद्रनिर्देशस्यात्राभावात् "निमित्तार्थेन बादरिरित्यत्रैवोदाहर्तव्यत्वाच्चासङ्गतम्।" वैगुण्यान्नेति चेन्न काम्यत्वात् (३०) इदमग्रिममपि बादरेः सूत्रम्। भाष्ये चेदं सूत्रद्वयत्वेन निर्दिष्टम्। पशुतुल्यस्य शूद्रस्य सस्वरवेदविद्याग्रहणाशक्तस्य साङ्गप्रधानासामर्थ्यात्क्रतुवैगुण्यं स्यादित्याशङ्क्य समाधत्ते बादरिः "न काम्यत्वादिति। काम्यं कर्मापि यथाशक्त्यष्ठीयते चेत् फलमपि तदुचितं भवत्येव। सस्वरमन्त्रैः साङ्गप्रधानानुष्ठाने कृत्स्नमधिकारिविशेषणं फलं भवति। अनुष्ठानन्यूनत्वेऽपि सेश्वरमतेऽल्पं फलं भवत्येव। न च यथाशक्तिन्यायस्य काम्येष्वप्यङ्गीकारे नित्यकाम्य-योरभेदः स्यादिति वाच्यम्। नित्यस्य सायं प्रातःकालस्य यत्र निमित्तत्वं तन्नित्यं कामनैव यत्र निमित्तं तत्काम्यमिति भेदात्। जीविनोद्देशेन विहितं नित्यं तत्करणे फलाभावोऽकरणे प्रत्यवायः। काम्ये त्वेवं नेति वा तयोर्भेदः। यत्तु भाष्ये दर्शितं वैगु-ण्यादित्यस्य अब्रह्मसामकमव्रतकमप्रक्रमकं च शूद्रस्य कर्म प्रयुक्तमपि फलं न साधये-दिति। तन्न, ब्रह्मसामादीनां सर्वत्र क्रतुष्वभावात्, व्रतनियमे मस्तु शूद्रस्येति दर्शितत्वात्, अष्टसु प्रक्रमेषु ब्राह्मणोऽग्निमादधीतेत्यादिष्वनिर्देशेन शूद्रस्यानधिकारोक्तेः "निर्देशाद्वेति सूत्र एव समाहितत्वाच्च। चतुर्थवर्णस्य तृतीयवर्णप्रक्रमाभिप्रायेणाप्यनिर्देशोपपत्तेः।" "संस्कारे

च तत्प्रधानत्वादित्यत्र'' संस्कारः साङ्गप्रधानानुष्ठानं तच्चकृत्स्नफलप्रधानमित्यर्थः । इतः परमात्रेयसूत्राणि "अपिवा वेदनिर्देशादपशूद्राणां प्रतीयेत" ( ३२ ) यज्ञियत्वेन त्रैवर्णिकानां निर्देशाच्छूद्रभिन्नानामधिकार इति । अस्मिन् सूत्रेऽपशूद्रपदसत्वादात्रेयमते इदमपशूद्राधिकरणमुच्यते । बादरिमते चेदं शूद्राधिकरणमेव । यत्तु भाष्ये "वसन्ते ब्राह्मणमुपनयीतेत्यादिवाक्यानि उदाहृतानि, तान्यापस्तम्बधर्मसूत्रा ( १।१९ ) ण्येमे न तु वेदवाक्यानि । अत्र तु वेदवाक्यत्वेन दर्शितानि । "अवेदं यो वेदमिति प्रलपेदल्पबुद्धिकः । स शूद्रत्वमवाप्नोति सद्य एव न संशयः'' ( मा० स्मृ० ) ।

गुणार्थित्वादिसूत्राणि त्रीणि पक्षद्वयेऽपि च । कथं चिद्योजनीयानि कल्प्या गतिः स्थितस्य हि १५७
टुप्टीकाया मतः प्रोक्तमितरोऽविदिताशयः । शङ्कते हीति चास्माकं तत्तथैव प्रतीयते ॥१५८॥
अनुष्टुप्छन्दसा शूद्रो गुणमाधानमर्थयेत् । इत्याशङ्क्यात्रिगोत्रीयः स्वयं ब्रूते तदुत्तरम् ॥१५९॥
सत्यां कृत्स्नविद्यायां पुरुषो यज्ञसाधनम् । तद्विद्यार्थश्च संस्कारस्तदयोग्ये निरर्थकः ॥१६०॥
शूद्रस्य विद्यानिर्देशस्त्रैवर्णिकसमोऽस्ति चेत् । तथाप्यसौ समग्रां तां श्रुतिं नाध्येतुमर्हति १६१॥
विद्याभावेन शूद्रस्य नाधिकारोऽस्ति कर्मसु । इत्यात्रेय मतं तद्धि न युक्तमिति बादरिः १६२॥
तथाऽप्यन्यार्थसद्भावादस्ति तस्याप्यधिक्रिया । कषाये कर्मभिः पक्वे चित्तशुद्धिर्यतो भवेत् १६३॥
चित्तशुद्धौ मोक्षशास्त्रे प्रवृत्तिरपि संभवेत् । अन्यथा चात्महत्यादि समो दोषः प्रकीर्तितः १६४॥
श्रुतिसम्मतशूद्रस्य पशुतुल्यत्वमुच्यते । शूद्रस्य धर्मशास्त्रत्वादिति सूत्रादिभाष्यतः ॥१६५॥
शूद्रान् क्रीत्वा द्विजाः पूर्वं पशुपक्ष्यादि वद्गृहे । स्थापयन्ति स्म सेवार्थं किञ्चित्खाद्यं प्रदाय च १६६
यद्येते बुद्धिमन्तः स्युस्तदा सर्वात्मना नृणाम् । न पराधीनतामेवं स्वीकुर्युः पशुपक्षिवत् ॥१६७॥
तथाविधान् शूद्रवर्णानुद्दिश्यैव स्मृतिष्वपि । बहुधा भाषितं मानमर्यादा दौ च निम्नताम् १६८॥
विद्यां धारयितुं शूद्रो न शक्नोतीति कर्मसु । विद्यासाध्येषु चात्रेयस्तस्य नेच्छत्यधिक्रियाम् १६९॥
विद्याशून्योऽप्यमन्त्रेण कर्म शूद्रः करिष्यति । अतः सामान्यतः स्त्रीवत्तस्याप्यधिक्रियेष्यते १७०॥
भाषान्तरमधीत्यान्ये जात्या त्रैवर्णिकब्रुवाः । अज्ञात्वा वैदिकं मन्त्रं कर्म कुर्वन्त्यमन्त्रकम् ।१७१॥
तथाऽध्ययनसामर्थ्य-शून्यः शूद्रोऽप्यमन्त्रकम् । आवश्यकं कर्म कुर्याद्वर्णत्वाद्दैवभक्तितः ॥१७२॥
विद्योपार्जनहीनस्य विद्यार्थी मास्तु संस्कृतिः । कर्मार्थिस्तूपनयनं भवेच्छूद्रस्य शास्त्रतः ॥१७३॥
आपस्तम्बभरद्वाजस्मृत्योः शूद्रस्य संस्कृतिः । कृष्ण यज्ञोपवीतेन दर्शिता यागहोमयोः ॥१७४॥
यदि शूद्रस्य संस्कारो द्विजः सोऽपि भवेदिति । भयं ते मास्तु तत्सर्ववेदाध्ययनतो यतः ॥१७५॥
अतोऽनधीतवेदस्य शूद्रत्वं स्मृतिषूच्यते । पराशरमहर्ष्यादिप्रणीतासु विचारतः ॥१७६॥
शूद्रस्य तच्च दुस्साध्यं बुद्धौ पशुसमस्य हि । तस्मादमन्त्रको यज्ञः शास्त्रकृद्भिस्समीरितः १७७॥
न चैकदिनसाध्येन तत्संस्कारेण कश्चन । अण्डावस्थो द्विजन्मा स्यादन्यथा सोऽपि सद्द्विजः १७८॥
अथवा विष्णु भक्तिश्चेत्सर्वे वर्णा द्विजातयः । इति स्कान्दपुराणोक्तिरिष्टापत्ति रतोऽस्तु नः १७९॥
ये सन्ति भगवद्भक्ता नैव शूद्रा भवन्ति ते । श्रीवृद्धगौतमेनेत्थमन्यैरपि प्रभाषितम् ॥१८०॥
ते शूद्राः सर्ववर्णेषु ये ह्यभक्ता जनार्दने । इति भगवता प्रोक्तं गुणैरेव द्विजन्मता ॥१८१॥



न जातिः पूज्यते किन्तु गुणाः कल्याणकारकाः । चाण्डालोऽपि गुणी विप्र इति तेनैव कीर्तितम् ॥
क्षान्तो दान्तो जितक्रोधो ब्राह्मणः स्याज्जितेन्द्रियः । तदन्यं शूद्रमाचष्टे श्रीकृष्णो भगवान् स्वयम्॥
एवं शास्त्रेण शूद्रस्य सर्ववैदिककर्मसु । अधिकारस्य संसिद्धावसहिष्णुश्च कश्चन ॥१८३॥
जातिवादी शिरः स्वस्य ताडयित्वा भृशं पुनः । रुद्याच्चेत्कस्य का हानिःश्रान्तस्सन् शाम्यति स्वयम्
यज्ञस्यापि च त्रैविध्यं सायणेन प्रदर्शितम् । तैत्तिरीयारण्यभाष्ये मनोवाक्कायभेदतः ॥१८५॥
वाचको ब्रह्मयज्ञः स्यान्मानसं चार्थचिन्तनम् । कायकं तु बहिर्द्रव्यैरमन्त्रैर्वा समन्त्रकैः ॥१८६॥
यद्यप्येकत्र यागादित्रयं वेदोक्तकर्मणि । स्थातव्यमिति शास्त्रीय नियमोऽस्ति तथापि तत् १८७॥
यस्य कस्य चिदज्ञस्य दुष्करं दुर्लभं यदि । तेन चान्यतमं कर्म कार्यं स्यादनिवार्यतः ॥१८८॥
उभौ च कुरुतो यश्च वेदैवं यो न वेद च । यद्विद्यया कृतं कर्म तदेव वीर्यवत्तरम् ॥१८९॥
यद्वीर्यवत्तरं स्वर्गं तच्चातिशय कृद्भवेत् । स्वर्गो बहुविधः प्रोक्तस्तत्प्रयोजकभेदतः ॥१९०॥
यत्त्वत्र भाष्ये शूद्रस्य निषेधोऽध्ययने श्रुतेः । दर्शितः स च नान्यर्थः पूर्वसूत्रार्थतो भवेत् १९१॥
पूर्वसूत्रेऽप्यवैद्यत्वमुपवीतनिषेधतः । तदेवात्रापि चोक्तं केन्नान्यार्थोऽत्र भविष्यति ॥१९२॥
एतत्सूत्रं च मीमांसाशास्त्रे तु बहुधेरितम् । सर्वत्र पूर्वसूत्रार्थादन्यार्थो भाष्यसम्मतः ॥१९३॥
स चार्थः सूत्रकाराभिप्रेत एव भवेदपि । किन्त्वत्र न तथेत्यन्यस्त्वर्थोऽस्माभिः प्रदर्शितः १९४॥

अन्त में आत्रेय ने कहा है कि विद्याशून्य होने से शूद्र का वैदिक कर्मों में अधिकार नहीं है । उसका उत्तर बादरिमहर्षि ने दिया है कि विद्याशून्य का विद्यासाध्य कर्मों में अधिकार न हो किन्तु अमन्त्रक प्रयोगों में स्त्रियों की तरह शूद्र का भी अधिकार है । स्त्रियों को भी जातिवादी के मत में विद्या नहीं है तो भी पहले अधिकरण में उनका अधिकार सिद्ध किया गया है । ऐसा ही शूद्र का भी अधिकार होगा और अमन्त्रक कर्मों से स्वर्ग न मिलने पर भी पाप क्षय के द्वारा चित्तशुद्धि इससे मोक्ष शास्त्र में प्रवृत्ति होगी जिससे आदमी का जन्म सार्थक हो और मोक्षशास्त्रों से आत्मा का स्वरूप न जानने पर आत्महत्या का दोष बताया गया है । वेदों में शूद्र का पशुतुल्य स्वरूप कहा गया है । इसलिए पहले शूद्रों को खरीद करके द्विजलोग अपने घरों में सेवा के लिए रखते थे । वेद पढ़ने की शक्ति जिसमें नहीं वही शास्त्रीय शूद्र है । अतः उसका अमन्त्रक कर्म माना गया है । जो वेद पढ़े नहीं और अंग्रेजी या हिन्दी पढ़े हों वे भी अपने को जन्म से द्विज कहते हुए भी अमन्त्रक ही कर्म करते हैं । शूद्र का विद्यांगभूत उपनयन न रहने पर भी कर्मांग उपनयन है । आपस्तम्ब भारद्वाजस्मृतियों में शूद्र का भी उपनयन कहा गया है । उपनयन मात्र से कोई द्विज नहीं होगा किन्तु वेद पढ़ने पर ही हैं । अतः मनुपराशरादि स्मृतियों में वेद न पढ़े हुए को शूद्र कहा है । वेद पढ़ना, शूद्र से होता नहीं, अतः वह द्विज भी नहीं । अथवा स्कान्द पुराण के अनुसार विष्णु भक्त शूद्र भी द्विज

कहलायेगा तो हमें कोई आपत्ति नहीं। उसमें कहा गया है विष्णु भक्ति होगी तो सभी वर्ण द्विज हो जायेंगे और वृद्धगौतम ने कहा था कि भगवद्भक्त शूद्र नहीं कहलायेंगे किन्तु वह ब्राह्मण ही हैं जिसको भक्ति नहीं वे सब शूद्र हैं इस प्रकार शास्त्रों के द्वारा सबको कल्याणकारी वैदिक कर्मों में अधिकार मिल जाने पर कोई असहिष्णु असूया से अपने द्विजत्व की हानि जैसे समझ कर, अपने सिर पीटेगा और रोयेगा तो किसका क्या हानि होगी। तक जाने के बाद वह अपने आप ही चुप हो जायगा। सायण ने तीन प्रकार के कर्म बताया था वाचक मानस और कायक जिसमें जिसकी योग्यता हो वह उसे कर सकता है। ये मन वाक और शरीरों से कर्म करने पर अच्छा फल तो मिलेगा। ऐसा करने में जो असमर्थ है वह उन तीन में एक कर सकता है। साधक कर्मों के भेद से तत्साध्य स्वर्ग भी भिन्न-भिन्न माना गया है।

गुणेति, "गुणार्थित्वान्नेति चेत्, संस्कारस्य तदर्थत्वाद्विद्यायां पुरुषश्रुतिः। विद्यानिर्देशादिति चेत्" इत्यात्रेयस्य सूत्रत्रयमुभयमतेऽपि यथा कथंचिद्व्याख्येयम्। अतः टुप्टीकायामुक्तम् "इतरस्त्वविदिताभिप्राय आह" इति। अन्यत्राप्युक्तं भट्टेन "सन्ति च जैमिनेरेवं प्रकाराण्यनत्यन्तसारभूतानि सूत्राणीति। विनायकरायेणप्युक्तम्" अत्यन्तसारभूतानि सूत्राणि व्याख्याय तदन्यानि वार्तिके त्यक्तानि। प्रमेय प्रधानानि सूत्राणि न तु पाणिनि-सूत्रवच्छब्द प्रधानानि नापि ब्रह्मसूत्रवदक्षरप्रधानानी"ति। अत्रेदं चिन्तनीयं यत्स्वाभिप्रेत प्रमेयबोधकशब्दान् कथं जैमिनिर्न प्रयुक्तवानिति। तत्र कारणमसामर्थ्यं वा भाष्यकाराद्यभिप्रेतप्रमेयापेक्षया सूत्रकारप्रमेये भेदा वा स्यात्। वयं तु प्रमेयभेदमेव तद्धेतुं मन्यामहे। अस्तु तत्सूत्रत्रयस्यास्मन्मतेऽयमर्थः। अनुष्टुब्छन्दसा शूद्रो गुणमाधानमर्थयति ततः सम्पादयति च। अनुष्टुच्छन्दस्सम्बन्धः शूद्रस्य ( ९५ पृष्ठे ) दर्शित एव। अत एवोक्तम् "सन्ति हि गायत्रीत्त्रिष्टुप्जगत्यनुष्टुप् चेति चत्वारि छन्दांसि ब्राह्मणादिवर्णचतुष्टयसम्बन्धित्वेन तत्र तत्र स्तुतानी"ति ( सत्या० गृ० सू० २ प० )। अपि च छन्दस्त्रयेण वर्णत्रयस्याधानमुक्तं "गायत्रीभिर्ब्राह्मणस्यादध्यात्त्रिष्टुब्भी राजन्यस्य जगतीभिर्वैश्यस्येति। अत्रार्थादनुष्टुप्छन्दसा शूद्रस्याप्याधानमुक्तं भवति वर्षासु रथकारस्याधानं दर्शितमेव। स च शूद्र एव। विशेषविधीनां सामान्यपरत्वस्य धेनुमालभेत्यादिविशेषविधेः गोसामान्यपरत्वमिव दर्शितत्वात्। एवमात्रेयः पूर्वं पक्षं कृत्वा ( बादरि मतेऽयमुत्तरपक्ष एव ) स्वमतेनोत्तरं ददाति संस्कारेति। अत्र संस्कार शब्दोऽग्निसंस्कार भूताधानपरः। आधानसंस्कृताहवनीयादिषु भाष्येऽप्यस्य प्रयुक्तत्वात्। ( ५।३ ) उपनयनस्य पूर्वसूत्रेऽभावप्रदर्शनाच्च। वैदिककर्मार्थित्वाद्विद्यायां सत्यामेव च पुरुषस्य यज्ञाधिकारश्रुतिरिति। अग्रे शूद्रस्य विद्यासद्भावमाशङ्क्यं परिहरति। ननु अथेमां वाचं कल्याणीमावदानि जनेभ्यः ब्रह्मराजन्याभ्यां शूद्राय चार्याय चेत्यादिना शूद्रस्यापि विद्या, श्रुत्यैव निर्दिश्यत इत्यभिप्रायेणाह



"विद्यानिर्देशादिति चेदित्याशङ्क्य स्वयमुत्तरं ददाति। 'अवैद्यत्वाद भावः कर्मणि स्यादिति। पशुतुल्यस्य विद्योपार्जनशक्तेर भावाच्छूद्रोऽवैद्यः' तस्य कर्मणि समन्त्रकेऽभावोऽधिकाराभाव इति तदर्थः। विद्याभावहेतुनाऽधिकाराभावो विद्यासाध्य एव भवति न त्वविद्यासाध्येऽमन्त्रके श्रद्धामात्रेण बहिर्द्रव्यैः क्रियमाणे इत्यर्थादायात्यात्रेयमतेऽपि। यत्त्वस्य भाष्ये, शूद्रस्योपनयनाभावेन विद्याभाव इत्युक्तं तन्न। शूद्रे विद्याभावस्य तादृशपूर्वसंस्काराभावप्रयुक्तत्वेनोपनयनाभावप्रयुक्तत्वाभावात्। यस्य तादृश संस्कारः पूर्वपुण्यवशादस्ति तस्य मनुष्यकृतिसाध्योपनयनमपि भवत्येव। जातिब्राह्मणत्वादिभ्रमेणोपनीतस्यापि तादृशसंस्कार-हीनस्य विद्याभावेन तस्य कर्मण्यनधिकारो वर्तते एव। अतो बादरिणोच्यते' तथाचान्यार्थदर्शनमिति। अत्र चकारोऽप्यर्थकः। तथापि तादृशाधिकाराभावेऽप्यमन्त्रके कर्मण्यवैद्यस्यापि स्यादेवाधिकार इति। अमन्त्रके शूद्रस्याधिकारो दर्शित एव ( २०४ ) प्राक्। विद्याङ्गभूतोपनयनाभावेऽपि शूद्रस्य कर्माङ्गभूतोपनयनमस्त्येव। तदुक्तमापस्तम्बेन 'शूद्राणामप्यदुष्टकर्मणामुपनयनमिति। उदाहृत चैतत्पारस्करगृह्यसूत्रगदाधरभाष्ये ( २.५.४२ )। अदुष्टकर्मणां मद्यपानादिरहितानामिति तत्रैवोक्तम्। अदुष्टकर्मत्वं न केवलशूद्रोपनयनमात्रे हेतुः किन्तु सर्वेषामुपनयनेऽपि। तदुक्तं सत्याषाढेन 'अशूद्राणामदुष्टकर्मणामुपनय इति। अत्र शूद्रपर्युदासश्च विद्याङ्गोपनयनविषयः। यत्तूक्तं शूद्रोपनयनं रथकार विषयम्। तस्य मातामहीद्वारकं शूद्रत्वमिति। तन्न। रथकारनिषादादिविशेषवर्णघटित-कर्मविधीनामपि सामान्यशूद्रवर्णपरत्वस्य दर्शितत्वात्। रथकारस्य शूद्रत्वं जैमिनिनाऽपीष्टम् "न्याय्यो वा कर्मसंयोगाच्छूद्रस्य प्रतिषिद्धत्वादिति सूत्रे। अत्र प्रतिषेधः समन्त्रकाधानविषयः। रथकारस्याप्याहिताग्नेरुत्तरकर्मस्वधिकारः प्राभाकरैरिष्यत एवेत्याधानपद्धतावुक्तम्। यद् भाष्ये नायं शूद्रो नापि त्रैवर्णिक इत्युक्तं तन्न। अप्रामाणिकानन्तसङ्करजातिकल्पनाया अन्याय्यत्वात्। मनुनाऽपि पञ्चमवर्णस्य निषिद्धत्वात्। सङ्करजातिबोधकस्मृतीनामेकविधत्वाभावान्नास्त्यनन्तजातिकल्पने किञ्चित्प्रमाणम्। येषां मते रथकारो न शूद्रस्तन्मते दर्शितोपनयानादिकं शूद्रस्यैव। आधान पद्धतावुक्तं रथकारस्त्रैवर्णिकान्तर्गत इति। न च तस्य त्रैवर्णिकत्वे आधानाकालभेदो न स्यादिति वाच्यम्। रथकर्तृत्वादिधर्मभेदेन तद्भेदोपपत्तेः। एवमेकत्र धर्मभेदस्याधानकालभेदप्रयोजकत्वात्सर्वत्रापि अध्यापनादिधर्मभेद एव वसन्तर्तुकालादावाधानप्रयोजकः। आपस्तम्बभरद्वाजेति ( १७४ ) भारद्वाजस्मृतावपि शूद्रस्य कृष्णवर्णयज्ञोपवीतमुक्तम् "चतुर्णां ब्राह्मणादीनां वर्णानां क्षेत्रसंभवम्। कार्पासमुपवीतार्थं गृह्णीयान्न तु भूमिजम्" श्वेतलोहितपीतास्तु विप्रक्षत्रविशां क्रमात्। वर्णशूद्रस्य कृष्णः स्याद्वर्णोऽन्यः सङ्करस्मृतः" इति। यत्तु सुश्रुते शूद्रमपि कुलगुणसम्पन्नं मन्त्रवर्जमनुपनीतमध्यापयेदित्येके इत्युक्तम्, तत्र मन्त्रवर्जमित्यनेन मन्त्रातिरिक्तवेदभागोऽभिप्रेतः। तन्न। अध्ययनसमर्थस्य शूद्रत्वाभावात्। न हि पशुतुल्योऽध्येतुमर्हति। अध्ययनादावुपनयनावश्यकत्वस्य "तस्माद्यज्ञो-

पवीत्येवाधीयीत याजयेद्यजेत वा यज्ञस्य प्रसृत्यै" ( तै. आर. ) इत्यादिनोक्तत्वात् । अत्र केचित् "यज्ञस्य प्रसृत्यै" इत्यनेन यज्ञे गुणसम्पादनार्थमेवोपवीतं न तु ज्ञानमात्रहेत्वध्ययनार्थम् । तच्चानुपनीतेनापि कर्तुं युक्तम् । अत्र च प्रमाणं दर्शितसुश्रुतवाक्यमेवेति वदन्ति । शुद्धान्तःकरणानामात्मविचारार्थंविद्याभ्यासे उपनयनाभावेऽपि तदन्येषां चित्तशुद्ध्यर्थंकर्मसु प्रवृत्तानां तदावश्यकमेव । अतएव "संन्यस्य श्रवणं कुर्यादित्यादिवाक्यं प्रमाणीकृत्य संन्यासिनस्त्यक्त्वैव यज्ञसूत्रमुपनिषदः पठन्ति । कर्ममात्राङ्गोपनयनसद्भावे प्रमाणं च "कर्मण्यधिकृता ये तु वैदिके ब्राह्मणादयः । तेभिर्धार्यमिदं सूत्रं क्रियाङ्गं तद्धि वै स्मृतम्" ( ब्रह्मोपनि ) इत्यादिकमस्त्येव । तदभावे दोषमप्याह कात्यायनः । "सदोपवीतिना भाव्यं सदा बद्धशिखेन च । विशिखो व्युपवीतश्च यत्करोति न तत्कृतमि"ति । न चोपनयनमात्रेण शूद्रस्य द्विजत्वापत्तिः । तस्य वेदाध्ययनसाध्यत्वात् । अतः "द्विजत्वं विद्ध्यनुष्ठानाद्विप्रत्वं वेदपाठतः" इत्युक्तम् । अत्र विप्रत्वं विध्यनुष्ठानाद्द्विजत्वं वेदपाठत इत्यन्वयः कर्तव्यः । सम्प्रदायस्य तथैव सत्वात् । "वेदं चैवानधीयानाः सर्वे ते वृषलाः स्मृताः ( परा १२।२९ ) इत्युक्तेश्च । क्वचिदुपनयनमात्राद् द्विजोत्वोक्तिरनन्तरभाविवेदाध्ययनोपलक्षणार्था । अङ्गिनं विनाऽङ्गमात्रस्य प्रयोजनाभावात् । क्वचिद् दैवभक्तिरपि द्विजत्वकारणमुच्यते । तद्यथा "विष्णुभक्ताश्च ये केचित्सर्वे वर्णा द्विजातयः । कथितं मम गार्ग्येण गौतमेन सुमन्तुना" ( स्का० पु० २.११ ) इति । "न शूद्रा भगवद्भक्ता विप्रा भागवताः स्मृताः इति वृद्धगौतमश्च । एवं शूद्रस्याप्युपनयनकर्माधिकारयोः सिद्धौ तदसहिष्णवः केचिद्विरूपाक्षशास्त्रि प्रभुतयः स्वशिरस्ताडयित्वा भृशं रुदन्ति चेत्कस्य का हानिः । तेनोक्तं सवार्तिकभाष्यभूमिकायाम् "सर्ववर्णसाधारणमधिकारमाचक्षाणा नापत्रपन्ते । नातस्तन्मतं खण्डचकोटिमाटीकते इति । अत्रास्माभिरुच्यते यदीश्वरेणैकजातीयत्वेन सृष्टेषु मनुष्येषु लोकवेदविरुद्धं जातिभेदं प्रकल्प्य तत्राप्युत्तमजातीयत्वं च स्वस्मिन्स्वकीयेषु च साधयन्त एव नापत्रपन्ते । अतस्तादृशमासुरमतं स्वप्नेऽपि नादर्तव्यमिति । भगवता गीतायामुक्ताः खल्वासुरस्वभावाः "आढ्योऽभिजनवानस्मि कोऽन्योऽस्ति सदृशो मया । यक्ष्ये दास्यामि मोदिष्ये इत्यज्ञानविमोहिता इति । यत्तु "तथाचान्यार्थदर्शनमिति सूत्रस्य भाष्ये शूद्रस्याध्ययन-निषेधेन विद्याभाव इत्युक्तम् तन्न, "अवैद्यत्वादभाव इत्यादि पूर्वसूत्र एव विद्याभावस्य दर्शितत्वात् । स एवात्रापि प्रदर्शितश्चेदन्यार्थो न स्यात् ।

गर्भाधानादिसंस्कारैरमन्त्रैर्वा समन्त्रकैः । यदि शूद्रोऽपि संस्कार्यस्तस्य कुत्रोपयोगिता ॥१९५॥
नहि पश्वादिवत्पुत्रसमुत्पादनकर्मणि । तस्योपयोगिता तेन विना सन्ततिसंभवात् ॥१९६॥
अतो वक्तव्यमेतद्धि यच्छूद्रस्यापि संस्क्रिया । यथाशक्ति प्रकर्तव्यपुण्यकर्मार्थिकेत्यपि ॥१९७॥
द्विजसेवाऽपि शूद्रेण कर्तव्या संस्कृतेन चेत् । नान्यादृशी भवेत्किन्तु श्रौतकर्मोपयोगिनी ॥१९८॥
नहि द्विजपटोच्छिष्टपात्रप्रक्षालनादिषु । दृष्टशुद्धिफलेष्वस्ति संस्कारस्योपयोगिता ॥१९९॥
तस्माददृष्टनिष्पत्तिद्वारा फलप्रदेषुसः । वैदिककर्मसु श्रेयस्साधनेषूपयुज्यते ॥२००॥



एष एव हि पूर्वोक्तादन्यार्थो जैमिनेर्मतः । अतस्तेन कृतं सूत्रं "तथाचान्यार्थदर्शनम्" ॥२०१॥
तत्र यद्दर्शितं शूद्रः श्मशानं पादसंयुतम् । तस्माच्छूद्रसमीपेऽपि नाध्येतव्या श्रुतिर्भवेत् ॥२०२॥
या तु नाध्येतुमप्यर्हा यदीयसन्निधावपि । तस्मै सा कथमध्याप्या लेशमात्रमपीति च ॥२०३॥
तदयुक्तं श्मशानेऽपि पितृमेधे तु बह्वृचाः प्रपठ्यन्ते चतुर्वेदगतसूक्तादयो द्विजैः ॥२०४॥
तत्र शूद्रपदं नार्या उपलक्षणमीरितम् । तत्समीपेऽप्यनध्यायो न शक्यो गृहमेधिनाम् ॥२०५॥
स्वीयस्त्रीषु च शूद्रेषु नित्यं सन्निहितेष्विह । कथं तत्सन्निधौ वेदः परित्यक्तुं हि शक्यते ।२०६॥
कार्यान्तरे चेत्संलग्नो ब्राह्मणो नित्यपावकम् । तद्दासी जूहुयाच्छूद्रीत्युक्तमाषाढयोगिना ।२०७।
अग्निहोत्रान्ययागार्थंदोहनं शूद्रकर्तृकम् । शूद्रा पिनष्टि पत्नीवा व्रीहीनप्यवहन्ति च ॥२०८॥
मातृप्रभृतयो नार्यो निवसन्ति सदा गृहे । एवं स्त्रीशूद्रसम्बन्धे सर्वकर्मसु सत्यपि ॥२०९॥
सच्छूद्राः सन्ति भोज्यान्नाश्चोपनेया इति स्मृतौ । सत्यामप्यपरे सर्वजनश्रेयोऽसहिष्णवः २१०
स्त्रीशूद्रसन्निधौ वेदो नाध्येतव्य इति क्वचित् । शूद्रान्नशूद्रसम्पर्के शूद्रत्वमित्यपि क्वचित् २११
यत्प्रजल्पन्ति तत्सर्वमशिष्टाचारगोचरम् । अशास्त्रीयमतोऽर्वाग्भिर्जनैः कल्पितमिष्यते ।२१२

शूद्रों को भी गर्भाधानादि संस्कार किये जाते हैं। यदि शास्त्रीय कर्मों में शूद्र का अधिकार न ही है तो उन संस्कारों का उपयोग कहाँ होगा। सन्तानोत्पत्ति में और द्विजवस्त्रादिप्रक्षालन में उनका उपयोग नही होगा। संस्कार के विनाभी वे काम पशुपक्ष्यादि की तरह चल सकते हैं। अतः यह मानना होगा कि अदृष्टद्वारा फलजनक शास्त्रीय कर्मों में ही उनका उपयोग है। इसी अभिप्राय से "तथाचान्यार्थदर्शनम्" यह सूत्र बनाया गया। उसके भाष्य में जो कहा गया था कि शूद्र चलने वाला श्मशान है। अतः उनके पास वेद पढ़ने का नहीं, जो जिसके पास में भी पढ़ने का नहीं वह उसको कैसे पढाया जायगा ! यह ठीक नहीं, क्यों पितृमेध में श्मशान में भी बहुत वेद मन्त्र पढ़े जाते हैं। अतः शूद्र श्मशानतुल्य होने पर भी उसके पास वेद पढ़ने में कोई आपत्ति नही। कोई कहता है कि वहाँ के शूद्रशब्द स्त्री का भी उपलक्षण है, अर्थात् स्त्रीशूद्रों के पास वेद पढ़ने में निषेध है। यह भी ठीक नहीं। वेद पढ़ाने वाले गृहस्थों के घरों में पत्नी और माता इत्यादि स्त्रियाँ हमेशा रहती ही है और पूर्वकाल में शूद्रों को द्विजलोग हमेशा सेवा के लिये अपने घरों में रखते थे। ऐसी परिस्थिति में स्त्रीशूद्रों के पास न पढ़ना सम्भव नहीं है। कुछ प्रामाणिकग्रन्थों में कहा गया है कि यजमान यदि किसी काम में गया हो, नित्याग्निहोत्रादि कार्यों को उसके घर में रहने वाली शूद्री करें और यागादि के समय पीसना कूटना और दूध निकालना, शूद्रों का ही काम बताये गये हैं। अच्छे शूद्रों को उपनयन सस्कार और उनके घरों में खाने के लिए भी बताया गया है तो दूसरे ग्रन्थों में उनके साथ किसी प्रकार का सम्पर्क नहीं रखने का जो लिखा गया है वह निर्मूल है।

तत्र शूद्रपदमिति, तदुक्तम् "स्त्रीशूद्रसमीपे ब्रह्म न श्रावयेदिति ( सत्या० )। मृतस्याहिताग्नेरन्तिमसंस्कार: पितृमेधो ब्रह्ममेध इति वोच्यते। तत्र पुरुषसूक्तादयः पठ्यन्ते, तदुक्तं सायणेन" एतस्य ब्रह्ममेधेऽपि प्रेतदाहोपस्थाने विनियोगं भारद्वाज आह ( तै० आ ) इति । अग्निचयनप्रकरणे चतुर्णामग्निचितां ब्राह्मणादिवर्णानां श्मशानगर्तप्रमाणभेदः पूर्वमेव ( ८३ ) दर्शितः। मानवगृह्यसूत्रे च "तूष्णीमपि शूद्रा प्रक्षालितपाणि रित्युक्तम् । अस्याष्टावक्रभाष्यमित्थं वर्तते "सा च तूष्णीमेतत्कर्म कुर्यात् । प्रारब्धस्य हि समाप्तिनयनं पुण्यमेवं च सायंप्रातर्होमादिषु नित्येषु पुरस्ताद्यदि असन्निधाने कर्तरि शूद्राऽपि यजेत् जुह्वती किं पुनः सवर्णा पत्नी"ति । अग्निहोत्री-यातिरिक्तदोहनकार्यमपि शूद्रस्यैवेत्युक्तम् । "दासी पिनष्टि पत्नी वा, अपि वा पत्न्यवहन्ति शूद्रा पिनष्टि ( आप० खं २२ ) इति, "कौत्सः शूद्रो वा विक्रयी तं संशोध्योपास्ते ( वै० श्रौ० १२ ) विक्रयी = सोमविक्रयी। "तत्र प्रष्ठौही प्रसुवती तां चत्वारो विदीव्यन्ते ब्राह्मणो राजन्यो वैश्यः शूद्रः, तेषां य पराजयते स यजमानस्य गोषु प्रष्ठौहीमपि सृजति ( मा० श्रौ० ९५ ) इति। "ओदनसवेन यक्ष्यमाणो भवति स उपकल्पते रोहितं चर्मानडुहं सुवर्णरजतौ च रुक्मौ शतमानं च प्रवर्तं चतुरो वर्णान् ब्राह्मणं राजन्यं वैश्यं शूद्रमथैतान् दक्षिणत उदङ्मुखानुपवेशयति । अथान्वारब्धे यजमाने जुहोति ( १८।८ ) इति, "आर्याधिष्ठिता वा शूद्राः संस्कर्तारः स्युः ( उ पटले ) चोक्तम् । शूद्रसम्बद्ध-श्रौतकर्माणि च कतिचित्पूर्वमेव दर्शितानि । दासना-पितगोपालकुलमित्रार्धसीरिणः, एते शूद्रास्तु भोज्यान्ना यश्चात्मानं निवेदयेत्" ( वृद्धयमस्मृ० ३।१० ) एवं स्त्रीशूद्रसम्बन्धस्य सर्वदा सत्वेऽपि तयोः समीपे वेदाध्ययन-निषेधः शूद्रान्नशूद्रसम्पर्कादिभिः शूद्रत्वप्राप्ति रिति तत्र तत्र स्मृत्यादिषु यदुक्तं तत्सर्वं जातिप्रथावादिभिः परस्पर पार्थक्य सम्पादनार्थं कल्पितमित्येव मन्तव्यम् ।

गुणपक्षे च शूद्रस्य त्वधिकारो ह्यमन्त्रकः। प्रोक्तो वैदिकतद्वर्णस्वरूपानुगुणेन हि ॥२१३॥
जातिवादिमते शूद्रो ब्राह्मणादपि चोत्तमः। सूक्ष्मबुद्धिश्च सर्वेषु तस्मादधिकरिष्यति २१४॥
अस्तु शूद्रसमीपे तन्निषेधः श्रुतिसम्मतः। सर्वस्मृति समादिष्टः पुराणैर्वा समर्थितः ॥२१५॥
तथापि सर्वशास्त्रेषु तदुक्तेष्वपि कर्मसु। अधिकारो भवेत्तस्य यथा सौराष्ट्रसंस्कृतिः॥२१६॥
सौराष्ट्रे ये गता विप्रा ये गता दक्षिणापथे। संस्कार्यास्ते पुनस्सन्तीत्युक्तेऽपि तन्निवासिनः२१७॥
यथा संस्कारमर्हन्ति तथा शूद्राः श्रुतिं स्वयम्। बुद्धिमन्तः पठिष्यन्ति तान् प्रत्यप्रतिषेधतः २१८
यथा तद्देशयोगेन भिन्नदेशायसंस्कृतिः। नष्टा चेदपि तद्देशद्विजाश्चार्हन्ति संस्कृतम् ॥२१९॥
तथा शूद्रसमीपे सा नाध्येया चेदपि श्रुतिः। शूद्रा श्रुतिं पठिष्यन्ति न्यायादेव च दर्शितात् ॥२२०॥
त्वदुक्त न्यायतस्तेषां द्विजसंस्कारयोग्यता। नास्तीति कथने ते च भवेयुर्न द्विजा ह्यपि ॥२२१॥
नन्वध्यापकदौर्लभ्यात्पठेयुस्ते कथं श्रुतिम्। निषेधोऽध्यापकेभ्यश्च श्रूयतेऽपीति चेच्छृणु २२२॥
न पाठयन्तु कुटिलाः पाठयिष्यन्ति वैदिकाः। निषेधवाक्यनिर्मातृतात्पर्यं ये विदन्ति च ॥२२३॥



एवं तैलिङ्गकर्नाटकलिङ्गब्राह्मणा यदि। शम्भुतुल्या भवेयुश्चेदपि श्राद्धादिकर्मसु ॥२२४॥
नैव पूज्या भवन्तीति प्रत्यपादि च सङ्ग्रहे। तथापि कर्तुमर्हन्ति श्राद्धं ते च स्वदेशगैः ॥२२५॥
आन्ध्रादौ लब्धजन्मानः श्राद्धे पूज्या न चेद्यदि। तेषां श्राद्धादिकर्तृत्वयोग्यता न भवेदपि २२६॥
यतस्तत्कर्तृके श्राद्धे भोक्तारः स्युः सुदुर्लभाः। नोदीच्यास्तत्र भोक्तारो दाक्षिणात्यादिवेश्मसु ॥
स्वयं ते नापि भोक्तारः पूज्यत्वप्रतिषेधतः। अन्ततः श्राद्धयोग्यत्वं तेषां न स्यात्तव स्मृतेः २२८
तामुल्लङ्घ्य स्मृतिं श्राद्धं ते कुर्वन्ति सदाऽपि चेत्। एतां स्मृतिं समुल्लङ्घ्य कथं शूद्रः पठेन्न हि
नावैदिकमधीयीत ब्राह्मणस्त्विति वैदिकम्। प्रतिषेधं तिरस्कृत्य सोऽधीते चेदवैदिकम् २३०॥
स्त्रीशूद्रौ वेदमन्त्रादि नाधीयातामिति स्मृतिम्। पश्चात्कल्पितामन्यैः कथं तौ पाठयिष्यतः ॥
विधिवद्वेदवेदाङ्गं मीमांसाशास्त्रसंयुतम्। अधीत्यैव विवाहश्च श्रुतिस्मृत्योर्निरूपितः ॥३३२॥
तदुल्लङ्घ्य त्वया चाद्य हिन्दोमाङ्गलमधीत्य हि। विवाहः क्रियते चेद्द्वोः पञ्चाग्नित्याग-पूर्वकम्
द्विजसेवैव कर्तव्या शूद्रैरिति स्मृतिं कुतः। पालयिष्यन्ति ते शूद्राः स्वार्थलोभिप्रकल्पिताम् २३४
देहभोगान् परित्यज्य निमग्नानां तपोव्रते। सेवा कार्येति शास्त्रोक्तं लोकाचारोऽपि तादृशः २३५
तपस्त्यक्त्वेन्द्रियार्थेषु रमतां सूकरादिवत्। बहुसन्तानदक्षाणां कथं सेवा करिष्यते ॥२३६॥
वेद एव धनं येषां नास्त्यन्यद्धनमैहिकम्। तेषां सेवा प्रकर्तव्येत्याशये सति च स्मृतेः ॥२३७॥
सा सेवाऽद्य कथं तेषां कर्तुं योग्या भवेदिह। धनं प्रापञ्चिकं येषां प्राणभूतमिहास्ति भोः ॥२३८
ज्ञात्वाऽधीत्य विधीन् सर्वान् प्रतिषेधानपि द्विजः। जहाति चेदिमानन्यश्चाज्ञात्वा पालयेत्कथम् ॥
द्विजस्य तत्परित्यागो दुर्गतेरेव कारणम्। शूद्रस्यैतत्परित्यागः श्रेयस्करो निरूप्यते ॥२४०
शूद्रवृत्तिर्द्विजोऽद्यास्ति शूद्रो ब्राह्मणवृत्तिकः। नीचवृत्तिर्दोषहेतुरुच्चवृत्तिश्च पुण्यदा ॥२४१॥
त्रिपुरुषैः श्रुतित्यागे चाग्रे श्रुतिर्निषिध्यते। आङ्गलशासनमारभ्य त्यक्तवासौ ततोऽधिकैः ॥
तथाप्युत्तरसन्तत्या पठ्यते चेत्क्वचिच्छ्रुतिः। ततोऽपि प्राक् परित्यक्त श्रुतिजैः किं न पठ्यते ॥

गुणपक्ष में अमन्त्रक यागादि में शूद्र का अधिकार अब तक बताया गया है और अब जातिवादी के मत के अनुपार उसे समन्त्रक यागों में अधिकार बताया जाता है। क्यों ? उसमें जातिशूद्र जातिब्राह्मण से भी उत्तम और सूक्ष्मबुद्धि हो सकता है। शूद्र समोप में, वेद न पढ़ने को स्मृत्यादि में भले ही लिखित हो तो भी, सौराष्ट्रादि निवासी का संस्कार की तरह शूद्र वेद पढ़ सकता है। बोधायन गृह्यसूत्र में लिखा गया है कि सौराष्ट्र सिन्धु सौवीर अवन्ती और दक्षिणापथ इन देशों में जो ब्राह्मण जाता है उसको दुबारा संस्कार करना चाहिये। इतना कहने पर भी जैसे सौराष्ट्रादि के लोग संस्कार का अनर्हं नही किन्तु उसका अर्हं हो है, वैसे ही शूद्र के पास वेद न पढ़ने का हो तो भी शूद्र उसे पढ़ सकता है। जैसे वहाँ ऐसा कहना नही हो सकता कि जिस देश में जाने मात्र से ब्राह्मण का संस्कार नष्ट हो जाता है तो उन देशवासी कैसे संस्कार के योग्य होंगे, वैसे यहाँ भी ऐसा कहना नहीं होगा कि जिसके

पास भी पढ़ना निषिद्ध है उसे कैसा पढ़ाया जाय ? सङ्ग्रह नामक ग्रन्थ में कहा गया है कि तैलिङ्ग कर्नाटक वङ्ग और कलिङ्गादि के ब्राह्मण शंभु तुल्य होने पर भी श्राद्ध में पूजनीय नहीं है। यहाँ भी ऐसा कहना उचित हा होगा कि वे अन्यदेशोय श्राद्ध में पूजाहं न होने पर भी स्वयं श्राद्ध कर सकते हैं। भाष्योक्तशूद्रन्याय से कहा जाय तो वे श्राद्ध कर नहीं सकेंगे। ऐसी निषेध स्मृतियों का तिरस्कार करके जब सौराष्ट्रादि के लोग संस्कार और तैलङ्गादि के लोग श्राद्ध कर लेते हैं तो शूद्राध्ययन निषेध स्मृतियों का उलङ्घन करके शूद्र क्यों वेद नहीं पढ़ेगा ? ब्राह्मण अवैदिक भाषा को न पढ़े, ऐसे निषेध को न मानकर वह उसे पढ़ता है तो शूद्र वेद न पढ़े ऐसे निषेध को वह क्यों मानेगा ? देह भोगों को छोड़कर तपस्या में निमग्न लोगों की सेवा करने का विहित है तो निरन्तर देहभोगों के लिये दौड़ने वालों की सेवा क्यों की जायगी ? विधिनिषेधशास्त्रों को जानने वाले ही उनको न मानकर चलते हैं तो उनको न जानने वाले उनको कैसे मानेंगे। शास्त्रीयोच्च प्रवृत्तियों को छोड़कर नीच प्रवृत्तयों में जाना, ब्राह्मणों का उचित न होने पर भी नीच प्रवृत्तयों को छोड़कर शास्त्रीयोच्चवृत्तियों में जाना शूद्रों के लिये उचित ही है।

सौराष्ट्रसंस्कृतिरिति, तदुक्तं "सौराष्ट्रं सिन्धुसौवीरमवन्तीं दक्षिणापथम्। एतानि ब्राह्मणो गत्वा पुनः संस्कारमर्हति" ( सत्या० गृह्यशेषे ) इति। त्वदुक्तन्यायत इति, उक्तशूद्रन्यायत इत्यर्थः। "यस्य हि समीपेऽपि नाध्येतव्यं भवति स कथमश्रुतमधीयीत" इति न्यायेन दर्शितसंस्कारविषयेऽपि "यद्देशगमनमात्रेण ब्राह्मणस्य संस्कारो नश्यति तद्देशवासिनः कथं संस्क्रियेरन्निति कथने सौराष्ट्रादयो द्विजा एव न स्युः। यदा तादृशनिषेधसत्वेऽपि ते संस्कारं स्वयं कुर्वतेऽन्येऽपि तदङ्गीकुर्वन्ति च तदा शूद्रसमीपाध्ययननिषेधेऽपि शूद्राः पठितुमर्हन्त्येव। एवं श्राद्धादिविषयेऽपि "तैलिङ्गकर्णाटकलिङ्गवङ्गसम्बन्धिनो माथुरियाश्च विप्राः। श्राद्धे विवाहे खलु यज्ञपाके न पूजनीया अपि शम्भुतुल्याः' इत्युक्तम्। तत्र श्राद्धादौ भोक्तृणामेव प्रायः पूजा भवति। सा तैलिङ्गादीनां निषिद्धा। तदन्ये च तैलिङ्गादिगृहे न भुञ्जते इति तेषां दर्शितनिषेधानुसारेण श्राद्धयोग्यतैव न स्यात्। तथापि ते श्राद्धादिकं यथा कुर्वन्ति तथा शूद्राः श्रुतिं पठितुमर्हन्त्येव।

विधिनिषेध-बोधार्थं पठितव्या जनैः श्रुतिः। अन्यथा हि तदज्ञाने न प्रवृत्तिनिवृत्तयः २४४
ज्ञात्वैवापालनं दोषो न त्वज्ञात्वा तु बालवत्। अज्ञात्वा बालकः सर्वं कुर्वन्नपि न दुष्यति ॥
श्रावयेच्चतुरो वर्णानित्युक्तिर्जीविका परा। न त्वपूर्वविधिस्तस्मान्न नित्यश्रावणं ततः ॥२४६
जीविका यस्य विप्रस्य न चलेच्छ्रावणं विना। कदाचित्तेन श्राव्येत न सदा नापि चेतरैः ॥
जीविकासाधके शश्वत्प्रवृत्ती रागतो भवेत्। न तद्विधायके वाक्ये विधित्वं संभवेदिति २४८
प्रकाशात्मा यतिश्चाष्टवर्षमध्यापयेद्गुरुः। इत्यस्यार्थं चाष्टवर्षश्चाधीयीतोपवीतवान् ॥२४९॥



इत्युवाचान्यथा तस्य विधित्वं न भवेदिति। तथैव चतुरो वर्णान् श्रावयेदिति तद्विधेः २५०
वर्णाः शृण्वन्तु चत्वार इत्येवार्थो निगद्यते। शृण्वन्त्विति पदं पश्चाद्‌गुर्व्यध्ययनलक्षकम्॥२५१॥
श्रुत्वा पूर्वं गुरोर्वक्त्राच्छिष्योऽधीते ततः परम्। श्रुतिश्च श्रूयमाणत्वादित्युक्तिश्चार्यसम्मता
एवं चापि चतुर्णां तत्सिद्धमध्ययनं श्रुतेः। घट्टकुटीप्रभातस्य वृत्तान्तः समुपस्थितः ॥२५३
यज्ञे चानवक्लृप्त्योक्तिः प्रतिषेधोऽथवाऽपरः। पर्युदासस्तथाप्येतज्ज्ञानार्थं पठनं श्रुतेः ॥२५४
शूद्रस्येष्टिनिषेधश्चेन्निषेधः पठने कुतः। यज्ञमात्रनिषेधेन स्यादेवाध्ययनं श्रुतेः ॥२५५॥
एवं शूद्रस्य यागाधिकारो माभूत्तथापि सः। वेदविद्यासु स्यादेव सामर्थ्यादधिकारवान् २५६॥
शूद्रे यागनिषेधस्य संन्यासप्रतिषेधवत्। सङ्कोचःकुत्रचिद् व्यक्तिविशेषे मन्यते बुधैः २५७॥
जरामृत्यवधि चाग्निहोत्रादेरवलोक्य हि। संन्यासादिनिषेधश्च कैश्चिद्धोमद्भिरिष्यते २५८॥
तदन्ये त्विह वेदान्ते दृष्ट्वा संन्यासचोदनाम्। कलौ सामान्यतस्तस्य सङ्कोचमनुमन्वते २५९॥
पुनस्तस्यापि सङ्कोचमविरक्तजने बुधाः। अतो न्यासनिषेधः स न विरक्ते प्रवर्तते ॥२६०
एवं सामान्यतः शूद्रनिषेधः श्रौत शूद्रकम्। प्रति प्रवर्तते नान्यं धीमन्तं शूद्रपुत्रकम् ॥२६१
दीक्षितो न ददात्येतन्निषेधः श्रौतदीक्षितम्। यथा प्रवर्तते नान्यं दीक्षितात्मजदीक्षितम् २६२
ननु धीमांश्च शूद्रोऽपि जात्या स्याच्छूद्र एव हि। तन्निषेधस्य सङ्कोचो युक्तो नाल्पधियीति चेत्
मनुष्यजातिमुद्दिश्य कलौ न्यासो निषिध्यते। वीतरागोऽपि मर्त्यत्वजातिरेव तथापि सः २६४॥
प्रतिषेधो यथा श्रीमच्छङ्कराचार्यतन्निभम्। न प्रवृत्त स्तथा शूद्रं धीमन्तं न प्रवर्तते २६५॥
जात्या शूद्रश्च मेधावी ब्राह्मणादपि चोत्तमः। मार्कण्डेयस्मृतौ सर्वशास्त्रज्ञत्वेन सम्मतः ॥
वेदशास्त्रेषु निष्णातं तदध्यापनकर्मणि। लग्नं कुमारिलो द्वेषाद् दुष्टशूद्रमवोचत ॥२६७॥
विद्याभावेन शूद्रस्य यज्ञेऽशक्तिः प्रदर्शिता। स शूद्रः सूत्रकारस्य मते कीदृक् प्रतीयते २६८
सर्वथा जाति शूद्रस्य ह्यवैद्यत्वं न संभवेत्। तज्जाति ब्राह्मणेऽपीति स वा कीदृक्च तन्मते
एतेन ज्ञायते जातिव्यवस्थायां दुराग्रहम्। विनाऽन्यत्कारणं किञ्चिन्न वक्तुं शक्यते बुधैः २७०
स्यान्नाम कारणं किञ्चदादौ तस्याः प्रकल्पने। तद्रक्षणे त्विदानीं तद् दुराग्रहैककारणम् २७१
ननु वैदिककर्मार्थं विद्योपार्जनमिष्यते। तच्च शूद्रस्य शास्त्रेषु विहितं नेति चेच्छृणु ॥२७२
यथा स्वाविहितं श्रौतकर्मकाण्डं द्विजः पठेत्। तथा स्वाविहितं तच्च शूद्रः पठितुमर्हति ॥
यद्यपि द्विजमात्रस्य न सर्वश्रौतकर्तृता। किन्तु कस्यचिदेव स्यात्कर्मण्येव च कुत्र चित् २७४
तथापि सर्ववेदांस्ते द्विजाः सर्वे पठन्त्यपि। न तु स्वकीययागोपयुक्तं भागं हि केवलम् २७५
एवं शूद्रस्य वेदोक्तकर्मकर्तृत्वशून्यता। भवेन्नाम तथाप्येष वेदानध्येतुमर्हति ॥२७६॥
यथा स्वाविहितं स्वेन कर्म जिज्ञास्यमिष्यते। क्षत्रियाविहितो यागः क्षत्रियेण विचार्यते २७७
तथा स्वाविहितं श्रौतं शूद्रैरर्थादिकं पुनः। निस्सङ्कोचं विजिज्ञास्यं नान्यथोपनिषन्मतिः २७८
तदभावे चात्महत्या दोषः श्रुत्यैव चोद्यते। तांस्ते प्रेत्यभिगच्छन्ति ये के चात्महनस्त्विति ॥

विधिनिषेधज्ञान के लिये भी वेद पढ़ना आवश्यक है नहीं तो विधि विषय में प्रवृत्ति और निषेधविषय से निवृत्ति नहीं होगी। जानकर विधि-

निषेधों को उल्लङ्घन करने पर ही दोष होगा न कि न जानकर, जैसे बालक। यहाँ यह कहना ठीक नहीं कि स्वयं वेद को न पढ़ने पर भी "श्रावयेच्चतुरो वर्णान्" इस विधि से भी सबको विधिनिषेधज्ञान हो सकता। क्यों ? यह तो अपूर्व विधि नहीं जिससे सभी ब्राह्मण सबको धर्माधर्म सुनाते रहे किन्तु जिविका के लिये अभ्युनुज्ञा विधि है। धर्माधर्म सुनाने के बिना जिसकी जीविका न चलेगी वही उनको सुनावेगा। जीविकार्थ विधि में स्वतः राग से प्रवृत्ति होती है। अतः उसमें विधित्व नहीं रहेगा। इसलिये "अष्ट वर्षं ब्राह्मण-मुपनयीत तमध्यापयेत" इसका अर्थ "अष्टवर्षो ब्राह्मण उपगच्छेदधीयीत" ऐसा कहा गया है। उसी प्रकार यहाँ भी "चत्वारो वर्णाः शृणुयुः" चार वर्ण सुने यही उसका अर्थ होता है। यहाँ शृणुयुः यह पद तदनन्तर भावि अध्ययन को लक्षणावृत्ति से विधान करता है। "शूद्रो यज्ञेऽनवक्लृप्त" यह अग्निष्टोम में शूद्र का निषेध या उससे पर्युदास हो, उसको जानने के लिये शूद्र को वेद पढ़ना ही चाहिये। शूद्र का याग में निषेध हो तो भी वेद पढ़ने में क्या निषेध है। याग में जिनका अधिकार निषिद्ध है उनको भी वेदविद्या में वह निषिद्ध नहीं है। अतएव अनाश्रमी और देवताओं को कर्मों में अधिकार न होने पर भी विद्या में अधिकार माना गया। उसी प्रकार निषेध पक्ष में शूद्र का यज्ञ में अधिकार न होने पर भी विद्या में अधिकार जरूर होगा। जातिवादी उसको निषेध मानेगा तो संन्यासनिषेध की तरह वह मन्दमतिशूद्रविषयक होगा। कलियुग में मनुष्य-मात्र के लिये संन्यास निषेध हैं, तो भी उसका मन्द वैराग्य पुरुष में जैसे सङ्कोच माना गया है अतएव वह श्रीशङ्कराचार्यादि में लागू नहीं हुआ, वैसे ही शूद्रमात्र केलि ये जो यागमात्रनिषेध है उसका मन्दबुद्धि शूद्र में सङ्कोच होगा। अतः वह निषेध बुद्धिमान शूद्रपुत्र में लागू नहीं होगा। आत्रेय का कहना है कि "शूद्र निर्विद्य है। अतः उसका श्रौतकर्मों में अधिकार नहीं है'। वस्तुतो निर्विद्यत्वं कहीं शूद्रपुत्र में कहीं ब्राह्मण पुत्र में भी रहता है। अतः आत्रेयोक्त कर्मानधिकार उन दोनों में भी है। इससे जन्म जातिव्यवस्था अप्रामाणिक और दुराग्रहमात्र रक्षित मालूम पड़ता है। यहां यह शङ्का की जाती है कि वैदिक कर्मों के लिये विद्योपार्जन किया जाता है और वे कर्म शूद्र के लिये निषिद्ध होने से तदर्थं विद्योपार्जन भी शूद्र का नहीं। अतः वह निर्विद्य है। उसका उत्तर "जिसके लिये जो वैदिक कर्म विहित है वह उतना ही नहीं पढ़ता किन्तु उसका अविहित कर्म भाग भी वह जैसे पढता है, वैसे ही शूद्र का अविहित कर्म भाग भी वह पढ़ सकता है नहीं तो उसका उपनिषज्ज्ञान नहीं होगा और ऐसी स्थिति आत्महत्या का समान बतायी जाती है।



शूद्रे यागनिषेधस्येति। "तस्माच्छूद्रो यज्ञेऽनवक्लृप्त इति यदि निषेधवाक्यं तदा तस्य श्रुतिसम्मतशूद्रे, कलौ संन्यासप्रतिषेधवत्, दीक्षितदानहोमनिषेधवच्च सङ्कोचः। कलियुगसंन्यासनिषेधस्य यथाऽविरक्तपुरुषे, यथा वा "दीक्षितो न ददाति न जुहोतीति निषेधस्य श्रौतदीक्षिते सङ्कोच स्तथा शूद्रयज्ञनिषेधस्यापि श्रौतशूद्रे सङ्कोचः। पराभिमतजातिशूद्रं प्रति स न प्रवर्तत इति यावत्। "अग्निहोत्रं गवालम्भं संन्यासं पलपैतृकम्। देवराच्च सुतोत्पत्तिं कलौ पञ्च विवर्जयेदिति कलियुगसंन्यासनिषेधस्य "यावद्वर्णविभागोऽस्ति यावद्वेदः प्रवर्तते। संन्यासं चाग्निहोत्रं च तावत्कुर्यात्कलौ युगे" इति प्रतिप्रसवे, एतस्यापि नियमः "चत्वार्यब्दसहस्राणि चत्वार्यब्दशतानि च। कलेर्यदा गमिष्यन्ति तदा, त्रेतापरिग्रहः। संन्यासश्च न कर्तव्यो ब्राह्मणेन विजानता" इति पराशरेण कृतः। ( अत्र त्रेतापरिग्रहः-त्रेताग्नि परिग्रहः। अग्न्याधानमिति यावत् ) एवं निषिद्धेऽपि संन्यासे विरक्तैरद्यतनैः संन्यासाश्रमं स्वीचिकीर्षुभिस्तस्याविरक्तमात्रविषयत्वं यथोच्यते तथा पाखण्डप्रवर्तितजातिप्रथान्तर्गतशूद्रस्य वेदग्रहणधारणादिपटुत्वसंभवात् शूद्रोद्देश्यककतिपय-श्रौतकर्मश्रवणाच्च तन्निषेधवाक्यस्यापि श्रौतशूद्रमात्रविषयकत्वं वक्तव्यम्। तस्याप्यग्निष्टोम-प्रकरणगतत्वेन तन्मात्रपर्युदासः। तदपि शूद्रस्याश्रमनिषेधवत्समन्त्रकानुष्ठानविषयकमिति वक्तव्यम्। शूद्रस्य सर्वाश्रम-निषेधमन्यत्रोक्तमाशङ्क्य पराशरमाधवीये चेत्थमभिहितम्। "ननु शूद्रस्याश्रम एव नास्ति। "चत्वार आश्रमास्तात तेषु शूद्रस्तु नार्हती"ति निषेधात्कथं तस्य गार्हस्थ्याङ्गीकारः। उच्यते। समन्त्रक एव विवाहो निषिध्यते न त्वमन्त्रकः। अन्यथा विवाहप्रकरणोदाहृतानि शूद्रविषयाणि वचनानि पञ्चमहायज्ञादिगृहस्थधर्मेषु शूद्राधिकार-वचनानि विरुध्येरन्नि"ति। एवं शूद्रयज्ञनिषेधः समन्त्रकाग्निष्टोमानुष्ठाननिषेधपरः। यज्ञमात्र-प्रतिषेधपरत्वे पञ्चमहायज्ञनिषेधापत्तेः। तेषु च ऋषियज्ञो देवयज्ञश्च वर्तते। ऋषियज्ञो वेदाध्ययनं देवयज्ञश्च प्रसिद्धः स्वर्गादिफलको वैदिको यागः। तदभावे चात्महत्येति। तदुक्तमीशावास्ये "असुर्या नाम ते लोका अन्धेन तमसा वृताः। तांस्ते प्रेत्याभिगच्छन्ति ये के चात्महनो जनाः" इति।

इदानीं ब्रह्मसूत्रोक्तवर्णस्वरूपमुच्यते। यद्बाह्यलिङ्गैर्वर्णानां श्रुतौ सूत्रे च दर्शितम् २८०॥
पूर्वाधिकरणेनास्य प्रासङ्गिकी हि सङ्गतिः। मनुष्याणां पूर्वसिद्धे चाधिकारे त्वनूदिते २८१
अपवादेन देवानामाधिकारे निरूपिते। मनुष्यशब्दसंप्रोक्तवर्णस्वरूपमुच्यते ॥२८२॥
मनुष्यत्वेन शास्त्रेषु न किञ्चित्कर्म चोद्यते। किन्तु तद्ब्राह्मणत्वादितत्तद्वर्णतयैव हि ।२८३।
भिन्नकर्मसु वर्णनामधिकारे ह्यमन्त्रके। शूद्रस्य पूर्वमीमांसाशास्त्रेणैव निरूपिते ॥२८४॥
वर्णस्वरूपजिज्ञासा प्रसङ्गादत्र जायते। तन्निवृत्त्यर्थमेतच्च सूत्रकारो न्यरूपयत् ॥२८५॥
नहि गोत्वादिवद्वर्णा लोकसिद्धास्तु जातयः। येन लोकत एव स्यात्तद्धीर्गोत्वादिवन्नृणाम् २८६
यदि शूद्रस्य विद्याधिकारवारणमत्र हि। तदाऽपि तन्मुखेनेह शूद्रक्षत्रियवर्णयोः ॥२८७॥
स्वरूपमप्यपूर्वार्थलाभाय व्याससूत्रतः। दर्शितं चेति वक्तव्यंनान्यथा तत्स्वरूपधीः ॥२८८॥

अधिगम्यस्वरूपादिविनिर्णयप्रसङ्गतः । अधिगन्तृस्वरूपस्य निर्णयश्चाप्यपेक्ष्यते ॥२८९॥
यद्यपि ब्रह्मविज्ञाने वर्णानां नोपयोगिता । तथापि तद्धेतुभूतचित्तशुद्ध्यर्थं कर्मसु ॥२९०॥

अब ब्रह्मसूत्रोक्त वर्णस्वरूपाधिकरण सूत्रों का अर्थ बताया जाता है। पूर्वाधिकरण से इसकी प्रसङ्ग-सङ्गति है। शास्त्रों में मनुष्यमात्र का अधिकार जो पूर्वमीमांसा में ही कहा गया है, यहाँ अनूदित है और उसका अपवाद रूप से देवताओं का भी विद्या में अधिकार, इसके पूर्वाधिकरण में सिद्ध किया गया था। मनुष्य शब्दाभिप्रेत वर्णों का तो भिन्न-भिन्न कर्मों में और शूद्र का अमन्त्रक यज्ञों में अधिकार ( २१५ पृ० ) पूर्वशास्त्र में ही बताया गया था। अब वर्णों का स्वरूप क्या है ऐसी जिज्ञासा होने पर वह यहाँ बताया जाता है। ज्ञातव्यब्रह्मस्वरूप बोधक इस शास्त्र में ज्ञातृ वर्णस्वरूप का भी बोधन करवाना आवश्यक है। यद्यपि ब्रह्मविज्ञान में गृहस्थकर्मोपयोगी वर्णों की आवश्यकता नही है तो भी उस ज्ञान में उपयोगी चित्तशुद्धि में निष्काम कर्मों की आवश्यकता होने से तदर्थं वर्णों का स्वरूप यहाँ बताया जाता है।

मनुष्याणां शास्त्रेषु शास्त्रीयेषु चाधिकारः "अपि वा तदधिकारान्मनुष्यधर्मः स्यादि (जै० ६।७।३२) त्यत्र दर्शितः। तत्र तदधिकारादित्यस्य शास्त्रस्य मनुष्याधिकारत्वादित्यर्थो भाष्ये प्रोक्तः। स एव चात्र "हृद्यपेक्षया तु मनुष्याधिकारत्वादि ( ब्र० सू० १।३।२५ ) इत्यत्रानूदितः। तदपवादेन देवानां विद्याधिकारः "तदुपर्यपि बादरायणः संभवादि ( २६ ) त्यादिभिः साधितः। तत्र मनुष्यशब्दाभिप्रेतवर्णानां भिन्नभिन्नकर्मसु शूद्रस्यामन्त्रपूर्वकश्चाधिकारः, परमते तस्यानधिकारो वा पूर्वत्रैव निरूपितो न तु वर्णानां स्वरूपम्। तस्यात्मस्वरूपवदुत्तरत्र शारीरके वक्ष्यमाणत्वात्। कालान्तर-लोकान्तर फलकैः कर्मविधिभिस्तत्कर्तुरात्मनो देहान्तरसम्बन्धस्तेन च तस्य नित्यत्वमनुमानेन पूर्वत्रैव ज्ञापितं भवति न तु तस्य नानात्वमेकत्वं वा निष्कृष्टस्वरूपम्। यद्यपि नानात्वमात्मनां कर्मविधिभिरेव ज्ञायते, अन्यथा कृतहानाकृताभ्यागम-प्रसक्त्या सुखदुःखाद्यनुभवव्यवस्थानुपपत्तेस्तथापि तेषामणुत्वं महत्वं वा पूर्वशास्त्रान्न सिद्धमिति तदत्रोत्तरमीमांसायां तत्राप्यपूर्वार्थत्वलाभायाद्वितीयब्रह्मस्वरूपत्वं च विशिष्य प्रदर्शितम्। एवमेव वर्णानामपि तत्तत्कर्मकर्तव्यताबोधकचोदनाभिरस्तित्वं गृहस्थाश्रममात्रे तत्रापि पुरुषमात्रे स्थितिः शास्त्रीयकर्मस्वेव तेषामुपयोगश्च पूर्वतन्त्रे दर्शितो भवति न तु तेषां स्वरूपमिति तदत्र निरूप्यते, "शुगस्य तदनादर-श्रवणादित्यादिभिः। यदा च वर्णस्वरूपनिरूपणं तदा नापृष्टो ब्रूयादिति न्यायेन तदुपपादकजिज्ञासाऽपि कल्पनीया भवति। यथाऽपूर्वार्थलाभाय पूर्वोत्तरमीमांसयोः स्वरतोऽन्यार्थबोधकानामपि बहूनां श्रुतिसूत्रस्थपदानामन्यार्थेऽपूर्वत्वेन प्रतीयमाने तात्पर्यं वर्णितम्, तद्यथा 'विधिस्तु धारणेऽपूर्वत्वादित्यादौ पूर्वत्र, "विधिर्वा धारणवदित्यादावत्र चापूर्वार्थो विधेयत्वेनेष्टः। तदर्थमेव चापाततोऽ-



द्वैतपरत्वे सन्दिह्यमा नाना मपि ब्रह्मसूत्राणामद्वैते तात्पर्यं वर्णितम्। तत्र तेषाँ सन्दिह्यमानत्वं च खण्डने "सोऽयमपूर्वः प्रमाणादिसत्वानभ्युपगमात्मा वाक्स्तंभनमन्त्रो भवताऽभ्यूहितो नूनं यस्य प्रभावाद्भगवत्पादेन बादरायणीयेषु सूत्रेषु भाष्यं नाभाषी "त्यादि श्रीहर्षवाक्येनापि ज्ञायते, अन्यथा भगवता बादरायणेन वेदान्तसूत्राणि नारचिषतेत्येवोच्येत, तथा प्रकृतेऽप्यपूर्वार्थलाभाय वर्णस्वरूपनिरूपणपरमिदमधिकरणमिति वक्तव्यम्। न च वेदान्तानामद्वैतब्रह्मप्रतिपादनपरेऽस्मिन् ग्रन्थे वर्णस्वरूपनिरूपणमसङ्गतमिति वाच्यम्। देवानां विद्याधिकारनिरूपणवदस्याप्युपपत्तेः। त्वन्मते शूद्रस्यानधिकारनिरूपणमप्यसङ्गतमेव स्यात्। एतत्प्रासङ्गिकमिति चेत्प्रसङ्गोऽपि वर्णस्वरूपस्यैव न त्वनधिकारस्य। यत्तु द्विजात्यधिकारनियमापवादेन शूद्रस्य विद्याधिकारमाशङ्क्य, "तस्माच्छूद्रो यज्ञेऽनवक्लृप्त" इति निषेधबलात्तत्र शूद्रशब्दस्याधिकृतविषयत्वमित्युक्तं, तदुत्तरमुच्यते। तस्याधिकृतविषयत्वमपि शूद्रशब्दस्य यादृशप्रवृत्तिनिमित्तमाश्रित्योक्तं तेनापि शूद्रस्वरूपमेव दर्शितं भवतीति। द्विजाधिकारनियमापवादशङ्कासमाधानयोरस्मत्सम्मतत्वेऽपि दिजत्वे द्विजपुत्रत्वसामानाधिकरण्यनियमस्यायुक्तत्वेनानङ्गीकारात्। द्विजपुत्रत्वस्य द्विजत्वहेतुत्वे द्विजत्वारंभकसंस्कारानर्थक्यम्। न च जन्मसिद्धस्यैव द्विजत्वस्य संस्कारो ज्ञापकहेतुर्न तु कारकहेतुरिति वाच्यम्। इन्द्रियप्रदीपादीनामेव ज्ञापकहेतुत्वाङ्गीकारेण तदन्येषां तदसंभवात्। यदि वेदान्तिनये तेषामपि आवरणभङ्गकारित्वेन न ज्ञापकहेतुत्वमित्युच्यते तदा सर्वेषामपि कारकहेतुत्वमेवेति न सुतरां संस्कारस्य ज्ञापकहेतुत्वम्। ननु "वृत्या शूद्रसमो ह्येष यावद्वेदे न जायते" इत्यादि बौधायनादिस्मृतिप्रामाण्याद् द्विजत्वं जन्मसिद्धमित्येव ज्ञायते। अन्यथा यावद्वेदे न जायते तावच्छूद्र इति वक्तव्ये वृत्या शूद्रसमत्वोक्तेरसङ्गतत्वापत्तेरिति चेन्न। "मातुरग्रेऽधिजननं द्वितीयं मौञ्जिबन्धनात्। तृतीयं यज्ञदीक्षायां द्विजस्य श्रुति चोदनात्। तत्र यद्ब्रह्मजन्मास्य मौञ्जीबन्धनचिह्नितम्। तत्रास्य माता सावित्री पिता त्वाचार्य उच्यते" इत्यादिमन्वादि ( २।१६२ स्मृतिभिः द्विजत्वस्य जन्मसिद्धत्वाभावावगमात्।

एतदुपरि श्लोके, गृहीतद्विजत्वसंस्कारस्यानधीतवेदत्वे शूद्रत्वं "योऽनधीत्य द्विजो वेदमन्यत्र कुरुते श्रमम्। स जीवन्नेव शूद्रत्वमाशु गच्छति सान्वय इत्युक्त्वा कुत एतदिति शङ्कायां "मातुरग्रेऽधिजननमित्यादिकमुक्तम्। अधिजननमित्यत्राधिरनर्थकः "अधिपरी अनर्थकाविति स्मरणात्। मातुरग्रे मनुष्यव्यक्तिमात्रस्य जननं न तु वर्णाश्रमयोरित्यर्थः। उक्तं च दक्षस्मृतौ "जातमात्रः शिशुस्तावद्यावदष्टौ समा वयः। स हि गर्भसमोज्ञेयो व्यक्तिमात्रं प्रदर्शितः ( १।४ ) इति। उत्पन्नमात्रस्याण्डावस्था प्रागुक्तैव ( ५९ ) यत्तूक्तं चातुर्वर्ण्य संस्कृतिविमर्शे "जातमात्रो ब्राह्मणो जातमात्र इत्युत्तरपदलोपी समासो भवेदिति तन्न। जातमात्रस्य ब्राह्मणत्वे श्रुतिस्मृत्यादिविरोधात्, श्रुतिविरोधस्तावत्पञ्चमाध्याये सर्वत्र दर्शित एव। ननु श्रुतौ क्वापि जातमात्रो न ब्राह्मण इति वाक्यमस्ति येनोक्तव्युत्पत्तिः श्रुति-

विरुद्धा स्यादिति चेन्न । शब्दतो विरोधाभावेऽप्यर्थतः श्रुतिविरोधस्य 'मानुषो ह वै तावद्भवति यावदनाहिताग्निरित्यादिना दर्शितत्वात् । पूर्वतन्त्रेऽप्यर्थतः श्रुतिविरोधमाश्रित्यैव तद्विरुद्धस्मृतेरप्रामाण्यमुक्तम् । तथाहि "औदुम्बरी सर्वा वेष्टयितव्येति स्मृतिविहितसर्ववेष्टनस्य "औदुम्बरीं स्पृष्ट्वोद्गायेदिति श्रुतिविहितस्पर्शनविरोधात्तत्स्मृतेरप्रामाण्यमिति प्रथम तृतीयपादे निर्धारितम् । सर्ववेष्टने कृते श्रौतस्पर्शो न स्यादित्यत्राप्यर्थत एव विरोधः । द्वितीयं जन्म द्विजत्वाख्यं मौञ्जिबन्धनात्तदुपलक्षितोपनयनसंस्कारादित्यर्थः । तृतीयं ब्राह्मण्यं यज्ञदीक्षायाम् । गृहीतयज्ञदीक्षस्य ब्राह्मण्यमपि प्रागेव ( ३७ ) सप्रमाणं प्रदर्शितम् । ब्राह्मयं हि तपसा भवति । 'त्र्यहं नाश्नाति त्र्यहं नाश्नातीत्यादिना दीक्षितस्य यन्नियमव्रतमुक्तं तत्तप एव । दर्शितं चैतत्तृतीयाष्टमतृतीयाधिकरणे, अनशनपूर्वकव्रतसमये क्षत्रियवैश्ययोरपि स्वाभाविकगुणनिरोधः शमदमादिब्राह्मणगुणागमश्च भवतीति तत्प्रयुक्तब्राह्मण्यमङ्गीकृत्य तदनुसारेण दीक्षावेदनं क्रियते "अदीक्षिष्टायं ब्राह्मण इत्यादिना । अतएव क्षत्रियस्याश्वमेधोऽपि वसन्ते कर्तव्य इति काण्वशतपथेऽभिहितम् । तद्यथा "तदाहुः कस्मिन्नृतावभ्यारम्भेत इति । ग्रीष्मेऽभ्यारम्भेतेत्युहैके आहुः, ग्रीष्मो वै क्षत्रियस्यर्तुः, क्षत्रिययज्ञ उवा एष यदश्वमेध इति । तद्वै वसन्त एवाभ्यारभेत वसन्तो वै ब्राह्मणस्यर्तुः य उ वै कश्च यजते ब्राह्मणीभूयैव यजते, तस्माद्वसन्त एवाभ्यारभेत ( १५।३।६ ) इति । बोधायनगृह्यसूत्रे चोपनयनमपि सर्वेषां वसन्तर्तावुक्तं "सर्वानेव वा वसन्ते" (२।५) इत्यनेन । तत्रैवमप्युक्तम् "ब्राह्मणेन ब्राह्मण्यामुत्पन्नः प्रागुपनयनाज्जात इत्यभिधीयते, उपनीतमात्रो व्रतानुचारी वेदानां किञ्चिदधीत्य ब्राह्मणः एकां शाखामधीत्य श्रोत्रियः" ( प्र. १ अ. ७ ) इत्यादि । अत्रापि न जन्मतो ब्राह्मण्यमङ्गीकृतम् । प्रागुपनयनाज्जातः मनुष्यपिण्ड इत्यर्थः तत्र ब्राह्मणेन ब्राह्मण्यामुत्पन्नत्वमप्रयोजकम् । प्रागुपनयाज्जातमात्रत्वस्य सर्वमानवसाधारणत्वेन ब्राह्मणमात्रविषयत्वाभावात् । अतो ब्राह्मणेन ब्राह्मण्यामित्यविवक्षितार्थम् । यथा "यस्योभयं हविरार्तिमार्च्छेदैन्द्रं पञ्चशरावमोदनं निर्वपेदित्यत्र हविर्मात्रनाशस्यैव ऐन्द्रनिर्वापहेतुत्वेनोभयशब्दोऽविवक्षितार्थ इति षष्ठचतुर्थषष्ठाधिकरणे निर्धारितं तथा प्रकृतेऽपीति बोद्धव्यम् । ननु द्विजत्वस्य संस्कारानन्तरभावित्वे "द्विजस्य श्रुतिचोदनादित्युत्तरपादं "द्वे जन्मनी द्विजातीनाम् ( व्या० स्मृ० १.२१ ) इति चानुपपन्नमिति चेन्न । तत्र द्विजशब्दस्य द्विजत्वार्हस्यत्यर्थकथनेनाप्युपपत्तेः । अत एव द्वितीयजन्मनो मातापितरौ पृथगुक्तौ । द्विजातीनां द्वे जन्मनीत्यस्य द्विजन्मवतां द्वे जन्मनीत्यर्थाङ्गीकारे घटो घट इत्यादाविव शाब्दबोधो न स्यात् । अपि च "कामान्माता पिता चैनं यदुत्पादयतो मिथः । सम्भूतिं तस्य तां विद्याद्यद्योनावभिजायते । आचार्यस्त्वस्य यां जातिं विधिवद्वेदपारगः । उत्पादयति सावित्र्या सा सत्या साऽजराऽमरे" त्यपि तत्रैवोक्तम् । तत्र यदि द्वितीयजन्महेतुकं द्विजत्वमपि प्रथमजन्मना सहैव सिद्धं तदैतदनुपपन्नं स्यात् । शरीरमात्रस्यैव प्रथमतः



उत्पत्तेः । आपस्तम्बोऽप्याह "स (आचार्यः) हि विद्यातस्तं जनयति तच्छ्रेष्ठं जन्म, शरीरमेव माता पितरौ जनयतः ( १।१।१५ ) इति । अत्रैवकारेण शरीरातिरिक्तं किमपि ब्राह्मणत्वादिकं सुजनत्वादिकं वा न जनयत इत्यर्थो ज्ञायते । उत्पादकसमानाकृतिपिण्डदर्शने सति तादाकृत्या उत्पादकजातिर्व्यज्यत एव । शतपथेऽपि जन्मतो मनुष्यपिण्डोत्पत्तिरेव दर्शिता "द्वय्यो वा इमाः प्रजाः दैव्यश्च मानुष्यश्च, ता वा इमा मानुष्यः प्रजाः प्रजननात्प्रजायन्ते, छन्दांसि वै दैव्यः प्रजाः तानि (छन्दांसि) मुखतो जनयते, तत एता दैव्यः प्रजाः जनयते" इत्यादिना । अपिचाथर्वणवेदे कश्चनार्थवादः श्रूयते । "आचार्य उपनयमानो ब्रह्मचारिणं कृणुते गर्भमन्तः । तं रात्रीस्तिस्र उदरे बिभर्ति, तं जातं द्रष्टुमभिसंयन्ति देवाः ( ११।३।७ ) इति । "अन्तः विद्याशरीरस्य मध्ये" । वशिष्ठस्मृतावपीत्थमुक्तम् "द्वयमु वै ह पुरुषस्य रेतो ब्राह्मणस्योर्ध्वं नाभेरर्वाचीनमन्यत्, यद्यदूर्ध्वं नाभेस्तेनास्यानौरसी प्रजा जायते, यदुपनयति जनन्यां जनयति यत्साधू करोति, अथ यदर्वाचीनं नाभेस्तेनेहास्यौरसी प्रजा जायते, तस्माच्छ्रोत्रियमनूचानमप्रजोऽसीति न वदन्ति ( २।७।१० ) इति । अत्रोपनयनत एव द्विजत्वं न तु जन्मत इति विषयविजिज्ञापयिषयैव गर्भधारणरेतोद्वयाद्यर्थवादोक्तिः प्रदर्शिता । ननु संस्कारतो द्वितीयजन्माङ्गीकारे द्विर्भुक्तमित्यादाविव सुचि द्विर्जं इति स्यान्न तु द्विज इति । अतएव हिन्दुला इत्यादिग्रन्थेषु द्वाभ्यां जन्मसंस्काराभ्यां जातो द्विज इति व्युत्पत्तिरिष्यते इति चेन्न । तत्तदर्थे तत्तच्छब्दप्रयोगस्यानादिसिद्धत्वेनाधुनिकव्युत्पत्तिबलादर्थान्तराश्रयणस्यायुक्तत्वात् । अतएवाण्डजेषु पक्षिषु च द्विवारमुत्पन्नेषु द्विजशब्द एव प्रयुज्यते न तु द्विर्जं इति । एवं मनुष्येष्वपि द्विजशब्दः संस्काराख्यद्वितीयोत्पत्तिनिबन्धन एव न द्वाभ्यां जातत्वनिबन्धनः । जन्मसंस्कारयोर्भिन्नकालिकत्वेन सहभावासंभवात्तथाविधव्युत्पत्तेरयुक्तत्वात् । अष्टमवर्षभाविसंस्कारात्प्रागेव बालको जातः । अत एव जात इति जातमात्र इति च क्वचिदुच्यते । संस्कारसहभावाङ्गीकारे तावत्पर्यन्तमयं जातो न स्यात् । शूद्रस्यैकजन्माभिप्रायेण क्वचिदेकजातित्वमप्युच्यते जातत्वादेव । यद्यपि मातापितृभ्यां जातत्वं प्राणिमात्रसाधरणं न केवल मनुष्याणां तथाप्येतेषां द्वितीयजन्मप्रदर्शनप्रसङ्गे संस्कारपर्यन्तं जातमात्रत्वमुत्पादकसमानमनुष्यत्वद्योतनार्थमुक्तं भवति । जातमात्रस्य क्वचिच्छूद्रत्वमेवोच्यते ( २०३ ) । यत्तु क्वचित्तस्य वृत्या शूद्रसमत्वमुक्तं तदसङ्गतम् । द्विजसेवारूपशूद्रवृत्तेरनुपनीतद्विजपुत्रेऽदर्शनात् । अनुपनीतत्वस्य यथेष्टाचरणस्य वा शूद्रवृत्तित्वाभावेन तेन सहापि समत्वासंभवात् । असमतन्ममतशूद्रत्वं च विद्याङ्गसंस्कारानर्हत्वम् । मन्दबुद्धित्वेन शूद्रस्तत्संस्कारानर्हः, एवमल्पवयस्कबालकोऽपीति शूद्रइत्युच्यते । यत्तु जन्मना ब्राह्मणो ज्ञेयः संस्काराद्द्विज उच्यते, विद्यया याति विप्रत्वं श्रोत्रियस्त्रिभिरेव चेत्यत्रिसंहितायां पाद्मे चोक्तं तदर्वाचीनकल्पितत्वेनाप्रमाणमेव । प्राचीनपुस्तकेषु तत्स्थाने "जन्मना जायते शूद्र" इत्यादिपद्यस्यैव विद्यमानत्वेन यतिधर्मसङ्ग्रहादिप्रामाणिकग्रन्थेषूदाहृतत्वात् । ननु विनिगमकाभावेन जन्मना शूद्रत्वबोधकपद्यमेवाप्रमाणमस्त्विति चेन्न । अशास्त्रीयत्व-

स्यैव विनिगमकत्वात् । प्रथमजन्मनि अण्डावस्थैव शास्त्रतो ज्ञायते न तु ब्राह्मण्यं नापि द्विजत्वम् । अपि च जन्मना ब्राह्मण्यबोधकश्लोकश्चासङ्गत एव । तथाहि "जन्मना ब्राह्मणो ज्ञेय इत्यादि न्यायो न केवलब्राह्मणविषयक: किन्तु चातुर्वर्ण्यविषयक: । अर्थाज्जन्मना क्षत्रियो ज्ञेय: एवं वैश्य: शूद्रोऽपि ज्ञेय: इतिस्यात् । तत्र संस्काराद्द्विज इति त्रैवर्णिकविषयः । द्विजत्वं च जन्ममात्रसिद्धवर्णाच्छ्रेष्ठमिति भवताऽपि प्राक्प्रदर्शितस्मृतिबलादङ्गीकार्यम् । तथा च संस्कारानन्तरं तेषूच्चनीचभावो न स्यात् । श्रेष्ठत्वहेतुद्विजत्वस्य त्रिषु तुल्यत्वात् । एवं विद्यया याति विप्रत्वमित्यपि त्रैवर्णिकविषयं स्यात्, विद्यायामधिकारस्य वर्णत्रय-साधारणत्वात् । जातिवादे क्षत्रियवैश्ययोरपि विद्याकुशलत्वसम्भवात् । एवं श्रोत्रियत्वमपि क्षत्रियवैश्ययोर्भवेत् । एतच्च जातिवादिमनोरथविरोधि । ननु जन्मसिद्धब्रह्मणत्वक्षत्रियत्व-वैश्यत्वापेक्षया तत्तन्निष्ठं द्विजत्वं श्रेष्ठं वर्णेष्विव तन्निष्ठद्विजत्वेऽप्युच्चनीचभाव स्यादेव । एवं विद्यया प्राप्यविप्रत्वेऽपि तदाश्रयब्राह्मणादिभेदेन भिन्नमेव स्यात्, अथवैतत्सर्वं ब्राह्मण-विषयम्, नातः क्षत्रियादौ विप्रत्वश्रोत्रियत्वे स्यातामिति चेदुच्यते । कल्पितवाक्यानां स्वरूपमेतादृशमेव साङ्केतिकं भवति न तु सर्वानुगतम् । एतेषामेतत्कल्पकपुरुषरागादि-मूलकत्वमेव न तु श्रुतिमूलकत्वम् । अस्मत्पक्षे च सर्वं समञ्जसम् । तथाहि जन्ममात्रतः सर्वेषां जातमात्रत्वंमनुष्यत्वमात्रम् । उत्पत्त्यनन्तरं किञ्चित्कालपर्यन्तं पशुपक्ष्यादिष्विव सर्वेषां मूकीभाव: समान: । न ते किञ्चिद्वदन्ति, न तान् प्रति किञ्चदुच्यते । शूद्रत्वमपि पशुतुल्यत्वमिति श्रुतावुच्यते । अतो जातमात्रस्य शूद्रत्वं पशुतुल्यत्वसादृश्याज्जन्मना जायते इति क्वचिदुपचर्यते न तु वस्तुत: शूद्रत्वम् । तस्यापि वर्णत्वेन जन्मसिद्धत्वाभावात् । यदा च पञ्चषादिवर्षनिर्गमनानन्तरं वर्णमालादिग्रहण धारणादिषु बुद्धावुत्तमध्यमादितार-तम्यमवगम्यते तदा तदनुसारेण वेदाध्ययनार्थमुपनयने किञ्चित्कालभेदेन कृते सति द्विजत्वम् । पूर्वावस्थात इदमुत्कृष्टं सर्वेषां वर्णानां समानं च । यस्य च प्रौढावस्थाया-मपि मूकीभावो दरीदृश्यते तस्य विद्याग्रहणयोग्यताभावात्तदर्थोपनयनमपि न क्रियते, शास्त्रसम्मतं च शूद्रत्वं तस्यैव । एतदभिप्रायेणैव पङ्ग्वन्धमूकादीनां वैदिककर्माद्य-नर्हत्वेन ब्राह्मणत्वादिकं नाङ्गीक्रियते शिष्टै: । अतएव तैस्सहपंक्तौ प्रायश्चित्तं कपिल-स्मृतावुक्तम् "अथ पङ्गुजडोन्मत्तमूकादिसमभोजने प्राजापत्यं प्रकथितं प्रायश्चित्तं द्विजोत्तमै: ( ३४४ ) इति । एवं द्विजोत्तमसम्मतं ब्राह्मण्याभावं तेषां पङ्ग्वादीनामुक्त्वाऽग्रे ब्रह्म-वीर्यसमुत्पन्नत्वहेतुना यदांशिकं ब्राह्मण्यं स्वाभिप्रायेणोक्तं तदसङ्गतम् । अनादिवीर्य-परम्पराया दुर्ज्ञेयत्वस्य बहुधा दर्शितत्वात् । अपि च तत्रैव क्षत्रियादीनां विप्रसाम्यत्वा-भावे कारणं दण्डोपनयनकालादिकमेवेति यदुक्तं तदपि न शास्त्रीयम् । शास्त्रीयभेदस्य-सहसाऽपरिवर्तनीयस्वाभाविकगुणप्रयुक्तत्वेन जातिप्रथावादिपरिकल्पित-दण्डादिभेद प्रयुक्तत्वा-भावात् । श्रुतौ चाधाने वसन्तादिकालभेद: दीक्षायां दण्डादि भेदश्चोक्तो न तूपनयनादौ । तदस्तु प्रकृतमनुसराम: । यस्य च प्राक्तनवेदविद्यासंस्कार: तथाविधश-



मादिगुणाभिव्यक्तिश्च स विद्यया याति विप्रत्वं, तस्यैव क्रतुविध्यपेक्षितब्राह्मण्यं श्रोत्रिय-त्वमपि । तादृशविद्यासंस्कारादिकं ऋणसम्बन्धवशाच्छूद्रादिगृहेषु गृहीतजन्मनोऽपि भवत्येव । एतादृशं ब्राह्मण्यं न क्षत्रियादे: स्वाभाविकशौर्यधैर्यादिमत: संभवति । एतादृशमेव चातुर्वर्ण्यं वेदसम्मतमीश्वरनियमानुवर्ति च । अत एवैतद्गुणातिरिक्त संस्थानादिभेदो नेश्वरेण वर्णेषु निर्मित: । अन्यथा प्रतिजाति संस्थानादिभेदं प्रतिव्यक्त्यनन्तरूपभेदं च सृजता तेन चातुर्वर्ण्ये तद्व्यञ्जक केवलं रूपभेदचतुष्टयमवश्यमस्रक्ष्यत । गौणवर्णपक्षे, शास्त्रीयो वेश्वरीयो वा ब्राह्मणादिशब्दसङ्केतो यववराहाधिकरणन्यायेन शास्त्रीयार्थवादादिप्रति-पादित-नैजगुणाधारेण ग्रहीतुं शक्यते । सज्जनदुर्जनशिष्टाशिष्टादिशब्दसङ्केतग्रहश्च तत्तद्गुणाद्याधारेणैव लोके भवतीति न गुणत: सङ्केतग्रहोऽप्रसिद्धः । जन्मतो वर्णपक्षे च ब्राह्मणादिशब्द-सङ्केते सृष्ट्यादितो ब्रह्ममुखाद्युत्पन्नमातापितृपरम्परागतत्व-भ्रमग्राह्यत्वं विहायान्यत्किमपि नास्ति । लोके च न क्वापि शब्दमात्रे तथाविधसङ्केतग्रहो वर्तते । सर्वत्र हि दृश्यमान गुणकर्मरूपरसगन्धावयवसंस्थानाद्यन्यतमभेदं निमित्तीकृत्यैव शब्दमात्रस्य सङ्केतग्रहो भवति न तु विप्रतिपन्नतादृशपरम्परागतत्वनिमित्तेन । चातुर्वर्ण्यमात्रे तथा-विधसङ्केतश्चालौकिको दुर्ज्ञेयत्वबाधितोऽपि केषां चिद्दुराग्रहमात्रेण जीवन्निव वर्तते । वर्णानां मुखादितो जन्म च प्रागेव ( ८६ त: ) बहुधा दूषितम् । नन्वस्मिन्नधिकरणे भवदिष्ट-द्विजाधिकारनियमापवादशङ्कासमाधाने कीदृशे इति चेदुच्यते । श्रुतिसम्मत-शूद्रस्तावत्पशुतुल्यस्तस्यामन्त्रकयज्ञाधिकारो भवतु चित्तशुद्धर्थ: । विद्यायां वेदनमात्र पर्यवसानायां तस्य ग्रहणधारणयोरयोग्यस्याधिकारो नोपपद्यते, कथं रैक्वेण विद्या शूद्रायोपदिष्टा ? यथा पूर्वत्र तत्कृतामन्त्रककर्मानुष्ठानस्य फलं चित्तशुद्धिरिष्टा तथाऽत्र ग्रहणाद्यभावेऽपि श्रवणमात्रेण विद्याऽपि किञ्चित्फलं जनयति वेति शङ्कायामिदमधि-करणमारब्धम् "शुगस्य तदनादरश्रवणादित्यादिना । रैक्वेणोपदिष्टो जानश्रुतिर्न शूद्रः किन्तु क्षत्रिय: क्षत्रियोचितचैत्ररथादियोगात् । हंसवाक्योक्त स्वात्मानादर श्रवणनिमित्तेन तस्यागन्तुक: शोक: समजनि, तं च तदाद्रवणेनानुमाय रैक्व: शूद्रशब्देन सम्बोधितवान् । आगन्तुकं च न कार्यप्रयोजकम् । श्मशानपुराणवैराग्यादिकं न संन्यासप्रयोजकम् । नैमित्तिकत्वेन तस्य स्वाभाविकत्वाभावात्, एवमागन्तुकशोकोऽपि न शूद्रत्वप्रयोजक: । एतेन स्वाभाविशोकप्रयोजकमन्दबुद्धित्वादिकमेव शूद्रत्वहेतुरित्युक्तं भवति । अथवा दीक्षितराजन्या-देर्यथा दीक्षानिमित्तेन तात्कालिकब्राह्मण्यं तथा तात्कालिकशोकनिमित्तेन शूद्रत्वमपि जानश्रुतेस्तात्कालिकमासीदिति वक्तव्यम् । अत एवोपदेशसमयेऽपि शूद्रशब्द: श्रुतौ प्रयुक्तः । तथा च शुगस्य सूच्यते इत्यस्य शूद्रत्वमस्य सूच्यते तदाद्रवणात् शोकेन द्रवणादिरर्थः । "किं नु मलं किमजिनमित्याद्यैतरेयवाक्ये यथा मलाजिना-दिना गार्हस्थ्यब्रह्मचर्यादिकं विवक्षितं तथाऽत्र शुक्छब्देन शूद्रत्वं पुनस्तस्यैव चैत्ररथेनाश्वतरीरथेन क्षत्रियत्वं चेष्टं भवति । दर्शितं चाश्वतरीरथस्य क्षत्रियलिङ्गत्वम् ।

श्रौतपाठक्रमेणादौ शूद्रक्षत्रियवर्णयोः । स्वरूपं ब्राह्मणस्यापि पश्चादत्र प्रदर्शितम् २९१
तत्प्रदर्शनमात्रेण वैश्यस्याकथनेऽपि तत् । भवेत्प्रदर्शितप्रायं यथाऽथर्वणलक्षणम् २९२
ऋग्यजुस्सामवेदानां लक्षणं प्राक्प्रदर्शितम् । नत्वथर्वणवेदस्य न तन्नास्तीति तावता २९३
वस्तुतः श्रुतिसूत्राभ्यां ब्रह्मक्षत्रियवर्णयोः । स्वरूपं दर्शितं यस्मात्प्राधान्यं च तयोः श्रुतौ २९४
अन्ययोरपि वर्णत्वसामान्यात्स्मृतयोरिह । विज्ञातव्यं स्वरूपं हि प्रसङ्गाह्वयसङ्गतेः २९५
स्वात्मनोऽनादरं श्रुत्वा शोको जानश्रुतेरभूत् । रैक्वश्चान्वमिनोत्तं च शोकाद्द्रवणलिङ्गतः २९६
ततस्तं शूद्रशब्देन सूचयामास सन्मुनिः । सूच्यते शूद्रशब्देन शोक इत्याह सूत्रकृत् २९७
तेन स्वाभाविकः शोको यत्र धीशून्यतावशात् । स शून्द्र इति विज्ञेयो यवादिन्यायतो बुधैः
रथेनाश्वतरीयुग्मयुक्तेन क्षत्रलक्ष्मणा । चैत्ररथाह्वयेनासौ विज्ञातः क्षत्रियस्त्विति २९९
रथस्त्वश्वतरीयुक्तश्चित्र इत्यभिधीयते । इति ब्रह्मपुराणादौ माध्वभाष्येऽपि दर्शितम् ३००
सत्यवाचाऽब्राह्मणत्वशून्यत्वं गौतमोऽप्यवैत् । सर्वत्रैव च तन्न्यायः पालनीयो बुधैरिह ३०१
वर्णकारणचिन्हे हि सूत्रिते तत्कारणम् । शमाद्यात्मगुणोऽप्यत्र ज्ञेयस्त्विति न सूत्रितः ३०२
यथाऽऽश्रमा बाह्यचिन्हैर्मेखलाजिनलोमभिः । प्रज्ञातान्तस्वभावाश्च चातुर्वर्ण्यं तथैव हि ३०३

छान्दोग्योपनिषद में शोक से शूद्र का, अश्वतरीरथ ( चैत्ररथ ) से क्षत्रिय का और सत्यवचन से ब्राह्मण का स्वरूप क्रम से बताया गया है। इन तीनों का स्वरूप बताने पर वैश्य का भी स्वरूप मालूम हो जायगा समझकर उसे सूत्र से बताया नहीं है। वस्तुतः यहाँ श्रुति से ब्राह्मण का और सूत्र से क्षत्रिय का ही स्वरूप सूचित किया गया है। इन दोनों प्रधान वर्णों को बताने पर अतिरिक्त वर्णद्वय का भी स्वरूप, भागवतादि पुराणों से ज्ञातव्य होता है। जानश्रुति का, अपना अनादर सुनने पर शोक हुआ और रैक्व उसको अनुमान से जानकर तत्सूचक शूद्र शब्द से उसे सम्बोधित किया। इससे विदित होता है कि स्वाभाविक शोक ही शूद्रशब्द का प्रवृत्तिनिमित्त है। अश्वतरी रथ और अन्नदानादि क्षत्रियोचित चिह्नों से जानश्रुति क्षत्रिय और सत्यवाक्य से सत्यकाम ब्राह्मण समझे गये थे। यहाँ इन बाह्य लिङ्गों से एतत्कारणीभूत शमादिगुण अनुमित होते हैं जो ब्राह्मणादि वर्णों के स्वरूपलक्षण हैं। जैसे दक्षस्मृति प्रोक्त मेखलाजिनादि बाह्यचिह्नों से ब्रह्मचर्यादि का निजी स्वरूप दिखाया गया है वैसे ही वर्ण के बारे में समझना चाहिये।

सत्यवाचेति, "नैतदब्राह्मणो विवक्तुमर्हति समिधं सोम्याहरोप त्वा नेष्ये न सत्यादगाः' इति श्रुतिवाक्यसामर्थ्यात् "तदभावनिर्धारणे च प्रवृत्तेरिति सूत्रस्थतदभावपदस्याब्राह्मणत्वाभाव ( ब्राह्मणत्वं ) एवार्थो न शूद्रत्वाभावः, तथा सत्यब्राह्मणब्दस्य श्रौतस्य शूद्रे लक्षणाश्रयणापत्तेः, क्षत्रियवैश्ययोरपि कदाचिदनृतवदन-संभवस्य ( ७२-७७ पृ० ) प्राग्दर्शितत्वाच्च । यद्यपि ब्राह्मण्यमुपनयने नापेक्षितं तथापि स्वाभाविक-सत्यवाक्समनि-



यत-शमादिसद्भावावगमेनास्य भाविब्राह्मण्यं वस्तुतोऽस्तीति तद्दर्शितं सूत्रकारेण । किंगोत्रोऽसीतिप्रश्नेनापि ब्राह्मणो न वेत्येव पृष्टं भवति, न तु शूद्रो नवेति, नापि त्रैवर्णिको नवेति । यत आर्षगोत्राणि ब्राह्मणानामेव तदन्येषामाचार्यगोत्रं यज्ञप्रकरण इति श्रौतसूत्रकारै (१३८) रुक्तम् । यच्चोक्तं विज्ञातकुलगोत्रः शिष्य उपनेतव्य इति पृष्टः इति तदापि प्रकारान्तरेण विनीतत्वादिविज्ञानेऽज्ञातकुलगोत्रोऽप्युपनेतव्य इत्येतत्प्रकरणत एवावगम्यते । ऋग्यजुस्सामेति, "तेषामृग्यत्रार्थवशेन पादव्यवस्था, गीतिषु सामाख्या, शेषे यजुः शब्दः (जैं० सू० २।१।३५-७) इतिसूत्रत्रयेणऋक्सामयजुर्वेदानां लक्षणान्युक्तानि न त्वथर्वणवेदस्य, न त्वेतावता तस्य लक्षणमेव नास्तीति वक्तुं युक्तम् । तस्यापि पृथग्वेदत्वेन सूत्रकारेणानुक्तस्य तल्लक्षणस्य वक्तव्यत्वात् । पारलौकिककर्मसु तस्यामुख्यत्वेन सूत्रकारेण तन्नोक्तम् । एवं वैश्यस्य लक्षणं कृषिवाणिज्यादिशीलत्वं सर्वजनप्रसिद्धमिति सूत्रकारेणानुक्तमप्यन्यैर्वक्तव्यमेब । यत्तु दर्शितवेदत्रयान्तर्गतत्वमेवाथर्वणस्येति न पृथक् तस्य लक्षणमुक्तमिति केषांचिन्मतं तत् "तस्मान्नाथर्वणेन शंसेदिति निषेधसामर्थ्यात्पार्थक्यसत्वावगमेनासङ्गतमेव । तदर्थश्चाथर्वणमन्त्रैः स्त्रैवैदिकं कर्म न मिश्रयेदिति । एतेन "नेमानि सूत्राणि वर्णलक्षणपराणि । वैश्यलक्षणस्य तत्रादर्शनादि" त्युक्तिरपास्ता । स्वात्मनोऽनादरमित्यादिषट्काभिप्रायः प्रागपि ( ७२—७७ ) दर्शितः । वर्णलक्षणकार्येति, कार्येण हि कारणमनुमीयते, प्रकृतेस्वाभाविकशोकचैत्ररथित्वसत्यवचनादिभिः शूद्रक्षत्रियब्राह्मणबाह्यचिन्हैस्तत्कारणानि मन्दबुद्धित्वशौर्य- धैर्यादिमत्व शमादिगुणवत्वानि तत्तत्स्वरूपलक्षणानि आश्रमलक्षणवदनुमीयन्ते । आश्रमाणामपि बाह्यलक्षणान्युक्तानि दक्षस्मृतौ "मेखलाजिनदण्डेन ब्रह्मचारी तु लक्ष्यते । गृहस्थो देवयज्ञाद्यैर्नखलोम्ना वनाश्रितः । त्रिदण्डेन यतिश्चैवं लक्षणानि पृथक् पृथक् । यस्यैतल्लक्षणं नास्ति प्रायश्चित्ती न चाश्रमी ( १।१२—३ ) इति । एवमैतरेये आश्रमनामोल्लेखं विनैव "किन्नु मलं किमजिनं किमुश्मश्रूणि किं तपः" इत्यादिना गृहस्थादिबाह्य लक्षणान्युक्तानि । अस्य सायणभाष्यमित्थं वर्तते "मलरूपाभ्यां शुक्रशोणिताभ्यां संयोगान्मलशब्देन गार्हस्थ्यं कृष्णाजिनसंयोगादजिनशब्देन ब्रह्मचर्यं क्षौरकर्मराहित्यात् श्मश्रुशब्देन वानप्रस्थ्यमिन्द्रियसंयमसद्भावात्तपःशब्देन परिव्राज्यं च विवक्षितमिति एतैर्बाह्यलक्षणैस्तेषामान्तरिकानि स्वरूपलक्षणानि यथाऽनुमीयन्ते तथा प्रकृते शूद्रवर्णोल्लेखः श्रुतावस्ति तदनुमापकं तद्बाह्यचिन्हं (तटस्थलक्षणम्) "शुगस्यतदनादरश्रवणादित्यादिना प्रदर्शितम् । एवं क्षत्रियतटस्थलक्षणं श्रुतौ बह्वन्नदानादिनाऽश्वतरीरथादिना च दर्शितम्, तच्च क्षत्रियलक्षणमिति" क्षत्रियत्वावगतेरित्यादिनोक्तम् । अजाविक व्रीहियवादिकं वैश्यतटस्थलणमन्यत्र "एतानि वै विशि शिल्यानि गोऽश्वं हस्तिहिरण्यमजाविकं व्रीहियवाः तिलमाषाः सर्पिः क्षीरं रयिः पुष्टिः ( जै० ब्रा० १।२६३ )

इत्यादिना दर्शितम् । तच्च प्रसिद्धत्वेन सूत्रेण न दर्शितम् । ब्राह्मणलक्षणं च श्रुतिसूत्राभ्यामपि सूचितम् ।

ननु शोकश्चित्ररथ. सत्यवाक्यं च केवलम् । शूद्रादिवर्णहेतुः किमस्त्यन्यदपि कारणम्
इति शङ्कापनोदार्थं सूत्रमग्रे प्रदर्शितम् । तत्संस्कारपरामर्शात्तद्वर्णो भवतीत्यपि ३०५
अत्र संस्कारशब्देन बोध्यन्ते चात्मनो गुणाः । षोडशेषूक्तमाधानं संस्कारेष्वपि गृह्यते ३०६
अग्निर्नाधीयते यावत्तावन्मर्त्यत्वसंस्थितिः । अण्डावस्थैव चाधानात्पूर्वमुक्ता श्रुतावपि
अन्तःसंस्कारवानेव ब्राह्यसंस्कारमर्हति । उपनयनसंस्कारोऽप्यदुष्टानामिति स्मृतेः ३०८
गौतमः सत्यकामोपनयनेऽतः प्रवृत्तवान् । ज्ञात्वा चान्तरसंस्कारं सत्यवाचा द्विजोचितम्
कुतस्तत्र प्रवृत्तोऽसाविति शङ्कानिवृत्तये । अन्तिमं सूत्रमाचष्ट वेदव्यासो महामुनिः ३१०
श्रवणाध्यनादीनां तदभावे निषेधतः । प्रवृत्तश्चोपनयने तथाविधस्मृतेरपि ३११
तदभावाभिलापाच्च तदभावेन मर्त्यता । संस्कारादेरभावेन वर्णाभावोऽभिलप्यते ३१२

**केवल शोकचैत्ररथ और सत्यवचन ही शूद्रत्वादि का सूचक नहीं किन्तु तत्तदात्मगुणों से तत्तद्वर्ण होते हैं। यहाँ संस्कार शब्द से ब्राह्मणादि वर्णों के असाधारण आत्मगुण कहे जाते हैं। इन आन्तरिक संस्कार के अनुसार ही बाह्योपनयनादि संस्कार किये जाते हैं। सत्यवचन से सत्यकाम का अन्तःसंस्कार जान करके ही गौतम ने बाह्यसंस्कार (उपनयन) में प्रवृत्त था। अनुपनीत का गुरुमुख श्रवणपूर्वक अध्ययनादि निषिद्ध होने से सत्यकाम को उपनयन किया गया था। जिसमें अन्तःसंस्काररूप आत्मगुण नहीं है उसमें वर्णाभाव भी बताया गया है।**

अत्र संस्कारशब्देनेति । "संस्कारपरामर्शादित्यादिसूत्रे संस्कारशब्देन तत्तद्वर्ण-लक्षणेषु परामृष्टा आत्मगुणाः, गर्भाधानादिसंस्कारान्तर्गतमग्न्याधानं चोच्यते । वर्ण-हेतुगुणा बाल्यावस्थायामप्यङ्कुरिता वर्तन्ते । अतस्तदनुसारेण वसन्तादिषु ऋतुषु वेदाध्ययनार्थमुपनयनं क्रियते । शूद्रस्याध्ययनसामर्थ्याभावान्न तदर्थः संस्कारः । नन्वष्टवर्षादिबालकेष्विमे गुणाः कथं ज्ञातुं शक्यन्ते इति चेदुच्यते ज्योतिश्शास्त्रेणेति । तदुक्तं वृद्ध बृहत्पराशरहोराशास्त्रे पराशरेण "अथो गुणवशेनाहं कथयामि फलं द्विज । सत्वग्रहोदये जातो भवेत्सत्वाधिकः सुधीः । गुणसाम्ययुतो जातो गुणसाम्यखगोदये, एवं चतुर्विधा विप्र जायन्ते जन्तवो भुवि । उत्तमो मध्यमो नीच उदासीन इति क्रमात् । तेषां गुणानहं वक्ष्ये नारदादिप्रभाषितान्" शमोदमस्तपः शौचं क्षान्तिरार्जवमेव च । अलोभः सत्यवादित्वं जने सत्वादिके गुणाः । शौर्यं तेजो धृतिर्दाक्ष्यं युद्धे चाप्यपलायनम् । साधूनां रक्षणं चेति गुणा ज्ञेया रजोधिके ॥ लोभश्चासत्यवादित्वं जाड्यमालस्यमेव च । सेवाकर्मपटुत्वं च गुणाह्येते तमोऽधिके ॥ कृषिकर्मणि वाणिज्ये पटुत्वं पशुपालने । सत्यासत्यप्रभाषित्वं गुणसाम्ये गुणा इमे ॥



एतैश्च लक्षणैर्लक्ष्य उत्तमो मध्यमोऽधमः । उदासीनश्च विप्रेन्द्र तं तत्कर्मणि योजयेत् ॥ अत्रापि सत्वप्रधानस्यैव स्वाभाविकशमदमसत्यवचनत्वादिकमुक्तम् । स च ब्राह्मण एव न तु तद्भिन्नस्त्रैवर्णिकः । अतो नैतदब्राह्मणो विवक्तुमर्हतीत्यत्रा-ब्राह्मणशब्देन ब्राह्मणभिन्नः क्षत्रियादिर्विवक्षितो न तु शूद्रः । एतत्सात्विकादिग्रहाणां योगः वर्णनियमं विनैव सर्वेषां सर्वदा जन्मकाले भवत्येव न तु ब्राह्मणादिपुत्राणामेव । अतएव क्षत्रिय ( सूर्य ) पुत्रस्य शनेः शूद्रत्वं, अत्रेरनसूयायां जातस्येन्दोर्वैश्यत्वं च तत्रोक्तम् । इदानीं ब्राह्मणादिपुत्रेष्वपि तामसादिगुणप्राधान्यं तदीयाहारादिभिः संलक्ष्यते । सात्विकादिस्वभावः पूर्वजन्मसंस्कारवशादायाति, तत्तत्पुरुषपुत्रत्वं च ऋण-सम्बन्धाधीनम् । यस्य च प्राग्भवीयसात्विकादिसंस्कारस्तदीयोत्पत्तिकाले सात्विकादि-ग्रहयोगो भवतीति शास्त्रान्तरप्रामाण्याद्वक्तव्यम् । एतदभिप्रायेणैव नारायणस्मृतावपि जीवप्रवेशकाले सात्विकादिग्रहयोगोऽभिहितः । तथाहि "स्त्रीपुंसयोगमात्रेण स्त्रियां गर्भः प्रजायते । तस्मिन्निविशते जीवः कर्मपाकवशङ्गतः ॥ तस्य प्रवेशकालस्तु सात्विको यदि वै भवेत् । जातमात्रस्य तस्यैव सात्विकत्वं भवेद्ध्रुवम्" ततः कतिपये काले बुद्धिः सत्वे प्रवर्तते । सत्वप्रवर्तनात्सोऽयं सत्कार्यमनुतिष्ठति ॥ स्नानं सन्ध्या जपो होमः स्वाध्यायः पितृतर्पणम् । अतिथ्याराधनादीनि प्रवर्धन्ते हि नित्यशः ॥ नैव पापसमाचारे प्रवृत्तिः स्यात्कदाचन । तस्य प्रवेशकालस्तु राजसो यदि वै भवेत् । रजोगुणपरीतात्मा जायते भुवि मानवः ॥ पशुपुत्राद्यन्नकामः कामभोगसुखानि च । भुक्त्वाऽन्ते दिवमासाद्य स्वर्गादिसुखमेष्यति । सोऽयं कालो मिश्रसत्वराजसो यदि वै भवेत् । सत्वराजससम्मिश्रो जायते भुवि मानवः (५।१२—२२) इति । स्नान-संन्ध्यादेर्विधितःस्त्रैवर्णिककर्तव्यत्वेऽपि सत्वगुणप्रधानो ब्राह्मणः स्वतस्तत्करोति । इतरस्तु शास्त्रबलेनेति तयोर्भेदः । ब्राह्मणादिवर्णानां क्वचिच्छ्वेतरक्तादिवर्णवत्वप्रदर्शनमपि सत्वादिप्राधान्याभिप्रायेणैव । उक्तं च "ब्राह्मणानां सितो वर्णः क्षत्रियाणां तु लोहितः । वैश्यानां पीतको वर्णः शूद्राणामसितस्तथेति ( शान्तप० १८८ ) अत्र सितादि शब्दानां श्वेतादिरूपपरत्वेऽतिव्याप्तिरव्याप्तिश्च स्यात् । अतएव पुनर्भारद्वाजप्रश्नस्योत्तरं भृगुणोक्तम् "न विशेषोऽस्ति वर्णानां सर्वं ब्राह्ममिदं जगत् । ब्रह्मणा पूर्वसृष्टं हि कर्मभिर्वर्णतां गतमिति । वर्णानां सितादिबाह्यरूपविशेषोनास्ति किन्तु सितादिशब्द विवक्षितसत्वादिगुणहेतुककर्मभिर्वर्णतां गताः श्रौतयज्ञ प्रसङ्गे तत्तद्वर्णत्वेन व्यवहृता बभूवुरिति तदर्थः । प्राणिमात्रं सर्वं सत्वादिगुणविशिष्टमेव तद्रहितं नास्तीति गीताया-मुक्तम्" न तदस्ति पृथिव्यां वा दिवि देवेषु वा पुनः । सत्वं प्रकृतिजैर्मुक्तं यदेभिः स्यात्त्रिभिर्गुणैरिति । तत्र मनुष्येषु सत्वादिगुणान्यतमन्यूनाधिकभावप्रभवैः शमदमा-दिभि स्तेजः क्षमादिभिश्च गुणै ब्राह्मणक्षत्रियादिवर्णा विभक्ताः । तदुक्तं गीतायाम् "चातुर्वर्ण्यं मया सृष्टं गुणकर्मविभागश इति । अत्र गुणकर्मविभागश इति शब्द स्वा-

रस्यात्सृष्टमिति पदस्य विभक्तमित्यर्थो वक्तव्यः। सृजर्तेर्विभागार्थोऽपि प्रागे ( १०६ ) वोक्तः । अत्र गुणशब्देन वर्णप्रयोजकाः शमादयः कर्मशब्देनाग्न्याधानादिसंस्काराश्चोच्यन्ते । मनुष्यादिप्राणिसृष्टिर्हि भगवत्सङ्कल्पमात्रेण क्रियमाणा प्राणिकृतपुण्यपापफलभोगार्थं भवति न तु वर्णहेतुगुणकर्मभ्याम् । पराभिमतगुणकर्ममूलकसृष्टेः सर्वप्राणिसाधारणत्वाभावान्मनुष्यसृष्टेरपि तदितरप्राणिसाधारणहेतुकत्वस्य वक्तव्यत्वाच्च नानुपपत्तिः। तत्र ये मानुष्यं प्राप्येष्टादिकारिणस्ते चन्द्रलोकमधिरुह्य तत्फलंचानुभूय किञ्चित्पुण्यावशेषेणार्येषु समुद्भवन्ति । अनिष्टादिकारिणश्च यमयातना अनुभूय किञ्चित्पापावशेषेणानार्येषूत्पद्यन्ते । तत्र प्रमाणं च "तद्य इह रमणीयचरणा अभ्याशो ह यत्ते रमणीयां योनिमापद्येरन् ब्राह्मणयोनिं वा क्षत्रिययोनिं वा वैश्ययोनिं वाऽथ य इह कपूयचरणा अभ्यासो ह यत्तें कपूयां योनिमापद्येरन् श्वयोनिं वा सूकरयोनिं वा चाण्डालयोतिं वा ( छा० ३-५।१०।७ ) इत्यादि श्रुतिरेव । दर्शित चैतद्विस्तरेण ब्रह्मसूत्रतृतीयप्रथमद्वितीयाधिकरणे । रमणीयादिचरणावशेष श्चानादिसञ्चितकर्मवशान्नूतनजन्मनोऽवश्यं ग्राह्यत्वे ब्राह्मणादियोनिषूत्पत्तेरेव कारणम् । तद्योनिषूत्पन्नोऽपि तत्रानादिकर्मवशादेव सुखं दुःखं वाऽनुभवति यावत्तत्कर्म तावज्जीवति च। ब्राह्मणादिषु गृहीतजन्मा स प्रारब्धमनुभवन् यदि वैदिकं कर्म कुर्यात्तदा तद्देहान्ते स्वर्गमनुभूय क्षीणे पुण्ये मर्त्यलोके प्रविशति। मया सृष्टमित्यस्यार्थः कैश्चिदन्यथैव सूच्यते। तद्यथा चातुर्वर्ण्यं मया मुखादितः सृष्टं किमर्थमित्युक्तौ गुणकर्मविभागशः = गुणकर्मविभागार्थम्, सत्वादि गुण प्रधानस्य शमादिकर्मविधानर्थमिति। स च सर्वथा नोपपद्यते। मुखादिसृष्टेरलीकत्वस्य भाट्टमीमांसकैरस्माभिश्च (८५ पृष्ठतः) बहुधा प्रदर्शितत्वात्। गुणकर्मविभागश इत्यस्य गुणविभागशः कर्मविभागशश्चेति विग्रहं प्रदर्श्य गुणाः सत्वरजस्तमांसि तत्र सत्वादिप्रधानस्य शमादिकं कर्मेति यदुक्तं तदप्यसङ्गतम्'। शमादिगुणानां सत्वादिगुणकार्यत्वेनात्मन्युत्पद्यमानानां कृतिविषयत्वाभावेन कर्मत्वासंभवात्। शमादिकं यदि ब्राह्मणादिवर्णविहितं कर्मेत्यङ्गीक्रियते तदा शूद्रादिषु शमादिसद्भावे दोषापत्तिः। न चैवं लोकप्रतीतिः किन्तु गुणित्वप्रतीतिरेव। अतएव सर्वधर्मत्वोपपत्तिः। शमादिगुणानां सर्वधर्मत्वं च श्रीमद्भागवतादिषूच्यते" 'सत्यं दया तपः शौचं तितिक्षेक्षा शमो दमः। नृणामयं परोधर्मः सर्वेषां समुदाहृतः ( ७।११।८ ) इत्यादिना। विधितः सर्वधर्मत्वेऽपि ब्राह्मणस्यैते स्वाभाविकाः। अतएव सत्यवदनस्य विधितः सर्वधर्मत्वेऽपि ब्राह्मणस्य तत्स्वाभाविकमित्यभिप्रायेण नैतदब्राह्मणो विवक्तुमर्हतीत्युक्तम्। अपि च तेषां ब्राह्मणकर्मत्वे मुमुक्षावस्थायामपि शमादीनामावश्यकत्वात्सर्वकर्मसंन्यासपूर्वकत्वं तस्या न स्यात्। अतः शमादिगुणैराधानादिभिश्च चतुर्वर्ण्यं सज्जनत्वादिवद्विभक्तमिति तस्यार्थ वक्तव्यः। सृष्टिमित्यस्योत्तरादिवक्तमित्यर्थोऽपि सज्जनदुर्जनादिसृष्टिवद्गुणकर्मभ्यामेव वक्तुं शक्यः। सृष्टिमन्त्र-



स्येश्वरसङ्कल्पाधीनत्वात्सज्जनत्वादिकमपीश्वरसृष्टमेव। "बुद्धिर्ज्ञानमसम्मोहः क्षमा सत्यं दमः शमः। भवन्ति भावा भूतानां मत्त एव पृथग्विधाः (१०।५) इति गीतावाक्यानुसारेणैतेषामीश्वरदत्तत्वे तत्समनियतं सज्जनत्वादिकं ब्राह्मणत्वादिकं चापीश्वरसृष्टमेव। यस्मिन्नात्मन्येते भगवत्प्रदत्ता गुणाः प्रतीयन्ते तस्यैव सज्जनत्वादिकमिव ब्राह्मणत्वादिकमपि। बहिःप्रतीयमान गुणैरेवैतैःतत्समनियतं ब्राह्मण्यमपि सज्जनत्वादिकमिव ज्ञातव्यं भवति। एतदभिप्रायेणैव भगवता तद्व्यञ्जकोऽवयवसंस्थानादिभेदो न वर्णेषु सृष्टः। गुणनिबन्धनत्वादेव चातुर्वर्ण्यं न प्रष्टव्यं नापि वक्तव्यं किन्तु सज्जनत्वादिकमिव पारस्परिकपरिचयादेव बोद्धव्यं भवति। यद्यद्गुणनिबन्धनं न तत्पृच्छ्यते नापि स्वयमुच्यते। न हि त्वं सज्जनो दुर्जनो वेति लोके पृच्छ्यते नाप्यहं सज्जनो दुर्जनोवेति स्वयमुच्यते तथापि जनाः सज्जनत्वादिकं परस्परव्यवहारेण जानन्ति पश्चात्तदनुसारेणैव तं प्रति व्यवहारमपि कुर्वन्ति। एवं चातुर्वर्ण्यमपि व्यक्तिपरिचयेन ज्ञेयं पश्चाद् व्यवहारोऽपि तदनुसारेण कर्तव्यः।

रमणीयचरणानुशयवशेन ब्राह्मणादियोनिषूत्पन्नानामपि ब्राह्मणत्वादिकं स्वकीयगुणकर्मवशेनैव, यथा पूर्वजन्मनि योगभ्रष्टस्य तत्कृतयोगानुशयवतः "अथवा योगिनामेव कुले भवति धीमतामिति भगवद्वाक्यप्रामाण्येन जन्मान्तरे योगिषूत्पन्नस्य योगित्वमपि पुनस्तत्र योगसाधनानुष्ठानेनैव सिध्यति न तु योगिषूत्पन्नत्वमात्रेण। अत एवाग्रे तत्रोक्तम्" तत्र तं बुद्धिसंयोगं लभते पौर्वदैहिकम्। यतते च ततो भूयः संसिद्धौ कुरुनन्दन ( गी० ६।४३ ) इति, तथा ब्राह्मणादिषूत्पन्नस्यापि स्वकीयब्राह्मणादिकं स्वप्रयत्नाधीनमेव। एवं कपूयचरणानुशयेन चाण्डालयोन्युत्पन्नस्य चाण्डालत्वमपि स्वकर्माधीनं न तूत्पत्तिमात्रेण। न च श्वसूकरयोन्युत्पन्नस्य श्वादित्वमिव ब्राह्मणत्वादिकमपि जन्मसिद्धमिति वाच्यम्। श्वादित्वादेराकृतिव्यङ्ग्यजातित्वेन तथात्वेऽपि वर्णेषु तथात्वासंभवात्। जातेरपि नित्यत्वेन जन्मसिद्धत्वाभावस्य प्रागेवोक्तत्वाच्च। अपिच ब्राह्मणयोनिं वा क्षत्रिययोनिं वेत्यादावपि ब्राह्मणत्वादिकं गुणकर्माधीनमेव न तु जन्मसिद्धम्। अन्धपरम्परायातजन्मसिद्धतद्योनौ रमणीयत्वानुपपत्तेः, रमणीयचरणफल-भोगानुपपत्तेश्च। जन्मपक्षे चाण्डालोऽपि जन्मपरम्परागतदशविधब्राह्मणेष्वेकः। तदुक्तमत्रिसंहितायाम् "क्रियाहीनश्च मूर्खश्च सर्वधर्मविवर्जितः। निर्दयः सर्वभूतेषु विप्रश्चाण्डाल उच्यते (३८१) इति। यदि चाण्डालब्राह्मणयोनौ रमणीयचरणस्योत्पत्तिस्तदा किंतस्य रमणीयचरणफलं भवेत् प्रत्युतारमणीयचरणफलमेव स्यात्। कपूयचरणस्य चाण्डालयोन्युत्पत्तिरप्येतादृशचाण्डालाभिप्रायेणैवोक्ता न तु जन्मसिद्धचाण्डालमभिप्रेत्य। अन्यथा जन्मसिद्धचाण्डालस्य दर्शितचाण्डालब्राह्मणादप्युत्तमत्वेन तद्योनावुत्पन्नस्य कपूयचरणफलानुपपत्तेः। चाण्डालत्वमपि न जातिः। अतएवात्रिस्मृत्यादौ "प्रथमेऽहनि चाण्डाली द्वितीये ब्रह्मघातिनी। तृतीये रजकी प्रोक्ता चतुर्थेऽहनि शुध्यती ( ५।४९ ) ति

रजस्वलां प्रत्युक्तम् । अत्र चाण्डालत्वरजकत्वयोरागमापायित्वं द्वित्रदिनमात्रावशेषश्च प्रदर्शितः । न चात्र चाण्डालीसादृश्य मात्रं रजस्वलाया विवक्षितम् । तथा सत्यस्पृश्यत्वानुपपत्तेः । अग्निर्माणवक इत्यादावग्निसदृशेऽग्निवद पृश्यत्वादर्शनात् । एवं "ब्राह्मणक्षत्रियविशां शूद्राणां च परन्तप । कर्माणि प्रविभक्तानि स्वभावप्रभवैर्गुणैरित्यत्रापि स्वाभाविकगुणैर्वर्णविभाग एव विवक्षितः । तथाहि अत्र कर्मशब्दो लक्षणपरः । स्वाभाविकात्मगुणेषु कृतिविषयत्वाभावेन कर्मत्वासंभवात् । तथा च ब्राह्मणादीनां लक्षणानि स्वभावप्रभवैर्गुणैर्विभक्तानि । अर्थात् स्वभावप्रभवगुणभेदभिन्नानि तानि लक्षणानीत्यायातम् । यदा च ब्राह्मणादिलक्षणानि गुणभेदभिन्नानि तदा तल्लक्षणलक्षितवर्णा अपि गुणभेदेनैव भिन्नाः । गुणभेदव्यतिरिक्तवर्णविभाजकधर्मस्याभावात् । गुणभेदकृतो वर्णभेदो न तु जन्मभेदकृत इति यावत् । स्वभावप्रभवैर्गुणैरित्यत्र स्वभावः सत्वरजस्तमांसि न तु प्रकृतिः तस्या सर्वसाधारणत्वेनैकत्वात् । तज्जन्यसत्वादिकं न्यूनाधिकभावेन प्राणिषु वर्तमानं सत्स्वभावपदेनोच्यते । अतएव सात्विकस्वभावोऽयं राजसस्वभावोऽयमित्यादिलोकव्यवहारः सङ्गच्छते । सत्वादिगुणप्रभवाश्च गुणाः शमदमादयः । सात्विकादिग्रहाणामपि शमादिगुणजनकत्वस्य दर्शितत्वात् । अतएवैतच्छ्लोकगीताभाष्ये स्वभावप्रभवैरित्यस्य मायाप्रभवैः सत्वादिगुणैः शमादिनि कर्माणि प्रविभक्तानीति प्रथमव्याख्यां विहायाथवेत्यादिद्वितीयव्याख्यायां ब्राह्मणादि स्वभावस्य प्रशान्त्यादेः सत्वादिकं प्रभवः कारणमित्युक्तम् । प्रशान्तिः प्रशमः शम इत्यादिशब्दानां समानार्थकत्वादत्रापि शमादीनां सत्वादिकार्यत्वमङ्गीकृतम् । यदा च शमादीनां सत्वादिकार्यत्वं तदा सत्वादिप्रधानस्य ब्राह्मणादेः शमादीनि कर्माणि विधीयन्त इति कथनमसङ्गतमेव । अतोऽत्र कर्मशब्दस्य लक्षणपरत्वमाश्रित्य शमादीनां ब्राह्मणादिलक्षणत्वमेव वक्तव्यम् । ब्रह्मकर्म स्वभावाजमित्यादेः सत्वाद्याधिक्य प्रयुक्तं ब्राह्मणलक्षणमिति वक्तव्यम् । "न तदस्ति पृथिव्यामित्यादिश्लोके प्रकृतिजन्यसत्वादिगुणैर्मुक्तं न किञ्चित्प्राणिमात्रमिति कथनेन सत्वादिकमेव प्राणिनां स्वभावत्वेन वर्तते इति ज्ञायते । अतो न सत्वादिकारणप्रकृतिः प्राणिनां ब्राह्मणादिवर्णानां वा स्वभावत्वेन ग्रहीतुं शक्यते । एतेनाथवेत्यादिनोक्तः तृतीयप्रकारोऽपि समाहितो भवति । "शमोदमस्तपः शौचं सन्तोषः क्षान्तिरार्जवम् । मद्भक्तिश्च दया सत्यं ब्रह्मप्रकृतयस्त्विमाः" (भाग ११।१७।१६) इत्यादौ प्रकृतिजन्यसत्वादिकार्यभूताः शमादयः प्रकृतिशब्देनोच्यते । कार्यकारणयोरभेदेन शमादीनामपि परम्परया प्रकृतिकार्यत्वात् । अथवाऽत्र प्रकृतिशब्दः स्वभावपरः स्वरूपलक्षणपरो वाऽस्तु । सर्वथाऽपि शमादीनां ब्राह्मणादिवर्णविहितकर्मत्वं न संभवेत् । अग्निर्नाधीयत इति, आधानादिकर्मापि वर्णहेतुरित्युक्तमेव (५५) । ययोर्भावयोः कार्यकारणभावस्तदभावयोरपि प्रयोज्यप्रयोजकभाव इति न्यायेन वर्णहेतुगुणकर्मणामभावे वर्णाभावोऽप्यभिलप्यते । तथाहि वनपर्वणि



सर्पयुधिष्ठिरसंवादे "सत्यं दानं क्षमा शीलमानृशंस्यं तपो घृणा । दृश्यन्ते यत्र नागेन्द्र स ब्राह्मण इति स्मृतः" इत्युक्तम् । एवं क्षत्रियत्वादिकमप्यन्यत्रोक्त तेजः क्षमादि प्रयुक्तमिति ज्ञातव्यम् । एवमेतेषां गुणानामाधानस्य च वर्णहेतुत्वमुक्त्वाऽग्रे तदभावेन वर्णाभावोऽप्युच्यते । तद्यथा "यत्रैतन्न भवेत्सर्प तं शूद्रमिति निर्दिशेत्" इति । अत्र शूद्रशब्दो न वर्णपरः किन्तु संस्कारादिशून्यमनुष्यमात्रपरः । आधानाभावे मनुष्यत्वमपि मानुषो वै तावद्भवति यावदनाहिताग्निरित्यादिनोक्तम् । तदेतदुभयं "संस्कारपरामर्शात्तदभावाभिलापाच्चे (१।३।३६) ति सूत्रेणोच्यते । वर्णलक्षणे, जन्मान्तरत आत्मनि संस्कारात्मना विद्यमाना ये शमादयः कार्यरूपेणेहाभिव्यक्तास्ते परामृष्टाः । एतेन वर्णानां स्वाभाविकशमादिगुणनिबन्धनत्वमुक्तं भवति । गुणेषु स्वाभाविकत्वद्योतनार्थं संस्कारशब्दप्रयोगः । यथा स्वाभाविकवैराग्यादय एव संन्यासाश्रमप्रयोजका न तु श्मशानपुराणवैराग्यादय एवं शमादयोऽपि स्वाभाविका एव वर्णहेतवो न त्वागन्तुका इति सिद्धं भवति "तदभावाभिलापाच्च, तदभावे सत्यभिलापस्तदभावेन वाऽभिलापस्तदभावाभिलापस्तस्मात् । अत्र तच्छब्देन प्रागुक्तः वर्णहेतुसंस्कारः परामृश्यते । तदभावेन हेतुनाऽभावः कार्यस्यैव वर्णस्य भवति नान्यस्य । अथवा इदंपदोत्तरं सूत्रं "तदभावाभिलापाच्चे" ति । ननु संस्कारपरामर्शाद्वर्णाः संस्कारहेतुकाः सन्तु, तदभावे किं मर्त्येष्ववशिष्यत इति शङ्कायामुक्तं "तदभावाभिलापाच्चेति । तादृशसंस्काराभावे वर्णाभावो निगद्यते इति पूर्ववद्वक्तव्यम् । एतदुक्तं भवति तपः श्रुताभ्यां यो हीनो जातिब्राह्मण एव सः" इति पतञ्जलिना तदन्यैश्च यज्जातिब्राह्मणत्वादिकमुक्तं तेनोक्तकारणाभावेऽपि जन्मतोऽपि वर्णाः स्युरिति प्राप्ते तदत्र निराक्रियत इति । जन्मवर्णप्राप्तिः पण्डितपुत्रस्य पण्डितनामवद्भ्रान्तिप्राप्ता । एषैव "को हि तद्वेद यद्यपि स्त्रियं रक्षांस्यभिसचन्ते" (शतपथे) इत्यत्रानूद्य निराकृता । पदोत्तरसूत्रत्वं च "तत्तु समन्वयादि" (१।१।४) इत्यादावत्र "स्यात्तस्य मुख्यत्वादि (४।१।३९) त्यादौ पूर्वत्र च प्रसिद्धम् । तत्तु समन्वयादित्यत्र तुशब्दनिवर्तनीयपूर्वपक्षस्य सूत्रेणाकृतत्वात् भाष्योक्तपूर्वपक्षोत्तरत्वं तस्यास्त्येव । अन्वयव्यतिरेकाभ्यां लोके यः कार्यकारणभावः स एवात्रापि दर्शितो भवति । नन्वेतेषां सूत्राणां श्रीमच्छङ्कराचार्यादिभिः साक्षाद्भगवदवतारभूतैर्या व्याख्या कृता तामृज्वीं विहाय भवता कुतो वक्ररीतिराश्रीयते इति चेदुच्यते । विषयानुसारेण व्याख्या कर्तव्या भवति । सा चर्ज्वी वा वक्रा वाऽस्तु । अत एवानन्दमयाधिकरणे (१।१।६) आनन्दमयोऽभ्यासादि (१२) त्यादिसूत्राणामृज्वीं सूत्रपदानुगां व्याख्यां विहाय द्वितीयवरणके सिद्धान्तभूते क्लिष्टैव व्याख्याः कृतास्तैः । अत्रभामत्यामप्येवमुक्तम् । वेदसूत्रयोर्विरोधे "गुणे त्वन्यायकल्पनेति सूत्राण्यन्यथा नेतव्यानि । आनन्दमयशब्देन तद्वाक्यस्थ ब्रह्मपृच्छं प्रतिष्ठेत्येतद्गतं ब्रह्मपदमुपलक्ष्यते, एतदुक्तं भवति आनन्दमय इत्यादिवाक्ये यद्ब्रह्मपृच्छं प्रतिष्ठेति ब्रह्मपदं तत्स्वप्रधान-

मेवे" ति । एवमेव त्रिकारशब्दान्नेति चेन्न प्राचुर्यादि (१३) त्यादि सूत्राणामपि शब्दतः प्रतीयमानोऽर्थं स्त्यक्तोऽप्रसिद्धार्थश्च गृहीतः । अत्रापि विषयानुपपत्तिरेव कारणम् । प्रियशिरस्कत्वादिमत आनन्दमयस्य ब्रह्मत्वानुपपत्तेः । प्रकृतेऽपि मनुष्येष्ववान्तरजातिभेदस्य बाधितत्वाद्बाधितार्थाभिप्रायेण विरचितं पूर्वाचार्यभाष्यं परित्यज्य श्रुतिनिर्दिष्टवर्णस्वरूपानुसारेण सूत्राणां व्याख्या कृता । ननु किमर्थं पूर्वाचार्यै र्बाधितार्थोऽत्राङ्गीकृत इति चेन्न । उक्तोत्तरत्वात् । उक्तमेव पूर्वं (१६४) तादृशबधितजातिभेदाङ्गीकारे कारणम् । अपिच तदानीमपि सर्वे भारतीया इदानीमिव जातिभेदपिशाचेन गृहीता बभूवुः अतः स्वस्य जन्मब्राह्मणत्वं प्रख्यापनार्थं तदनुकूलभाष्यादिकं तैः कृतमासीत् । यथार्थवर्णस्वरूपकथने हि स्वनिर्मितग्रन्थेऽब्राह्मणकृतत्व-भ्रान्त्या मूर्खाणामुपाधेयत्वबुद्धिर्न स्यात् । स्वकीयमुख्यविषये जनानां श्रद्धोत्पादनार्थं प्रासङ्गिकेऽमुख्यविषयेऽशुद्धमपि जनसम्मतं चेदङ्गीकृत्यैव पण्डितैर्भाष्यते । अतएवेदानीं बहवो विद्वांसः संन्यासिनोऽपि केचित् स्वतो जातिप्रथां नेच्छन्तोऽपि जातिभेदवासनादूषितचेतसां समुदाये पूजासन्मानादिलोभेन स्वस्य जन्मसिद्धब्राह्मणत्वं द्योतयितुमयुक्तमपि जातिभेदं समर्थयन्ति ताटस्थ्यं वाऽवलम्बन्ते । यथार्थस्थितिकथने च तादृशजनसमुदायस्तेभ्यो न भिक्षामपि दद्यात् । केचित्तु धीरा अप्रियमपि पथ्यमेव पुत्रान् प्रति पितराविव कथयन्ति न तु "एकस्य चेष्टितं दृष्ट्वा करोत्यन्योऽपि गर्हितं गतानुगतिको लोको न लोकः पारमार्थिक" इति न्यायमनुसरन्ति । नचावतारपुरुषकृतत्वेन कस्य चिद्ग्रन्थस्य भाष्यस्य वा प्रामाण्यमिष्यते किन्तु श्रुत्यविरोधेन रागादिदोषासम्भावनया च पौरुषेयवाक्यानां प्रामाण्यमिष्टम् अतएव वेदव्यासवदेव बुद्धकपिलादीनां भगवदवतारपुरुषत्वेऽपि तदीयसिद्धान्तस्य श्रुतिविरोधादप्रामाण्यम् । व्याससिद्धान्तस्य श्रुतिसम्मतत्वात्तत्प्रमाणम् । वर्णानां जातित्वं न केवलं श्रुतिविरुद्धं किन्तु सर्वप्रमाणविरुद्धम् । प्रदर्शितं चैतत्प्रागेव । ननु स्वाधीने शब्दप्रयोगेऽन्यथोच्चारणमयुक्तम् । यदि भवदभिमतवर्णस्वरूपमेव व्याससम्मतं चेदसन्दिग्धशब्दैरेव सूत्राणि कुतो न रचितानीति चेत् । भवानेव ह्येतत्प्रष्टव्यो यद्वेदव्यासेन "द्युभ्वाद्यायतनं स्वशब्दादि (१।३।१) त्यत्रात्मशब्दे प्रयोक्तव्ये स्वशब्दः, समानावगतेरिति वक्तव्ये गतिसामान्यादि (१।१।१०) ति, भिन्नशब्दादिति वक्तव्ये "शब्दविशेषादि (१।२।५) ति, अनुभानात्तस्य चेति वक्तव्ये" अनुकृतेस्तस्य च (१।३।२२) ति, व्याप्तेस्तु समञ्जसमिति वक्तव्ये व्याप्तेश्चसमंजसमि (३।३।९) त्यादि च कुतः प्रोक्तमिति । तत्र यादृशमुत्तरं भवतोच्यते तादृशमेवास्माभि रत्रोच्यते । अपिच भवदभिमतजातिशूद्रत्व चेत्सूत्रकारस्येष्टं तन्निरूप्य तस्यानधिकारोऽपि स्पष्टैः शब्दैः कुतो नोक्तः ।

शमादयो विदेशी यम नत्रेषु च सन्त्यपि । अध्यापमादिकं प्राणवृत्तिसाधकमस्ति च३१३



तथापि तत्र वर्णानां व्यवहारो न दृश्यते । अतश्चाधानमेवात्र चातुर्वर्ण्यप्रयोजकम् ३१४
अग्न्याधानंबिना मर्त्या नैव कर्मोपयोगिनः । कर्मार्थतैव वर्णानामितिभाष्यादिसम्मतम्
अतो बोधायनेनोक्तमग्निना जायते द्विजः । तदभावे च मर्त्यत्वं शूद्रशब्देन सूच्यते ३१७
पराभिमतसंस्कारपरामर्शः समीपगे । जानश्रुतावेव नास्ति तस्मादन्यार्थको हि सः १८
यच्चात्र तदभावाभिलापः शूद्रस्य दर्शितः । स्मृत्यन्तरविरोधेन तदस्माकमसम्मतम् ।१९
शूद्रस्यापि च संस्कारः स्मृत्यन्तरे विधीयते । तस्मान्न तदभावाभिलापः शूद्रस्य विद्यते
कुत्रचित्तदभावोक्तिः स्मृत्यन्तरसदुक्तितः । तिरस्कृता भवेत्तस्मात्सा नोदाहर्तुमर्हति ॥
स्मृत्यन्तरोक्तसंस्कारोऽमन्त्रयज्ञार्थ इष्यते । विद्यार्थः स तु शूद्रस्य नेष्यते इति चेन्मतम्
मन्दबुद्धित्वमेवात्र हेतुर्नान्यद्धि किंचन । तच्च यत्रास्ति तस्यैव विद्यार्थः स च नेष्यते ॥
जातिशूद्रत्वदुस्स्वप्नं त्यक्त्वोन्मीलय चक्षुषी । ब्रह्मणैव मनुष्येषु जातिभेदो न निर्मितः।
व्यासादियोगिभिश्चापि तपश्शक्त्याऽभिकाङ्क्षितम् । साधयद्भिर्मनुष्येषु तपसा न स निर्मितः
यदि तेषां तवाभीष्टा जातिर्नृष्वप्यवान्तरा । मता चेन्न कुतो रूपभेदः कृतश्चतुर्विधः ॥
सृष्ट्याद्युत्पत्तितस्तत्तज्जातिजन्यत्वनिश्चयात् । नैव किञ्चिज्जगद्वस्तुव्यवहारो विलोक्यते
रूपगन्धरसाङ्गादिदृश्यभेदनिमित्ततः । प्रपञ्चेऽस्मिन् वस्तुमात्रव्यवहारोविलोक्यते ॥२८
चातुर्वर्ण्यं परं चादिजन्मपरम्पराधिया । व्यवहर्तव्यमित्युक्तिं निर्लज्जो वक्तुमर्हति ३२८
रथकारपरं शूद्रसंस्कारादिकमित्यपि । यदुक्तं तदसच्छूद्रपरो रथकृदाह्वयः ॥३२९॥
विशेषवचनानां हि बाधकेऽसति कुत्रचित् । सामान्यपरतैवेष्टा ऋणापाकरणादिषु ।३०।
ब्राह्मणो जायमानो वै त्रिभिरृणी भवेदिति । श्रुतौ ब्राह्मणशब्दश्च वर्णसामान्यबोधकः
सोमविद्याप्रजंचेति सूत्रे ब्राह्मणशब्दतः । सोमशब्दाच्च सामान्यवर्णयागमतिर्मता ३३२
यदि त्रैवर्णिकः सोऽपि रथकारो भवेत्तदा । दर्शितः शूद्रसंस्कारस्तस्यैवेति सुनिश्चितम् ३३

शमदमादिगुण और अध्यापनादि जीविका वृत्तियाँ विदेशियों में भी हैं, तो भी उनमें ब्राह्मणत्वादि वर्ण व्यवहार नहीं है। अतः वसन्तादि काल भेद से किया हुआ आधान ही वर्ण प्रयोजक माना जाता है। अतएव आधान न होने पर मनुष्यत्व मात्र श्रुति और बो० स्मृति में बताया गया है। "अनग्निरक्रियः शूद्रस्तस्माज्जातोऽग्निना द्विजः" (१।१२) इतर सम्मत संस्कार परामर्श तो समीपस्थ जानश्रुति में भी नही और शूद्र में तदभाव भी नहीं है। दूसरी स्मृति में शूद्र का भी उपनयसंस्कार विहित होने से तदभाव शब्द का अर्थ उपनयनाभाव कहना उचित नही। यदि विद्याङ्गोपनयन शूद्र का निषिद्ध कहना हो तो उसमें हेतु मन्दबुद्धित्व ही है और वह जिनमें है उन सबका वह निषिद्ध ही हैं। जातिशूद्रत्व स्वप्न को छोड़कर जातिवादी अपनी आँखें खोले। सृष्टि कर्ता ब्रह्मा ही मनुष्यों में अवान्तर जातिभेद रचा नहीं है। तपश्शक्ति से संकल्पित वस्तु मात्र का निर्माण करने वाले

व्यासादि महर्षिगण भी यदि मनुष्यो में जन्मसिद्ध अवान्तर जातिभेद मानते हों तो वे क्यों अपने तपोबल से वर्णसूचक चार भेद रचे नहीं। लोक में कोई ऐसी वस्तु नही है जो आदिसृष्टि से लेकर आजतक की जन्मपरम्परा के निश्चय से ही पुकारी जाती हो। रूप, रस, गन्ध और अवयवादि दृश्य भेदों से ही सब वस्तु व्यवहार का विषय हो रहे हैं। ऐसी परिस्थिति में सिर्फ चातुवर्ण्य को ही उस दुर्ज्ञेय परम्पराज्ञान से मानने वाले निर्लज्ज ही होते हैं। कुछ लोग कहते हैं कि शूद्रोपनयन विधि रथकारोपनयनपरक है, किन्तु वह ठीक नहीं रथकाराधान विधि ही शूद्राधानपरक है। विशेषवाचक शब्द, प्रायः, सामान्य-वाचक माने जाते हैं। जैसे ब्राह्मणादि शब्द ऋणापाकरणादि विधि में मानव मात्रपरक होते हैं, वैसे ही श्रुति में कहीं रथकार निषादादिशब्द आये हों तो वे सब शूद्रसामान्य परक हैं। जो लोग रथकार को त्रैवर्णिक या चातुर्वण्य से अतिरिक्त मानते हैं उनके मत में तो शूद्रोपनयन विधि शूद्र विषयक ही है।

भाष्यं चैतादृशंचेत्स्यादपूर्वार्थप्रकाशनम्। श्रुतिमूलकसूत्रार्थवर्णनं चापि संभवेत् ।३३४।
अन्यथा वर्णने पूर्वं सिद्धस्यैवात्र साधनम्। गतानुगतिकत्वं च स्यादुत्सूत्रार्थवर्णनम् ।३३५।
अस्याधिकरणत्वं च न स्याच्छङ्करभाष्यतः। विषयादिविहीनत्वादपशूद्रत्वमप्युत ॥
विषयो विशयश्चैव पूर्वपक्षस्तथोत्तरः। प्रयोजनं सङ्गतिश्च षट्तेऽधिकरणं स्मृतम् ॥
एतत्षट्कविशिष्टत्वान्मीमांसाशास्त्रवर्तिषु। वर्णाधिकारसूत्रेष्वधिकरणत्वमिष्यते ।३३८।
नामाप्यस्यापशूद्राधिकरणं त्विति कस्यचित्। मते युक्तं भवेत्काममात्रेयमनुवर्तिनः ॥
व्यासोक्तमेतद्वर्णानां स्वरूपं चेत्प्रदर्शयेत्। तदाऽधिकरणं तूक्तैर्लक्षितत्वाच्चलक्षणैः ४०॥
शूद्रब्राह्मणशब्दौ हि विषयौ विशयस्तयोः। स्वरूपं किमिति स्मृत्या पूर्वपक्षो यथा स्त्रियः
स्त्रीणांयज्ञाधिकारोऽपिस्मृत्यानास्तीतिशङ्कितम्।श्रुतितस्तुतदस्तीतिसिद्धान्तःप्रतिपादितः
श्रुतिसूत्रोभयेनेह सिद्धान्तोऽभिहितो भवेत्। आद्यन्तयोः स्वरूपे च दर्शिते स्यात्तदन्ययोः
भाष्येऽधिकरणत्वार्थं यदुक्तं विषयादिकम्। तदुत्सूत्रं स्वतन्त्रं च जातिवासनयेरितम्'४४

भाष्य इस प्रकार रहेगा तो अपूर्वार्थ का प्रकाशन और सूत्रों का अर्थ भी श्रुति मूलक होगा, नही तो पूर्वशास्त्र में सिद्ध अर्थ को ही यहाँ सिद्ध करना होता है और गतानुगतिकत्व और उत्सूत्रार्थ ही वर्णित होगा। शङ्कर भाष्यादि के अनुसार इसमें अधिकरणत्वं भी रहेगा नहीं, अधिकरणत्व के लिए विषयादि षट्क चाहिये। ये सब मीमांसाशास्त्रीय शूद्राधिकार सूत्रों में हैं। आत्रेय मत के अनुसार उसका अपशूद्राधिकरण नाम भी रह सकता है। ब्रह्मसूत्रीय इस अधिकरण में वर्णों के स्वरूप का वर्णन होने पर ही अधिकरणत्वं रहेगा और इसका अपशूद्राधिकरण नाम किसी का भी मत में उचित नहीं। इसका विषय श्रौतशूद्रशब्द और ब्राह्मण शब्द है और उनका स्वरूप क्या है सन्देह है। जाति-



वादी की स्मृति से पूर्वपक्ष और श्रुति से उनका स्वरूप निर्णय होगा। स्त्रियों का यज्ञाधिकार भी स्मृति से नहीं किन्तु श्रुति से माना गया (मी० द० ६।१।२) तथा शूद्र शब्द और ब्राह्मण शब्द जातिवाचक हैं ऐसा स्मृति से पूर्वपक्ष और शोक और सत्यवचन से अनुमित मन्दबुद्धित्व और शमादिगुण से सिद्ध उपाधि के वाचक हैं ऐसा श्रुति से सिद्धान्त होगा। आद्यन्तवर्णों का स्वरूप इस प्रकार बताने पर मध्यम वर्णद्वय का भी स्वरूप निर्णय हो जाता है। इन सूत्रों में अधिकरणत्व सम्पादन के लिए शङ्करादि भाष्यों में जो कुछ कहा गया है वह उत्सूत्र है और प्राक्तन जातिवासना से कहा गया है।

अत्र वर्णस्वरूप परं भाष्यं कृतं चेदपूर्वार्थः प्रदर्शितो भवेत्। अन्यत्र क्वापि तस्याप्रदर्शनात्। एतच्च श्रुति मूलकमपि "तस्माच्छूद्रो बहुपशुरित्यादिना शूद्रस्य पशुतुल्यत्वदर्शनात्। मौढ्यस्य शोकहेतुत्वाच्च' स्वसमानजातियोत्कर्षोऽपि स्वेनालभ्यमानः शोकहेतुर्भवति। बुद्धिमतामनायासजीविकां दृष्ट्वा कष्टजीवी मन्दबुद्धिः शोकमनुभवति सहजतः। प्रकृते रैक्वस्योत्कर्षं श्रुत्वा जानश्रुतिरपि शोकमवाप नैमित्तिकं न तु सहजम्' अत्राधिकारनिर्णये क्रियमाणे मीमांसायां सिद्धस्यैवात्रापि साधनं भवेन्न त्वपूर्वार्थस्य। न चेष्टापत्तिः, उत्सूत्रार्थत्वात्तस्य। एषु सूत्रेषु शूद्रशब्द एव नास्ति सुतरां तस्याधिकारानधिकारौ। अतएव नेदमपशूद्राधिकरणम्', पूर्वतन्त्रे च "अपिवा वेदनिर्देशादपशूद्राणां स्या" त्यात्रेयसूत्रानुसारेण त्वदपशूद्राधिकरणं भवेन्नाम, बादरिमते तु सर्वाधिकाराधिकरणमेव तत्। स्त्रीणां यज्ञाधिकारेति "भार्यादासश्च पुत्रश्च निर्धनाः सर्व एव ते। यत्ते समधिगच्छन्ति यस्य ते तस्य तद्धनमितिस्मृति मूलकेन "द्रव्यवत्वात्तु पुंसांस्याद्द्रव्यसंयुक्तं क्रयविक्रयाभ्यामद्रव्यत्वं स्त्रीणामि" (जै० सू० ६।१।१०) त्यादि सूत्रेण यथा स्त्रीणामनधिकारं पूर्वपक्षे उक्त्वा" जैमिनिः "फलोत्साहाविशेषादि (१३) त्यादिना यज्ञे तासामधिकारो दर्शितस्मृतिनिराकरणपूर्वकं निरूपितवान् तथा "सर्वेषां जन्मना जातिर्नान्यथा कर्मकोटिभिः। पश्वादीनां यथा जातिर्जन्मनैव न चान्यथेत्यादि स्मृत्या श्रुतिस्थशूद्रशब्दस्य. जातिशूद्रत्वं प्रवृत्तिनिमित्तमिति पूर्वपक्षं कृत्वा "शुगस्य तदनादरेत्यादिसूत्रबलेन स्वाभाविकशोकतद्धेतुभूत मन्दबुद्धित्वादिकमेव तत्प्रवृत्तिनिमिमिति सिद्धान्तो वक्तव्यः। पश्वादिनिष्ठगोत्वादिजातिरपि जन्म सिद्धा न किन्त्वाकृतिव्यङ्ग्यैवेति तृतीयाध्याये दर्शितम्।

यदि शूद्रस्य विद्याधिकारमात्रनिवारणम्। तदाऽधिकरणं चेदं व्यर्थमेव भविष्यति ३४५
यतो हि पूर्वमीमांसा भाष्ये सोऽर्थःप्रदर्शितः। जातिवादिभिरत्रैष किमर्थं च निरूप्यते ॥
व्यवहारे च भट्टानां नयो वेदान्तिनामपि। अधिकारादिचर्चाऽपि वर्तते व्यावहारिकी।
शूद्रवच्चोपरिष्ठानां नाधिकारो भवेदिति। पूर्वपक्षं विधायान्ते सोऽस्तीति कथनेऽप्यलम्।
धारणवद्विधिर्वा स्यादित्यादाविव चात्र हि। कुतो नोक्तं शूद्रवर्णो यद्यत्र पर्युदस्यते ४९॥

यच्चोक्तं शूद्रशब्देन सम्बोध्यात्रोपदेशतः । भ्रान्तिःस्यात्कस्यचिच्छूद्रो विद्याधिकारवानिति
तन्निवारयितुं चोपनिषद्विद्यासु तत्पुनः । पृथग्विचार्यते नातो व्यर्थत्वापत्तिरित्यपि ।५१
तन्न युक्तं यतश्चाद्यसूत्राभ्यां भ्रान्तिवारणे । अन्यत्सूत्रत्रयं व्यर्थं संस्कारादिपरामृशत् ।
उपनयनसंस्कारशून्यत्वादेव शूद्रकः । वेदविद्यास्वनर्हः स्यादिति पूर्वत्र निश्चितम् ३५३
श्रवणादिनिषेधोऽपि पूर्वत्रैव प्रदर्शितः । तस्यैवात्र विचारे तु पुनरुक्तिर्भविष्यति ३५४

यदि शूद्र का विद्या में अधिकार नही है कहना हो तो यहाँ यह अधिकरण व्यर्थ ही है। क्यों ? यह विषय शाबर भाष्य में पहले बताया गया है। वेदान्तियों का भी भाट्टसिद्धान्त ही व्यवहार में मान्य है और "विधिर्वाधारणवत्" इत्यादिरूप से बहुत्सी मीमांसासिद्धान्त यहाँ उदाहरण के रूप में लिये गये हैं। ऐसे ही शूद्र की तरह देवताओं का भी अधिकार नही है पूर्वपक्ष करके सिद्धान्त में वह है निर्णय कर सकते थे। पृथगधिकरण, शूद्र के लिये रचने की क्या आवश्यकता पड़ी थी। कुछ लोग यहाँ कहते हैं कि शूद्र शब्द से सम्बोधित करके उपदेश किया गया है। इससे शूद्र का भी विद्या में अधिकार होगा ऐसा भ्रम किसी का हो सकता है। अतः उसको हटाने के लिये यह अधिकरण है। अतः व्यर्थ नहीं। यह ठीक नही। इतनी बात पहले दो सूत्रों से ही सिद्ध हो जाती है तो अतिरिक्त तीन सूत्र व्यर्थ हो जायेंगे। अतः सबको सार्थक बनाने के लिये वर्णस्वरूप का निर्णय ही अधिकरणार्थ मानना होगा।

यदुक्तं भिन्नशास्त्रत्वद्योतनायैव तत्पुनः । विचारितमितीहापि तदत्यन्तमशोभनम् ३५५
उभाभ्यामेकशास्त्रत्वमङ्गीकृत्यैव भाषितम् । व्यासेन कर्मणां चित्तशुद्धिहेतुत्वमीरितम् ५६
कर्मापेक्षितजीवात्मस्वरूपप्रतिपादने । वेदान्तानां च तात्पर्यमिति जैमिनिसम्मतम् ५७
क्वचित्सिद्धान्तवैषम्यं देवानां विग्रहादिषु । न तु सर्वत्र तस्मात्तन्न्यायाश्चात्राप्युदाहृताः ॥
अतश्च भिन्नशास्त्रत्वं कर्मब्रह्मविचारयोः । वक्तुं न वस्तुतः शक्यं वेदतात्पर्यवेदिभिः ॥
वेदविद्यासु शूद्रस्य निषेधः कुत्र वा श्रुतौ । दृष्टो येनेदृशं भाष्यं युक्तमत्र भवेदपि ३६०॥
नास्त्यन्यत्र निषेधश्चेदत्र विद्याधिकारिता । देवाधिकरणन्यायात्कुतः शूद्रस्य नेष्यते ॥
या निषेधश्रुति र्भाष्यकारेणात्र प्रदर्शिता । सा हि नैव निषेधोक्तिः किन्त्वर्थवाद गीर्मता
अतश्च पूर्वतन्त्रस्थशूद्राधिकारनिर्णये । निषेधत्वेन भाष्यादौ सा च नोदाहृता क्वचित् ॥
निषेधगीस्त्वपक्षेऽपि श्रौतयज्ञाधिकारिताम् । वारयेन्न तु विद्याधिकारं शूद्रस्य लेशतः ॥
यज्ञाधिकारिता ह्यन्या चान्या विद्याधिकारिता । सामानाधिकरण्यं हि तयोर्नास्त्येव सर्वदा
येषां यज्ञाधिकारो हि नास्ति तेषामपीष्यते । विद्यायामधिकारश्च यथाऽनाश्रमिदेवताः
नास्त्यनाश्रमिणां यज्ञे देवानां चाधिकारिता । तेषां तथापि विद्याधिकारस्त्वङ्गीकृतो बुधैः
येषां यज्ञाधिकारोऽस्ति तेषां पत्नीवतां नहि । विद्याधिकारस्तस्मान्न तयोरेकत्र संस्थितिः
तस्मादथातो ब्रह्मेति सूत्रे चाथपदस्य हि । मुमुक्षुत्वादिकं ब्रह्मविद्यायोग्यतयेरितम् ६९।



एवं शूद्रस्य यज्ञाधिकारो मास्तु त्वदुक्तितः । विद्याधिकारो नास्तीति वचोऽत्यन्तमसंगतम्
श्रुत्या हि पूर्वपक्षश्च स्मृत्याधारेण चोत्तरम् । वेदवाक्यप्रसूनस्रक्सूत्रव्याख्यासु नेष्यते ॥
लोकतः स्मृतितो वाऽपि पूर्वपक्षः प्रवर्तते । श्रुतिमाश्रित्य सिद्धान्तो मर्यादैषा सम्मता ॥
एतस्मिन् वर्णसूत्राधिकरणे तद्विपर्ययः । श्रुतितः पूर्वपक्षश्च सिद्धान्तः स्मृतिमूलकः ३७३
श्रुत्यर्थसूचनात्सूत्रं भाष्यं सूत्रार्थभाषणात् । असंगतमसम्बद्धं न तद्भाष्यं भविष्यति ॥
शूद्रस्य नाधिकारश्चेत्स शूद्रो गुणतो भवेत् । शास्त्रं धारयितुं शक्तिहीनश्चानधिकारवान्
यत्तूक्तं शूद्रशब्दोऽत्र स्यादधिकृतबोधकः । शुचा द्रवणयुक्तत्वान्न तु रूढ्यर्थकस्त्विति ३७६
तन्न यस्मात्पुराणादौ द्रवतामेव शोकतः । शोचतां सर्वदा शूद्रशब्दो बोधक उच्यते ७७
तस्मात्सर्वत्र शूद्रादिशब्दा भवन्ति यौगिकाः । जातिवाचकशब्दा हि प्रायो रूढा भवन्ति च
जातिवादेऽपि शूद्रस्य नाधिकारो निवार्यते । सर्ववेदादि शास्त्राणां सामर्थ्यात्पठनादिषु ॥
त्यज वाऽनधिकारोक्तिं जातिवादहठं तु वा । नोभयं शक्नुयाद्वक्तुं साक्षाद्देवगुरुर्भुवि ८०
नावैदिकमधीयीत इतिश्रौतनिषेधगीः । यथा त्वां क्षुद्रसंस्कारं न वारयति तादृशात् ३८१
तथा वैदिकसंस्कारं शूद्रं विद्यानिषेधगीः । सहस्रशोऽपि वेदोक्ता स्मृत्युक्ता वा न वारयेत्
प्रायश्चित्तमपि क्षुद्रसंस्कारस्यैव संभवेत् । न तु जन्मान्तरश्रौतसंस्कारस्यान्त्यजन्मनः ।:
मनस्स्वेव हि भेदोऽस्ति न मनुष्येषु भिन्नता । मनोभेदान्मनुष्येषु भेदो नैव तु जातितः ॥
मनश्शुद्धमशुद्धं च तत्कृते पुण्यदुष्कृते । ताभ्यामुच्चत्वनीचत्वे भवेतां न तु जन्मतः ८५
पिता शुद्धमनस्कोऽपि पुत्रं चाशुद्धमानसम् । जनयेत्तेन वर्णोऽपि सत्वादिगुणभेदतः ॥८६
भिन्नस्ततः कर्मभेदो लोकान्तरगतेर्भिदा । तादृग्वर्णः पुत्रपित्रोरेकः कथं भविष्यति ३८७

मीमांसादर्शन से वेदान्तदर्शन में भिन्नता के लिए यहाँ अपशूद्राधिकरण है ऐसा कहना भी उचित नही। इन दोनों में एकशास्त्रत्व मान करके ही कहीं-कहीं भिन्नाभिप्राय बताये गये हैं। व्यास जी ने कर्मों का चित्तशुद्धि फल बताया था और जैमिनीय लोग कहते हैं कि कर्मापेक्षित कर्ता का स्वरूप ही वेदान्तों का विषय हैं। भिन्नशास्त्रों में कहीं ऐसा, एक दूसरे का स्वानुकूल अभिप्राय नही बताया गया। वेदविद्या में शूद्र का अनधिकार कहाँ कहा गया है ? जिससे यहाँ ऐसा भाष्य उचित हो सके। यदि ऐसा निषेध नही है तो देवताधिकरण न्याय से शूद्र का विद्या में अधिकार ही सिद्ध होगा। भाष्य में जो निषेध वाक्य ( शूद्रो यज्ञेऽनवक्लृप्तः ) दिखाया गया वह अर्थवाद मात्र है न कि निषेध। अतएव पूर्वमीमांसा के शूद्राधिकरण या परमतेऽपशूद्राधिकरण सूत्रों में यह वाक्य पूर्वपक्ष के रूप में भी उदाहृत नही। निषेध पक्ष में भी वह शूद्र का यज्ञ में अनधिकार ही बतायेगा न कि विद्या में। यज्ञाधिकार और विद्याधिकार परस्पर भिन्न और विरुद्ध भी हैं। जिनका यज्ञाधिकार नहीं वे विद्या में अधिकारी हैं। देवताओं और विधुरादि अनाश्रमियों का यज्ञाधिकार नहीं किन्तु विद्या में

अधिकार है। जिनका यज्ञाधिकार है ऐसे गृहस्थों का विद्या में अधिकार नही। अतएव अथातो ब्रह्म जिज्ञासा इस सूत्र के भाष्य में मुमुक्षुत्वादि को विद्याधिकारहेतु बताया गया। ऐसे ही शूद्र का यज्ञाधिकार न रहने पर भी विद्याधिकार रह सकता है। श्रुति से पूर्वपक्ष और स्मृति से सिद्धान्त वैदिक ग्रन्थों में कहीं भी नही हैं। स्मृति और लोकन्याय से पूर्वपक्ष और श्रुतिवाक्य से निर्णय बताना ही सर्वसम्मत है। इस अधिकरण के भाष्य में तो ये सब विपरीत ही हैं। श्रुति का अर्थ सूचित करने वाला ही सूत्र औरसूत्र का अर्थ बताने वाला ही भाष्य कहलाता है। यदि विद्या में शूद्र अनधिकारी है तो वह गौण शूद्र ही होगा। भाष्य में जो कहा गया है कि इसी जगह पर शूद्र शब्द "शोचतीति शूद्र ऐसी व्युत्पत्ति से अधिकृत विषय होगा, वह ठीक नही। क्यों ? वाय्वादिपुराणों में सर्वत्र शूद्र शब्द का यौगिकार्थ ही बताया गया न कि रूढ्यर्थ। जातिवाचक शब्द ही प्रायः रूढ्यर्थक होते हैं। जातिवाद में शूद्र का अधिकार वारित नही हो सकता। वह सर्वशास्त्रों में कुशल ही होगा। अतः तुम अनधिकारी की बात छोड़ो अथवा जातिवाद को। साक्षात् देवगुरु भी इन दानों का समर्थन नही कर सकेगा। जैसे "नावैदिकमधीयीत" (अवैदिक ग्रन्थ या भाषा को न पढ़े) यह वैदिक निषेध तुमको अवैदिक पढ़ाई से रोक नही सका, वैसा ही विद्यासंस्कारी शूद्र को दर्शित निषेधवाक्य विद्याभ्यास से रोक नही सकेगा। प्रायश्चित्त भी वेद छोड़ने वाले को ही करना पड़ेगा न कि वेदविद्या से पुनीत आत्मा को। मन में ही भेद है न कि मनुष्य शरीरों में और मनुष्य सब एक जाति के हैं। मानसिक भेद से ही मनुष्यों में भेद है न कि जन्म से। मन दो प्रकार का है शुद्ध और अशुद्ध। पुण्य पाप भी उसी का कार्य है और उसी से मनुष्य उच्च और नीच बनता है न कि जन्म से। शुद्ध मनवालें पिता का भी अशुद्ध मन वाला पुत्र पैदा हो सकता है। सत्वादि गुणभेद से ही उन दोनों में वर्ण और कर्म भिन्न होते हैं और उसी से लोकान्तरगति भी उनको भिन्न रहेगी। परलोक साधक ऐसा वर्ण, पिता और पुत्र में प्रायः एक नही रहेगा।

नास्त्यनाश्रमिणामिति। अनाश्रमिणां कर्मस्वधिकारो नास्ति, द्रव्यदारादिमतामेव तत्राधिकारनिर्णयात् किन्तु विद्यायां तेषामप्यधिकारोऽस्तीति "अन्तरा चापितु तद्दृष्टेरि (३।४।२६) ति सूत्रेण" रैक्ववाचक्नवीप्रभृतीनामेवंभूतानामपि ब्रह्मवित्वश्रुत्युपलब्धेरिति भाष्येण चावगम्यते। देवानां कर्मस्वधिकाराभावः "न देवानां देवतान्तराभावादि जैमिनिसूत्रेणावगम्यते। यद्यपीदंसूत्रं पूर्वमीमांसासूत्रेषु नेदानीमुपलभ्यते तथापि वेदान्तभाष्योदाहृतत्वेन तत्पूर्वपुस्तकेष्वासीदिति मन्तव्यम्। विद्यायां तेषामधिकारश्च "तदूपर्यपि बादरायणः संभवादिति सूत्रेण दर्शितः। तस्मादथातो ब्रह्मेति,



इहामुलफलभोगविरागमुमुक्षुत्वादिकं च कर्माधिकारबाधकं विद्याधिकारसाधकं चेत्यङ्गीकृतं शास्त्रकारैरपि। अतः कर्मब्रह्मविद्याधिकारयोरस्ति महान् विरोधः। पराभिमतजाति शूद्रस्य, "तस्माच्छूद्रो यज्ञेऽनवक्लृप्त" इत्यस्य निषेधविधित्वपक्षेऽपि विद्यायामधिकारः स्यादेव। दर्शितनिषेधस्य यज्ञाधिकारविषयत्वात्। श्रुत्यर्थसूचनादिति, शोकेनागते राजन्ये शूद्रशब्दप्रयोगात्स्वाभाविकशोक एव शूद्रशब्दप्रवृत्तिनिमित्तमित्यर्थवर्णने "शुगस्य तदनादरेत्यादिसूत्रस्य श्रुत्यर्थसूचकत्वं तद्विवरणात्मकस्य भाष्यत्वं च संभवति नान्यथा।" यत्तूक्तमिति, तदुक्तं भाष्ये "शक्यते चायं शूद्रशब्दोऽधिकृतविषयो योजयितुम्। अवयवार्थसंभवाद्रूढ्यर्थस्य चासंभवादिति। अत्रैव शूद्रशब्दः शोचतीति व्युत्पत्याऽधिकृतविषयो भवति। अन्यत्र च रूढ्या शूद्रजातिबोधक इति तद्भाष्याभिप्रायः। तन्न, यतो वायुपुराणादौ सर्वदा शोकशीलानामेवाभिधायकः शूद्रशब्दो वर्तते। तथाहि "इतरेषां कृतत्राणान् स्थापयामास क्षत्रियान्। सत्यं ब्रह्म यथाभूतं ब्रुवन्तो ब्राह्मणाश्च ते॥ वैश्यानेव तु तानाहुः कीनाशान् वृत्तिसाधकान्। शोचन्तश्च द्रवन्तश्च परिचर्यासु ये रताः। निस्तेजसोऽल्पवीर्याश्च शूद्रांस्तानब्रवीत्तु सः (२।८।१६१) इति। एवं भविष्येऽपि (१।४४।१९) प्रोक्तम्' त्रेतायुगे जनाः प्राक्तनसंस्कारवशात्स्वत एव यदा स्वाभीष्टप्रजारक्षणवाणिज्यादिकर्मसु सम्प्रवृत्ता आसन् तदा ब्रह्मा ब्रह्माख्य ऋत्विग्वा तत्तत्प्रवृत्यनुसारेण जनान् यज्ञनिर्वर्तनार्थं तत्तद्वर्णत्वेन निर्दिष्टवान्। तदुक्तम् "वर्णानां प्रविभागश्च त्रेतायां सम्प्रवर्तितः। यज्ञः प्रवर्तितश्चैव तदा ह्येव तु दैवतैः (वायौ ५७।६०) एवं पाद्मेऽप्युक्तम्" त्रेतायुगे त्रयीधर्मो ज्ञानवर्णव्यवस्थितिः (पातालखण्डे ९६।१४) इति। तत्र ज्ञानवर्णव्यवस्थितिरित्यनेन ज्ञानतो वर्णविभागः कृत इति स्पष्टमेव ज्ञायते। ज्ञानशब्दोऽत्र सामान्यत आत्मगुणवाचकः। शमदमाद्यात्मगुणैः वर्णव्यवस्थां कृतवानित्यर्थः। कृते तु न यज्ञप्रवृत्ति र्नापि वर्णव्यवस्था चासीत्सर्वे कृतकृत्या आसन्निति तत्रैव वायावुक्तम्। तद्यथा "अप्रवृत्तिः कृतयुगे कर्मणोः शुभपापयोः। वर्णाश्रमव्यवस्थाश्च न तदाऽऽसीन्नसंकरः॥ अनिच्छाद्वेषयुक्तास्ते वर्तयन्ति परस्परम्। तुल्यरूपायुषः सर्वाः (प्रजाः) अधमोत्तमवर्जिताः॥ (२।८।६१) इति। दृश्यते खलु लोकेऽपीदं यदेकस्मिन् गृहे समुत्पन्ना बालकाः प्रथमे वयस्यभेदेन वर्तन्ते। पश्चाद्विवाहानन्तरं कर्मसु परस्परुचिभेदे सति पृथगेव तिष्ठन्तीति एवं सृष्ट्यादावप्यभेदेन स्थिताजनाः पश्चाद्यदा क्रमशो कालवशेन बहिर्मुखा जातास्तदा तान्वैदिककर्मसु योजयितुं यज्ञारम्भः कृतः। यज्ञस्य च ब्राह्मणादिवर्णिभिरेव कर्तव्यत्वाद्वैदिकार्थवादानुसारेणादौ वर्णा गुणत एव निर्धारिता आसन्। बहुकाल-पर्यन्तं च गुणप्रयुक्तवर्णैरेव वैदिककर्माणि कृतानि। यदा च कठिनकर्मसु जनानां विवादो जातस्तदा निर्विवादप्रवृत्यर्थं प्रतिवर्णं नियतकर्मव्यवस्था राजाज्ञया कृता। अर्थाद्यस्य पिता यत्कर्मणा जीवति स्म तत्पुत्रैरपि तादृशमेव कर्म कर्तव्यमन्यथा राजदण्डो भवे-

दिति । अतएव धर्मव्याधेन मांसमभक्षयताऽपि मांसविक्रयणं कृतम् । इयं च व्यवस्था पश्चादेव कृतेति वाय्वादि पुराणवाक्यैरपि ज्ञायते । तथाहि "संसिद्धायां तु वार्तायां ततस्तासां स्वयम्भुवा । मर्यादाः स्थापयामास यथारब्धाः परस्परम्" द्वापरे सर्वभूतानां कायक्लेशपुरस्कृता । लोभोऽधृतिर्वणिग्युद्धं तत्वानामविनिश्चयः ! वेदशास्त्रप्रणयनं धर्माणां संकरस्तथा" ॥ एवं भविष्येऽप्युक्तम् (१५ पृ० द्र०) वेदश्चैकश्चतुर्धा तु व्यस्यते द्वापरादिषु । ऋषिपुत्रैः पुनर्वेदा भिद्यन्ते दृष्टिविभ्रमैः" ( मात्स्ये ६ ) इत्यत्र बहुविधशाखाभेदोऽपि भ्रममूलकइत्युक्तं भवति । अत्रेदं कारणं यत्पूर्वकाले लिपिरेव नासीदतो न लिखितपुस्तकान्यपि ! वेदो मुखतो गुरुणा श्राव्यते स्म तच्छ्रुत्वा शिष्यैरुच्चार्यते स्म । अतएव श्रुतिरिति वेदस्य नामान्तरं जातम् । तदानीं वेदातिरिक्तविद्यैव नासीत् । अतः सर्वे वेदाध्ययन तत्परास्सन्त एकैककक्षायामद्यतनाङ्ग्लविद्यालयेष्विव बहवस्तिष्ठन्ति स्म । गुरुस्त्वेकस्स्यादेव । दूरस्थैर्विद्यार्थिभिर्गुरूक्तस्यासम्यक्श्रुतत्वेनान्यथा श्रुतत्वेन चाक्षरस्वरादिषु भ्रमो जातः । पश्चादेतैर्यथा श्रुतमेव स्वशिष्येभ्योऽध्यापितम् । अतश्शाखाभेदश्शिष्यभेदेन जातः । नचैतावता सर्वत्रैवानवस्था युक्ता । शुद्धान्तःकरणेन दैवभक्त्या श्रद्धयाऽसंस्कृतमन्त्रैरपि क्रियमाणस्य सफलत्वेन भगवत्प्रीत्यर्थमनुष्ठेयत्वात् । अनेनैवाभिप्रायेणापभ्रंशभाषाग्रन्था अपि तुलसीरामायणादयः पुण्यबुद्ध्या पठ्यन्ते । ऋषिपुत्रमुखनिर्गतमन्त्र - पाठादिना ततोऽप्यधिकं फलं भगवद्गीतादिपाठादिनेव भवत्येव । "स्वयम्भुवा मर्यादाः स्थापयामासेत्यत्र स्वयंभुवेति विश्वासार्थमुक्तम् किन्त्वन्यैरेव सा व्यवस्था कृता । स्वयंभूकर्तृकव्यवस्थाया बाह्यभेदपूर्वकत्वनियमेन पुरुषेच्छया परिवर्तयितुमशक्यत्वात् । सैव कर्मव्यवस्था पश्चादुच्चनीचजातिरूपेणापि व्यवस्थापिता, तत्रैव च विश्वासार्थं मनुयाज्ञवल्क्यादिमहर्षिनाम्ना तत्तन्महर्षिनामकैर्वा जन्मसिद्धवर्णजातिसमर्थकाः स्मृत्यादयो लिखिताः । अतएव स्मृतिकर्तृषु मनुवृद्धमनु याज्ञवल्क्यबृहद्योगियाज्ञवल्क्यगौतमवृद्धगौतमहारीतवृद्धहारीत पराशरवृद्धपराशरव्यासलघुव्यासादिनामभेदा दृश्यन्ते । तत्र प्रामाणिकस्मृतिप्रणेता मनुर्वृद्ध एव । एवं सति केवलमनुर्नवीनः कुतस्समागतः ? एवं याज्ञवल्क्यबृहद्योगियाज्ञवल्क्यादि नामभेदेष्वप्यसङ्गतिर्ज्ञातव्या । कुलार्णवतन्त्र वाक्येन तु श्रुतिस्मृतिपुराणादीनामपि परस्परं भिन्नविषयकत्वमेव प्रतीयते । उक्तं च तत्र "कृते श्रुत्युक्त आचारस्त्रेतायां स्मृतिसम्भवः । द्वापरे तु पुराणोक्तः कलावागमसंभवः" इति । तत्र यदि स्मृत्यादयोऽपि श्रुतिमूलकाश्चेत्स्मार्ताचारादीनामपि, श्रौतत्वमेवेति युगभेदेन श्रौताद्याचार-भेदप्रदर्शनमयुक्तम् । एवं "अन्ये कृतयुगे धर्मास्त्रेतायां द्वापरे परे ! अन्ये कलियुगे नृणां युगह्रासानुरूपतः" कृते तु मानवा धर्मास्त्रेतायां गौतमस्य च । द्वापरे शङ्खलिखिताः कलौ पाराशराः स्मृताः ॥ (पराः १।२१) इत्यत्रापि युगभेदेन धर्मभेदोऽश्रौतोऽपि प्राणिसामर्थ्यानुसारेण कल्पित इति ज्ञातव्यम् । वेदेषु क्वापि युगभेद एव न श्रूयते । ननु कल्पितस्मृत्यादिष्वपि



यथार्थविषया बहवस्सन्तीति कथमप्रामाणिकास्तास्स्युरिति चेदुच्यते । चोरस्यापि वाक्यानि न सर्वाण्यप्रमाणानि किन्तु चोरितवस्तुविषय-काण्येव । चोरोऽपि स्वकीयचौर्यप्रच्छादनार्थं तदतिरिक्तं सर्वं तदीयपितृ-ग्रामनामादिकं सत्यमेव ब्रवीति । न चैतावता चोरितवस्तुविषयेऽपि स सत्यं ब्रूयात्, एवं नवीनस्मृतिकारा ह्यपि स्वाभीष्टजन्मजाति-व्यवस्था तत्सम्बद्धकथास्वेव मृषावादिनो न तु तदतिरिक्तधर्माधर्मादिषु । अर्धजरतीन्यायापत्तिस्तु प्रमेये एव न तु प्रमाणेष्विति प्रागे ( १२ ) वोक्तम् । अतएव रामायणोक्ततापसशम्बूकवधादेरप्रामाण्येऽपि न तदतिरिक्तकथा-भागस्याप्रामाण्यम् । तत्र कारणमिदं यदि शूद्रस्य तपोऽनुष्ठानं दोषहेतुस्तदा तेन तत्कर्तुः तत्पालकस्य वा राज्ञोऽनिष्टं स्यान्न तु तटस्थस्य । रामायणादौ च तटस्थस्यैवानिष्टं तेन शम्बूकवधश्च दर्शितः । एवं प्रदर्शिते सत्यग्रे न कोऽपि शूद्रस्तपसि प्रवर्तेत किन्तु द्विजसेवामेव कुर्यादित्यभिप्रायेण तत्प्रदर्शितम् । एतच्च रागमूलकत्वादप्रमाणम् ( ११४ द्र० ) पाद्मे चोत्तरखण्डे कस्यचिद्ब्राह्मणस्य मृतं पञ्चवर्षबालकं श्रीकृष्णो वैकुण्ठादानीय रुदते पित्रे दत्तवानिति श्रूयते । स च वृत्तान्तः सत्य एव स्यात् ! उभयत्रापि ब्राह्मणबालकमरणे कारणं तत्पितृप्रतिग्रह एव । गृहस्थो दानकर्तैव न तु प्रतिग्रहकर्तेति भृगुस्मृत्यादौ प्रतिपादितम् । प्रतिग्रहे कृते युवानः पुत्रपौत्रादयो मरिष्यन्तीति अरुणस्मृति प्रथमाध्याये लिखितम् ।

## अथ प्रयोजनप्रकरणं नामाष्टमोध्यायः

एतावता मनुष्येषु जातिभेदं निरस्य च । जात्युपाधिविवेकीयकृते ब्रूमः प्रयोजनम् !॥१
जातिभेदभ्रमेणास्य देशस्यात्रस्थसंस्कृतेः । श्रुतिस्मृतिपुराणादिसकलसंस्कृतसद्गिराम् ॥२
यावती हानिरार्येषु मध्यकाले समागता । सा सर्वा चादिमेऽध्याये सङ्ग्रहेण प्रदर्शिता३
तन्निरोधः पुनर्देशपुरोवृद्धिश्च भूयसी । श्रुत्यादिवाङ्मयस्यापि व्याप्तिरेव प्रयोजनम् ४
यत्किञ्चित्कुलसञ्जात - पुरग्रामनिवासिषु । पारमार्थिकजिज्ञासुभुक्तिमुक्त्यर्थिजन्तुषु ५
राष्ट्रस्योत्तमसर्वाधिकारिष्वप्यधमेषु च । प्रविश्य वर्धतामेतद्वाङ्मयं निर्विरोधतः ॥६॥
नन्वत्र भवतो ह्येष किमर्थश्च दुराग्रहः । पूर्वाचार्यमतं त्यक्त्वा मतान्तरप्रकल्पने ॥७
शङ्करादिभिराचार्यैरीश्वरांशसमुद्भवैः । भाष्यादौ जन्मनैवेष्टा नृषु जातिभिदेति चेत् ॥८
शृणु ! वैदिकवर्णानां लौकिकत्वप्रकल्पने । वेदोक्तगुणसंसिद्धमुपाधित्वं विहाय च ॥९
प्रत्यक्षसिद्धजातित्वं सन्दिग्धानामपीच्छतः । व्यङ्ग्यव्यञ्जक भावं चाप्येकजातेर्विवक्षतः ।
दुर्ज्ञेयत्वमिहैकत्र ब्रुवतोऽप्यपरत्र च । गोत्वादिवत्सुविज्ञेयजातित्वं च प्रजल्पतः ॥११
लोकवेदविरुद्धार्थमपि दुर्व्यग्रचित्ततः । स्वीकुर्वतस्तवैवात्र दृष्टो महादुराग्रहः ॥१२
पूर्वाचार्यमता चेत्ते वर्णानां जन्मजातिता । प्रपूर्वाचार्यनिर्णीता गुणैस्तेषामुपाधिता ॥१३
कुमारिलादिमीमांसा पूर्वाचार्यैरियं प्रथा । सम्मता चेत्ततः पूर्वतनाचार्यैरुपेक्षिता ॥१४
जैमिन्यादिभिराचार्यैर्नेयमुल्लिखिता क्वचित् । गुणतः श्रुतिसिद्धत्वात्सम्मतेत्यनुमीयते ॥१५

श्रीशङ्करादिवेदान्तपूर्वाचार्यैरियं यदि । सम्मता चेत्ततः पूर्वतनाचार्यैः प्रदूषिता ॥१६
भृगुव्यासादिभिः पूर्वतनाचार्यैरियं प्रथा । बहुधा दूषिता चेष्टा गुणतः श्रुतिसम्मता ॥१७
भृगुस्मृतौ तु साऽत्यन्तं जन्मसिद्धा निराकृता। गुणकर्म प्रयुक्ता च सोदाहरणमीरिता ॥१८
श्रीभविष्यपुराणे हि प्रथमे ब्रह्मपर्वणि । चत्वारिंशत्समारभ्य सा त्वध्यायचतुष्टये ॥१९
जाति प्रथा जन्मसिद्धा दूषिता बहुयुक्तिभिः । तेष्वेव केचनश्लोका व्याख्यायांसम्प्रदर्शिताः
लोभमूलकता पूर्वं जन्मजातिमते बहु । प्रदर्शिता ततो ज्ञेया जातिप्रथाचिकित्सकैः ॥२१
कतिपयस्मृत्युक्ता चे द्वर्णसिद्धिश्च जन्मना । श्रुतिस्मृतिपुराणोक्ता सा ज्ञेयगुणकर्मभिः ॥२२
लोभमूलकस्मृत्युक्ता जन्मना वर्णजातिता । श्रुतिमूलकतत्प्रोक्ता गुणैर्वर्णेष्वजातिता ॥२३
अर्वाचीन स्मृतिप्रोक्ता पृथग्जातिभिदा नृषु । प्राचीनस्मृतिभिः प्रोक्ता मनुष्येष्वेकजातिता
प्रत्यक्षबाधिता जातिभिदा तव स्मृतीरिता । मनुष्येष्वेकजातित्वं सर्वमानप्रसाधितम् ॥२५
प्रामाण्यं सर्वभाष्यादेर्नेश्वरांशकृतत्वतः । किन्तु वेदाविरोधेन रागद्वेषाद्यसंभवात् ॥२६
ऋषभः कपिलोबुद्धश्चावतारा हरे र्मताः । तथापि नेष्टं प्रामाण्यं तत्वज्ञैस्तत्कृतिष्विह ॥२७
बृहस्पतिर्महानेव देवानामुत्तमो गुरुः । तथापि नैव चार्वाके प्रामाण्यं तत्प्रचारिते ॥२८
यावन्तो विश्वविख्याता मतकारा प्रजज्ञिरे । ते सर्वेऽपि महाविष्णोः प्रेरणालब्धशक्तयः ।
तत्सूतसंहितायां हि तदन्यत्रापि कीर्तितम् । तथापि तेषां सिद्धान्ता नेष्यन्ते पण्डितोत्तमैः
तत्र सर्वत्र प्रामाण्य शून्यत्वे कारणं त्विदम् । यद्वेदनैरपेक्ष्येण रचितत्वं निजेच्छया ॥३१
कुमारिलाद्यसर्वज्ञकृतिषु श्रुतिमूलकम् । यावद्भवेत्तावदेव प्रमाणत्वेन गृह्यते ॥३२
सर्वज्ञत्वं जगत्येव नासीदस्ति भविष्यति । इत्युक्तं तेन चान्यैश्च मण्डनादिमनीषिभिः ।
तेषां चेत्कार्तिकेयादेरवतारत्वमिष्यते । असर्वज्ञा भवेयुस्ते तस्मात्तन्नेष्यतेऽपरम् ॥३४
श्रीविष्णोरवतारेषु व्यासोऽप्येको महानृषिः । तदीयग्रन्थजाते च सर्वैः प्रामाण्यमिष्यते ।
अत्रापि हेतुरेतावानेव यद्वेदमूलता । अतश्च वेदमूलत्वमेव प्रामाण्यकारणम् ॥३६
मर्त्येषु जन्मना जातिभेदो यः कैश्चिदिष्यते । न तत्र वेदमूलत्वाभावमात्रं तु केवलम् ।
किन्तु वेदविरोधोऽपि स्मृत्याद्यन्यविरोधिता । लोभमूलकताऽप्यस्तीत्यप्रामाण्यत्रयं त्विह ।
वर्णेषु जातिताऽभावे चोपाधित्वनिरूपणे । गुणक्रियादिसिद्धत्वे तत्त्रयं नात्र विद्यते ॥३९
नन्वेवं गुणतो वर्णवादेऽपि लोभमूलता । निरूपयितुमस्माभिः शक्यते जातिवादिभिः ॥४०
जन्मना ब्राह्मणत्वं हि येषामासीत्सुदुर्लभम् । स्वेषु साधयितुं तच्च यतन्ते ते मनीषिणः ४१
साधिते ब्राह्मणत्वे हि पूजासन्मानयोग्यता । भवेदस्माकमि त्येतल्लोभेनोक्तं गुणैरिति ॥४२
तैरेव गुणतो वर्णसाधिका कल्पिता स्मृतिः । नातश्चैषा स्मृतिर्लोभमूला नः सम्मतेति चेत्
तन्न युक्तं यतः सत्यं लोकस्थितिकरंह्यपि । समस्तैरप्यनिच्छद्भिरङ्गीकर्तव्यमेव हि ॥४४
सत्यवादी मृषावाक्च सत्यमेव वदेदिति । अङ्गीकुर्यान्न तत्र स्याल्लोभमूलकताऽपिच ।
शमाद्युत्तमगुणो मर्त्यस्तदन्यो वाऽपि मानवः । पूजार्हतां शमादीनां वदेन्नात्रापि लोभिता
यतो गुणत्रये सत्वं प्रशस्तं स्तुत्यमुच्यते । शमादयोऽपि सत्वस्य कार्यभूता गुणा मताः४७



शमादिमान् ब्राह्मण श्चेत्प्रशस्तः पूज्य एव सः । अङ्गीकार्यं च तत्सर्वैर्न स्यात्तत्रापि लोभिता
शमादिगुणवान् स्वस्मिन् ब्राह्मण्यं गुणहेतुना । स्थापयेद्यदि तत्तादृक् शमादिमत्सु सिध्यति
न तु तत्पुत्रपौत्रादौ यत्र रागः स्वतो जने । पश्वादिवत्प्रवर्तेत ब्राह्मण्यं स्थापितं भवेत् ।
जन्मना ब्राह्मणत्वं हि स्वस्मिन् साधयिता पुनः । स्वकीयपुत्रपौत्रादौ रागात्तत्साधितं भवेत्
अतो लोभादिमूलत्वं जन्मजातिमते भवेत् । गुणतो वर्णवादे च नैव तत्संभविष्यति ॥५२
उत्पत्तिः पशुपक्ष्यादिसमा कामादि हेतुका । सा कथं चोच्चनीचादिवर्णकारणतामियात् ।
प्रत्यक्षेणैव चास्माकं जातित्वाभावनिश्चयः । नावश्यकी तदर्थं च मानान्तरगवेषणा ॥५४
भवान्स्मृतिबलेनैव जन्मना वर्णसंभवम् । यद्ब्रवीति तदस्माभिस्तत्स्मृत्यैव निराकृतम् ।
यदुक्तं दारुहस्तीव ब्राह्मणोऽप्यनधीतवान् । बिभर्ति केवलं नाम इत्येतच्चापि नात्र हि ।
दारुनिर्मितहस्त्यादौ तुण्डाद्याकृतिभेदतः । हस्तिनाम प्रयुक्तं स्याद्ब्राह्मणे तदपीह न ।
नहि तद्धस्तिनीवाङ्गभेदो वेदविवर्जिते । ब्राह्मणेऽप्यस्ति येनासौ भवेत्तच्छब्दभागिह ॥५८
हस्तित्वं दारुहस्त्यादौ नास्ति न्यायमतेऽपितु । वैयाकरणनागेशभर्तृहर्योर्मतेऽस्ति तत् ।
मतद्वयेऽपि पापं तु दारुहस्तिवधे नहि । अनधीतश्रुतेरेवं वधे ब्रह्मवधोऽपि न ॥६०
नरहत्याप्रयुक्तस्तु दोषः स्यादेव तद्वधे । नरत्वजातिसद्भावादनधीतश्रुतावपि ॥६१
एतावता किमायातमनधीतश्रुतिर्नरः । ब्राह्मणो न भवेत्किन्तु संस्थानव्यङ्ग्यनृत्ववान् ।
पूर्वसंस्कारशून्यस्य द्विजपुत्रस्य त्वन्मते । वेदविद्याधिकारः स्यान्न त्वन्यस्य सुसंस्कृतेः ॥६३
मन्मते यस्य कस्यापि प्राग्जन्मागतसंस्कृतेः । शास्त्रविद्याधिकारः स्यान्नत्वन्यादृशसन्ततेः
मूर्खोऽपि त्वन्मते राजगुरुः स्याद्गुरुपुत्रकः । मन्मते स तु वीथ्यादिसम्मार्जनकृदेव हि ॥६५
जातिमात्रोपजीवी स मूर्खः प्रकृतिरञ्जनीम् । कथं चोपदिशेन्नीतिं राजानं ब्राह्मणब्रुवः ६६
मूर्खत्वं तमसः कार्यं प्रमादो मोह एव च । स्वयमेव प्रमादी यः किं सोऽन्यानुपदेक्ष्यति ॥
मूर्खो राजगुरुः स्याच्चेत्पशुवत्स स्वदैहिकम् । स्वकीयदैहिकं चैव सुखं साधयितुं सदा ॥६८
राजानं बोधयन्नन्यान् वञ्चयेद्राष्ट्रशक्तितः । तेनान्ये विप्लवं कुर्युः राष्ट्रराजविनाशकम् ॥६९
ज्ञानी चेच्छूद्रचाण्डालपुत्रोऽपि स्यान्न तादृशः । ज्ञानं सत्वगुणाधिक्याज्जायते हि सुखप्रदम्
सर्वानात्मोपमानेन स पश्यन् रञ्जयन्नपि । राष्ट्रं समुच्छ्रितं कुर्याच्छत्रुराजभयप्रदम् ॥७१
त्वन्मते दशवर्षोऽपि विप्रपुत्रो गुरु र्भवेत् । राजन्यस्य शताब्दस्य गुरुशब्दोऽप्यपार्थकः ।
मन्मते बुद्धिमानेव शूद्रपुत्रोऽपि सद्गुरुः । न त्वन्यविप्रपुत्रोऽपि गुरुशब्दोऽत्र सार्थकः ।
पितृपुत्रादि भावो वा गुरुशिष्यादि भावना । नापूर्वार्था भवेत्किन्तु शास्यशासकतावशात्
ब्राह्मणो दशवर्षो हि किं शिष्याच्छतवत्सरम् । भूमिपं वैश्यशूद्रौ वा वद जातिसमर्थक ।

अभी तक मनुष्यों में अवान्तर जातिभेद का निराश करके अब इस ग्रन्थ का प्रयोजन बता रहे है। जाति-भेद भ्रम से जितने अनर्थ पहले अध्याय में दिखाये गये हैं उनका निवारण और आबाल गोपाल नर-नारियों में संस्कृतवाङ्मय का निर्विरोध विस्तृत प्रचार होना ही इसका प्रयोजन है। यदि जातिवादी पूछेकि

पूर्वाचार्य सब जो साक्षात शंकरादि के अवतार माने गये हैं जिसको मान लिये थे उस जन्म सिद्ध जाति-भेद का खण्डन करने में आपका क्या दुराग्रह है। उसका उत्तर है कि गुणकर्म सिद्ध वैदिक वर्णों को जन्म सिद्ध प्रत्यक्ष जाति बताने में उनका ही महादुराग्रह है। वर्ण जाति नहीं है यह बात श्रीशंकरादि पूर्वाचार्य से भी व्यासादि प्रपूर्वाचार्य बताते हैं (व्याख्या देखें) कतिपय स्मृतियों में वर्ण को जाति कहा गया है तोश्रुतिस्मृतियों में वह गुणकर्म सिद्ध बताया गया है। लोभादि मूलक स्मृतियों में वर्ण जाति बताया गया है तो भी श्रुतिमूलक स्मृतियों में वह गुणादि सिद्ध बताया गया है। अवतार पुरुष निर्मित होने से किसी भाष्यादि ग्रन्थ का प्रामाण्य नहीं है किन्तु वेदमूलक या वेदाविरोध या लोभादि मूलक न होने से। ऋषभदेव कपिल और बुद्धादि भी भगवान के अवतार माने गये हैं तो भी उनके ग्रन्थ और सिद्धान्त अप्रमाण ही सिद्ध हो गये। महाबुद्धिमान देवगुरु बृहस्पति का चार्वाक सिद्धान्त तो बिलकुल तुच्छ माना गया है। क्रीस्त इत्यादि विश्वविख्यात जितने महात्मा हुए थे वे भी ईश्वरांश ही हैं ऐसा सूतसंहिता में बताया गया है तो भी उनका सिद्धान्त मान्य नहीं रहे। उसमें कारण यही है कि वेदमूलकत्व नहीं रहना। श्रीवेदव्यास भी भगवान का अवतार ही है और उनके सिद्धान्त सब सर्व मान्य हैं। इसमें भी कारण यही है कि वेदमूलकत्व रहना। मनुष्यों में जन्मसिद्ध अवान्तर जाति भेद बताने वाले ग्रन्थों में तो न केवल वेदमूलकत्वाभाव ही नहीं किन्तु वेद विरोध और लोभादिमूलकता भी है। ये तीन भी अप्रामाण्य कारण, वर्णों को गुणादिसिद्ध बताने में नहीं है। वर्णों को जन्मसिद्ध बताने के लिये लिखित ग्रन्थों से भी उनमें गुण कर्म सिद्धता मालूम हो जाती है। स्मृतियों में लिखा है कि काष्ठनिर्मित हाथी हाथी नहीं किन्तु नाम मात्र है वैसा ही वेदशून्य ब्राह्मण भी ब्राह्मण नहीं किन्तु ऐसा नाम मात्र ही है। हम कहते हैं कि काष्ठनिर्मित हाथी में तुण्डादि आकार रहने से हाथी कहा जाता है किन्तु वेदशून्य को ब्राह्मण कहने में ऐसा कोई आकार नहीं है। अतः वह भी नहीं। जैसे काष्ठ-निर्मित हाथी को मारने पर पाप नही है वैसा वेदशून्य को मारने पर मनुष्य हत्या पाप ही लगेगा न कि ब्रह्महत्या। इससे उसमें ब्राह्मणत्वाभाव भी सिद्ध हो जाता है। जातिवादी के मत में विद्यासंस्कार न होने पर भी ब्राह्मण पुत्र का ही वेदाधिकार है और हमारे मत में किसी का भी पुत्र हो विद्यासंस्कारी हो तो अधिकारी है। उनके मत में मूर्ख या दस वर्ष बालक भी ब्राह्मण पुत्र हो तो वह राजगुरु हो सकता है और हमारे मत में किसी का भी पुत्र हो बुद्धिमान ही राजगुरु है।



जातिमात्रोपजीवी ब्राह्मण मूर्ख ही होता है। वह कैसे राजा को प्रकृति-रञ्जक नीति उपदेश करेगा ?। मूर्खत्व प्रमाद और मोह ये तीन तमोगुणों के कार्य बताये गये हैं (गीता में) जो स्वयं ही प्रमादी रहेगा वह दूसरों को क्या उपदेश देगा। मूर्ख, राजगुरु होगा तो वह पशु की तरह अपने और अपने परिवार के सुख के लिये ही सोचता रहेगा और उसके अनुसार राजा को बता कर राजसत्ता के द्वारा वह दूसरों को कष्ट देता रहेगा। इससे लोग बिगड़ जायंगे और देश का नाशकारक क्रान्ति भी कर देंगे। ज्ञानी, शूद्र का पुत्र होने पर भी यदि वह राजपुरोहित होगा तो ऐसी क्रान्ति होने न ही देगा। ज्ञान सात्विक गुण से पैदा होता है। सत्वगुणी सब को समान देखते हुए राष्ट्र की उन्नति ही करेगा। पिता पुत्र भाव या गुरुशिष्य भाव शास्यशासकता के लिये होते हैं न कि अपूर्व प्रयोजन के लिए। दशवर्ष ब्राह्मण बालक सौ वर्ष वाले क्षत्रिय या वैश्यादि के लिए क्या उपदेश दे सकेगा।

यदुक्तं दारुहस्तीति, तदुक्तम् "यथा काष्ठमयो हस्ती यथा चर्ममयो मृगः। ब्राह्मणस्त्वनधीयानस्त्रयस्ते नाम बिभ्रति" (परा० स्मृ० ८।२३) एवमेव मन्वादि-स्मृतिष्वप्युक्तम्। न्याय (२।२।६३) सूत्रानुसारेण दारुहस्त्यादौ हस्तित्वजातिर्नास्तीति ज्ञायते। नागेशमते च तदस्ति। अतएव लघुमञ्जूषायामुक्तम् "वस्तुतस्तु तत्रापि (पिष्टकमय्यां गवि) जातिः। प्राण्याश्रितत्वेनाभिव्यक्ता तु पुण्यपापसाधनम्। तदुक्तं हरिणा चित्रादिष्वभिव्यक्तिर्जातीनां कैश्चिदिष्यते। प्राण्याश्रितास्तु ताः प्राप्तौ निमित्तं पुण्यपापयोरिति स्फोटभेदनिरूपणप्रसङ्गे। कैश्चिदित्यत्रास्वरसबीजं तदीयकुञ्जिकाया मित्थमुक्तम्। मुख्यसादृश्यात्तत्प्रतिकृतिषु तत्प्रत्ययो भवति न तु तद्वशात्तत्र जातिसमवाय' इति। यावन्तो विश्वेति, तदुक्तं सूतसंहितायाम् "वेदांश्च धर्मशास्त्राणि पुराणं भारतं तथा। वेदाङ्गान्युपवेदांश्च भैरवप्रमुखागमान्" विष्ण्वागमाँस्तथा ब्राह्मान्बुद्धार्हाद्यागमानपि। लोकायततर्कशास्त्रं सांख्ययोगौ तथैव च। निर्ममे शङ्करः साक्षात्सर्वज्ञः सङ्ग्रहेण तु "मुनयश्च मनुष्याश्च यथा भागं द्विजोत्तमाः। तान्येव विस्तरेणैव सङ्ग्रहेणैव चक्रिरे" यथा तोयप्रवाहाणां समुद्रः परमावधिः। तथैवसर्वमार्गाणां साक्षान्निष्ठा महेश्वरः (२२।२-५) इति। तत्रैवेदमप्युक्तम् "स्वमनीषिकयोत्पन्नो निर्मूलो धर्मसंज्ञितः। श्रद्धया सहितो यस्तु सोऽपि धर्म उदाहृत इत्युक्त्वाऽग्रे "यथा वाराणसीतुल्या पुरी लोके न विद्यते। तथा वेदसमं मानं नास्ति तत्र नसंशयः" इत्युक्तम्। मूर्खोऽपीति, तदुक्तं मनुस्मृतौ "जातिमात्रोपजीवी वा कामं स्याद्ब्राह्मणब्रुवः। धर्मप्रवक्ता नृपतेर्नतु शूद्रःकथंचन। (८।२०) इति, एवं तत्रैवोक्तम्" ब्राह्मणं दशवर्षंतु शतवर्षं तु भूमिपम्। पितापुत्रौ विजानीयाद्ब्राह्मणस्तु तयोः पिता (२।१३५) इति च। अत्र पितृशब्दो गुर्वर्थे प्रयुक्त इति मूले गुरुशब्दः प्रयुक्तः। एतदुपरि दोषोमूले स्पष्टः। अन्यत्रतु

मूर्खस्योपदेशकत्वे नरकप्राप्तिरप्युक्ता "यो विद्यासन्ततिज्ञान-विहीनो देशिको भवेत्। स घोरं नरकंयाति नास्ति सन्देहकारणम् ( सूत सं० ३८।८ ) इति। विद्योत्कर्षाद्वैश्यः क्षत्रियो वा ब्राह्मणस्य गुरुः स्यादिति तत्रैव पंचमाध्याये "वैश्यस्यापि तथा राज्ञो विद्योत्कर्षाबलेन च। गुरुत्वं केचिदिच्छन्ति स्वोत्तमंप्रति केशव ( ८ ) इत्युक्तम्। श्रीभविष्ये इति। योगेश्वर उवाच। गोवर्गमध्यं च गतो यथाऽश्वो निर्धार्यते ज्ञैःसुविचक्षणत्वात्। मनुष्यभावादविशिष्यमाणस्तद्वद्द्विजः शूद्रगणान्न भिन्नः॥ मनुष्यजातेर्न परो विशेषो यः कल्प्यते सर्वनरानुयायी। संस्कारयुक्ता हि क्रिया विशिष्टा द्विजन्मनां शूद्रविवेक हेतुः॥ जीवोऽपि ब्राह्मणः प्रोक्तो यैरतत्वज्ञमानवैः। प्रभ्रष्टब्राह्मणत्वास्ते जायन्ते विप्रसङ्गतः॥ श्वानशूकरचाण्डाल कृमिकूर्मादिकायकम्। संसारसागरं घोरं मग्नः खलु परिप्लवन्। भूरिपापभराक्रान्तः स जीवो ब्राह्मणःकथम्। तस्मान्न जीवे ब्राह्मण्यं पश्यामो हि कथंचन॥ तदुत्तराण्येव वितर्कनीया ब्राह्मण्य-जातिर्नृषु नास्ति काचित्॥ सिताद्यसाधारणतुल्यरूपाः सनातनोऽङ्गेषु न वर्णभेदः। किं ब्राह्मणा ये सुकृतं त्यजन्ति किं क्षत्रिया लोकमपालयन्तः। स्वधर्महीना हि तथैव वैश्याः शूद्राः स्वमुख्यक्रियया विहीनाः। तस्मान्न गोश्ववत्कश्चिज्जातिभेदोऽस्ति देहिनाम् क्रियाशक्तिनिमित्तस्तु सङ्केतः कृत्रिमो भवेत्॥ एवं प्रमाणैः प्रतिषिध्यमानां साङ्केतिकीं याति नरो व्यवस्थाम्। स्वकीयसिद्धां स्वमतैर्निषिद्धां न बुध्यते मूढमना वराकः॥ पलाण्डुलशुनादाश्च मृग्युष्ट्रीक्षीरपायिनः। मांससर्वरसक्षीरक्रयविक्रयकारिणः॥ एवं शास्त्रोदितन्याय-मार्गभ्रष्टास्तु ये नराः। विशिष्टगोत्रसंस्कारकलापसकलात्मकाः॥ वेदानध्यापयन्तोऽपि तेऽधीयानाः श्रुतिक्रमात्। ब्राह्मणत्वाद्विहीयन्ते दुराचारविधायिनः तस्मान्न जातिरेकत्र भूतात्माऽस्त्यनपायिनी। नाशित्वादत्र च श्लोकान्मानवाः समधीयते॥ सद्यःपतति मांसेन लाक्षया लवणेन च। त्र्यहेणशूद्रोभवति ब्राह्मणः क्षीर-विक्रयी॥ गोरक्षकान्वाणिजिकांस्तथा कारुकुशीवलान्। प्रेष्यान् वाधुषिकांश्चैव शूद्रांस्तान्मनुरब्रवीत्॥ शूद्रो ब्राह्मणतामेति ब्राह्मणश्चैति शूद्रताम्। क्षत्रियो याति विप्रत्वं विद्याद्वैश्यं तथैव च। ब्रह्मोवाच। "वेदाध्ययनमप्येतद्ब्राह्मण्यं प्रतिपद्यते। विप्रवद्वैश्यराजन्यौ राक्षसा रावणादयः॥ श्वादचाण्डालदासाश्च लुब्धकाभीरधी-वराः। येचापि वृषलाः केचित्तेऽपि वेदानधीयते। शूद्रा देशान्तरं गत्वा ब्राह्मणंक्षत्रियं-श्रिताः। व्यापाराकारभाषाद्यैर्विप्रतुल्यैः प्रकल्पितैः॥ वेदानधीत्य वेदौ वा वेदं वापि यथाक्रमम्। प्रोद्वहन्ति शुभां कन्यां शुद्धब्राह्मणजां नराः। अथवाऽधीत्य वेदांस्तु क्षत्रवैश्यैस्तु वा नराः। गौडपूर्वां कृतामेयुर्जातिं वा दाक्षिणात्यताम्। अपरिज्ञातशूद्रत्वा-द्ब्राह्मण्यं यान्ति कामतः। तस्मान्न ज्ञायते भेदो वेदाध्यायक्रियाकृतः। शास्त्रका-रैस्तथाचोक्तं न्यायमार्गानुसारिभिः। ते साधु मतमाकर्ण्य सन्तः सन्ति विमत्सराः। आचारहीनान्न पुनन्ति वेदा यद्यप्यधीताः सह षड्भिरङ्गैः। शिल्पं हि वेदाध्ययनं द्विजानां वृत्तं स्मृतं ब्राह्मणलक्षणं तु। अधीत्य चतुरो वेदान् यदि वृत्ते न तिष्ठति। न



तेन क्रियते कार्यं स्त्रीरत्नेनेव षण्ढकः॥ शिखाप्रणवसंस्कारसन्ध्योपासनमेखलाः। दण्डा-जिनपवित्राद्याः शूद्रेष्वपि निरङ्कुशाः। ब्राह्मणस्यैव शक्तिश्चेत्केनास्य विनिहन्यते। तपः स्वाध्यायमाहात्म्याद्देवतासमयस्मृतिः। मन्त्रशक्तिर्नृणामेषां सर्वेषामपि विद्यते। शूद्रब्राह्मणयोस्तावन्नास्ति भेदः कथंचन॥ सामग्र्यनुष्ठानगुणैः समग्राः शूद्रा यतः सन्ति समा द्विजानाम्॥ तस्माद्विशेषो द्विजशूद्रनाम्नोनध्यात्मिको बाह्यनिमित्तको वा। न सुखादौ न चैश्वर्ये नाज्ञायां नामयेष्वपि। न वीर्ये नाकृतौ नाक्षे न व्यापारे न चायुषि॥ नाङ्गे पुष्टे न दौर्बल्ये न स्थैर्ये नापि चापले। न प्रज्ञायां न वैराग्ये न धर्मे न पराक्रमे। न स्त्रीगर्भे न गमने न देहमलसम्प्लवे। नास्थिरन्ध्रे नच प्रेम्णि न प्रमाणे न लोमसु॥ शूद्रब्राह्मणयोर्भेदो मृग्यमाणोऽपि यत्नतः। नेक्ष्यते सर्वधर्मेषु संहतैस्त्रि-दशैरपि॥ न ब्राह्मणाश्चन्द्रमरीचिशुभ्रा न क्षत्रियाः किंशुकपुष्पवर्णाः। न चेह वैश्या हरितालतुल्याः शूद्रा न चाङ्गारसमानवर्णाः॥ पादप्रचारैस्तनुवर्णकेशैः सुखेन दुःखेन च शोणितेन। त्वङ्मांसमेदोऽस्थिरसैः समानाश्चतुष्प्रभेदा हि कथं भवन्ति॥ स एक एवात्र पतिः प्रजानां कथं पुनर्जातिकृतः प्रभेदः। प्रमाणदृष्टान्तनयप्रवादैः परीक्ष्यमाणे विघटत्वमेति॥ चत्वार एकस्य पितुः सुताश्च तेषां सुतानां खलु जातिरेका। एवं प्रजानां हि पितैक एव पित्रैकभावान्न च जातिभेदः॥ शूद्रां प्ररोचते विप्रो रागिणीं मैथुनं प्रति। सा कामदुःखविगमे गर्भं धत्ते समागमे॥ कामं कामातुराभ्यस्तु रोचन्ते शूद्रमामवाः। मैथुनं प्रति ब्राह्मण्ये तेऽपि तासांसुखावहाः॥ ये तु जात्यादिभिर्भिन्ना गवाश्वोष्ट्रमतङ्गजाः। ते विजातिषु नोगर्भं कुर्वतेऽपि सुखार्थिनः। तिर्यग्जातिस्त्रिया साकं कुर्वाणोऽपि च मैथुनम्। न तस्याः कुरुते गर्भं नरो नापि सुखासिकाम्। तिरश्चा सह कुर्वाणा मैथुनं मनुजाङ्गना। नाधत्ते तत्कृतं गर्भं न युक्तं मैथुनं तयोः। नैवं कश्चिद्विभागोऽस्ति मैथुने स्त्रीमनुष्ययोः। तस्मान्मनुष्यभेदोऽयं सङ्केतबलनिर्मितः॥ (एतावत्पर्यन्तं जन्मसिद्धब्राह्मणत्वादिप्रथां दूषयित्वाऽग्रे वर्णे स्वसिद्धान्तं प्रतिपादयति) जितेन्द्रियमनोवाचः सदाचारपरायणाः। नियमाचारवृत्तस्था हितान्वेषणतत्पराः॥ सम्यग्दर्शनसम्पन्नाः समाधिस्था हतक्रुधः॥ विशोका विमदाःशान्ताः सर्वप्राणिहि-तैषिणः॥ सत्यब्रह्मविदः शान्ताः सर्वशास्त्रेषु निष्ठिताः। वागीश्वरेण देवेन नाभेयेन भवच्छिदा। ब्रह्मणा कृतमर्यादास्त एव ब्राह्मणाः स्मृताः॥ क्षत्रियास्तु क्षतत्राणा द्वैश्या वार्ताप्रवेशनात्। ये तु श्रुतेद्रुतिं प्राप्ताः शूद्रास्तेनेह कीर्तिताः॥ योगस्तपो दयादानं सत्यं धर्मश्रुतिघृणाः। ज्ञानं विज्ञानमास्तिक्यमेतद्ब्रह्मणलक्षणम्॥ शूद्रोऽपि शीलसम्पन्नो ब्राह्मणादधिको भवेत्। ब्राह्मणो विगताचारः शूद्राद्धीनतरो भवेत्॥ ( ब्र०प० ४०-४४, ) अत्रस्थाःकेचनश्लोकाः १६९ पृष्ठेऽप्युदाहृताः। तेच तत्रैव द्रष्टव्याः। इमेऽध्यायचतुष्टयगतमुख्यश्लोकाः। अग्रे ४५ अध्याये षट्श्लोकात्मके वर्णप्रयोजकत्वेन जातिकर्मणोः समुच्चयो विधीयते तद्यथा "सिद्धिं गच्छेद्यथाकार्यं दैवकर्मसमुच्चयात्। एवं संसिद्धिमायाति पुरुषो जातिकर्मणोरिति। दुर्ज्ञेयजन्मजात्या.

सह कर्मणः समुच्चयो नोपपद्यते । अनुमेयदैवस्य साधारणकारणत्वात्तत्समुच्चयो
भवितुमर्हतीति वैषम्यम् । अयं च समुच्चायाध्यायो हेतुदर्शनाधिकरणन्यायेना
प्रमाणम् । पूर्वत्राध्यायचतुष्टये वर्णजातित्वे यानि दूषणान्युक्तानि तदुद्धारं विनैवात्र
तया जात्या सह समुच्चयाभिधाने का जातिरत्र गृह्येत ?। एतेन तदध्यायचतुष्टयं
पूर्वपक्षस्तदनन्तर समुच्चयाध्यायश्च सिद्धान्त इति सनातनधर्मालोक षष्ठपुष्पोक्तमपि
निरस्तम् । पूर्वपक्षोक्त-दूषणोद्धारं विना सिद्धान्त स्यानुपपत्तेः । ईशावास्ये च
विद्याकर्मणोः समुच्चयविधानार्थमन्यतरानुष्ठानं निन्दितं न तु तदन्यतरमेव नास्ती-
त्युक्तम् । अत्र च वर्णानां जातित्वमेव नास्तीति स्पष्टमुक्त मिति ततोऽत्र वैषम्यम् ।
अज्ञस्तु बालो भवति पिता भवति मन्त्रदः । एतन्न्यायोऽपि विप्रेषु न त्वन्येषु भवन्मते॥
वित्तबन्धुवयःकर्मविद्यास्वप्युत्तरोत्तरम् । यन्मान्य स्थानमित्युक्तं तदपि ब्राह्मणे मतम् ॥
तस्मान्मनुस्मृतावुक्तं ज्ञानतो ब्राह्मणस्य हि । वीर्यादितः क्षत्रियादेः श्रेष्ठत्वं च भवेदिति
गीतायां भगवान् प्राह नहि ज्ञानेन सदृशम् । पवित्र मिति तच्चापि विप्रस्यैवेति मन्यसे
अज्ञाननाशकं ज्ञानं येषां तेषां तु सूर्यवत् । तत्प्रकाशयति ब्रह्मेत्युक्तिस्स्याद्विप्रगोचरा ॥
ज्ञानान्मोक्षोऽपि शास्त्रोक्तो विप्रस्यैवेति कत्थसे। उक्तं च तत्स्मृतौ क्वापि मोक्षो ब्राह्मणमात्रगः
एतेनापि किमायातं माभूदन्यस्तु तत्कृतिः । जातिब्राह्मणसेवायांमश्वादिवच्चरेदिति ॥
ज्ञानोडुपेन मुक्तिः स्याच्छूद्रस्याप्यन्त्यजस्य वा । ज्ञानं शमादि युक्तस्य भवेदित्य परत्र च
महादेव प्रसादेन ब्राह्मणोऽप्यन्त्यजश्च वा । भवबन्धाद्विमुच्येत इति श्रीसूतसंहिता ॥
महादेवप्रसादश्च महादेवैकभक्तितः । न तूच्चजातिविप्रत्वगर्वमात्रेण सिध्यति ॥
उच्चजातित्वगर्वो हि भगवद्भक्तिनाशकः । सर्वत्र दासभावश्च देवदेव प्रसादकृत् ॥ ८६
निकृष्टजन्मभावेन दासभावः प्रसिध्यति । तेनापेक्षित सिद्धिस्तु विनाऽऽयासेन लभ्यते ॥
अहङ्कारपरित्यागसाधनत्वेन चात्मनि । कालि दासादिविद्वांसोऽप्यज्ञत्वमनुमन्वते ॥८८
तदुक्तं क्व रघोर्वंशः क्वचाल्पविषया मतिः । तनुवाग्विभवश्चापि वक्ष्ये: तदन्वयन्त्विति
अहमाऽपरविद्यापि भ्रश्यते किं पुनः परा । तदर्थमुच्चवर्णत्वमतिस्त्याज्यैव सर्वदा ॥९०
एवमुत्कृष्टवंशोऽपि कैवल्यसिद्धिहेतवे । चिन्तयेदपकृष्टत्वमात्मन्यहर्निशं बुधः ॥ ९१ ॥
अतश्च ब्रह्मविज्ञाने सति पुंसः स्त्रियाह्यपि । वर्णाश्रमसमाचारो नास्तीति सूतसंहिता ।
ज्ञानं प्रदीपवद्वस्तुप्रकाशकमिहेष्यते । विप्रस्थमेव तच्चापि न त्वन्यस्थमितीरयेः ॥९३
चक्षुरादीन्द्रियैर्यंद्यद्वस्तु सन्दृश्यते नरैः । तदपि ब्राह्मणेनैव न त्वन्येनेत्यपह्नुषे ॥९४॥
स्वार्थलोभपिशाचेन ग्रस्तो यद्यदपावदीः । तत्सर्वं वेदशास्त्रज्ञसर्वानुभवबाधितम् ॥९५
यस्य कस्यापि वा दीपवतो वस्तु प्रदृश्यते । यः कोऽपि दीपावनेव तदन्येभ्यः प्रदर्शयेत्
तत्र दीपादिमद्वंशवैशिष्ट्यं तु यथा वृथा । तथा ज्ञानवतो वंशवैशिष्ट्यं सर्वथा वृथा
अतस्तव मते शूद्रा धर्मव्याधादितापसाः । धर्मानुपादिशन् जात्या ब्राह्मणत्वाभिमानिने
अन्धस्य मार्गदर्शित्वमिव जातिमतं तव । चक्षुष्मतस्तदस्तित्वमिव वर्णा गुणैर्यदि ॥९९
ज्ञानस्य तारतम्येन श्रैष्ठ्यस्याप्युत्तरोत्तरम् । मानमेयविशेषज्ञास्तारतम्यं प्रचक्षते ॥१००



अचरेभ्यश्चराः श्रेष्ठा ज्ञानतो हि चरेष्वपि । पिपीलिकादि सर्वेशपर्यन्तं ज्ञानतोऽधिकाः
श्रीसूतसंहितायां तत्प्रत्यपादि स्मृतिष्वपि । त्वया मर्त्येषु विप्रस्य जन्मना श्रेष्ठतोच्यते
कामादि निग्रहे ज्ञानं यस्य कस्यापि जायते । सर्वतत्वार्थधीहेतुरिति पाद्मे प्रकीर्तितम्
भवन्ति सुगुणाः पूजास्थानं न तु वयोऽपि च । नापि लिङ्गमिति प्राज्ञवचः स्याद्विप्रगोचरम्
अतोऽनार्यासुतश्चार्या दार्यो गुणैरितीरितम् । अनार्यात्तु समुत्पन्ने गुणा व्यर्था भवन्मते
आर्याज्जातेऽपि चार्यायामार्यत्वं तु गुणैर्विना । जन्मसिद्धमिति व्यर्था गुणाः स्युर्भवतो मते
अतस्सर्वेजनाश्चार्या ह्यनार्याश्चापि;साम्प्रतम् । गुणहीना दुर्गुणाश्चजाता जातिप्रभावशात्
यस्य कस्य कुले जातो गुणवानेव पूज्यते । ब्राह्मणोऽपि स एवेति पाद्मे स्पष्टमुदीरितम्
यद्यार्यत्वं गुणैरेव साधनीयमितीष्यते । गुणवन्तो भवेयुस्ते ये चार्यत्वमिहेच्छवः १०९
अविद्योऽपि प्रियो विष्णोर्ब्राह्मण स्तत्तनुर्यथा । शूद्रे विद्या श्वभस्त्रस्थगोक्षीरसदृशीरिता
त्वदीयैतद्वचोभङ्ग्या किमपूर्वं प्रकाश्यते । मूर्खोऽपि ब्राह्मणः सेव्यस्तदन्यो न पठेदिति
अतो विद्याद्वयं त्यक्त्वा सर्वेऽविद्यां समाश्रिताः । भारतीय संस्कृतिश्च परविद्यावशाद्धता
विद्याद्वयपरित्यागे शूद्रत्वं सान्वयस्य हि । तया स्मृत्यैव सम्प्रोक्तं तत्र नेत्रे निमीलयेः
विद्वानेव प्रियो विष्णो र्भवेद्यः कोऽपि वा नरः । इत्युक्तौ स्युस्समे विद्यासम्पादनपरा ह्यपि
तदा विद्वान्विजानाति विद्वज्जनश्रमं त्विति । न्यायेन तव कुर्वीरन्नादरं न तु धिक्कृतिम्
तव वञ्चनया सर्वे निर्विद्या ह्यभवन्निह । लोके विद्यादराभावात्तां भवान् त्यक्तवानपि
साधवो हृदयं मे स्युस्साधूनां हृदयं त्वहम् । इति भागवते प्रोक्तं श्रीकृष्णपरमात्मना
गीतायामपि तेनोक्तं समोऽहं सर्वजन्तुषु । न मे द्वेष्यः प्रियो नापि यो भजेन्मां स मे प्रियः
शत्रौ मित्रे च यस्तुल्यः समो मानापमानयोः । तुल्यनिन्दास्तुतिश्चैव स तु मे प्रिय इत्यपि
अनेन वचसा दैवभक्तिः सर्वसमानधीः । ततश्चेह परत्रापि सुखप्राप्तिर्भविष्यति॥१२०॥

वृद्ध भी अज्ञानी पुत्र और मन्त्रोपदेशक बालक भी पिता होता है। यह न्याय भी जातिवादी के मत से ब्राह्मणों में ही होगा। धन बन्धुत्व वय कर्म और विद्या में जो उत्तरोत्तरश्रेष्ठत्व बताया गया वह भी उन्हीं में होगा। अतएव मनुस्मृति में कहा गया है कि ज्ञान से श्रेष्ठता ब्राह्मण में ही है न कि दूसरे में गीता में भगवान ने कहा कि ज्ञान से समान पवित्र चीज न ही और वह अज्ञान को नाश करके ब्रह्मतत्व को दिखाता है और ज्ञान से ही मोक्ष मिलता है। ये सब भी ब्राह्मण के ज्ञान से ही होते है कहना होगा। इसका अभिप्राय भी यही है कि दूसरे कोई ज्ञान प्राप्ति के लिए यत्न न करे किन्तु हमेशा ब्राह्मण सेवा में ही रहें। आँखों से जो जो वस्तु दीख पड़ते हैं वह भी ब्राह्मण को ही दीखते हैंकहना होगा, स्वार्थ लोभ से उन्होंने जो कुछ कहा था वह सब अनुभव विरुद्ध हैं। दीप जिसके पास हो उसी का वस्तु दीखता और वही दूसरों को उसे दिखा सकता भी है। उसमें दीपवाला ब्राह्मणवंश का होना चाहिये ऐसा

नियम नहीं। अतः धर्मव्याधादि लोग, जिनको जातिवादी शूद्र मानता है, जन्म ब्राह्मणत्वाभिमानी को उपदेश दे सके है। ज्ञान के न्यूनाधिक भाव से ही प्राणियों में न्यूनाधिकभाव दीखता है और स्मृतियों में भी ऐसा ही कहा गया है। जातिवादी उसको भी ब्राह्मणों में ही मानता है। जातिवाद, अन्ध का मार्ग दर्शित्व की तरह है और गुणवाद नेत्र वाले का मार्गदर्शित्व की तरह है। गुणः पूजा का स्थान जो कहा गया वह भी ब्राह्मण के लिए माना जाता है। इस लिये मनुस्मृति में कहा है कि आर्य पुरुष से अनार्य स्त्री में उत्पन्न व्यक्ति ही गुणों से आर्य हो सकता है न कि अनार्य से। उसका मतलब यह है कि अनार्य पुरुषों से उत्पन्न में अच्छे गुण रहने पर भी वे किसी काम के नहीं, और आर्य स्त्री पुरुषों से उत्पन्न में ऐसे गुण न रहने पर भी वह आर्य ( पूज्य ही ) है। ऐसे धर्मशास्त्रों के कारण से ही आर्य और अनार्य दोनों आज कल गुणहीन और दुर्गुणी भी हो गये हैं। पद्मपुराण में एक जगह में कहा गया है कि किसी के कुल में पैदा हुआ हो अच्छे गुण वाला ही पूज्य और ब्राह्मण भी वही है। आर्यत्व यदि अच्छे गुणों से ही मान लिया हो तो अब तक बहुत ही गुणी हो सकते थे। स्मृति में लिखा है कि विद्वान या अविद्वान हो ब्राह्मण ही भगवान का शरीर (प्रिय) है। इसप्रकार की वाणी से यही अपूर्व अर्थ सिद्ध किया जाता है कि दूसरे लोग पढ़ने का यत्न न करे और मूर्ख ब्राह्मणों की (जो शरीरक विषय भोगों मे लगे रहे हैं ) सेवा करते रहे। इसका परिणाम यही हुआ कि वेद विद्या को सभी लोग छोड़ दिये और भारतीय संस्कृति, परकीय विद्याओं के कारण नष्ट हो गयी अथवा नाम मात्रावशिष्ट हैं। उन दोनों विद्याओं को छोड़ देने पर इसी जन्म में अपने परिवार के साथ शूद्र हो जाने का भी उन्हीं स्मृतियों में स्पष्ट बताया गया है तो भी जातिवादी उस पर अपने आँखे बन्द कर देता है। कोई भी हो विद्वान ही भगवान का प्रिय होता है ऐसा कहा हो तो अब तक बहुत ही शास्त्रों में विद्वान हो सकते थे और दूसरे विद्वानों का आदर भी कर सकते थे। ऐसा न होने से बहुत देशों में विद्वान है ही नहीं और जहाँ कहीं एक दो रहने पर भी उनको पूछने वाला भी नहीं। लोक में संस्कृत और शास्त्रविद्या में अनादर होने का भी, पक्षपात पूर्ण धर्म शास्त्र ही कारण हो गये हैं। भागवत में और गीता में भी भगवान कहते हैं कि साधु हमारा हृदय है और मैं भी उनका हृदय हूँ। सब लोग मुझे समान हैं। जो शत्रु और मित्र, स्तुति और निन्दा में समान है वही मेरा प्रिय है। ऐसे वाक्यों से भगवान की भक्ति बढ़ सकती और भुक्ति मुक्ति भी मिल सकती है :

ज्ञानान्मोक्षोऽर्थाति—तदुक्तम् "कैवल्यं ब्राह्मणस्यैव ज्ञानेनैव न चान्यतः"



( मार्क० स्मृ० ) इति। शमदमादयश्च ज्ञानाङ्गानि भवन्ति। तदुक्तम् "शान्तिदान्त्यादयः सर्वे गुणा एव मुनीश्वराः। अङ्गानि ब्रह्मविद्यायाः श्रवणं कारणं बुधाः ( सूत० ३९।८२ ) इति। शमदमादिगुणवानेव यदि ब्राह्मणस्तदा तस्य ब्रह्मज्ञानोत्पत्तिस्ततः कैवल्यं चोपपद्यते नान्यथा। अनेनैव ब्राह्मणस्य कैवल्य-प्रतिपादकवाक्येन ब्राह्मण्यं गुणत एव न तु जन्मत इति सिद्धं भवति। एवं ब्राह्मणस्यैव संन्यासाश्रम-विधायकवाक्यैरपि तदेव सिध्यति। ब्राह्मण्यं हि संन्यासात्पूर्वावस्था। गीताभागवतादि-प्रोक्तशमदमादिगुणवत एव ब्राह्मणत्वात्तस्य संन्यासविधानं युक्तमेव। ब्राह्मणपरि-व्राजकन्यायोऽप्येतमेव विषयं ज्ञापयति। अतश्चेति, तदुक्तम् "अस्ति चेद्ब्रह्मविज्ञानं स्त्रियो वा पुरुषस्य वा। वर्णाश्रमसमाचारस्तयोर्नास्त्येव सर्वदा ( सूत० १२।५७ ) इति। यत्तु तत्रैवोक्तं स्वजात्युक्तकर्मभिरेव संसारान्मुक्तिरिति तत्कर्मप्ररोचनार्थम्। कर्मभिर्मुक्तेर्बहुधा प्रत्युक्तत्वात्। अज्ञस्त्विति, तदुक्तम् "अज्ञो भवति वै बालः पिता भवति मन्त्रदः। न हायनैर्न पलितैर्न वित्तेन न बन्धुभिः।" ( मनु० २।१५३ ) इति। अयं न्यायो मनुष्येषु सर्वत्र यदि स्यात्तदाऽतीव शोभनं भवेत्किन्तु नवीनमनु-स्मृतिकारमतेऽयं ब्राह्मणेष्वेव। अतस्तेनोक्तम् "विप्राणां ज्ञानतो ज्यैष्ठ्यं क्षत्रियाणां तु वीर्यतः। वैश्यानां धान्यधनतः शूद्राणामेव जन्मतः" ( १५५ ) इति। विप्रेष्वेव ज्ञानतो ज्येष्ठत्वं न तु क्षत्रियादिषु। क्षत्रियादिषु ज्ञानसत्वेऽपि ते ज्ञानित्वेन न गृह्यन्ते जातिवादिभिरित्यभिप्रायः। सूतसंहितायां तु ज्ञानत एव सर्वत्र ज्येष्ठत्वमुक्तम्। तथाहि "क्रिमिकीटपतङ्गेभ्यः पशवः प्रज्ञयाऽधिकाः। पश्वादिभ्यो नराः प्राज्ञास्तेषु केचन कोविदाः। तथा तेभ्यश्च गन्धर्वाः पितरो मुनिसत्तमाः। अन्ये च तारतम्येन पण्डिता उत्तरोत्तरम्। यूयं सत्वोत्कटाः प्राज्ञाः सर्वेषामपि हे सुराः। युष्मभ्योऽहं महाप्राज्ञो मत्तः प्राज्ञो जनार्दनः।" ( ब्र० गी० ९।३०-३२ ) इति। यत्तु तत्रैवाष्टमाध्यायेऽभिहितम् "पश्वादिभ्यो नरा श्रेष्ठा नरेभ्यो ब्राह्मणास्तथा। ब्राह्मणेभ्योऽथ विद्वांसो विद्वत्सु कृतबुद्धयः॥ कृतबुद्धिषु कर्तारस्तेभ्यः संन्यासिनो वराः। तेषां कुटीचकाः श्रेष्ठा बहूदकसमाश्रिताः। बहूदकाद्वरो हंसो हंसात्परमहंसकः ( ३० ) इति, तत्र नरापेक्षया ब्राह्मणानां श्रेष्ठत्वमपि कोविदत्वेनैव ( ज्ञानत एव ) न तु जात्या, तथा सति ब्राह्मणेभ्योऽथ विद्वांस इत्यादावपि जातिभेद प्रयुक्तश्रेष्ठत्वापत्तेः। पश्वादिभ्यो नराणां श्रेष्ठत्वमप्यत्र ज्ञानत एव विवक्षितं न तु जातितः। तत्रजातिभेदसत्वेऽपि तस्याविवक्षितत्वात्। न च ब्राह्मणानां ज्ञानतः श्रेष्ठत्वे ब्राह्मणेभ्योऽथ विद्वांस इत्यनुपपन्नमिति वाच्यम्। अधिक विद्यापेक्षया तदुपपत्तेः। शमादिगुणवत एकवेदा-ध्ययनेनापि श्रौतकर्मापेक्षितब्राह्मण्यं सिध्यति। तादृशगुणवत एव द्वित्रादिवेदाध्ययने सति तस्य पूर्वापेक्षया श्रेष्ठत्वं स्यादेव। परमहंसस्त्यक्तदण्डोऽगृहीतदण्डो वा भवति। तस्य दण्ड्यपेक्षया श्रेष्ठत्वं दण्डादि त्यागविशेषाधिक्येन भवति। यद्यपि दण्डधारणं सर्वाश्रमिणामपि विहितं सौरपुराणे "सर्वेषामाश्रमाणां च विहितं दण्डधारणम्। न

दण्डेन विना कश्चिदाश्रमीति निगद्यते ( १७।७ ) इति, तदिदानीं प्रायस्त्यक्त
मेवाश्रमत्रयेण तथापि न तेषु श्रेष्ठत्वम् । यस्मिन्नाश्रमे त्याग एव प्रधानस्तत्र
यावदधिकं त्यज्यते तावच्छ्रेष्ठत्वम् । काषायवस्त्रधारित्याग्यपेक्षया कौपीनधारी श्रेष्ठः ।
कल्पितस्मृतिभिस्त्वं चेद्विद्यां शूद्रान्निवारयेः । तर्हि त्वत्तोऽपि सा ताभिरेव शृणु निवार्यते
शूद्रत्वहेतवः सन्ति बहवः स्मृतिसमीरिताः । तेष्वेको द्वादशानब्दान् नृपत्याश्रयजीवनम्
द्वितीयः पत्तने वासः शूद्रग्रामेऽपि तावतः । तृतीयः कुक्कुटश्वानमार्जालादिप्रपोषणम्१२३
शूद्रान्नशूद्रसम्पर्कौ शूद्रैस्सह समागमः । चतुर्थी वेदसन्ध्यादिपरित्यागश्च पञ्चमः,
षडत्राब्राह्मणाः पूर्वं पौरोहित्यादिहेतुना । दर्शितास्तेऽपि शूद्रास्स्युर्यतो वर्णद्वयं कलौ ॥
ब्राह्मणेभ्यो ब्राह्मणीषु जन्माप्यादियुगागतम् । कारणं ब्राह्मणत्वे स्यादित्यप्युक्तं स्मृतौक्वचित्
तच्च दुर्ज्ञेयताबाध्यं शूद्रब्राह्मणयोरपि । अतः स्मृतिशतोक्तं चेदपि वर्णे न कारणम् ॥
तदन्ये हेतवः सर्वे साम्प्रतब्राह्मणादिषु । सन्तीति तेऽपि शूद्राः स्युर्निषिद्धाः सर्वकर्मसु ॥
ये तु तद्धेतुभिर्हीनास्तेऽपि दर्शितशूद्रकैः । विहाराहारसम्बन्धाच्छूद्रा एव भवन्मते ॥
शूद्रैरेव प्रकर्तव्यं नीचसेवादिकं यदि । तदा तादृशशूद्रैस्तत्कार्यं ब्राह्मणनामभिः॥१३०॥
देवीभागवते प्रोक्तं ब्राह्मणो ज्ञानवर्जितः । राज्ञा स शूद्रकार्येषु योजनीयो बलादिति ॥
शूद्रे विद्या श्वभस्त्रस्थगोक्षीरेण समेति चेत् । अद्य ब्राह्मणविद्याऽपि तादृग्गोक्षीरसन्निभा
वेदः शूद्रसमीपे चेन्नाध्येयः स्यादितीर्यते । तर्ह्यद्य स च नाध्येयो ब्राह्मणब्रुवसन्निधौ ॥
वेदमन्त्रादिकं शूद्रैः श्रुतं सन्धारितं च वा । तज्जिह्वाहृदयच्छेदः कार्यश्चेद्राजशासनात्
अद्यापि वेदविद्यार्थितदध्यापकसंहतेः । जिह्वहृदयविच्छेदोऽप्यनिवार्यो भविष्यति॥१३५
वेदार्थस्य विचारे चेच्छूद्रश्चाण्डालतां व्रजेत् । तर्ह्यद्यतनवेदार्थचिन्तका ह्यपि तादृशाः॥
न देया चेन्मतिः शूद्रवर्णायेति विनिश्चतम् । तर्हि दर्शितशूद्रेभ्योऽप्यदेया सा भविष्यति
सर्वस्मै यदि दत्ता चेन्मतिः शूद्रादिकाय हि । शास्त्रसिद्धान्तविज्ञानं सकलैरप्यलप्स्यत ॥
देवमन्दिर वेदादिशास्त्रविध्वंसकारिणः । स्वमते पक्षपातेन न्यरोत्स्यंस्ते खलानिह ॥
क्रीस्तुबुद्धमुसल्मानजैनादिमतसंश्रिताः । भारतीया नाभविष्यन् पराधीनं च भारतम्१४०
स्वमते चाश्रया भावान्नीचकार्यनिवेशतः । शत्रूणां मतमाश्रित्य शत्रवस्तेऽपि चाभवन् ॥
कीदृग्मतिर्न शूद्राय देयेतित्वं प्ररोदिषि ?। रामकृष्णादिमन्त्रार्हाः स्त्रीशूद्राश्चेति चस्मृतिः
विष्णोर्नामसहस्रं तु स्त्रीशूद्राद्यैर्विशेषतः । पठितव्यमिति प्रोक्तं षष्ठखण्डे हि पद्मगे ॥
श्रोतव्यमिति कुत्रापि शब्दो यदि प्रदृश्यते । तस्याश्च पठितव्यं चेत्यर्थो बहु प्रमाणतः ॥
शिवाय नम इत्येवं मन्त्रं स्त्रीणां विधीयते । शूद्राणामिति च स्कान्दपुराणे संहितात्मके ॥
शक्तेनापि हि शूद्रेण न कार्यं चेद्धनार्जनम् । दर्शितैरपि तैश्शूद्रैर्न कार्यो धनसङ्ग्रहः ॥
ब्राह्मणस्यैव वित्तेहा तत्सम्पादनमेव च । महानर्थकरं तस्मात्तत्याज्यमिति पद्मगीः ॥
शूद्रानुद्दिश्य निन्दा या या कृता स्मृतिकैतवात् । तेष्वेव सा च सर्वा स्यादुक्तशूद्रत्वहेतुना
स्वीयस्मृत्युक्तप्रत्यक्षहेतुभिः स्वेषु शूद्रता । दुर्ज्ञेयहेतुनाऽन्येषु सा न साधयिकं क्षमा १४९



यद्यत्र दर्शिता निन्दा ब्राह्मणब्रुवदुस्सहा । तदा कथं तदन्यैस्सा सह्येतान्यायतः कृता ॥
अतश्चात्मोपमानेन परेषां स्तुतिनिन्दयोः । हर्षशोकादिहेतुत्वं ज्ञात्वैव संचरन्तु ते १५१
यथाश्रुतस्तु शब्दार्थो मान्यश्चेत्तेषु शूद्रता । तात्पर्यार्थस्तु ग्राह्यश्चेद्ब्राह्मण्यं नैव जन्मतः
स्तुतिनिन्दे विधीयेते कर्तव्ये त्याज्यवस्तुनि । न तु जातावकर्तव्ये चात्याज्ये प्रायशो भुवि
जन्मसिद्धं न कर्तव्यं न च त्याज्यं भविष्यति । नातस्तथाविधं वस्तु स्तूयते नापि निन्द्यते
शूद्रत्वं ब्राह्मणत्वं च भवदीयदुराग्रहात् । जन्मसिद्धे यदि स्यातां स्तुतिनिन्दे निरर्थके
श्रुतिस्मृतिपुराणादौ शूद्रत्वब्राह्मणत्वयोः । श्रूयते च स्तुतिर्निन्दा महती बहुधैव च १५६
अनयोरपि तात्पर्यं तत्सम्पादनवर्जने । तेनापि ज्ञायते जन्मसिद्धे ते न भविष्यतः १५७
अस्मन्मते ब्राह्मणत्वं सम्पाद्यं सज्जनत्ववत् । शूद्रत्वं च परित्याज्यं दुष्टत्वमिव यत्नतः
तत्सम्पादनसंत्यागे जनान् प्रेरयितुं श्रुतिः । ब्राह्मणत्वस्तुतिं निन्दां शूद्रत्वे विदधाति च ।
स्तूयते सज्जनत्वादि दुष्टत्वादि च निन्द्यते । जातित्वाभावतस्ताभ्यां गर्वक्रोधौ न कस्यचित्
ब्राह्मणत्वादिको वर्णः सज्जनत्वादिवत्सदा । अजातिः सन्नुपाधिश्चेत्स्तुतिनिन्दे च सार्थके

कल्पित स्मृतियों के द्वारा यदि तुम शूद्र को विद्या नहीं है कहोगे, तो उन्हीं स्मृतियों के द्वारा ब्राह्मणों को भी विद्याधिकार सिद्ध नही होगा, स्मृतियों में शूद्रत्व के हेतु बहुत कहे गये है उनमें एक है बारह साल तक राजाश्रितजीवन, अर्थात सरकारी नौकरी से जीवन बिताना, (२) १२ साल शहर में रहना,(३) दश साल शूद्रग्राम में रहना,(४) मुर्गी कुत्ते और बिल्ली को पालना, (५) शूद्रान्न भोजन और शूद्रों से सम्पर्क रखना, (६) वेद और सन्ध्या को छोड़ना (७) पौरोहित्यादि जो अब्राह्मणत्वहेतु बताये गये हैं वे भी शूद्रत्व हेतु ही है क्यों तुम कलियुग में दो ही वर्ण ( ब्राह्मण और शूद्र ) मानते हो। (८) यद्यपि ब्राह्मण से ब्राह्मणी में आदि युग से लेकर अब तक की जन्म परम्परा भी एक कारण मानी गयी है तो भी वह जानने का लायक न होंने से ब्राह्मणत्व का हेतु मानी नहीं जाती है। इसके अतिरिक्त सभी शूद्रत्व के हेतु आज कल के ब्राह्मणों में हैं। अतः वे भी शूद्र हैं और सब वैदिक कर्मों में निषिद्ध भी हैं। जिनमें वे शूद्रत्व हेतु नहीं हैं वे भी उक्त शूद्रों से रोटी बेटी का सम्पर्क रखने से शूद्र ही हैं। नीच सेवादि को शूद्र ही करे ऐसा निश्चय हो तो ब्राह्मण नामक उक्त शूद्र ही उसे करें। देवी भागवत में लिखा है कि वेदादिज्ञान शून्य ब्राह्मण को राजा, शूद्र कार्यों में नियुक्त करें। शूद्र में रहने वाली विद्या, यदि कुत्ते के चमड़े की झोला में रक्खा हुआ गाय के दूध का समान है तो वर्तमान ब्राह्मणों में रहने वाली विद्या भी वैसे ही है। शूद्रों के पास वेद पढ़ने का नही है तो उक्त शूद्रों के पास भी उसे पढ़ना नहीं चाहिये। वेद मन्त्रादि को याद करने पर शूद्र की जिह्वा को काट देना चाहिये तो आज-कल के वेद पढ़ने और पढ़ाने वालों

की भी जिह्वा काट दिया जाय। वेदार्थ विचार करने पर शूद्र चाण्डाल हो जायगा तो आज के वेद विचारक भी चाण्डाल ही है। शूद्रों को ज्ञानोपदेश देना मना है तो आज के ब्राह्मण को भी उसे देना मना ही है। यहाँ यह भी सोचना चाहिए कि किस प्रकार का उपदेश शूद्र को देना नहीं है। स्मृति और पुराणों में लिखा है कि रामकृष्णादि मन्त्र और विष्णु सहस्रनामादि शूद्रों को भी अवश्य पढ़ना चाहिये। नमोऽन्त शिवमन्त्र ( शिवाय नमः ) भी स्त्री शूद्रों को दिया जा सकता है। इन सबको स्त्री शूद्र सुने ऐसा किसी ग्रन्थ में लिखा हो तो उसका अर्थ ऊपर के प्रमाणों के अनुसार वह पढ़े, ऐसा कहना होगा, अब तक सबको वेद शास्त्रों का रहस्य बताया गयाहो तो वे, अपने मत में पक्ष पाती होकर मन्दिरादि को तोड़ने वाले शत्रुवों को रोक दिये होते और वे उन शत्रुओं के मत में न गये होते। अपने मत का परिचय तक न देकर नीच कार्यादिको जबर-दस्ती करवाने का कारण, वे शत्रु के मत में गये और वे भी शत्रु बन गये। धन कमाने की शक्ति, शूद्र में रहने पर भी वह उसे न कमावें ऐसा लिखा हो तो पूर्वोक्त शूद्र भी उसे नहीं कमा सकेंगे पद्म पुराण में लिखा है कि धन कमाना ब्राह्मण को ही बड़ा अनर्थ है। स्त्री शूद्रों के विषय में जहाँ जहाँ जैसी जैसी निन्दा लिखी गयी है वह सब ऊपर के शूद्रों में भी लगेगी। यहाँ इस प्रकार की नीन्दा को दूसरे लोग सहन नहीं कर सकेंगे तो उनके द्वारा की गयी निन्दा को शूद्र लोग कैसे सहन कर सकेंगे। अतः स्तुति और निन्दा जैसे अपने को सुख और दुःख देते हैं वैसे ही वे दूसरों को भी सुख दुःख देंगे समझकर सब लोग चले।

शूद्रत्वहेतव इति। वृद्धगौतमस्मृतौ युधिष्ठिरेणैवं पृष्टम् "ब्राह्मणः स्वेन देहेन शूद्रत्वं कथमाप्नुयात्, तदनन्तरं श्री भगवानुवाच" शूद्रग्रामे तथाप्येको वसेद्वा दशवार्षिकम्। ग्रहोक्तमपि कुर्वीत शूद्रत्वं याति वै द्विजः। यस्तु राजाश्रयेणैव वसेद् द्वादश-वार्षिकम्। स शूद्रत्वं व्रजेद्विप्रो वेदानां पारगो यदि। वर्तते नगरेष्वाऽपि यो वा द्वादश-मावसेत्। स शूद्रत्वं व्रजेद्विप्रो नात्र कार्या विचारणा (१९।३३तः) इति, एवं वाधूल-स्मृतावप्युक्तम् "कुक्कुटश्वानमार्जारान् पोषयन्ति दिनत्रयम्। इह जन्मनि शूद्रत्वं मृतः श्वा चाभिजायते" नगरे पट्टणेवाऽपि द्वादशाब्दं च यो वसेत्। स जीवन्नेव शूद्रत्वमाशु गच्छति सान्वयः॥ राजाश्रयेण यो मर्त्यो द्वादशाब्दं वसेद्यदि। जीवमानो भवेच्छूद्रो नात्र कार्या विचारणा" (१७० तः) इति। शूद्रान्नेति "शूद्रान्नशूद्रसम्पर्कौ मासमात्रेण बाडबम्। शूद्रीकृत्यावशात्पश्चाण्डालत्वं करिष्यतः ( मार्क ) इति, "अनधीत्य द्विजो वेदमन्यत्र कुरुते श्रमम्। स जीवन्नेव शूद्रत्वमाशु गच्छति सान्वयः" ( मनु २।१६८) इति चोक्तम्। षडत्रेति, २१० पृष्ठे द्र; ब्राह्मण्यां ब्राह्मणेन जातस्य



ब्राह्मण्यमनूद्य तस्य दुज्ञेत्वं भाट्टमतनिरासे प्रागेव प्रपञ्चितम्। देवी भागवत इति "यथा शूद्रस्तथा मूर्खो ब्राह्मणो नात्र संशयः। कर्षकस्तु द्विजः कार्यो ब्राह्मणो वेद वर्जितः ( ३।१०।३६ ) एवं "सायं प्रातः सदा सन्ध्यां ये विप्रा न उपासते। कामं-तान् धार्मिको राजा शूद्रकर्मसु योजयेत्" एवं बोधा. स्मृ. ४।३० चोक्तम्। वेदमन्त्र धारणे शूद्रस्य जिह्वाच्छोदश्च" अथाहास्य वेदमुपशृण्वतस्त्रपुजतुभ्यां श्रोत्रप्रति पूरणमुदाहरणे जिह्वाच्छेदो धारणे शरीर भेदः" ( गौतम. १२।१ ) इत्यादिनोक्तम्। न देया चेन्मतिरिति, तदुक्तम्" न शूद्राय मतिं दद्यान्नोच्छिष्ट न हविष्कृतम् न-चास्योपदिशेद्धर्मं न चास्य व्रतमादिशेत् "(मनु ४।२०) इति। वसिष्ठस्मृतावपि (१८।१२) चोक्तम्। कीदृग्मतिरिति, अम्बरीषेण पृष्टो हारीतः "शृणु राजन् प्रवक्ष्यामि मन्त्रयोगसमन्वितम्, यथोक्तं विष्णुना पूर्वं ब्रह्मणा परमात्मना "इत्युक्त्वाऽग्रे" ब्राह्मणाः क्षत्रिया वैश्याः स्त्रियः शूद्रास्तथेतराः। तस्याधिकारिणः सर्वे सत्वशीलगुणा यदि" (३-६) इत्यभिधाय, "पंचविंशाक्षरद्वादशाक्षराष्टाक्षरषडक्षरमन्त्रान् प्रदर्श्यान्तेऽपि सः "ब्राह्मणाः क्षत्रिया वैश्याः स्त्रियः शूद्रास्तथेतराः। मन्त्राधिकारिणः सर्वे ह्यनन्य-शरणा यदी" ( ३.२४८ ) त्युक्तवात्। पाद्मे पातालखण्डेऽपि शिवेन नारदाय कृष्णमन्त्रः "वक्ष्यामि युगलंतुभ्यं कृष्णमन्त्रमनुत्तमम्। मन्त्राचिन्तामणिर्नाम युगलं द्वयमेव च" (८१।१३ ) इत्यादिनोपदिष्टः। अग्रे चैवमुक्तम् "सर्वेऽधिकारिणश्चात्र चाण्डालान्ता मुनीश्वर। स्त्रियः शूद्रादयश्चापि जडमूकादिपङ्गवः" (३।१९) इति। ब्राह्मणस्यापि कृष्णभक्तिरहितस्य निषिद्धोऽयं मन्त्रः। एवं तदीयोत्तरखण्डेऽपि नारदं प्रति शिवेन पद्मपुराणविषयान्वक्ष्ये इत्यपक्रम्योक्तम् "स्त्री शूद्राणां तथा धर्मं तथा त्याज्यैश्च धारणम्। उमामहेश्वरसंवादे प्रोक्तं नामसहस्रकम्। कैलासात्तत्समानीतं नारदेनाग्रजन्मना। लोकानां ब्राम्हणानांच क्षत्रियाणां विशेषतः। स्त्री शूद्राणां विशेषेण पठितव्यं समहितैः। इदं पवित्रं परमं पुण्यमायुष्यवर्धकम्॥ पठितव्यं विशेषेण विष्णोः सायुज्यमाप्नुयात्। विष्णोर्नामसहस्रं तत्पावनं भुवि विश्रुतम्" ( १।१३-१८) इति। एवं तत्रैव भूमिखण्डे विष्णुशतनामजपेन शूद्रस्थ महत्फलं प्रदर्शितम् तद्यथा "यो जपेच्च शतं नाम्ना स्तोत्रं पातकनाशनम्। शूद्रः सुखं प्रभुङ्क्तेऽथ ब्राह्मणत्व च गच्छति। प्राप्य जन्मान्तरं वत्स वेदविद्यां प्रविन्दति" इति मन्त्रजपप्रभावेण यदेह जन्मनि जन्मान्तरे वाऽऽत्मनि शमादिगुणप्रादुर्भावस्तदा तत्प्रयुक्त-ब्राह्मणत्वं तत्रैव व्यक्तं भवति। स्वाभाविकशूद्रगुणविनाशपूर्वक ब्राह्मणगुणसमागने कस्यचिज्जन्मान्तरमप्यपेक्षते। वेद विद्याऽपि तादृशसंस्कारवत एव भवतीति जन्मान्त रं प्राप्येत्युक्तम्। जन्मान्तरफलमुद्दिश्यापि तदनुकूलानुष्ठानं युक्तमेव। तथैव शिष्टैः क्रियते चेति शूद्रस्य मन्त्रजपानुष्ठानं भावि ब्राह्मणत्व फलमुद्दिश्यात्र विहितमिति जाति-वादिभिरप्यङ्गीकार्यम्। एतेन "शूद्रस्य द्विजसेवानिरतस्यैव क्रमशो वैश्यत्व क्षत्रियत्व-

प्राप्त्यनन्तरमेव ब्राह्मण्यप्राप्तिरि त्युक्तिः, "वध्यो राज्ञा स वै शूद्रो जपहोमपरश्च यः" ( अत्रि सं० १९ श्लो० ) इति "जपस्तपस्तीर्थयात्रा प्रव्रज्या मन्त्रसाधनम् । देवताराधनं चैव स्त्रीशूद्रपतनानि षट्" इति चोक्ति निरस्ता । सूतसंहितायां शूदस्य नमोऽन्तेन मन्त्रजपः प्रोक्तः । तथाहि 'शूद्राणांच तथा स्त्रीणां प्राणसंयमनं मुने । नमोन्तं शिवमन्त्रं वा वैष्णवं वा न चान्यथा । नित्यमेव प्रकुर्वीत प्राणायामाँस्तु षोडश (१६।१४) इति । शक्तेनापि हि शूद्रेण न कार्यो धनसञ्चयः । शूद्रो हि धनमासाद्य ब्राम्हणानेव बाधते" ( मनु० १०।१२९ ):इत्युक्तम् । पाद्मेच "अनर्थो ब्राम्हणस्यैष यस्त्वर्थ निचयो महान् । अर्थैश्वर्यविमूढो हि श्रेयसो भ्रश्यते द्विजः (सृष्ठि० १९।२४९) इत्युक्तम् ।

धनं सर्वविधं लोके विद्यमानं धरादिकम् । ब्राह्मणस्यैव तत्सर्वं न त्वन्यस्येह किञ्चन ॥
स्वकीयंब्राह्मणोभुङ्क्ते भुञ्जतेऽन्येऽपि तस्यहि । दयावान्ब्राह्मणो यस्मान्नोचेद्भोक्तुंनशक्नुयुः
इति मनुस्मृतौ चोक्तं भारते शान्ति पर्वणि । तद्विरुद्धं श्रुतिस्मृत्यो र्लोकविप्लवकारि च
जैमिनिब्राह्मणे चोक्तं ब्रह्म वै ब्राह्मणस्य राः । मन्वादिस्मृतिषूक्तं च ब्राह्मणस्य श्रुतिर्धनम्
तेनेदं ज्ञायते जात्या ब्राह्मणो न भवेदिति । तत्प्रकारश्च प्रागेव दर्शितस्तत्र दृश्यताम् ॥
यदि गोभूहिरण्यादिधनं तस्यैव सम्मतम् । तदा क्षत्रियवैश्यादिवर्णाश्च स्युरकिञ्चनाः ॥
एतेनापीदमायाति क्षत्रियादिषु यद्धनम् । दृश्यते तत्प्रसह्यैव ब्राह्मणो हर्तुमर्हति १६८
तदशक्तौ चौर्यतो वा गृह्णीयादृणनामतः । वस्तुरूपेण वा चाग्रे प्रत्यर्पणप्रतिज्ञया १६९
तदप्रत्यर्पणे दोषो न स्यात्तस्य हि तत्स्वकम् । कथं चिद्गृह्यते स्वीयं धनं चेदन्यहस्तगम्
इत्येतद्धर्मशास्त्रोपदेशव्याजेन सूच्यते । येनाचिरात्प्रपञ्चस्य संभाव्यतेऽपि विप्लवः १७१
एतद्बुद्ध्यैव केचित्तु गृहीत्वा ऋणमन्यतः । न ददत्युत्तमर्णाय स्वीयं मत्वा च तद्धनम् ॥
पश्चान्मूल्यं प्रदास्यामीत्युक्त्वावस्तूनि केचन । क्रीत्वाऽऽपणान्महार्घाणि नदद्युर्वणिजेऽपितत्
विप्रब्रुवश्च वाक्कीलः कश्चित्तद्वाक्यवित्पयः । गोपान्मासत्रयं पश्चन्मूल्यप्रदब्रुवोऽग्रहीत्
पृष्टोऽपि बहुधा तस्मै पयोमूल्यं न दत्तवान् । न शूद्रस्य धनं किञ्चिद्गोपः शूद्रस्तु तन्मते
गोपस्तु वृषभस्त्वं मद्गृहे जन्मान्तरे भवेः । शप्त्वा चैनं पुनः प्रष्टुं नैच्छत्तन्मुखमीक्षितुम्
एतद्भावनया केचिच्चौर्यं कुर्वन्ति निर्भयम् । यतस्तद्धर्मशास्त्रानुसारात्सर्वं धनं स्वकम् ॥
नातस्तस्य भवेद्राजदण्डः पापभयं च न । श्रेष्ठः स एव पूज्यश्च दैवतं चापि तन्महत्१७८
यो यो जानात्यदः शास्त्रं स सर्वोऽपि धनेच्छुकः । देह भोगाभिलाषी चेदवश्यं चौर्यकृद्भवेत्
यो न जानाति तच्छास्त्रं न स कामंकरोतुतत् । ज्ञाता तु कुर्यात्तत्सर्वं यतः सर्वस्वकत्वधीः
यद्यदाचरति श्रेष्ठस्तत्तदाचरतीतरः । इति न्यायानुसारेण जाताः सर्वेऽद्य तस्कराः ॥
भ्रष्टाचारा दुराचारा यावन्तोऽद्य जनेषु वै । मृषावादाश्च ते सर्वे ब्राह्मणब्रुवमूलकाः
श्रुतिस्मृत्युक्तब्राह्मण्यं यद्यङ्गीक्रियते तदा । ब्राह्मवस्त्वनपेक्षः स्या द्ब्राह्मणो भगवानिव
उच्चनीचसमानः स्यात्क्षुद्रभोगविवर्जितः । तर्हि सर्वं ब्राह्मणस्य भवेद्भगवतस्त्विव १८४



सर्वं सर्वेश्वरस्येति सर्वैरप्यनुमन्यते । न वा प्रदर्शितापत्ति र्नान्या वा कस्य चिद्भवेत्१८५
किन्तु तादृग्ब्राह्मणश्च यस्मिन् कस्मिन्कुले भवेत्।देशे वा यत्र कुत्रापि तस्माज्जातिप्रथा वृथा
धनं सर्वं ब्राह्मणानां न त्वन्येषामिती ह्रीचेत् । किं ब्राह्मणाय ते दद्युरन्ये दानादिरूपतः
ब्राह्मणेभ्यो धनं दद्युरन्ये वर्णाः सदैव हि । इति स्मृतिपुराणादौ बहुधा प्रतिपादितम् ॥
धनं शूद्रस्य नास्त्येव किं विप्राय स दास्यति । दानं शूद्रेण दातव्यमिति पाद्मे खलूच्यते
वैश्यशूद्रौ धनेनैव तरेतामापदं त्विति । मनुस्मृतावपि प्रोक्तं तदीयं स्यात्कथं धनम्१९०
न हि पुण्यं भवेत्तस्मै तदीयं यदि दीयते । किन्तु स्वीयं दीयमानं दातृभ्यः स्यात्फलप्रदम्
न ब्राह्मणधनं तस्मै दत्तमन्यफलप्रदम् । किन्तु स्वकीयमेतस्मै दत्तं चेत्सुकृतं भवेत् १९२
अतश्च ब्राह्मणेनैव देयमब्राह्मणाय हि । ब्राह्मणाय न दातव्यं तदीयत्वात्समस्य च १९३
दोषोऽप्यदाने तस्यैव द्रव्यस्वामित्वहेतुना । दानेऽप्यपुण्यमन्येषां द्रव्यस्वाम्याद्यभावतः
स्वार्थहेतुकृतस्मृत्याः सम्यगर्थविचारणे । स्वार्थहानिः पर्यवास्यत्कल्पितस्मृतिरीदृशी १९५
त्रिवरं गोसहस्रस्य दानाच्छूद्रः स्वजातितः । च्युतःसन्विप्रतुल्यः स्यादिति लौगाक्षिरब्रवीत्
स ब्रम्हाण्डकटाहं चेत्सप्तवारं प्रदास्यति । ब्राम्हणेभ्यस्तदाऽशूद्रो भवेदित्यपि चोदितम्
हिरण्यगर्भदानं हि त्रिवारं ब्राम्हणाय च । दीयते चेत्तदा शूद्रो विप्रः स्यात्कपिलोऽब्रवीत्
तदेव च चतुर्वारं दत्तं चेद्वृषलोऽपि हि । मौञ्जीधारणयोग्यः सन् ब्राह्मणः स्यादिहेत्यपि
एतद्दानप्रकारश्च कापिलादौ प्रदर्शितम् । ग्रन्थगौरवभीत्याऽत्र न तत्सर्वमुदीरितम्
सर्वमेतद्वस्तुजातं शूद्रस्य स्वं कथं भवेत् । सर्वं चे द्ब्राम्हणस्यैव वस्तुमात्रमितीर्यते २०१
यस्य तादृशवित्तं स्यात्स सर्वो ब्राह्मणो भवेत् । दरिद्रोऽब्राह्मणत्वेन तिष्ठेद्दातुमशक्नुवन् ॥
यद्यप्यद्यतन-क्ष्मागोदानवत्प्रकृतेऽपि च । दाने संकोचमर्हन्ति कर्तुं तद्ग्राहिणो द्विजाः ॥
प्रायः साम्प्रतगोदानं गोपुच्छस्पर्शपूर्वकम् । सपादरूप्यकेणैव पूर्णं च फलदंमतम्
एवं हिरण्यगर्भाख्य-गोसहस्रादिदानयोः । संकोचं बहुकृत्वाऽपि दत्तं प्रतिग्रहीष्यते २०४
अथ शूद्रान् द्विजान् कर्तुं ब्राह्मणानपि वा पुनः । सन्नद्धाः स्युर्हि ते किन्तु तावद्वा तद्धनंकथम्
न च ब्राह्मणशब्दोऽत्र तत्समानार्थबोधकः । प्रत्यक्षबाधशून्यत्वान्मुख्यब्राह्मण एव सः२०६
पुरुषार्थत्रयाविष्टाः पुरुषाः पशवो ध्रुवम् । इत्यादौ बाधसत्वेन पशुतुल्या इतीर्यते २०७
नापि वा जन्म सिद्धत्व शब्दबाधो भवेदिह । व्रीहिभिर्वा यवैर्वेति-वद्विकल्पस्तथा सति
विकल्पो वस्तुनि क्वापि नेष्यते पण्डितोत्तमैः। व्रीह्यादेश्च क्रियास्वेव विकल्पो न स्वरूपतः
तस्मादस्यैव मुख्यत्वं क्रियातन्त्रत्वहेतुना । जन्मसिद्धत्वस्मृत्यादेर्गौणत्वं तदभावतः ॥
जन्म नानाविधं प्रोक्तं शास्त्रीयं लौकिकंत्विति । लौकिकं पशुपक्ष्यादिसाधारणमिहोच्यते
शास्त्रीयं जन्म शास्त्रोक्त तत्तत्संस्कारहेतुकम् । शास्त्रीयमेव हि ग्राह्यं शास्त्रीये दीक्षितादिवत्
शास्त्रीयो दीक्षितः शास्त्रप्रोक्तकर्मसु गृह्यते । न क्वापि जन्मना सिद्धो ब्राह्मणोऽपि तथाविधः
हिरण्यगर्भदानाद्यैर्ये शूद्राः ब्राह्मणाः कृताः । ते तद्दानं विनैवान्यान् कुर्युश्च ब्राह्मणानिह
एतद्दानादिसंसिद्धब्राह्मणानां हि सन्ततिः । किमग्रे जन्मसिद्धा स्यादुत कर्मकृता च वा
आद्ये त्वज्जन्मसिद्धत्वमपि स्यादेव तादृशम् । त्वद्वदेव हि ते ब्रूयुर्जन्मना ब्राह्मणस्त्विति

स्वकीय पूर्ववृत्तान्तज्ञानाभावेन तेऽपि च । त्वद्वदुच्चस्वरैः कुर्युर्जन्मब्राह्मण्यगर्जनम् २१७
द्वितीये जन्मनैवेति स्मृतिर्मृषा भविष्यति । अस्मन्मतसमावेशात्त्वदहङ्कारभञ्जनम् २१८
वस्तुतस्तु न दानादिकर्मभिर्ब्राह्मणो भवेत् । किन्त्वाधानादिभिश्चात्मगुणैः शान्त्यादिभिर्मतः
अयमेव हि वेदोक्तः सिद्धान्तोऽस्माभिरिष्यते । अन्यत्सर्वमपभ्रंशं लोभमूलकमित्यपि २२०

मनुस्मृति में कहा गया है कि इस लोक में रहने वाला सब प्रकार का धन ब्राह्मण का ही है। ब्राह्मण जो कुछ खाता है वह अपने का ही खाता है और दूसरे लोग जो कुछ खाते हैं वह भी ब्राह्मण का ही है। ब्राह्मण दयावान् होने से सब को खाने देता है न ही तो कोई कुछ नहीं खा सकेगा। यह बात श्रुति और स्मृति का भी विरुद्ध है और लोक विप्लव कारी भी है। वेद ही ब्राह्मण का धन है ऐसा श्रुति ( जै० ब्रा९ ) और मन्वादि स्मृतियों भी है। इससे भी मालुम हो जाता है कि ब्राह्मण जन्म से न ही बनता। इसका विवरण ६४ पृष्ठ में दिया गया है। यदि सब धन ब्राह्मण का ही हो तो क्षत्रियादि का कुछ नहीं रहेगा। यदि कहीं कुछ रह गया हो तो उसको ब्राह्मण जबर्दस्ती ले सकेगा। ऐसे लेने में यदि असमर्थ हो तो चोरी से या ऋण या उधार के रूप में ले सकता है और उसे फिर न लौटाने पर भी उसको दोष नहीं लगेगा। यही हमारे धर्मशास्त्रों के द्वारा बताया जाता है जिससे दुनिया में विप्लव भी हो सके। इसी अभिप्राय से कुछ जन्म ब्राह्मण दूसरों से ऋण लेकर फिर उसे लौठाते नहीं और बाजार से बर्तन आदि उधार लेकर कितने ही बार पूछने पर भी दूकान दार को मूल्य देते नहीं हैं। एक समय की बात है कि एक जाति ब्राह्मण वकील ग्लाला से तीन महीने लगातार दूध लिया और बार बार पूछने पर भी वह दूध का दाम दिया नहीं। क्यों ग्लाला उसके मत में शूद्र है। शूद्र का कुछ भी धन नहीं है लिखा है। वह यह शाप देकर कि तुम आगे हमारे घर में बैल बन कर रहोगे कह कर आगे पूछना ही बन्द कर दिया था। ब्राह्मण चोरी या बदमाशी करेगा तो भी उसको दोष नहीं लगेगा और राजदण्ड भी उसको नहीं, ऐसा भी कुछ स्मृतियों में लिखित है। जो इन बातों को नहीं जानता है वह भले ही चोरी न करे किन्तु जो जानता है वह बराबर करता ही रहेगा और ब्राह्मण को ऐसे करते देख कर दूसरे लोग भी उसका अनुकरण करने लगेंगे। आज कल लोगों में जितने भ्रष्टाचार दुराचार और मिथ्यावाद फैले हैं उन सब का मूल कारण जन्म ब्राह्मण ही है। यदि शास्त्रीय ब्राह्मणत्व को ही लोग मानेंगे तो वह भगवान की तरह बाह्य वस्तु निरपेक्ष ही रहेगा और ऐसे ब्राह्मण का ही सब धन कहना भी उचित हो सकता है। दूसरे वर्ण ब्राह्मणों को दान देते रहें ऐसे शास्त्रीय विधियां हैं। यदि सब धन ब्राह्मण का ही तो यह भी असंगत रहेगा। निजी धन को ब्राह्मणों को



देने पर पुण्य मिल सकता है न कि ब्राह्मणों का ही उन्हें देने पर। धनस्वामी का ही कर्तव्य है उसे दूसरों को देते रहना और न देने पर दोष भी उसी का ही लगेगा। यदि सारे धन का स्वामी ब्राह्मण है तो उसे दूसरों को दान देना भी उसी का कर्तव्य है और न देने पर दोष भी ब्राह्मण का ही हैं। स्वार्थ लोभादि से कल्पित स्मृतियों की गति ऐसी ही रहती है और एकैक हजार गायों को तीन बार ब्राह्मणों को देने पर शूद्र अपनी जाति से च्युत होकर विप्रतुल्य हो जायगा और सात बार ब्रह्माण्डकटाह देने पर वह अशूद्र हो कर वेद मन्त्रों का अधिकारी हो जायगा ऐसा लौगाक्षिस्मृति में लिखा है और कपिल स्मृति में लिखा है कि हिरण्यगर्भदान चार बार करेगा तो शूद्र मौञ्जीधारण का योग्य बन कर उसी शरीर से ब्राह्मण हो जायगा, किन्तु ये चीजें भी शूद्र के पास कैसे रहेंगे। यद्यपि आज के गोदान की तरह इसमें भी बहुत घटा करके देने पर भी ब्राह्मण शूद्रों को ब्राह्मण बनवाने को तैय्यार ही होंगे, तो भी उतना भी चीजों का स्वामी शूद्र कैसा होगा ?। यहाँ कुछ लोग ऐसे कहते हैं कि उन दानों से शूद्र, ब्राह्मण सदृश ही होगा न कि ब्राह्मण। यह ठीक नहीं। जहाँ प्रत्यक्षविरोध है वहाँ तत्सदृश अर्थ बताया जाता है। जैसे, धर्मा अर्थ और काम इन तीन में ही आसक्त पुरुष पशु है ( वे० डि० ) इसमें, पशु शब्द का अर्थ पशुतुल्य बताया जाता। ऐसा प्रकृत में नहीं। वर्णों को जन्म सिद्ध बताने वाली स्मृति से भी इसका बाध नहीं होगा। बाध मानने पर विकल्प हो जायगा। क्रिया में ही व्रीहि और यवों का विकल्प है न कि वस्तु में। अतः दानादि से शूद्र को ब्राह्मण बनवाने वाली स्मृति ही मुख्यार्थक है न कि जन्म सिद्धत्व बताने वाली। जन्म दो प्रकार का है (१) लौकिक (२) शास्त्रीय। लौकिक जन्म पशुपक्ष्यादि साधारण है। शास्त्रीय जन्म शास्त्रोक्त संस्कारों से मिलता है। यही शास्त्रीय कर्मों में लिया जाता है। हिरण्यगर्भदानादि से जो शूद्र, ब्राह्मण बनाये जाते हैं वे ऐसे दान के विना या एक रुपया से भी दूसरे शूद्रों को ब्राह्मण बनवा देंगे और उनके सन्तान भी अपने को जन्म सिद्ध बताने लगेंगे। इसको तुम मानोगे तो तुम्हारा जन्म ब्राह्मणत्व भी ऐसा ही हुआ समझा जायगा। यदि उसको तुम कर्म सिद्ध मानोगे तो, हमारा ही मत सिद्ध हो जाता है और जन्म से ही वर्णों का बताने वाली स्मृतियाँ अप्रमाणित हो जायंगी। वस्तुतः हमारा सिद्धान्त ऐसे दानादि से भी ब्राह्मणत्वसिद्ध नहीं किन्तु आधानादि कर्म और शमादि गुणों से ही है। यही श्रुति सम्मत है।

धनं सर्वमिति, तदुक्तम् "सर्वं स्वं ब्राह्मणस्येदं यत्किञ्चिज्जगतीगतम्। श्रैष्ठ्येनाभिजनेनेदं सर्वं वै ब्राह्मणोऽर्हति" स्वमेव ब्राह्मणो भुङ्क्ते स्वं वस्ते स्वं

ददाति च । आनृशंस्याद्ब्राह्मणस्य भुञ्जते हीतरे जनाः ( मनु० ११।१००+१ ) एवं शान्ति प० ७२ अध्यायेऽप्युक्तम् । अत्रासङ्गतिमूले द्रष्टव्या । यत्तु भारते तत्रैवोक्तं ब्राह्मणालाभे पृथिवी क्षत्रियं पतित्वेन वृणुत इति । तच्च श्रुतिविरुद्धम् । श्रुतौ तूक्तं न ब्राह्मणे राष्ट्रं रमते इति । दानं शूद्रेणेति, "दानं प्रधानं शूद्रस्य इत्याह भगवान् प्रभुः" ( सृष्टि० ९ ) "धनेन वैश्यशूद्रौ तु जपहोमैर्द्विजोत्तमः" तरेदापदमिति पूर्वेणान्वयः । धनं शूद्रस्येति, "शूद्रं तु कारयेद्दास्यं क्रीतमक्रीतमेव वा । दास्यायैव हि सृष्टोऽसौ ब्राह्मणस्य स्वयम्भुवा ॥ विस्रब्धं ब्राह्मणः शूद्रा द्द्रव्योपार्जनमाचरेत् । न हि तस्यास्ति किञ्चित्स्वं भर्तृहार्यधनो हि सः" । (मनु० ८) इति । सर्वं स्वं ब्राह्मस्यैवेति पूर्वमुक्त्वाऽत्र भर्तृहार्यधनो हि स इति कथनमप्यसङ्गतम् । स्वमते शूद्रस्याकिञ्चनत्वात् । त्रिवारमिति, "ब्रह्माण्ड कटाहाख्यमहादानस्य कर्मणः । करणात्सप्तवारस्य शूद्रोऽशूद्रो भविष्यति ॥ त्रिवारं गोसहस्रस्य करणेन जघन्यजः । च्युतः स्वजातितो नूनं वैप्रसाम्य प्रपद्यते ॥ ( लौ० स्मृ० अन्ते ) हिरण्यगर्भत्रितयदानमात्रेण तत्क्षणात् । विप्रत्वं परमाप्नोति वृषलो ( शूद्रः ) नात्र संशयः ॥ हिरण्यगर्भदानस्य चतुर्वारकृतस्य तु । महिम्ना वृषलस्यापि मौञ्ज्यामधिकृतिर्भवेत् । ततोऽपि कृतया मौञ्ज्या शूद्रो ब्राह्मण्यमृच्छति ॥ ( कपिलस्मृ० ८८३ ) इति ।

टीकाकारैर्यदत्रोक्तं सर्वं विप्रस्य चेतिगीः । अर्थवादस्त्वियं नातो दर्शितापत्तय स्त्विह ॥
राजानो धनिनश्चैव धनं दातुं समुत्सुकाः । पापभीत्या ब्राह्मणाश्च धनं नैव जिघृक्षवः
तेन दातृग्रहीत्रोश्च तत्तत्कर्मणि निर्भयम् । प्रवर्तनार्थमेवोक्तं विप्रस्यैवाखिलं त्विति२२३
तन्न युक्तं यतः पूर्वग्रन्थे दानप्रतिग्रहौ । न प्रसक्तावतश्चायमपूर्वो विधिरेव हि २२४
अर्थवादोऽपि तत्रैव यत्र रागात्स्वयं जनः । न प्रवर्तेत नाकादिफलके श्रौतकर्मणि २२५
यत्र चेन्द्रियभोगादिहेतुवित्तप्रतिग्रहे । स्वतो जनप्रवृत्तिर्हि नात्रार्थवादगीर्भवेत् ॥६२६॥
यदि प्रतिग्रहे भीरुं प्रत्युक्तमिति मन्यते । तदैवं खलु वक्तव्यं प्रतिगृह्य धनं द्विजः २२७
वेद विद्याप्रचारार्थं स्वराष्ट्रपरराष्ट्रयोः । तद्धनं विनियुञ्जीत अन्यथा स प्रतिग्रही २२८
यमलोके सहस्राब्दान् कृतान्तबहुयातनाः । अनुभूय पुनर्भूमौ ग्रामसूकरतामियात् २२९
तस्मात्प्रतिग्रहीता तद्धनं दारादिपोषणे । नैषदप्युपयुञ्जीत स्वभद्रमिच्छुकस्त्विति २३०
दातारं प्रति वाच्यैवमासीद्वक्तव्यमास्तिकैः । स्वीयकुटुम्बनिर्वाहाद्यस्य स्यादधिकं धनम्
वेदशास्त्रप्रचारार्थं विनियुञ्ज्यात्स तद्धनम् । अन्यथा नरकं गच्छेद्यावच्चन्द्रदिवाकरम्
धनप्रतिग्रहोऽत्यन्तं ब्राह्मणस्याभिधीयते । विनियोगो गृहीतस्य क्वापि नाभिहितः स्मृतौ
याजनाध्यापनेनापि दृश्यते धनसञ्चयः । स्वात्मकर्तृकयागेऽपि महदेव धनार्जनम् ॥२३४
प्रतिग्रहसमायातधनेन स्वात्मकर्तृकम् । यागदानादिकं नैव युक्तं न्यायार्जितेन तत् २३५
आर्त्विज्याध्यापनाभ्यां यन्न्यायार्जितं तदेव हि । न तु प्रतिग्रहायातं प्रायश्चित्ती प्रतिग्रही
यत्प्रायश्चित्तहेतुः स्यात्तन्न न्यायार्जितं भवेत् । प्रायश्चित्तविधानेन दोषोऽप्यत्रानुमीयते
ब्राह्मणायैव चेत्सर्वं प्रत्तं भूम्यादिकं धनम् । ब्राह्मण्यमेव नष्टं स्यात्तद्रक्षणक्रियादिषु२३८



हलभूकर्षणं यस्य नास्ति गोपालनादिकम् । तस्मै भूम्यादिदाने किं प्रयोजनं भविष्यति ॥
हलकर्षणगोरक्षाकर्मादौ यस्य योग्यता । तस्मा एतानि देयानि इहामुत्र फलार्थिना२४०
वेदस्याध्ययनं ब्रह्मयज्ञं चावृत्तिरित्यपि । तत इचाध्यापनं कार्यं नित्यनैमित्तिकादिकम्
एतद्ब्राह्मणकार्याणि कृषिगोरक्षणादिषु । कथं स्थितस्य सिध्येयुर्ब्राह्मणत्वविरोधिषु २४२
अतो धनादिकं देयमाश्रमत्रयवासिने । याजनाध्यापनाद्यन्यवृत्तिहीनाय धार्मिकैः ॥२४३॥
एतेभ्यो बहु दत्तं चेत्तेन ते दिव्यसन्ततिम् । प्रवर्धयेयुस्सततं शिष्यप्रशिष्यरूपिणीम्२४४
तत्सर्वं चेद्गृहस्थाय दीयते स तु सर्वदा । अध्यापनादिकं त्यक्त्वा ग्राम्यभोगे निमज्जति
स तेन पुत्रपौत्रादि बन्धकारणसन्ततिम् । वर्धयेत्तेन दातृभ्यः श्रेयो नेति भृगुस्मृतौ२४६
प्रतिग्रहे प्रवृत्त्यर्थं विप्रस्यैवाखिलं त्विति । वाक्यं समर्थयेच्चेत्त्वं ब्रूह्यन्यस्यापि कारणम्
ब्राह्मणस्य न दोषोऽस्ति सर्वाभक्ष्यस्य भक्षणे । अगम्यगमनेनापि ब्राह्मण्यं नैव नश्यति
स्तेयादिकं प्रकुर्वाणो ब्राह्मणो ब्राह्मणोत्तमः । इत्यादिवाक्यजातस्याप्युपपत्तिं प्रदर्शय२४९
ब्राह्मणो नावमन्तव्यो न हन्तव्य इतीरितम् । स सर्वानिष्टकृत्सर्वपापकृच्चापि चेद्यदि
स्वकीयसम्पदा साकं बहिष्कार्यः स्वदेशतः । येनान्यत्रापि दुष्कर्म स कर्तुं प्रभवेदिति२५१
वस्तुस्थित्यनुसारेण तथोक्तमिति चेद्वदेः । तदा वेदादिसंत्यागे कुतः शूद्रत्वमुच्यते २५२
कामक्रोधादिकं याव त्स्याच्चतुर्वेदविद्यपि । न तावद्ब्राह्मणत्वं स्यादित्याह वृद्धगौतमः
एतादृशस्मृतीनां का गतिः स्याद्ब्रूहि चोत्तरम् । ब्राह्मण्यं येन चोरस्य त्वया संरक्षितंभवेद्
आङ्ग्लेयो नैव हन्तव्यःसर्वपापरतोऽपिवा।यदा तस्याधिकारोऽत्र नावमान्योऽपि सोऽभवत्
एवं मदान्धभूपाल गुरुब्राह्मणशासने । दुष्टोऽपि ब्राह्मणः पूज्यो नावमन्तव्य एव हि २५६
दुष्टस्याप्येकवर्गस्य यदा दण्डो न राजतः । तदा त्वपरवर्णस्य शिष्टस्यापि भवेद्धि सः२५७
अदण्डनाच्च दण्ड्यानां मदण्ड्यानां च दण्डनात् । अचिरादेव तद्राष्ट्रं कृत्स्नमेव विनश्यति
मध्यकालिकराजानां नामभिः सह संक्षये । कारणं त्विदमेवासीज्जातिब्राह्मणलालनम् ॥

टीकाकार यहाँ कहते हैं कि सर्वं स्वं ब्राह्मणस्येत्यादि वाक्य अर्थवाद मात्र है न कि मुख्यार्थक राजा और धनी लोग पुण्य के लिये बहुत प्रकारों से दान देना चाहते थे और पापभीति से ब्राह्मण उसे लेना नहीं चाहते थे। ऐसी परिस्थिति में निर्भयता से दान लेने के वास्ते वह वाक्य कहा गया है ॥ उनका यह कहना ठीक नहीं। क्यों यहां दान का प्रसङ्ग ही नहीं है। अर्थवाद भी वहीं रहता हैं जहाँ रागतः प्रवृत्ति न होती हो। जहाँ दान लेने के लिये सब लोग स्वतः तय्यार हैं वहाँ अर्थवाद नहीं रहता है। यदि पाप भीरु को दान में प्रवृत्त करवाने के लिये ऐसा कहा हो तो दूसरे प्रकार से कह सकते थे कि धन को लेकर उसे स्वराष्ट्र और पर राष्ट्रों में वेद विद्या प्रचार के लिये विनियुक्त करें, नहीं तो नरक भोगेगा, अथवा देने वाले के प्रति भी ऐसा कह सकते थे कि जिसके पास अधिक धन हो वह उसे वेदशास्त्र प्रचार के लिए

विनियुक्त करें, नहीं तो नरक में जायेगा। दान लेने के लिये ब्राह्मण को बहुत लिखा गया है किन्तु उसका विनियोग कहीं लिखा नहीं। यागादि करना भी न्यायार्जित धन से होता है न कि दान के धन से। न्यायार्जित धन भी वही है जो आर्त्विज्य और अध्यापनादि से मिला हो। धन प्रतिग्रह के दोष वारणार्थ प्रायश्चित्त लिखित है। इस से मालूम पड़ता है कि प्रतिग्रह दोष हेतु है। गो भूहिरण्यादि सब ब्राह्मण को दिये जायेंगे तो उनको संभालने में उसका ब्राह्मणत्व ही नष्ट हो जायगा। जिनको हल चलाना और गोपालनादि कर्म नहीं है उनको उन चीजों को देने से भी कुछ फल नहीं रहेगा। हल चलानादि जिसका खास काम है उसी को उन्हें देना चाहिये। अधीत वेद का ब्रह्म यज्ञादि में प्रतिदिन आवृत्ति करना इत्यादि ब्राह्मण कार्य, गवादि पालन करने वालों से नहीं हो सकते। अध्यापनादि जीविका वृत्ति जिनको नहीं है उन्हीं को धनदानादि देना लाभदायक है। यदि उन्हीं को अधिक से अधिक धन दिया जायगा तो उससे वे शिष्यादि दिव्य सन्तति को बढ़ा सकेंगे। यदि उसी को गृहस्थों को दिया जायगा तो अध्यापनादि को छोड़कर वे ग्राम्य भोगों में लगे रहेंगे और पुत्रपौत्रादि बन्ध कारण सन्तति को बढ़ायेंगे। उससे दाता को अनिष्ट ही होगा। प्रतिग्रहमें प्रवृत्तिके लिये वह वाक्य कहा गया है ऐसा तुम समर्थन करोगे तो अभक्ष्य भक्षण और अगम्य गमनादि करने पर भी ब्राह्मण नष्ट न होगा और चोरी इत्यादि करने पर भी वह, ब्राह्मणोत्तम ही है, सब पाप करने पर भी ब्राह्मण को दण्ड या अपमान नहीं करना चाहिये, ऐसा क्यों कहा गया, तुम उनको कैसे समर्थन करोगे। यदि वस्तुस्थिति के अनुसार ऐसा कहा गया कहोगे तो वेदादि छोड़कर प्रापंचक काम करने वाले शूद्र हैं और काम क्रोधादि जब तक रहेगा तब तक चारवेद जानने वाले में भी ब्राह्मणत्वं नहीं रहेगा ऐसा क्यों कहा गया ? बताओं जिससे चोर भी तुम्हारे द्वारा ब्राह्मण हो सके। अंग्रेजों के शासन समय में उनके लिये भी दण्ड वगैर जैसे दिया नहीं जाता था वैसा ही मदोन्मत्त राजाओं के गुरु ब्राह्मण भी स्वेच्छाचारी होना उचित ही है। जहाँ दुष्ट को दण्ड नहीं दिया जाता है वहाँ निर्दोषी का भी दण्ड हो सकता है। दण्डनीय को दण्ड नहीं देना और और अदण्ड्य को दण्ड देना ये दोनों जिस राष्ट्र में हों उस राष्ट्र का नाश ही होगा। इन्हीं दोषों से ही मध्यकालीन क्षत्रिय राजाओं का नाश हो गया।

ब्राह्मणादिहितार्थी चेन्मिथ्याभाषणतोऽपि चादोषो न स्यादिति प्रोक्तं तेनान्येऽप्यनृतोक्तयः
रागद्वेषवशात्सर्वे नत्तत्कार्यवशंगताः। स्वत एवानृतं ब्रूयुर्न तच्छास्त्रेणशिक्ष्यते २६१
तथैव मद्यमांसादि भक्षणं चापि रागतः। प्राणिहिंसामूलकत्वात्पापहेतुर्भवेदपि ॥२६२॥



दोषाभावश्च तत्रापि नोपदेश्यो नृशास्त्रतः। तथापि धर्मशास्त्रैस्तद्बोध्यते बहुविस्तरात्
शृगालवन्मांसभक्षे मैथुने कुक्कुरादिवत्। म्लेच्छवन्मद्यपानेऽपि दोषाभावो मनुस्मृतौ
श्रुतौ स्मृत्यन्तरे मांसं बहुधैव निषिध्यते। मनावपि तदन्यत्र निषिद्धं मांसभक्षणम् २६५
विहितेऽपि च यत्र स्याद्रागस्तन्न विधीयते। किन्त्वन्यस्य निषेधे च तद्विधिः पर्यवस्यति
पञ्चनखाः पञ्च भक्ष्या विधिरेषोऽन्यवर्जने। पर्यवस्यति नत्वेतद्विधाने रागबाधितः २६७
यदि पञ्चनखानद्यान्नरो दोषस्तदा भवेत्। अशास्त्रविहितत्वेन हिंसाहेतुत्वकारणात्
एवं स्वर्गेऽपि सर्वेषां रागः स्वतः प्रवर्तते। तत्साधकोऽपि यागादिविधिरन्यनिवर्तने २६९
रागस्य निष्कृतित्वेन यागः श्रुत्या विधीयते। न स्वर्गसाधकत्वेन त्विति व्यासादिसम्मतम्
कामदोषनिवृत्यर्थं यागानुष्टानमिष्यते। न तु स्वर्गफलार्थं तद्रोचनार्थी फलश्रुतिः २७१
एवं च विधयः सर्वे परिसंख्याविधायकाः। न बोधयन्त्यपूर्वार्थमपूर्वार्थो निषेधगीः २७२
ननु चैवं निषेधोक्तिर्व्यर्था स्याद्विधिवाक्यतः। निषेधार्थस्य सिद्धत्वादिति चेदत्रोच्यते २७३
अत्यावश्यकतार्थो हि नञ्शब्दात्प्रतीयते। विधिना नञभावेन नात्यावश्यकतामतिः २७४
विहितान्यपरित्यागो भवेद्यस्य सुदुष्करः। विहितं तेन कर्तव्यमित्यर्थो विधिवाक्यतः २७५
देहयात्रार्थकर्माणि कर्तव्यान्येव मानवैः। तदन्यकर्मणां चित्तशुद्ध्यर्थत्व-प्रयोजनम् २७६
अतस्तत्र परप्राणि क्लेशलेशोऽपि नेष्यते। परक्लेशात्स्वकीयान्तः करणं मलिनं भवेत् २७७
चित्तमालिन्यतः पुंसां हितकृत्कर्म न स्फुरेत्। तामसानि च कुर्वाणो नारकीं गतिमाप्नुयात्
तत्रापि यदि हिंसा स्यात्तदाऽनर्थफलं ध्रुवम्। निष्कर्मभावसिद्धार्थं कर्म शास्त्रैर्विधीयते
अज्ञानी मनुजः किञ्चिदकुर्वन्नैव तिष्ठति। दुष्कर्मवारणार्थं च श्रौतकर्म विधीयते २८०
यो हि किञ्चिदकुर्वंश्चेत्स्थातुमर्हति पूरुषः। न तमुद्दिश्य वेदेन किञ्चित्कर्मविधीयते २८१
कर्म तथाविधं प्राणिहिंसां त्यक्त्वाऽपि वैदिकैः। कर्तुं च शक्यते हिंसा किमर्था नरकप्रदा
क्रत्वङ्गत्वेन वेदेषु हिंसाविधिर्भवन्मते। दोषाभावस्तु हिंसायां तावता नैव सिद्ध्यति २८३
हिंस्यमानपशोः पादपुच्छ देह प्रकम्पनैः। हिंसानुमीयते तत्र सा नास्तीत्युच्यते कथम् २८४
प्रत्यक्ष बाधितं चार्थं यथा वेदो न बोधयेत्। तथाऽनुमाबाधितं च वेदो नैव प्रबोधयेत्
तस्मात्प्रत्यक्षतश्चानुमानेन यन्न बोध्यते। तदेव वेदतो बोध्यमित्युक्तं वेदकोविदैः २८६
अस्तु लोकान्तरे स्वर्गस्तद्भोगस्तत्र यज्वनाम्। तथापि पश्चाद्धिंसायाः फलभोगो भवेदपि
इष्टादिकारिणां स्वर्गात्किञ्चिच्छेषेण मानवम्। आगच्छतां प्राणिहिंसाफलदुःखमपीक्ष्यते
एतद्भूतोत्थविज्ञानघननाशं तु तान्यनु। ब्रुवन्वेदोऽविनाशित्वसाधकानुमयाऽर्थ्यते २८९
आत्माऽविनाशी प्रध्वंसप्रागभावोभयोरपि। सति चाप्रतियोगित्वे भावत्वेन प्रतीतितः
आत्मा चाप्रतियोगी स्यात्प्रागभावस्य नश्यतः। प्राक्कर्म फलभोक्तृत्वाद्वर्तमानेऽपि जन्मनि
मातृगर्भसमुत्पन्नमात्र जीवशरीरिण। स्तन्यपाने प्रवृत्तत्वात्स तदप्रतियोग्यतः ॥२९२॥
प्रध्वंसाप्रतियोगी स्यादात्मा भावि फलेच्छया। यागादौ प्रवृत्तत्वाद्वर्तमानेऽपि जन्मनि
कृतहानाकृतप्राप्तिप्रसङ्गोऽप्यन्यथा भवेत्। तस्मादात्माऽविनाशीति चानुमानेन सिध्यति
नैव चात्र विनाशित्वबोधकश्रुतिरन्यया। श्रुत्या तदविनाशित्वबोधिकया हि बाध्यते २९५

श्रुत्यैवान्यश्रु तेर्बाधे विकल्पापत्ति संभवात् । न हि वस्तुनि कुत्रा पि विकल्पः सम्प्रदृश्यते
परस्पर विरुद्धासु श्रुतिप्रोक्तक्रियासु सः । षोडशिग्रहणे चातिरात्रे तस्याग्रहेऽपि च२९७
एवं श्रुत्युक्तहिंसाऽपि चानुमानेन बाध्यते । श्रुत्युक्ता च मुखादिभ्यो वर्णोत्पत्ति स्तथैव हि
योनिजत्वानुमानेन बाध्यते चोक्तरीतितः । नापि सा योनिजत्वप्र-बोधक श्रुति सद्गिरा
शुद्ध्यशुद्धी शास्त्रगम्ये न त्वध्यक्षादिगोचरे।अतः शङ्खे ह्यशुद्धिःस्यान्न प्राण्यङ्गत्वहेतुना
भुक्तभोजनपात्राणि जलप्रक्षालितान्यपि । शुद्धानीव प्रतीयन्ते प्रत्यक्षादिप्रमाणतः ३०१
मृदा प्रक्षालितान्येव विशुद्धानीति शास्त्रतः । मृताशौचविशुद्धी च शास्त्रमात्रैकगोचरे ॥
प्रत्यक्षमनुमानं च शास्त्रमात्रैकगोचरम् । बाधितुं नार्हतो नापि शास्त्रं तद्द्वयगोचरम्
तथा च स्वीयहिंसा स्वप्रत्यक्षेण परस्य च । हिंसाऽनुमानगम्याऽतस्तदभावो न शास्त्रतः
केनापि वा निमित्तेन कुत्रापि वा कदा चन । कस्यापि जीवमात्रस्य हिंसा हितावहा नहि
भवानी जगतो माता वध्यमानपशोरपि । तच्छिशोस्तत्पुरो हत्या तत्कोपस्यैव कारणम्
इतोऽपि मूर्खता का स्याद दुष्टता वा भविष्यति।तच्छिशो र्हनने तस्याः प्रसादप्राप्तिचिन्तनम्
एवमेव परप्राणिहिंसया सुखमात्मनः । स्वर्गलोके भवेद्धीति चिन्तनं चापि मूर्खता ३०८
स्वकीयपाप भोगार्थं पशुपक्ष्यादयो भुवि । ईश्वरेणैव सृज्यन्ते नश्यन्ति तद्विनाशतः ३०९
तन्मध्ये तांश्च यो हन्यात्स तत्तत्पशुदेहतः । तत्पापं द्विगुणं भुञ्ज्यादिति चेश्वरशासनम्
परमेश्वरसृष्टौ हि मनुष्यो न मृगेन्द्रवत् । मांसाशी किन्तु गोमेषमहिषादीव शाकभुक्३११
दंष्ट्रिनो जिह्वया तोयपायिनो रात्रिदृष्टयः । अरण्यस्थाः क्रूरसत्वास्ते मांसाहारिणो मता
मुखे सक्रमदन्ता ये चौष्ठाभ्यामम्बुपायिनः । विनाऽऽलोकमपश्यन्तस्ते शाकाहारभोजनाः
नैते मांसं स्पृशन्तीषन्मांसस्पृष्टजलंह्यपि । भगवन्नियमं सम्यक् पालयन्तः स्वभावतः३१४
मनुष्यः प्राणिमात्रेषु श्रेष्ठो भूत्वाऽपि बुद्धिमान् । पशुभ्यो नियमभ्रष्टस्तेन चानर्थमश्नुते
मनुष्यस्तु न मांसाशी दर्शितेश्वरसृष्टितः । किन्तु शाकफलाहारी तद्विरुद्धाऽप्रमा स्मृतिः
अण्डजास्तूभयाहारा भवन्तीश्वरसृष्टितः । जरायुजेष्वीश्वरीय नियमोऽत्र प्रदर्शितः ३१७
यज्जातीयस्य यद्वस्तु नैजाहारतयोच्यते । स तच्चापक्वमेवात्ति सृष्टिधर्मानुसारतः ३१८
मांसं मर्त्यस्य चेन्नैजं भक्ष्यं स्यात्स कदाचन । अपक्वमपि भुञ्जीत जनैस्साधुरसं स्यत ३१९
नचैतदृश्यते लोके किन्त्वपक्वपलाशिनम् । प्रत्यक्षराक्षसंलोका मन्वीरंस्तं द्विपान्मृगम् ३२०

ब्राह्मणादि का हित के लिये झूठ बोलने पर भी दोष नहीं होगा लिखने का कारण सब लोग मिथ्यवादी हो गये हैं । प्रयोजन वश आदमी स्वयं ही झूठ बोल देता है तो उसको शास्त्र में बताना ठीक नहीं । एवं मद्यमांसादि भक्षण भी राग से ही होता रहता है किन्तु प्राणि हिंसामूलक होने से पाप अवश्य ही होगा, उससे पाप नहीं होगा ऐसा भी धर्मशास्त्र के द्वार बताना ठीक नहीं किन्तु मनुस्मृति में ऐसा बताया गया है । विधिविहित में भी जहाँ राग हो वहाँ तदन्य निषेध में ही यात्पर्य बताया जाता है जैसे "पञ्च पञ्चनखा भक्ष्या" यदि पञ्चनख भक्षण हुआ हो तो अविहित होने से दोष ही लग जायगा । ऐसे ही



स्वर्ग में भी सब का राग होता है । अतः तत्साधक याग विधि का तात्पर्य तदन्य वर्जन में ही है । इस प्रकार सभी विधियाँ परिसंख्याबोधक ही हैं । शरीर निर्वाहिक कर्म तो सब को करना ही चाहिये । उससे अतिरिक्त विहित कर्मो का फल चित्तशुद्धि ही है । स्वर्गादि फल प्ररोचनार्थ बताया जाता है । उसमें भी यदि जीव हिंसा हो तो बहुत ही अनर्थ होगा । जहाँ कहीं प्राणिहिंसा क्रत्वङ्ग कही गयी हो तो भी उसमें दोषाभाव कहाँ लिखित है । यज्ञ में जब बकरा वगैरा मारे जाते है उनका शरीर कम्पन से ही उनमें हिंसा अनुमित हो जाती है तो उसका अभाव शास्त्र के द्वारा बताया नहीं जा सकता । प्रत्यक्षविरुद्धार्थ की तरह अनुमानविरुद्धार्थ को भी वेद नहीं बतायेगा । इसलिये कहा गया है कि प्रत्यक्ष और अनुमान से जो विषय मालूम नहीं होगा उसी को बताने में वेद का तात्पर्य है । शुद्धि और अशुद्धि शास्त्रमात्र गम्य है । अतः इनको प्रत्यक्ष और अनुमान भी बता नहीं सकते । किसी निमित्त से भी किसी भी प्राणि को मारना नहीं चाहिये । श्री दुर्गादेवी इत्यादि देवतायें, जैसे मनुष्यों की मातायें हैं वैसे ही बकरा वगैरा पशुओं की भी हैं । उस माता की कृपा के लिये आदमी यदि उसके छोटे बच्चों को मारता है तो इससे भी बढ़कर मूर्खता क्या होगी एवं अपने स्वर्ग सुख के लिये याग में पशुओं को मारना भी मूर्खता ही है । सभी प्राणियाँ पूर्व जन्म कृत पुण्य पाप फल भोगने के लिये पशुपक्ष्यादि के रूप में ईश्वर प्रेरणा से पैदा होते हैं और वह फल भोग पूरा होते ही वे मर जाते हैं इसी बीच में जो मनुष्य उनको किसी निमित्त से मारेगा वह जन्मान्तर में वही प्राणि बनकर उसका शेष कर्म भोगेगा मनुष्यजातिमांसाहारी न ही किन्तु गोमहिषादि की तरह शाकाहारी है । जिनके मुख में तीक्ष्ण दो दान्त रहते हैं, जो जिह्वा से पानी पीते और जिनके आँखे रात को देखते हैं, वे ही मांसाहारी हैं । जिनके मुखमें दान्त क्रम बद्ध रहते हैं जो ओण्ठों से पानीपीते हैं और जिनके आँखे प्रकाश में वस्तु को देखते हैं, वे ही शाकाहारी हैं । जरायुज सृष्टि में ये दो प्रकार के प्राणी है । इस भगवत्सृष्टि के अनुसार मनुष्य शाकाहारी हो हैं न कि मांसाहारी । मनुष्य संसर्ग से कुत्ते बिल्ली कभी भातरोटी खाने पर भी तदतिरिक्त मांसाहारी जन्तु कभी भी फलफूल खाते नहीं और शाकाहारी जन्तु मांस का पानी तक छूते नहीं । अण्डज प्राणि उभयाहारी ही हैं । जिनका जो आहार स्वाभाविक रहता है वह उसे अग्नि पक्वके विना ही खाते हैं । यदि मनुष्य का भी मांस स्वाभाविक आहार हो तो वह गेहूँ चावल इत्यादि की तरह मांस को कभी थोड़ा कच्चा खा सकता किन्तु लोक में कोई भी ऐसा नहीं करता । जो कच्चा मांस खायेगा उसे लोग प्रत्यक्ष राक्षस कहेंगे । गेहूँ वगैरा

कच्चा खाने पर ऐसी निन्दा नहीं किन्तु अच्छा ही समझा जाता है। जब मनुष्य मात्र का मांसाहार ईश्वरीय नियम का विरुद्ध ही है तो अमुक जन्तु का मांस खा सकते हैं और देवता को अर्पण करके खा सकते इत्यादि शास्त्रनियम बाद में ही कल्पित हैं। अतः वे अप्रामाणिक हैं।

दुश्शीलोऽपि भवेत्पूज्यो ब्राह्मणः सर्वथा नृणाम् । शूद्रो जितेन्द्रियोऽपीह नादर्तव्य इतीरितम्
जितेन्द्रियो जितक्रोधो यः स्यात्स ब्राह्मणो मतः । अतद्गुणो भवेच्छूद्र इति वाधूलसद्वचः॥
जितेन्द्रियस्य पूजोक्ता ब्राह्मे शूद्रसुतस्य हि । अजितेन्द्रियविप्रस्य शूद्रत्वमपि सूचितम् ३२३
जितसर्वेन्द्रियस्यान्यराष्ट्रेष्वपि च मान्यता । अवैदिकमतेष्वस्ति गुणग्राहित्वमेव हि ३२४
अतोहि शीलसम्पन्ना विश्वासार्हाश्च ते सदा।प्रभवन्त्यपरं दृष्ट्वास्वीय राष्ट्रयशस्कराः ३२५
अत्र दुश्शीलसन्मान-बोधकस्मृतिहेतुतः । दुश्शीला वञ्चका भ्रष्टा दुराचाराश्चमनवाः ।।
दुश्शीलत्वंहि निन्दार्हं तच्चेत्पूजार्हमुच्यते । कुतस्तद्ब्राह्मणस्त्यक्त्वा सदाचारपरो भवेत्
दुश्शीलत्वं हि विप्रस्थं सुशीलमिति गण्यते । सुशीलत्वं च शूद्रस्थं दुश्शीलमिति ते मतम्
एतावता सुशीलत्वं दुश्शीलत्वं च वा भुवि । स्वतो नास्तीति पाखण्ड प्रथायामिति चागतम्
जातिब्राह्मणनिष्ठा ये ते सर्वे सुगुणा मताः । अब्राह्मणगता ये ते सर्वे स्युर्दुर्गुणा स्त्विति
एवमेव भवत्स्मृत्या पराशराख्ययोक्तया । सङ्ग्रहेण प्रवक्तव्यमासीत्किन्त्वन्यथेरितम् ३३१
हन्त जातिप्रथायास्तु तिष्ठापयिषया भवान् । रात्रिं कर्तुं दिनं रात्रिं दिनं च प्रभविष्यति
दुश्शीलस्यापिब्राह्मण्यं पूज्यत्वंचापि चेद्भवेत्।पतितो ब्राह्मण इत्यादि व्यवहारोऽस्ति कस्यवा
चौर्यादिषु रतोऽप्येवं भवेच्चेद्ब्राह्मणोत्तमः । ब्राह्मणाधम इत्यादिव्यपदेशोऽपि कस्य वा ॥
दुश्शीलस्यापि ब्राह्मण्यं ज्ञायतां केन हेतुना । न हि गवीव शृङ्गं तच्छिरस्येकं प्रदृश्यते ३३५
दुश्शीला वा सुशीला वा शृङ्गाभ्यां ज्ञायतेऽत्र गौः।ज्ञायेत ब्राह्मणः केन भवानेव ब्रवीतु भो
दुश्शीलत्वं हि दुश्शीलवंशजत्वस्य सूचकम् । पितुर्वा भजते शीलं मातुर्वेति तव स्मृतेः ३३७
दुश्शीलविप्रवंशीया दुश्शीलाः स्युस्समेऽपि ते । अतश्चाद्यतने जातिविप्रे तद्दृश्यते बहु ३३८
सुशीलशूद्रवंशीयाः सुशीलाश्च स्युरित्यपि । अङ्गीकृतं तव स्मृत्या शूद्रता तर्हि शोभना
तदुक्तं ब्राह्मणाचाराः शूद्रा ये जातिविभ्रमाः।शूद्राचाराश्च ते विप्राः ये जात्या ब्राह्मणब्रुवाः
मार्कण्डेयस्मृतावुक्तं दुर्वृत्तो न हि पूज्यताम् । शूद्रादप्यतितुच्छोऽयं तन्मुखं नेक्ष्यतामिति

पराशर स्मृति में कहा गया है कि दुश्शील होने पर भी ब्राह्मण पूज्य है। शूद्र सुशील और जितेन्द्रि होने पर भी वह पूज्य नहीं है। सुशील का दूसरे राष्ट्रों में भी मान्यता है। अतः वहाँ के लोग चोरी बदमाशी न करके सुशील ही रहते हैं। यहाँ तो दुश्शील को मान्यता देने का कारण बहुत लोग दुश्शील बन जाते हैं नकि सुशील। ब्रह्मपुराणमार्कण्डेयस्मृत्यादि में लिखित है कि ब्राह्मणपुत्र हो या शूद्रपुत्र जितेन्द्रिय और सुशील ही पुजनीय और वही ब्राह्मण है। दुश्शील, शूद्र से भी अति तुच्छ है। पिता या माता का शील पुत्र में आजाता है तो



वर्तमान दुश्शील ब्राह्मण के सारे पूर्वज लोग दुश्शील और वर्तमान सुशील शूद्र के सारे पूर्वज सुशील ही थे ऐसा मानना पड़ेगा। यदि ब्राह्मण में रहने वाला दुश्शीलत्व को भी सुशीलता और अब्राह्मण में रहने वाली सुशीलता को भी दुश्शीलता मान लिया जाय तो लोगों में स्वतः सुशीलत्व और दुश्शीलत्व नहीं रहेंगे किन्तु जो कुछ भी ब्राह्मण में रहेगा वही सुशीलता है और अब्राह्मण में जो कुछ भी रहेगा वही दुश्शीलता है कहना होगा। दुश्शील ब्राह्मण भी यदि पूजनीय हो तो पतितब्राह्मण किसको कहा जाय।

दुश्शीलोऽपीति, तदुक्तम् "दुश्शीलोऽपि द्विजः पूज्यो न शूद्रो विजितेन्द्रियः। कः परित्यज्य दुष्टां गां दुहेच्छीलावतीं खरीम्" (परा. ९।३२) इति ॥ तदन्यत्र च वृत्तरहितस्य दुश्शीलस्य पूजा निषिद्धा। तद्यथा "दूष्यः स्याद्वृत्तदोषेण न पूज्योऽयं तु पामरः। शूद्रादप्यतितुच्छोऽयं तन्मुखं नावलोकयेत्" (मार्क० स्मृ० ) एवं तत्रैवोक्तम् "वृत्तमेव ब्राम्हणस्य तन्महत्वैककारणम्। वृत्तहीने च तद्भूयः सति सर्वं निरर्थक" मिति। वृत्तं नाम शीलं तदेव महत्वस्य पूजायाः कारणमित्यर्थः। ब्राह्मे सर्पयुधिष्ठिर संवादे च (वनपं० २४७पृ०द्र०) शीलवत एवं पूज्यत्वं ब्राह्मणत्वं चोक्तं न तु दुश्शीलस्य। तथा हि "कर्मभिः शुचिभिर्देवि शुद्धात्मा विजितेन्द्रियः। शूद्रोऽपि द्विजवत्सेव्य इति ब्रह्माऽब्रवीत्स्वयम्। सर्वोऽयं ब्राह्मणो लोके वृत्तेन हि विधीयते वृत्ते स्थितश्च शूद्रोऽपि ब्राह्मणत्वं च गच्छति। शतपथे चाश्वमेधप्रकारणं (तत्रस्थगायत्र्यादिकं) अजानतो ब्राह्मणस्य ब्राह्मणसमाजतो निष्कासः रथकारगृहे वासः, आहार-पानीयादिकं च तस्मै अश्वादिभिस्सह बहिरेव देयमिति "यो ब्राह्मणस्सन्नश्वमेधस्य न वेद सोऽब्राह्मणः, ज्येय एव सः पानं करवाथ, खादं निवपाथ, रथकारगृहे वो वसतिः" (का १३।२।१५) इत्यादिनोक्तम्। तत्र यो ब्राह्मण स्सन्नित्यत्र ब्राह्मणशब्दस्य ब्राह्मणपुत्र इत्यर्थः। तमुद्दिश्याब्राह्मणत्व मत्र विहितम्। वाधूलस्मृतौ तु "शान्तं दान्तं जितक्रोधं जितात्मानं जितेन्द्रियम्। तमेव ब्राह्मणं मन्ये शेषाः शूद्राः प्रकीर्तिताः" इत्यादिना जितेन्द्रियस्य ब्राह्मणत्वोक्तौ तस्यैव पूज्यत्वमित्यायाति। दुश्शीलस्य हरिभक्तिदूरत्वात्तस्य श्वपचत्वमपि पाद्मे प्रोक्तम् "हरेरभक्तो विप्रोऽपि ( विप्र पुत्रोऽपि ) विज्ञेयः श्वपचाधिकः। हरिभक्तः श्वपाकोऽपि (पूर्वं कदाचित् श्वपाको न तु भक्तिकाले) विज्ञेयो ब्राह्मणाधिकः ॥ स कथं ब्राह्मणो यस्तु हरिभक्तिविवर्जितः। स कथं श्वपचो यस्तु भगवद्भक्तिमानसः" ( क्रियायोग १६।३-४ ) इति। एतत्सर्व - प्रमाणानुसारेण दुश्शील ब्राम्हणस्य पूज्यत्वोक्तिरप्रामाणिकी इति निर्णीयते। पितुर्वेति, "पित्र्यं वा-भजते शीलं मातुर्वोभयमेवं वा। न कथञ्चन दुर्योनिः प्रकृतिं स्वां नियच्छति "(मनु० १०।५९ ) इति। तदुक्तमिति "शूद्राश्च ब्राम्हणाचाराः शूद्राचारास्तथा द्विजाः" ( बृहत्परा० १ ) इति

सृष्ट्यादौ ब्राह्मणाः शीलसम्पन्नाःसत्यवादिनः।शारीरकोपभोगार्थयत्नशून्याः स्म सन्ति ते
इदानीं ब्राह्मणाः प्रायो दुश्शीलाः कूटभाषिणः ।सर्वदा देहभोगार्थमहायत्ना भवन्ति च ४३
प्राचीनब्राह्मणाः सर्वे वेदविद्यारताःसदा । नित्यनैमित्तिकैः शिष्टाचारैर्युक्ता हि चाभवन्
अद्यतनास्तु ते प्रायो म्लेच्छभाषां समाश्रिताः।येन केन प्रकारेण यापयन्ति स्म जीवितम्॥
पूर्वकालिकविप्रा हि वेतनग्राहिजीविकाम् । शूद्रवृत्तिं मन्यमानाः तां त्यजन्ति स्म सर्वदा
वर्तमानास्तु ते प्रायस्तामेव बहुमन्वते । प्रधावन्ति तदर्थं चाहमहमिकयैव हि ॥३४७॥
नचैतद्युज्यते वक्तुं यदापत्कालिकी गतिः । यया ब्राह्मणकर्तव्यं त्यक्त्वा तेऽन्यगतिं श्रिताः
तदयुक्तं यतश्चापत्काले कश्चिदनिच्छया । कदाचित्कुत्र चित्कुर्याद्बुद्धिमानपि निन्दितम्
नात्मेच्छया सदा वंशपारम्पर्येण सुस्थितौ । नापि दैहिकभोगाय विदध्यात्कर्म गर्हितम् ॥
क्वचिच्छ्वादगृहे विश्वामित्रोऽपि शुनकामिषम्।चौर्येणभुक्तवान् प्राणान् क्षुधार्तःपरिरक्षितुम्
न सदा श्वादवच्छ्वानमांसभक्षणतत्परः । नोषस्तिरपि वोच्छिष्टकुल्माषादोऽपि तोयपः
छान्दोग्योपनिषद्येवं काचन श्रूयते कथा । मटचीहतकुर्विभ्यं याचित्वोषस्तिरेकदा ३५३
क्षुधार्तो भोक्तुमुच्छिष्टकुल्माषान् भुक्तवानपि । दीयमानं जलं नैच्छदुच्छिष्टं तु निरापदः
सर्वान्नानुमतिः प्राणनाशे व्यासेन सूत्रिता । प्राणत्राणान्तरे सत्वे नेष्टं निषिद्धभक्षणम्॥
अत्र तादृशदृष्टान्तबाहुल्यं च मनुस्मृतौ । प्रदर्शितं ततो ज्ञातुं प्रभवन्ति मनीषिणः ॥३५६॥
सेवा श्ववृत्तिराख्याता सा चापद्यपि शास्त्रतः।निषिद्धैव द्विजानां हि ब्राह्मणस्य तु का कथा॥
शतवेतनधारी हि सहस्रार्थप्रयत्नवान् । सहस्रवेदनग्राही द्विसहस्रार्थचिन्तनः ॥ ३५८ ॥
एतत्स्वाभाविकीं चेष्टां प्रद्योतयत्यनापदि । किं कारणं भवेदत्र विचार्य वक्तुमर्हसि३५९
पितुर्वा भजते शीलं मातुर्वेति स्मृतेर्गिरा । शीलादियुक्तैरद्यापि भाव्यं तैस्तत्कुतो नहि३६०
तेनेदं ज्ञायते छिन्ना पूर्ववीर्यपरम्परा । मध्यकालात्समायाता चेयमन्या परम्परा ३६१
इदानीं सर्ववर्णेषु धनसंग्रहरक्षणे । धान्यादिसञ्चयश्चैव वैश्यशीलं प्रदृश्यते ॥३६२॥
अतो वक्तव्यमेतद्धि वैश्यवीर्यपरम्परा । सर्ववर्णेषु चायाता साम्प्रतं चापि दृश्यते ३६३
तस्मात्पद्मपुराणादावुक्तं सर्वे कलौ युगे । एकवर्णा भविष्यन्ति ब्राह्मणक्षत्रियादयः ३६४
वीर्यपरम्परादृष्ट्या सर्वेषामेकवर्णता । गुणतो वर्णदृष्ट्या तु सर्वे वर्णाः सदा स्थिताः ॥
कलौ वर्णद्वयं चेति न मिथ्या स्मृतिकल्पनम् । ते न्यूनाधिकभावेन सर्वकाले स्थिता यतः॥
क्रियालोपात्क्षत्रियाणां वृषलत्वगतिं वदन् । क्रियालोपेऽपि ब्राह्मण्यं स्वात्मनः कथमीरयेः
क्षत्रियवृषलत्वोक्त न्यायश्च ब्राह्मणेष्विह । कुतो न वर्तते धीमान् जातिवादी ब्रवीतु मे
ब्राह्मणादर्शनेनैषां वृषलत्वगतिर्यदि । अद्य तद्दर्शनादत्र कथं न क्षत्रियादयः ॥ ३६९ ॥
अद्य ब्राह्मणसद्भावेऽप्येते चात्र न सन्ति चेत् । ब्राह्मणासत्वमेवैतद्विज्ञापयति वस्तुतः३७०
कदाचिद्ब्राह्मणानां चेद्दर्शनं दुर्लभं ह्यभूत् । कस्माद्देशादिदानीं ते ब्राह्मणाश्च समागताः
विदेशतश्चागतानां ब्राह्मण्यं नेष्यते बुधैः । स्वदेशेऽदर्शनं प्राप्ताः कथं ब्राह्मण संस्थितिः३७२
तस्मादादौ कार्यहेतो र्जन्मवर्णप्रथा च या । स्वीकृता सा क्रियालोपान्नष्टैव क्षत्रियादिवत्॥
अन्याय्यस्वार्थलोभेन यद्यद्धि तैः प्रकल्पितम् । तदीयद्धान्यै तत्सर्वं सञ्जातं पक्वपापतः ३७४



मूर्खस्यापि स्ववंशीयजनस्य हिततहेतवे । गुणग्राहित्वशून्या या जातिप्रथा प्रकल्पिता ३७५
सा प्रथा निम्नवंशीयमूर्खस्याप्यद्य लाभदा । सञ्जातेत्यत्र तद्रागद्वेषस्यैव फलं हि तत्३७६
सर्वोत्तमतयोत्तीर्णविप्रस्याप्यधमा स्थितिः । सर्वाधमतयोत्तीर्णनिम्नवर्णस्थितिर्वरा३७७
राज्ञोऽनुचितलाभाः प्रागुच्चजातिप्रथांगताः । अद्यानुचितलाभास्ते नीचजातिप्रथागताः
स्वग्रामे नीचकार्याणि सदा कारयितुं क्वचित् । जनेऽस्पृश्यत्वमारब्धं निवासोऽपि पुराद्बहिः
तदन्याय्येन ते चाद्य बौद्धमुस्लिम्मतादिषु । गत्वा वैदिकसिद्धान्तशत्रवोऽपि भवन्ति च
स्वकीयपरिवारेण सहाम्बेड्कारनामकः । बौद्धधर्मं गतोऽत्रस्थमस्पृश्यत्वममर्षयन् ३८१
एवं विधर्मणां संख्या वर्धते चोत्तरोत्तरम् । प्रक्षीयते च साऽऽर्याणां जन्मजातिप्रथावशात्
यावत्पर्यन्त मेषाऽत्र तिष्ठेद्धर्मविनाशनी । तावद्भारतदेशस्य दुर्दशा न विनश्यति ३८३

प्राचीन काल में ब्राह्मण शीलसम्पन्न सत्यवादी और शारीरक भोगों के लिये प्रयत्न नहीं करते थे। आजकल के ब्राह्मण प्रायः उनके विपरीत हो गये है। पहले के ब्राह्मण वेदविद्या का उपार्जन करने में और नित्यनैमित्तिकादि कर्मों में निमग्न रहते थे। आजकल के वे वेदविद्या को छोड़कर प्रापंचिक विद्याओं से लौकिक जीवन बिताते हैं। पहले के ब्राह्मण वेतन लेकर सरकारी काम करना शूद्रवृत्ति समझकर उसे बिलकुल छोड़ देते रहे और आज वे उसी को बड़ा समझकर उसके लिये आगे २ दौड़ते हैं। यहाँ ऐसा कहना भी उचित नहीं होगा कि ये सब आपत्कालिक चेष्टायें हैं। क्यों आपत्कालिक वृत्ति थोड़े समय के लिये अनिच्छा से भी परिस्थिति के अनुसार मानी जाती है न कि हमेशा वंश परम्परा से। आपद्ग्रस्त होकर विश्वामित्र ने एक समय कुत्ते का मांस प्राणरक्षा के लिये खाया और उषस्तीने जूठे उरद एकबार खाकर भी पानी नहींपीया था न कि दुबारा। आपत्कालिकवृत्ति यही कही जाती हैं। यहाँ तो ऐसा नहीं किन्तु सौ वेतन वाले हजार वेतन के लिये और हजार वाले दो हजार के लिये प्रयत्न करते हुए विलास भागों में निमग्न रहते हैं। यह तो स्वाभाविक चेष्टा समझी जाती है न कि आपत्कालिक। पिता का शील ही पुत्रादि में आता है, इस स्मृति के अनुसार आज के ब्राह्मण भी पहले वालों की तरह रहना चाहिये था। इससे मालुम पड़ता है कि पहली वाली परम्परा छूट गयी और नयी परम्परा इनमें आगयी है। आजकल के सभी लोगों में धनसङ्ग्रहशीलता रहती है। यह तो वैश्यों का स्वभाव है। अतः यह कहना होगा कि आजकल के सभी लोगों में वैश्यपरम्परा ही चल रही है। इसलिये पद्मपुराण में कहा गया है कि कलियुग में सभी लोग एक ही वर्ण हो जायंगे। वीर्यपरम्परा की दृष्टि से सब लोग एक वर्ण के ही है। गुणादि से वर्ण पक्ष में सभी वर्ण न्यूना-धिकभाव से हमेशा रहते हैं। अतः इस पक्ष में दो ही वर्ण कलियुग में है ऐसी

मिथ्या कल्पना भी नहीं हो सकती। क्रियालोप से ( मनु १० ) क्षत्रिय, शूद्र हो गये हैं तो क्रियाशून्य ब्राह्मण शूद्र क्यों नहीं हुए। आजकल ब्राह्मण कहने वाले भी वैदिक क्रियाओं को पूरा छोड़ ही दिये हैं। ब्राह्मणों के अदर्शन से एक समय में क्षत्रिय शूद्र होगये हैं तो वे ब्राह्मण आज कहाँ से आगये हैं। यदि कहीं से किसी प्रकार से आगये हों तो अब क्षत्रिय क्यों न रहे ? यदि क्षत्रिय नहीं हैं तो इससे ब्राह्मणों का भी अभाव ( अदर्शन ) ही मालुम होता है। अनुचित स्वार्थ के लिये जो जाति प्रथा मानी गयी है, वह आजकल ब्राह्मणों का भी अनिष्ट होकर परिगणित निम्न जातिवालों को लाभ दायक हो गयी है। सर्वोत्तम श्रेणि में उत्तीर्ण उच्च वर्ग की अपेक्षा सर्वाधम श्रेणि में उत्तीर्ण निम्नवर्ग को पहला स्थान मिल रहा है। गावों में नीच कार्य करवाने के वास्ते अति निम्नजाति की कल्पना करके गावों के बाहर बसाने के अन्याय से वे आज बोद्ध मुस्लिम आदि मतों में जा कर वैदिक धर्म का शत्रु बन रहे हैं। यहाँ की जाति प्रथा सहन न होने का कारण सर्वोच्चन्यायाधीश अम्बेडकार अपना परिवार के साथ बौद्ध हो गया है। जबतक यह प्रथा रहेगी तबतक इस प्रकार विधर्मियों की वृद्धि और सनातन धर्म वालों की क्षीणता ही होता रहेगी।

यदुक्तं यैः कृतः सर्वभक्षो वन्हिश्च वारिधिः।अपेयश्चन्द्रमाः क्षीणः कृतः पुनश्च वर्धितः।
कोपिता ये लोकपालान् सृजेयुरपरान् दिविदेवानदेवान् कुर्वीरन् को हि तान् क्लेशयेदितिः
तन्न,यो वन्हिमकरोत्सर्वभक्षं तपोबलात्।तस्यादण्डः प्रशंसा च भृगोर्नान्यस्य कस्यचित्।
समुद्रमप्यपेयं यः स्वदेहस्वेदवारिणा। व्यधात्तस्यैव वडबामुखर्षेः कोपतो भयम्।
एवं सोममपि क्षीणं कृत्वा यः पुनरैधयत्। तस्य दक्षस्य कोपेन भेतव्यमिह मानवैः ३४८
कोपिता वालखिल्याख्या लोकपालानपीश्वरान्। यद्यसृजन् तदा तेषामेव कोपो भयावहः
न भृगोर्वंशजातानां बडबामुखसन्ततेः। नापि दक्षप्रजानां वा कोपतो भयभावना॥३९०
न वालखिल्यवंशीयनराणां कोपतो भयम्। यदि ते द्रोहिणस्तर्हि दण्डस्तदुचितो भवेत्
अग्नेर्हि दाहकत्वेन तत्संस्पर्शाद्भयं भवेत्। न त्वग्नितः समुत्पन्नजलस्पर्शो भयावहः ३९२
जगन्नियन्तृसर्वेश साक्षात्कारकमन्त्रवित्। पूज्यते यदि दोषी चेन्न दण्ड्योऽपि भविष्यति
न तु तद्वंशजाः सर्वे हीश्वरास्तित्त्वसंशयाः। दोषिणश्चेद्भवेयुस्ते दण्डो दोषानुसारतः॥
तस्माद् बहुश्रुतस्यापि ब्राह्मणस्य गुरोरपि। वधोऽप्यभिहितः स्मृत्याऽकस्मादाततायिनः३९५
यत्तु तत्रैव सम्प्रोक्तं ब्राह्मणस्य वधो न हि। सर्वपापरतस्यापि राष्ट्राद् बहिष्कृतिस्त्विति
स्तेयादिपापकृन्मर्त्यो यत्र कुत्रापि वा वसेत्।तद्राष्ट्रस्यापि हानिः स्यात्तस्मात्तस्य वधो गुणः॥
यदि तस्य बहिष्कारमात्रमेव स्वराष्ट्रतः।तदा त्वपरराष्ट्रस्य तस्करो ब्राह्मणो ह्यपि ३९८
बहिष्कृतश्च तद्राष्ट्रादत्रागत्य पुनः पुनः। चौर्यादिकं प्रकुर्वाणो जनान् सम्पीडयेदपि ३९९
अतश्चौर्यादिकृन्मर्त्यो ब्राह्मणोऽब्राह्मणोऽपि वा।यथा दोषं दण्डनीयो वध्यो दोषे तथा विधे॥



यश्चोक्तं ब्राह्मणैरेव प्रद्वेष्यो ब्राह्मणाधमः।न त्वन्यैरिति पाद्मादौ न तद्युक्ततरं वचः॥
यस्य योऽनिष्टकारी स्यात्स तेनैव प्रदूष्यते। ताड्यतेऽपि च दोषानुसारतो ब्राह्मणादिकः॥
अस्मन्मतब्राह्मणस्तु नैव चौर्यादिकृद्भवेत्।नातः कस्यापि स द्वेष्यः किन्तु सर्वैः प्रपूज्यते
यथा हि बाष्पयानादि निर्मातैव प्ररिश्रमी। कृतसर्वोपकारत्वात्स्तूयते विश्वमानवैः४०४
यथा विमाननिर्माता प्रजाभिः स्तूयते बहु। यद्यसौ कृतदोषश्चेदपि प्रायो न दण्ड्यते॥
दूरध्वनिर्दूरवार्ता, सुदूरभाषणादिकम्। यदीयतपसा यत्नरूपेण श्रूयते जनैः॥ ४०६।
तेषामेव यशो लोके गीयते प्रत्यहं नरैः। प्रमादवशतः सोऽपि दोषी चेन्न स दण्ड्यते ४०७
न तु तद्वंशजातानामीषन्नामापि कीर्त्यते। यदि कृतापराधास्ते दण्डस्तदनुसारतः ४०८
भवानिव न ते चेत्थं वदन्त्यस्मानपीह कः। दण्डयेत्कृतलोकोपकारवंशसमुद्भवान् ४०९
वाष्पयानं विमानं च दूरवार्तादिसाधनम्। प्राणार्पणपरोनापि ये त्वपश्यन् बहुश्रमैः ४१०
तद्वंशजानिहास्मान् कः कोपयेच्च प्रमादिनः। चौर्यादिदोषबाहुल्यकर्तॄनपि च दण्डयेत्
यथा वा राष्ट्रस्वातन्त्र्य लाभायाहुत चेतसाम्। महात्मगान्धि श्री नेहरूप्रभृतीनां महायशः
सर्वप्रान्तपुरग्राम सर्ववीथ्युटजेष्वपि। आबालवृद्धगोपालमनीष्यन्तपीड्यते॥४१३॥
न हि तद्वंशजानां तत्पुत्रपौत्रादिकस्य वा। नामापि कोऽपि जानाति स्तुतिर्दूरगतैव हि
न तेऽभिमानतस्त्वद्वत्कथयन्त्यप्यलज्जया। न वाञ्छन्त्यप्ययत्नैस्ते स्वपूर्वजमहायशः४१५
ये वा शतद्वयाब्दाङ्ग्लशासनाशेषशोषितम्। भारतं पुनरार्नेषुः स्वदेशजनशासने ४१६
तदीयवंशजानस्मान् बह्वपराधिनोऽपि चेत्। को दण्डयेद्वचोभिर्वा क्लेशमापादयेदिति।
तथा निरन्तरस्वीय महातपः प्रभावतः।शापानुग्रहशक्तीनां युक्ता स्यान्नाम पूज्यता४१८
तावता सर्वसामान्यमर्त्यस्वभावशालिनाम्। युगान्तरीयभृग्वादिवंशक्रमागतात्मनाम्४१९
कोपतस्तादृशी भीतिर्नृणांनात्र भविष्यति। दण्डोऽपि दोषिणस्ते स्युस्तत्तद्दोषानुसारतः॥
यथास्वातन्त्र्यलातृणां वंशजास्तत्सुताश्च वा।स्वकीयवत्स्वात्मनांतां पूजां लज्जन्ति याचितुम्
तथा भृग्वादिवंशीयाःस्वात्मनोऽपि स्वकीयवत्कोपाद्भीता जनाःसन्तु इत्यपीच्छांन कुर्वताम्
त्वदीया नीतिरेवैतैराश्रिता चेदिहापि ते। त्वद्वदेव प्रब्रवीरन्नित्थं वञ्चयितुं जनान्४२३
काङ्ग्रसीया वयं जात्या भारतस्याधिकारिणः। अस्मदीयमिदं सर्वं भारतान्तर्गतं धनम्
अस्मदाज्ञानुसारेण चाग्रे राष्ट्राधिकारिभिः।वर्तितव्यं प्रणश्यादावस्मद्भृत्यवदेव नः४२५
यत्र क्वापि निधिश्चान्यैर्दृष्टश्चेद्भारतावनौ। अस्मभ्यमेव तद्देयं वयं भूस्वामिनस्त्विति
अपेयं वारिधिं चन्द्रमसः कृत्वाऽपि च क्षयम्। स्वल्पेनैवापराधेन ते हि लोकापकारकाः
पेयश्चेद्वारिधिः सर्वमर्त्यपश्वादिजीविनाम्। महानेवोपकारः स्यादेवं पूर्णो विधिर्यदि ४२८
स्वल्पापराधमात्रेण शप्त्वा भृग्वादयश्च तान्। दूर्वासस्त्वं च सम्प्राप्ताः सर्वलोकभयङ्करम्
दूर्वासस्त्वं हि न स्तुत्यं येनेषद्दोषमात्रतः। शपेदन्यान् ताडयेद्वा क्रोधस्य च वशं गतः४३०
शापानुग्रहसामर्थ्यशालिजातीयतां त्वयि। समारोप्य यदि ब्रूषे को ह्यस्मान् क्लेशयेदिति
एतादृश महानिष्ट कर्तृजातीयतामपि। समारोप्य प्रवक्तव्यं कस्तादृशान् क्षमेत नः४३२
प्रकोपितो रावणोऽपि चोरयामास जानकीम्।एवं द्रौणिरपि क्रुद्धः सुप्तान् जघान बालकान्

तज्जातीयत्वमप्येवमात्मन्यारोपयेस्तदा । तद्वत्त्वामपि निन्देयुस्ताडयेयुरपि प्रजाः ४३४
देशस्वातन्त्र्य सम्प्राप्तिकर्तृसाजात्यमात्मनि।समारोप्य यदि ब्रूषे चास्मन्माहात्म्यमेव तत्॥
गान्धीमहात्मसंहन्तृसाजात्यमपि चात्मनि।समारोप्यापि वक्तव्यं किं ब्राह्मण्यमिहास्ति नः
पूर्वब्राह्मण वैशिष्ट्यं स्वस्मन्नारोप्य गर्वतः । श्रेष्टा वयमिति ब्रूषे चेत्तदाऽद्यतनस्थितिम्
तदीयामपि चारोप्य वयमद्य सुदुस्स्थताः । इत्यप्यत्र प्रवक्तव्यं नाचष्टे तत्कथं भवान्
स्वपूर्वजनवैशिष्ट्यादात्मवैशिष्ट्यचिन्तनम् । तवैव युज्यतेऽत्यन्तनिकृष्टस्यापि च स्वतः
स्वपूर्वजः पण्डितश्चेत्पण्डितं स्वं विकत्थसे । विश्वस्य चेतिहासे तत्तवैव बहु शोभते ४४०:
स्वपूर्वजः त्रिपाठी चेत्स्वात्मानं च त्रिपाठिनम्।प्रख्यापयितुमत्रास्ति न कस्यापि हि साहसम्
वस्तुतस्तु भृगोः शापान्नैवाग्नेः सर्वभक्षता । किन्तु साऽनादिसिद्धैव तस्य वेदप्रमाणतः
भस्मान्तं शरीरं स्यादितीशावास्यवाक्यतः । शवदाहकताऽप्यग्नेः स्वतः सिद्धा प्रतीयते
एवं चन्द्रमसो वृद्धिक्षयौ दक्ष कृतौ न हि। किन्तु भूमि परिक्रामच्चन्द्रे स्थिरविवस्वतः४४
प्रभापातविलोपाभ्यां दृश्येते न स्वरूपतः। इति वैज्ञानिकोक्तिः सा सत्या सूर्यस्थिरत्ववत्
समुद्रक्षारताऽप्येवं बडबामुखकोपतः । न कृता किन्तु सा तस्य सहजेश्वरसृष्टितः ४४६
वालखिल्यकृता लोकपालनूतननिर्मितिः । मिथ्या दर्शितवृत्तान्तवदेवेति विनिश्चयः ४४७
अनादिविषयान् ब्रह्माऽप्यन्यथा कर्तुमक्षमः । धाता देवान् यथा पूर्वमकल्पयदिति श्रुतेः

वर्तमान मनुस्मृति में कहा गया है कि जो अग्नि को सर्वभक्षक, समुद्र को अपेय और चन्द्र के वृद्धि क्षय किये हैं ऐसे ब्राह्मणों को कौन क्या कर सकेगा ? यह तो ठीक ही है। जो जो अपने तपो बल से ऊपर के कार्य किये थे उनको कोई दण्ड दे नहीं सकता किन्तु उनके वंश परम्परा से आये हुए आज कल के लोग यदि दोषी हों तो अवश्य दण्डनीय ही होंगे। आग जलता है। अतः उसे पकड़ने में सब लोग डरते हैं न कि उससे पैदा हुआ जल को पकड़ने में। ईश्वर को स्वाधीन करने की मन्त्र शक्ति जिसमें है वह कभी दोषी होने पर भी दण्ड से बच जाता है न कि उसके वंश वाले। अतः मनुस्मृति में लिखित है कि आततायी हो तो गुरु ब्राह्मण को भी मार देना चाहिये और उसी में आगे जो कहा गया है कि सब प्रकार के पाप करने पर भी ब्राह्मण को नहीं मारना चाहिये किन्तु अपने राष्ट्र से उसको बाहर कर देना उचित है। यह ठीक नहीं दुष्ट जहाँ रहेगा वहाँ सब को अनर्थ ही करता रहेगा। यदि दुष्ट को ब्राह्मण समझ कर स्वदेश से बहिष्कृत कर देंगे और दूसरे राष्ट्र के दुष्ट ब्राह्मण भी अपने राष्ट्र में भेजा जायगा तो सर्वत्र संकट ही फैल जायगा। अतः दुष्ट, ब्राह्मण हो या अब्राह्मण हो उसको अवश्य प्राणदण्ड देना ही चाहिये। पद्मपुराणमें लिखित है कि ब्राह्मण यदि दोष किया हो तो दूसरे ब्राह्मण ही उसको दण्ड दे सकते हैं न कि दूसरे लोग। यह भी ठीक नहीं। क्यों जो जिसको अनिष्ट करता है वह उस दोषी



को दण्ड दिलवाता ही है। हमारे मत के ब्राह्मण न कभी कुछ दोष ही नहीं करेगा। अतः वह हमेशा पूज्य ही रहेगा न कि दण्ड्य। जैसे रैलगाड़ी विमानादि का आदिनिर्माता प्रशंसार्ह और थोड़ा दोषी होने पर भी दण्ड से बच जाते है न कि उनके वंश वाले, जैसे भारत स्वतन्त्रता योद्धा ही श्लाघनीय होते है न कि उनके परिवार वैसे ही तपो बल से महत्तर कार्यकर्ता ही श्लाघनीय है और उन्ही के कोप से ही लोग डरते भी हैं न कि उनके सन्तान से। तुम्हारी नीति को वे लोग अपनाये हो तो तुम्हारे जैसे वे भी हम ही भारत के अधिकारी हैं कह सकते थे किन्तु वे ऐसे कभी नहीं कहते। समुद्र को अपेय और चन्द्र को क्षीण बनाकर तुम्हारे पूर्वज दुनिया का बहुत अपकार किये। दुर्वास ऋषि की तरह थोड़े अपराध से दूसरों को शाप दे देना प्रशंसनीय नही है। शापानुग्रह समर्थ मुनियों का सजातीयत्व का अपने ऊपर आरोप करके यदि तुम बड़ा गर्व की बातें करने लगते हैं तो रावण और अश्वस्थामा इत्यादि कुकर्म वाले ब्राह्मणों का सजातीयत्व को भी अपने में अरोप करके हम भी कुकर्म वाले हैं ऐसा भी कहना चाहिये। वस्तुतः अग्नि का सर्व भक्षकत्व, चन्द्र के वृद्धिक्षय और समुद्र का क्षारजल अनादि सिद्ध ही है न कि दूसरों के शाप से।

एवं सर्वप्रमणैस्तज्जातिवादेऽपि दूषिते । श्रुत्वा सर्वं स्वपाखण्ड प्रथां त्यक्तुमनिच्छुकः ।
यदि कश्चिद्ब्रुवन् स्वीयपक्षं सर्वसमर्थितम् । पुनः प्रत्यवतिष्ठेत मुमूर्षोरिव जागरः ४५०
प्रकारान्तरमप्यत्र समाश्रित्य कथंचन । बोधनीयः स चात्रेति पुनरुत्तरमुच्यते ४५१
यद्यपि जन्मना वर्णजाति प्रथासमर्थकम् । नैकमप्यस्ति शास्त्रीयं वाक्यं सम्यग्विचारणे
तथा पि दुर्जनस्तुष्येदिति न्यायेन साम्प्रतम्।जातिवाद्युक्तवाक्यानामिष्ट्वा शास्त्रत्वमुच्यते
सूर्यस्य गमनं सर्व श्रुतिस्मृतिष्वपि श्रुतम् । इतिहासपुराणेषु दर्शनेषु च दर्शितम् ४५४
उदयास्तमयौ तस्य प्रसिद्धौ लोकवेदयोः । स च सप्तरथित्वेन सूर्योपनिषदोच्यते ४५५
उद्यन्तमग्निरादित्यं समारोहति चास्तगः । सूर्यस्तु प्रविशत्यग्निमिति वेदेषु गीयते ४५६
वात्स्यायनो न्यायभाष्ये गतिं सूर्येऽनुमानतः।दर्शयामास चैत्रादाविव देशान्तरं गते४६७
सर्वप्रमाणप्रबलप्रत्यक्षेणापि मानवाः । सूर्ये गतिं प्रपश्यन्ति किं वक्तव्यमिहापरम् ४५८
एवं सर्वेषु मानेषु तद्गतिं साधयत्स्वपि । सा मता सूर्ये प्रबल प्रमाणान्तरतो मृषा ४५९
सूर्यस्य गतिसद्भावे पूर्वपश्चिमवर्तिषु । राष्ट्रेषु दर्शनं तस्य नोपपन्नं भवेदिह ४६०
सविता सर्वदा सर्वराष्ट्रेष्वपि क्रमेण सः।दृश्यतेऽतो न तस्यास्तामुदयास्तमयौ भुवि४६१
नहि भूमे रधो भागे चान्यराष्ट्रस्थितिर्भवेत् । यतस्तत्र नरो गत्वा पुनर्नागन्तुमर्हति ४६२
न मेरोरुत्तरे भागे स्थता वा स्यादमेरिका । गत्वा तत्रापि नागन्तुं शक्नुयुर्मानवा यतः ।
एतेनैव च या श्रीमद्भागवते रवेर्गतिः । दर्शिता परितो मेरुं साऽपि चात्र समाहिता४६४
न चैतेन पुराणादावनास्था स्यादितीर्यताम् । प्रत्यक्षविभ्रमस्यानुवादकान्येव तानि हि

यथा जीवात्मभेदस्य बोधकश्रुतिवाक्चयः । प्रत्यक्षतद्भिदामेव चानुवक्ति तथा गतिम्४६६
स्थिरत्वेऽपि च सूर्यस्य चेतनत्वमपीष्यते । न तु जैमिनिवच्चास्मन्मते तस्य जडात्मता
एवं जातिप्रथायां च भवदुक्त्यनुसारतः । सर्वसाधकमानेषु सत्स्वपि सा मता मृषा ४६८
अत्रापि प्रबलं जातिबाधकं चैतदेव हि । यदीश्वरकृताङ्गादि भेदाभावश्च वर्णिषु ४६९
नास्ति ब्राह्मणसन्ताने क्षत्रियादिविलक्षणम् । रूपमङ्गादिकं वाऽपि बाह्यभेदप्रदर्शकम्४७०
लोके वस्तुषु सर्वेषु तादृग्भेदनिमित्तकम् । नामभेदं पुरस्कृत्य व्यवहारः प्रवर्तते ४७१
सर्वेषामङ्गरूपादिसमानत्वे निरर्थकः । नामभेदो भवेत्तस्मादङ्गभेदमजोऽकरोत् ४७२
ब्राह्मणादिषु वर्णेषु तादृग्रूपाद्यभावतः । शास्त्रप्रमाणसत्वेऽपि न चातुर्वर्ण्यभेदधीः ४७३
तदेव बाधकं सर्वमानानां बलवत्तरम् । नातो वर्णास्तिता वंशपारम्पर्येण नृष्विह ४७४
यावत्पर्यन्तमीशेन चातुर्वर्ण्यं प्रभेदकम् । रूपादिकं न सृज्येत तावद्वर्णा न तादृशाः ॥
ब्रह्ममुखादितश्चादौ सृष्टिपक्षेऽपि तुल्यता । वर्णानां जन्मसिद्धत्वे साम्प्रतं बाधिकैव हि ॥
अजाविगोऽश्वजन्तून् स वर्णैस्सह मुखादितः । समुत्पाद्यापि रूपादिभेदेनैव ससर्ज हि ।
अन्यथाऽयमजोविगौरश्वश्चेति न भेदधीः । तदभावे विलुप्तस्तद्व्यवहारो भवेदिह ४७८
भवानपि गवाश्वादीनङ्गभेदनिमित्ततः । पृथग्व्यवहरत्यत्र नाद्यास्योत्पत्तिभेदतः । ४७९
एवं चायं ब्राह्मणोऽयं क्षत्रियादिरितीह सः । व्यवहारो विलुप्तो मा भूदित्यपि महेश्वरः
वर्णानजादिवच्चाङ्ग रूपभेदपुरस्सरम् । कथं न सृष्टवान् सर्वशक्तिमानपि स प्रभुः ॥
अङ्गरूपादिभेदानामनिर्माणेऽपि साम्प्रतम् । उत्पत्तिस्थानभेदो वा नादिवद्दृश्यते कथम्
यदि ब्रह्मा मुखादिभ्यो वर्णानिहोदपादयत् । इदानीं ते कथं नैव प्रजायन्ते मुखादितः ।
सृष्ट्यादौ यद्यथोत्पन्नं तज्जातिस्तथैव हि ।तत्तन्नियममाश्रित्य सदाऽद्यापि प्रजायते४८४
न च वाच्यमजाव्यादावद्य सेति जनिस्तथा । तदभावेऽप्यङ्ग भेदाद् व्यवहारस्य सिद्धितः
मुखाद्युत्पत्तिपक्षे स्यादीश्वरेच्छेदृशी भवेत्। अग्रे वर्णाश्च मातृणां मुखादिभ्यो भवन्त्विति
अन्यथा स किमर्थं तान् मुखादिभ्यश्च संसृजेत् ।रागद्वेषादिदोषाणां कुर्यादाऽऽत्मानमाश्रयम्
अत्रैतत्सर्वदोषाणां संभवादेव पञ्चमे । अध्यायेऽजमुखादिभ्यः सोत्पत्तिर्बहुदूषिता ४८८
यादृक्सङ्केततो वर्णान्व्यवहर्तुमिहेच्छसि । लोके तथाविधं वस्तु व्यवहारे न किञ्चन४८९
यादृक्सङ्केततोऽस्माभिस्तद्व्यवहार इष्यते।सन्त्याश्रमाः सज्जनादिःऋत्विजश्च तथाविधाः
ऋत्विजामपिचोत्पत्ति र्मास्ये ब्रह्ममुखादितः। श्रूयते तावता तेषांव्यवहारो न वर्णवत्४९१
श्रीमद्भागवतेऽप्युक्ता वर्णानामाश्रमैस्सह । उत्पत्तिर्मुखादिभ्यो वर्णा पृथग्गुणैरिति ४९२
अतोऽपि ज्ञायते वर्णा गुणैरेव पृथक्-पृथक्।लोके च व्यवहर्तव्याः संस्कारैरिव चाश्रमाः४९३
उत्पत्त्यनन्तरं ब्रह्मचर्यादयः स्युराश्रमाः । मुखाद्युत्पत्तिसाम्येऽपि वर्णाश्चोत्पत्ततः कथम्
यथोत्पत्तेः परं चोपनयनादिभिराश्रमाः ।जायमाना ह्यपि ब्रह्ममुखादिजा स्त्वितीर्यते४९५
तथोत्पत्तेः परं वर्णा जायमाना ह्यपि ध्रुवम् । शास्त्र मर्यादया ब्रह्ममुखादिजास्त्वितीर्यते
मुखादितो वर्णसृष्टिरिहात्यन्तमसङ्गता । तन्मतेऽपि गुणैरेव वर्णसिद्धिर्निरूपिता ४९७
मनुतो शतरूपायां सृष्टिपक्षे तु जन्मतः । वर्णानां प्रविभागश्च सुतरां नोपपद्यते ४९८



तत्र गोगर्दभाश्वाविच्छागादीनां समुद्भवः। तत्तज्जातीय स्त्रीपुंसरूपं सन्धार्य दर्शितः ।
इदानीमपि तज्जन्म मनुदर्शितरीतितः । प्रदृश्यते शरीराङ्गप्रभेदैर्जातिसूचकैः । ४९९
मनुष्याणां तु जन्मैकरूपेणैव प्रदर्शितम् । तत्तथैवाधुनाऽप्यत्र दृश्यते चैकरूपतः । ५००
सङ्गतप्राणिसृष्ट्या हि निरस्ता सा त्वसङ्गता । एतया च मनुष्येषु नैवावान्तरजातिधीः।
न ह्येतद्दर्शितं तत्र ब्राह्मणश्चाभवन्मनुः । ब्राह्मणी शतरूपा च भूत्वा ससर्जतुस्त्विदम् ॥
तव सन्तोषसिद्ध्यर्थं क्षणमात्रं तदस्त्वपि । तदानीं ब्राह्मणत्वादिव्यञ्जकं किमभूद्वद ५०३
नाकृतिर्नापि रूपादिभेदो व्यञ्जकतामियात् ।इदानीमिव सृष्ट्यादौ तदभावानुमानतः५०४
तस्मादिदं त्वया वाच्यं गुणाःशमादयोऽभवन्।तयोश्चब्राह्मणत्वादिव्यञ्जकास्त्वितिशास्त्रतः
शमाद्यात्मगुणव्यङ्ग्य ब्राह्मणत्ववतोस्तयोः । ब्राह्मणाःशौर्यधैर्यादिव्यङ्ग्य क्षत्रियतावतोः
क्षत्रियाः कृषिगोरक्षाशीलव्यङ्ग्यार्यतावतोः ।वैश्याःसेवादिशीलत्वव्यङ्ग्य शूद्रत्वयोस्तयोः
शूद्रा जातास्त्विति व्यक्तं मनुश्रीशतरूपयोः।तथा चाद्यापि वर्णानां व्यञ्जको गुणसञ्चयः
वस्तुतस्तौ तथा भूत्वा नोत्पादयांबभूवतुः। किन्त्वेकेनैव रूपेण मानुष्यव्यञ्जकेन हि ५०९
तत्रापि च प्रतिव्यक्ति रूपभेदं ससर्जतुः। अन्यथा देवदत्तादिलोकसञ्ज्ञाऽपि निष्फला ५१०
कदल्याम्रादिवृक्षेषु फलरूपरसादितः । महेश्वरः पृथक्तत्तज्जातिभेदमथासृजत् ५११
अतश्च पत्रशाखादौ समानत्वेऽपि भेदधीः । फलरूपरसास्वादभेदेनेह प्रजायते ॥ ५१२
मृतभर्तृकनारीणां दोषतो वर्णसङ्करः। गीतायामर्जुनप्रोक्तो जन्मजातिं न साधयेत् ५१३
सङ्करश्चेन्न जातिःस्याज्जातिश्चेन्नैव सङ्करः।मिथो व्याघातवाक्यानामर्थःको वा भविष्यति
अतश्च भिन्नजातित्वं भिन्नजातिमतोः कृते ।स्मृतिष्वङ्गीकृतं तस्माज्जातिवादे न सङ्करः
बुद्धिःकर्मानुगेत्यादिन्यायेन व्यभिचारिणी ।स्वसुतं वर्णधर्मान् स्त्री नोपदेष्टुमिहार्हति५१६
नैकःपिता भवेत्तस्य दुर्ज्ञेयोऽपि च कुत्रचित्।अतोऽव्यवस्थया कर्तुमारभेत स किञ्चन५१७
सधवायाः सुतं वर्णधर्मान् पिता प्रबोधयेत् । पश्चात्स वर्णकार्याणि कुर्यात्स्वात्मगुणानुगः
शिशौ गर्भस्थिते माता यदि पापं करिष्यति।पुत्रस्तेनापि पापी स्यादित्युक्तं तैत्तरीयके५१९
पश्चात्पुत्रो जपेनैतद्दोषं निवारयिष्यति । एवं स्त्री व्यभिचारेण दुष्टा चेद्दोषभाक् सुतः
एतदेव हि साङ्कर्यमर्जुनाभिमतं भवेत् । अतश्चान्यदशास्त्रीयं विचारे सत्यसङ्गतम्५२१
श्रीकृष्णो धर्मसाङ्कर्याद्वर्णसङ्करमुक्तवान् । तद्गीतायां चतुर्विंशश्लोके स्पष्टं कृतं युगे ।।
अविवाहितयोः पुत्रस्तुल्यजातीययोरपि । नोत्पादकसजातीयः स्यदिति स्मृतिषूदितम् ।
युद्धे भर्तृषु नष्टेषु स्त्रीणामन्यनरैस्सह । सम्बन्धश्चेद्भवेत्सोऽपि विवाहादिविधिं विना ५२४
एतत्साङ्कर्यभीतिर्वा जाता स्यादर्जुनस्य हि। अन्यत्सर्वमपभ्रंशं जातिभ्रान्त्या निगद्यते ।
जातिभ्रान्तिःसमस्ताऽपि कलिकालस्मृतिप्रजा । न कृतादियुगेष्वेषा जनेभ्यो दुःखदाऽभवत्
व्यासादेर्धृतराष्ट्रादेर्नाभूच्चैषा भयप्रदा । सर्वमेतच्चतुर्थाऽन्ते चाध्याये सम्प्रदर्शितम् ५२७
साङ्कर्यान्नरकः स्याच्चेद् व्यासादयो महर्षयः ।धृतराष्ट्रादयो जातास्तथैवार्जुनपूर्वजाः ॥
देवयान्यां ययातेश्च ब्राह्मण्यां क्षत्रियादपि।जातो यदुः सङ्करश्चे द्यादवाश्चापि सङ्कराः
नरकप्राप्तिरप्येषां यादवानामभूदिति। वक्तव्यं च भवेत्स्त्रैणदोषात्साङ्कर्यवादिना ५३०

असमन्मते न सन्ताने साङ्कर्यं किन्तु योषितः।दोषिण्यश्च भविष्यन्ति नराश्च व्यभिचारिणः
सजातीयैस्तदन्यैर्वा नरैःस्त्रीणां च गुप्ततः। सम्बन्धोऽनादितोऽप्यद्यपर्यन्तं कुत्रचिद्भवेत्
वर्णसङ्करशङ्कादिमात्राज्जातिप्रथा यदि। तादृशैरप्यर्थवादैरपार्थश्चापरो भवेत् ५३३
पुत्रहीनैर्जलं दत्तं कवोष्णमुपभुज्यते। मृतपितृभिरित्युक्त्या तन्मुक्ति दुर्लभा भवेत् ५३४
त्रिपुरुषायुषीमात्रं वाऽप्यमोक्षो यदीष्यते। यावत्सम्पातमित्यादि श्रुतिबाधो भवेत्तदा
छान्दोग्योपनिषद्येवमिष्टापूर्तादिकारिणाम् ।यावत्पुण्यं तावदेव स्वर्गेच स्थितिरुच्यते ५३६
क्षीणे पुण्ये मर्त्यलोकप्रवेशोऽपि निगद्यते।तस्मात्तत्कालिदासोक्त्या न तद्वासो सदेष्यते५३७
वाक्यप्रमाणमात्रेण वस्तुसिद्धिर्यदीष्यते। तदा सूर्ये गतिः सिध्येच्छ्रुतिस्मृत्यादि बोधिता
एतज्जातिप्रथादूरीकरणाय महात्मभिः। पण्डितप्रवरैश्चापि धर्मनिष्ठैर्बहूदितम् ५३९
श्रीमन्महेश्वरानन्दस्वामिनो मण्डलेश्वराः। चातुर्वर्ण्यं समीक्षायाः खण्डत्रयमरीरचन्५४०
श्रीमलयाल स्वाम्याख्यास्तपःसिद्धेष्टसिद्धयः ।लोकोद्धारं जातिभेददूषकं निरमापयन् ५४१
श्रीमच्छङ्करचैतन्य भारतीस्वामियोगिनः। सर्वतन्त्रस्वतन्त्राश्च विरक्तजनभूषणाः५४२
समचक्षत सुस्पष्टं जन्मवर्णव्यवस्थितिः। महादुराग्रहेणैव कैश्चित्सुरक्षितेति च ५४३
श्रीस्वामिकाशिकानन्दाः सर्वशास्त्रविशारदाः। निरञ्जनमहाखाडाश्रीमहामण्डलेश्वराः
श्रीजगदीश्वरानन्दस्वामिनो मण्डलेश्वराः। श्रीमत्सुरेश्वरानन्दरामेश्वरपुरीयती ५४५
श्रीस्वामिमङ्गलानन्दप्रमुखाश्च मनीषिणः। अपरे च महात्मानो विरक्ताः सूक्ष्मबुद्धयः५४७
जन्मना ब्राह्मणत्वादिजातिवादस्य दूषणम्। भूमिकाव्याजमाश्रित्य प्रसङ्गाद्बह्वकुर्वत५४७
इन्दिरारमणा श्रीमान् मनुस्मृत्यार्षभाष्यकृत्। नातिज्ञो भगवद्दासो मानवधर्मसारकृत्५४८
जातिनिर्णयकृच्छ्रीमान् शिवशङ्करपण्डितः ।श्रीसीतारामज्योतिर्विद्वर्णव्यवस्थिति व्यधात्
एतेषां प्रथमो मार्गदर्शकश्चापरो महान्। आर्यसमाजनिर्माता दयानन्दसरस्वती५५०
शास्त्रीयगुणकर्मभ्यां चातुर्वर्ण्यविनिर्णयम्। कृत्वा जातिप्रथादूरीकरणे यावदुक्तवान् ५५१
तावन्मात्रं तदानींतु महदेव जगत्यभूत्। जातिप्रथाजने तावत्कथनं धीरतैव हि ५५२
जातिभ्रान्तितमस्यन्धाकृतमर्त्यमहागदम्। निवारयितुकामः कस्तदाऽभूत्तं मुनिंविना ५५३
विशिष्यास्माभिरप्यत्र चातुर्वर्ण्यस्य चाश्रयः। स्वरूपमपि शास्त्रन्यायैर्निश्चित्य दर्शितम्
यद्यप्येतज्जन्मसिद्धवर्णजातिसमर्थकाः। श्लोकाः प्राचीनग्रन्थेषु श्रूयन्ते मुनिकर्तृषु ५५५
कतिपयैरप्याचार्यैरर्वाचीनैश्च सम्मताः। न बुद्धिभेदं जनयेदिति न्यायानुसारतः ५५६
तथापि तेषां तात्पर्यमन्यत्रैवावधार्यते। न तु बाधिततज्जातिप्रथासत्यत्वबोधने ५५७
कायक्लेशकरेषूच्चनीचकर्मसु मानवाः। निर्विवादं प्रवर्तेरन्निति प्रथा समर्थिता ५५८
गुणकर्मचतुर्वर्णपक्षे सज्जनतादिवत्। न व्यवस्था भवेत्तेन कर्मलोपो भविष्यति ५५९
एतच्च पूर्वमीमांसासिद्धान्तानिष्टकारकम्।अतश्च जन्मना वर्णव्यवस्थां ते ह्यकल्पयन्५६०
भ्रातृणामेकजातानामपि चात्र परस्परम्। विवादो जायते प्रायःशरीरायासकर्मसु ५६१
तदानीं पितरौ तेषां योग्यताद्यनुसारतः। कल्पयेतां व्यवस्थां तत्पुत्रपर्यवसायिनीम् ५६२



न पारमार्थिकी सा स्यादपितु व्यावहारिकी ।एतदुल्लङ्घने दोषलेशोऽपि न भविष्यति५६३
मनुस्मृतिर्नारदीया कृत्स्नाऽपि व्यावहारिकी।याज्ञवल्क्यस्मृतावेवं बह्वस्ति व्यावहारिकम्
अशीतिभागो वृद्धिर्हि लिखिते संविधीयते। मासि मासि प्रतिशतं चोत्तमर्णाधमर्णयोः
द्वे त्रीण्यलिखिते मासि शते चत्वारि पञ्च च।ब्राह्मणादिक्रमेणोक्तं तत्तत्कालानुसारतः
नहि तत्तत्तथैवेह कर्तव्यमिति कश्चन। निर्बन्धोऽप्यस्ति येनास्य तिरस्कारे भवेदघम्५६७
एवं वर्णव्यवस्थाऽपि जन्मसिद्धा प्रकल्पिता। श्रौतकर्मव्यवस्थार्थमशास्त्रीयाऽपि पूर्वजैः॥
सा चेदानीमप्यवश्यं कुक्षिकर्मपरैर्नरैः ।अङ्गीकार्येति निर्बन्धः शास्त्रदृष्ट्या न विद्यते ५६९
श्रौतकर्मपरैश्चापि श्रौतवर्णसमाश्रयः। कर्तव्यो वैदिके काम्यकर्मण्येव न चापरे ५७०
काम्यकर्माणि नावश्यं कर्तव्यानि समैरपि।किन्तु तादृक्फलप्रेप्सुमर्त्यैरेवेति निश्चयः॥
यत्तु केनचिदत्रोक्तं जातिप्रथाविरोधिनः ।सृष्ट्यादितोऽद्यपर्यन्तं कियन्तोऽप्यभवन्खलु॥
तथापि सा प्रथा नैव नष्टा किन्तु विराजते ।किमेतेऽद्यापि तस्यास्तु करिष्यन्तीति गर्वतः
तदीयवचसोऽप्यस्मिन्नुचितमुत्तरमुच्यते। शृण्वन्तु मत्सरं त्यक्त्वा जन्मजातिप्रथैषिणः
चार्वकमतमत्यन्तं तुच्छं तस्य विरोधिनः। अद्यापि बहवःसन्ति खण्डितंचापि तद्बहु
तथापि तन्मतं लोके बहुव्याप्तं प्रदृश्यते। अतो लोकायतत्वेन प्रसिद्धिमपि विन्दते ५७६
नास्तिकानां गृहे तच्च सर्वदैव विराजते। आस्तिकानामपि प्रौढावस्थायां विषयग्रहे५७७
बाल्यादिष्वप्यवस्थासु चार्वाकं सम्प्रवर्तते। नैतावता वैदिकत्वं सत्यत्वं वाऽपि तन्मते ५७८
यावद्यस्याद्यप्राचुर्यं तावतो तस्य तुच्छता।सिनीमाप्रभृतौ दृष्टा सत्यमद्वैतवत्क्वचित् ५७९
तथैव जैनबौद्धादिसिद्धान्तानां विरोधिनः। बहवोऽप्यद्यपर्यन्तमासन् तैस्तेऽपि दूषिताः५८०
तथापि ते विजृम्भन्ते तत्तन्मतानुयायिषु।नैतावताऽपि श्रौतत्वं तेषां केनचिदिष्यते५८१
एवं विरोधिबाहुल्ये सदा सत्यपि जीवनम्। जन्मजातिप्रथायाश्च भवेन्नाम तवालये॥
नैतावताऽपि तस्यास्तु शास्त्रीयत्वं कदाचन ।केनापि वा मानमेयविवेकज्ञेन चेष्यते ५८३
यच्चोक्तं केनचिज्जन्मब्राह्मण्यं यस्यदुर्लभम् ।जातं तेनैव चान्येषामपि तन्नेति कथ्यते५८४
तस्याप्युत्तरमेतस्मिन्नध्याये सम्प्रदर्शितम्। प्रमाणैरेव कस्यापि वस्तुनोऽस्तित्वनास्तिते
न तु स्वस्मिन् तदस्तित्वतन्नास्तित्वादिहेतुना ।सिध्यतः किन्तु शास्त्रन्यायैरेवेति दर्शितम्
जन्मब्राह्मण्यदौर्लभ्यादन्ये तद्दूषयन्ति चेत्। गौणब्राह्मण्यदौर्लभ्यात्त्वयाऽप्येतद्धि नेष्यते
एतावता किमायातं ब्राह्मण्यार्हगुणा स्त्वयि। न सन्तीति त्वदीयैतद्विरोधेनैव गम्यते
पक्षयोरनयोः श्रेयः कतरदित्यपि क्षणम्। भवानेव विचार्यात्र ब्रवीतु समदृष्टितः ५८९
जन्मदौर्लभ्यतो नास्ति तावान् कलङ्क आत्मनः।यावांश्च गुणदौर्लभ्यात्सूक्ष्मदृष्टया विचारणे
दैवायत्तं कुले जन्म निजयत्नैर्न लभ्यते। गुणोपार्जनमार्याणां प्रयत्नैरेव साध्यते ५९१
वस्तुनि कृतिसाध्ये हि दोषोऽनुपार्जिते हिते।अतःशमादिहीनानां निन्दा शास्त्रेषु दृश्यते५९२
एतावता च तज्जन्म त्वय्यस्तीति न चिन्तय ।तस्य चालीकप्रायत्वात्कुत्रापि तन्न तिष्ठति।
यद्यप्ययं महातुच्छविषयोऽस्ति विवेकिनाम्। रागद्वेषादिमूलत्वादविचार्योऽपि शास्त्रतः

तथापि बहुवर्षेभ्यःस्वार्थहेतोः प्रकल्पितः । प्रकल्पितपुराणादिगाथाभिः परिरक्षितः ५९५
पश्चाद्भ्रान्त्या पुण्यपापहेतुत्वेन समाश्रितः।कलियुगाचार्यैःकैश्चित्सम्मतो ननु दूषितः ५९६
विज्ञाननेत्रसत्वेऽपि कस्यचित्तन्निरुध्यते । अविद्यमानत्रस्य बलादुन्मील्यतेऽपि तत् ५९८
मर्त्येष्वयं जातिभेदभ्रमो व्याप्तः समन्ततः । नखशिखाग्रपर्यन्तं रोमकूपेष्वपि स्थितः।५९९
स्वहेतुसर्वनाशेऽपि स्वयमत्रावशेषितः । श्रौतार्थं कल्पितश्चायं श्रौतत्यागेऽपि वर्धते
एतद्भ्रमसमायातसर्वानर्थपरम्परा । दर्शिता प्रथमाध्याये तत एवावगम्यताम् ।
तस्मादेतज्जातिभेदभ्रमं वारयितुं वयम् । त्यक्त्वाऽप्यावश्यकं कार्यमकार्ष्मेमं परिश्रमम्
बहुधा कथितोऽप्यत्र विषयो नावसीयते । पुनरप्यत्र वक्तव्यं महदेवावशिष्यते ॥
ग्रन्थान्तरे प्रसङ्गाद्वा तद्वक्ष्यामोऽवशेषितम्। ग्रन्थगौरवभीत्याऽत्र त्यक्तमावश्ययकं त्वपि।
बहुवत्सरपर्यन्तं नियतव्यक्तिषु स्थरम् । तत्सर्वाङ्गीकृतिस्त्वत्र कारणं चास्ति नेतरत्६०५
सामुदायिकमप्यत्र वस्तु केषांचिदेव हि। पार्श्वे यदि बहोःकालात्तिष्ठेत्त्यक्तुं न हीष्यते
स्वकीयमेवेति स्वार्थहेतोस्तन्मन्यतेऽबुधैः । तत्यागस्यानिवार्यत्वे दुःखमेवानुभूयते ६०७
अतो बहुप्रकारैस्तज्जातिभेदापनुत्तये । उक्तं श्रुत्येव देहात्मभ्रान्तिवारणहेतवे ६०८
अतश्चैतद्राष्ट्रवृद्धिकामैर्यत्नो महानिह । कर्तव्यश्चन्यथा राष्ट्रे नैकता संभविष्यति ६०९
संस्कृतस्य च सर्वत्र राष्ट्रेऽधिकप्रचारतः । विनङ्क्ष्यत्यचिरादेषभ्रमो नान्येन हेतुना६१०
यतश्चायं जन्मजातिभेदभ्रमः समागतः ।तत एवास्य नाशोऽपि विनिश्चितो मनीषिभिः
नवीनसंस्कृतग्रन्थप्रचारादयमागतः । प्रचीनसंस्कृतग्रन्थप्रचारेण ।नवार्यते ॥ ६१२
कल्पितैः संस्कृतग्रन्थैः पोषितोऽयमपि भ्रमः । महर्षिनिर्मितग्रन्थैर्नाशमेष्यत्यसंशयम् । ६१३
जातिभेदविनाशार्थमन्योपायो न विद्यते । अस्पृश्यताविनाशोऽपि संस्कृताध्ययनाद्भवेत्
एतद्भीत्यैव शास्त्राणि पाखण्डप्रथैषिणः। नाध्यापयन्ति सर्वेभ्यस्तत्वे पापभयप्रदाः ६१५
ननु जातिप्रथानाशे संस्कृतस्योन्नति र्भवेत् । संस्कृतोन्नतिसद्भावे जातिप्रथाविनाशनम्
भवदुक्त्या भवत्यत्र तयोरन्योन्यसंश्रयः। प्राथम्यमनयोः कस्य भवितुमर्हतीति चेत् ६१७
अत्रोच्यते संस्कृतस्य प्रचारः प्रथमो भवेत्। राष्ट्रप्रशासकादेशात्संभवितुं स चार्हति ६१८
एवं सामान्यतः स्याच्चेद्भारते संस्कृतोन्नतिः । ततो जातिप्रथामिथ्या-बोधकग्रन्थपाठनम्
सर्वकक्ष्यासु सर्वेषु विश्वविद्यालयेष्वपि । अनिवार्यतया चैतद्ग्रन्थपाठ्य क्रमादरः ६२०
जन्मना ब्राह्मणत्वादिवर्ण जातिसमर्थकम्। ग्रन्थजातं परीक्षातो बहिर्निष्कास्यमप्यथ ६२१
पापभीतिप्रदे जातिभेदभ्रमे क्षयंगते । पश्चात्संस्कृत शास्त्राणां भवेदध्ययने रुचिः ६२२
ततः सर्वनृणां प्रीत्या श्रौतेषु दर्शनेष्वपि। प्रवृतौ शास्त्रविद्यानां वृद्धिः स्यात्संस्कृतस्य च ॥
एतादृशक्रमेणात्र प्रचारोपक्रमे तयोः ।संस्कृतस्यैव प्राथम्यान्न स्यादन्योन्यसंश्रयः। ३२४
शासकप्रबलादेशादपि जातिप्रथाक्षयः। न संभावयितुं शक्यःपापभ्रान्तिर्यतो नृषु ६२५
जातिभेदभ्रमध्वान्तध्वंस संस्कृतवृद्धितः। आर्यणामार्यसिद्धान्तग्रन्थानामपिचोन्नतिः ६२६
यदर्थं मानवं जन्म प्राप्तमत्र सुदुर्लभम्। तद्भुक्तिमुक्तिसिद्धिः स्यादितःकिमस्त्यपेक्षितम्
आर्यानार्यविभागोऽपि जन्मना जातिवादिभिः। जन्मसिद्धश्चतुर्वर्ण विभागवन्निगद्यते ६२८



किन्त्वस्माकंमते सोऽपि चातुर्वर्ण्यवदेव हि । गुणकर्मानुसारेण भवेदुत्पत्त्यनन्तरम् ६२९
वेदशास्त्रेषु प्रामाण्य बुद्धिर्येषां भवत्यपि । सर्वे च ते भवन्त्यार्या यस्य कस्यापि चेत्सुताः
कर्तव्यानामनुष्ठानमकर्तव्यविसर्जनम् । अहङ्कारपरित्यागोऽप्यन्यदीयार्यलक्षणम् ६३१
स्वदेशीयो विदेशीयो वा स्यात्तादृशबुद्धिमान्। स सर्वोऽपि भवेदार्यस्तदन्योऽनार्य उच्यते
अनार्यः कर्मभिर्ज्ञेय इत्युक्तं च मनुस्मृतौ। तेनार्यत्वमपीह स्यात्कर्मभिश्चेति बोध्यते६३३
यदप्युक्तं तु तत्रैव यदार्योऽनार्यकर्मकृत् । आर्य एव स मन्तव्य इति ब्रह्माऽब्रवीदिति ।
एवमेवार्यकर्माणमप्यनार्यमनार्यकम् । विनिश्चित्यावदद्ब्रह्मेत्युक्तमद्यतनस्मृतौ ६३५
तन्न यस्मादार्यता वाऽनार्यता वा जनेष्विह। कर्मातिरिक्तचिन्हेन न केनापि प्रबुध्यते६३६
आर्यदस्युप्रभेदोऽपि ऋग्वेदे सम्प्रदर्शितः। सृष्टिकृन्निर्मिताकारभेदाभावाद्गुणादितः ।
यदिदानीं प्रयुक्तोऽत्र भारतीयेषु दृश्यते। हिन्दूशब्दश्चा तत्स्थाने त्वार्यशब्दः समर्हति६३८
पवित्रशब्दयोगेन पवित्रा भावना भवेत्। तस्माद्ग्रामादिसङ्केताःक्रियन्ते स्वीयसन्ततेः ।
हिन्दुशब्दोऽस्त्यपभ्रंशः शास्त्रीयोऽपि न वर्तते। तस्मात्तस्य परित्यागःश्रेयसे परिकल्पते६४०
एतच्छ्रीमद्दयानन्द स्वामिनोद्घोषितंबहु । यद्भारतीसङ्केतश्चार्यशब्दो भवेदिति ६४१
नैतावता मूर्तिपूजा त्याज्येति नियमोऽस्त्यपि। किन्तुहिन्दूपदंत्यक्त्वा गृह्णन्त्वार्यपदंत्विति
न चास्माभिरपीदं तन्मतमाश्रित्य निर्मितम्। किन्तु मर्त्येषु नास्त्येव जातिभेदस्त्ववान्तरः
मतभेदो हि जीवात्मतत्वभेदनिरूपणे। भविष्यति ननु स्थूलविषयादिप्रभेदतः ६४४
वर्णजातिविचारोऽयमतिस्थूलोऽपि वर्तते । नैतादृग्भेदमात्रेण मतभेदः प्रसज्यते ६४५
जमीन्दारप्रथा नष्टा राजप्रथाविनाशिता । मध्ये समागता चेयं प्रथा न स्थातुमर्हति
राजप्रथादिनाशेन यावद्दुःखमभूत्तयोः । जातिप्रथाविनाशेऽपि न तावज्जातिवादिनाम्
स्वकीयब्राह्मणत्वादिरक्षणार्थैकचेतसाम् ।न किञ्चिच्छिद्यते जाति भेदभ्रमविनाशतः ६५१
न वित्तसंविभागेन साम्यवादोऽत्र सेत्स्यति।विज्ञान संविभागोऽपि तत्सिद्ध्यर्थमपेक्षते६४९
ज्ञानसाधनविद्यासु तदर्थाधिकृतिःसमा। आवश्यक्यन्यथा ज्ञाने सामानत्वं न सिध्यति ६५०
यावज्ज्ञाने न तुल्यत्वं तावद्वित्तादितुल्यता । साधिताऽपि मनुष्येषु समानत्वं न साधयेत्
यदि शास्त्रप्रचारं ते कामयन्ते हृदा तदा । सर्वांश्च सर्वशास्त्राणि पाठयन्तु निजेच्छया
संस्कृतस्य च वृद्धि ते वचसीव मनस्यपि । वाञ्छन्ति चेत्तदा सर्वजनान् तत्पाठयन्त्वपि
तत्प्रचारकबाहुल्ये सत्यप्यद्य दिने दिने । तद्विनश्यति पाखण्डजातिभेदभ्रमादिना ॥६५४
सर्वमेतत्समालोच्य तद्वारककृतिस्त्वियम् । श्रीमन्माधवचैतन्यभारतीस्वामिनिर्मिता ६५५
पण्डिताः सन्ति दोषज्ञा गुणज्ञाःस्युः कथं नु ते। किन्त्वत्र वस्तुदोषज्ञास्ते भवन्त्विति याच्यते
शब्ददोषैर्विनिर्मुक्तो भूतले को ऽस्ति पण्डितः । गच्छतः स्खलनं क्वापि कदाचित्संभवेदपि
दूषणं तादृशं कार्यं यस्य नास्त्यत्र चोत्तरम् । पुनरालोच्य वक्तव्यं भवेन्नूतनमुत्तरम् ।
तादृग्दूषणकर्तारं प्रशंसामो वयं बुधम् । सभ्यतापूर्वकं चेत्तद्दूषणं स करिष्यति ६५९
मूर्खो गालिप्रदानेन क्रोधात्कुर्याद्धि दूषणम् । तदस्माकं भूषणं स्यान्न यस्योत्तरमुच्यते ।
एतद्विषयविज्ञानं यस्य नास्ति स एव हि । असभ्यदूषणं कुर्यान्नेतरः शास्त्रकोविदः ६६१

सिहं दृष्ट्वा ग्रामसिंहो बहुधैव भषत्यपि। सिंहो न तद्ध्वनिं चानुकुर्यादेव ह्युपेक्षया ६६२
राजमार्गे निर्भयेन गच्छन्तमपि हस्तिनम्। दृष्ट्वा शुनश्च बुक्कन्ति हस्ती तन्नैव पश्यति
विषयेऽस्मिँश्च शास्त्रार्थं सदा महामनीषिभिः। सन्नद्धाश्चवयं कर्तुं बृहस्पतिसमैरपि
किन्तु लिखितरूपं तद्भवितव्यं न मौखिकम्।शास्त्रार्थे मौखिके दोषा बहवोऽपि समीक्षिताः
पराजितोऽपि चात्मानं जयिनं सम्प्रकाशयेत्।जयन्तमपि धीमन्तं प्रचक्षीत पराजितम्६६६
मध्यवर्त्यपि यत्पक्षं स्वकीयं मनुते बुधः। तमेवासङ्गतं चापि स्वेच्छयैव समर्थयेत् ६६७
पक्षद्वयबहिर्भूतो मध्यवर्ती न लभ्यते। क्वचिल्लाभेऽपि शास्त्रज्ञो दुर्लभश्च भविष्यति६६८
लिखितरूपंशास्त्रार्थं सर्वे द्रष्टुं च शक्नुयुः। पश्चात्स्वस्वमनस्येव युक्तायुक्तविचारणा
स्वपक्षंसम्यगालोच्य शक्यते लेखितुंह्यपि। अन्यथा सहसा कश्चिन्नोत्तरं दातुमर्हति ६७०
मूलाज्ञानवदेवात्र प्ररूढेऽज्ञानपादपे। खण्डितव्ये विचारस्य प्रदेयः समयोऽपिच ६७१
सहसा नोत्तरादानदोषमात्रेण कस्यचित्। उद्घोषयितुमत्यन्तमयुक्तं च पराजयम् ६७२
समबुद्धिं च सर्वेभ्यो विश्वनाथः प्रयच्छतु। स्वाभाविकी हि वैषम्यधीर्भवेद्विदुषामपि।
जातिप्रथादेशभाषाविषये च मनीषिणः। महद्वैषम्यनीतिं ते चाश्रयन्ति निजेच्छया ॥
ततः समागता हानिः स्वीयसंस्कृतिराष्ट्रयोः। महत्येव तथाप्येतां हितामेवानुमन्वते ॥
नाशाय विषमा नीतिः कल्पते न समृद्धये। तथापि तां न त्यजन्ति व्यक्तिवृद्धिसमीहया
अतश्च सर्वभूतान्तरात्मा स तु महेश्वरः। सामुदायिकवृद्ध्यर्थंबुद्धिं तेभ्यः प्रयच्छतु६७७
सामुदायिकवृद्धौ हि व्यक्तिवृद्धिरपि स्थिता। अपायहेतुसत्त्वेऽपि सा सर्वदाऽनपायिनी
केवला व्यक्तिवृद्धिश्च सुरक्षिताऽप्यपायिनी। अज्ञात्वैतत्कामयन्ते व्यक्तिवृद्धिमबुद्धयः
जात्युपाधिवेकोऽयं सर्वशास्त्रानुसारतः। राष्ट्रक्षेमाय निष्पन्नः श्रीविश्वेशमुदेऽर्पितः। ६८०

अब तक जातिवाद सप्रमाण दूषित है यदि कोई कहेगा कि सब प्रमाण वर्णजाति समर्थक हैं तो उसका वह बात मान कर के भी उत्तर दिया जाता है कि सूर्यके गमनकी तरह इनमें भी सब प्रमाण रहने पर भी वर्ण जन्मसिद्ध नही हो सकते। सूर्य २४ घण्टोंमें दीखते ही हैं। अतः सूर्य में गमन बाधित है। वर्णों मे ईश्वर निर्मित भेद नही। अतः उनमें जन्मसिद्धता बाधित है। लोक में ऐसो वस्तु कोई नही जो वर्तमान भेदके विना भी केवल आदिसृष्टि परम्पराके पहचान से ही व्यवहृत होता हो। वर्णसांकर्यसे नरक भीति ( गीता० अ० १ ) जो है उससे भी वर्ण जन्मसिद्ध नही होंगे। व्यासादि महर्षिगण और कौरव पाण्डव और यादव भी संकर ही तो थे। जमीन्दारीप्रथा नाशसे उनको जितना दुःख है उतना जातिप्रथानाश से किसी का भी नही।

**श्रीमच्छङ्करचैतन्यभारतीस्वामि-शिष्य-श्रीमन्माधवचैतन्यभारती-स्वामिनिर्मिते जात्युपाधिविवेकेऽष्टमोऽध्यायः समाप्तः**

**समाप्तश्चायं ग्रन्थः।**

## जात्युपाधिविवेके परिशिष्टम्

वयं हिन्दूजना इति। हिन्दूशब्दस्यासंस्कृतस्य निन्द्यस्यापि जनैरिदानीं व्यवह्रियमाणस्यात्रानुवादमात्रं बोद्धव्यम्। हिन्दुशब्दो हि श्रुतिस्मृत्यादिषु क्वापि न श्रूयते। एवं हिन्दी हिन्दुस्थान शब्दावपि। हिन्दुशब्दस्य "काला काफिर चोर इत्यादयोऽर्थाः श्रीदयानन्दसरस्वतीस्वामिभिः प्रतिपादिताः। तैरेतदप्युक्तं यत्स शब्दोऽस्मासु यवनैः ( मुसल्मानैः ) प्रयुक्त इति। अन्यैरुच्यते ग्रीकदेशीयैः सिन्धुवासिभारतीयेषु प्रयुक्तः सन् क्रमशः सर्वभारतीयेषु प्रयुज्यत इति। सर्वथाऽप्ययमपभ्रंशशब्दो निन्दार्थक आर्यमत विरोधिभिरार्यपदं विहाय तत्स्थाने, इलहाबाद फैजाबाद बनारस इत्यादिशब्दाः प्रयागादिष्विव, प्रवर्तितः प्रचारितश्च। इलहाबादादिशब्दानां प्रचारक्रमश्चेत्थं जातः। यवनराजसमये प्रयागस्थमित्रादिकं प्रति तदन्यत्र विद्यमानेन पत्रादिकं प्रेषयता तत्प्राप्तिस्थानसङ्केतः ( पता ) प्रयाग इति लिखितश्चेत्तत्पत्रं प्रयागे न गच्छति स्म किन्तु इलहाबाद इति लिखितश्चेत् निर्दिष्टस्थाने प्राप्यते स्म। अतो जना विवशा सन्तः तमेव इलहाबादादिशब्दं लेखितुमारेभिरे। एवमचिरेणैव तेषां प्रचारो जातः। तथा हिन्दुशब्दोऽपि। यवनराजसमये न्यायालयेषु हि (कचहरी) आर्यधर्म शास्त्रमेव हिन्दुला नाम्ना प्रवर्तितमासीत्। स्थिरचरसम्पद्विषये न्यायालयद्वारा विवदमानयोः पुरुषयोः तदारम्भपत्रे(मुकदमा पेस करते समय) इदमेवागत्या लेखितव्यमासीत् यद्वयं हिन्दवः हिन्दुलाप्रकारं सा सम्पदस्मदीया भवतीति। तथा लेखन एव स न्यायाधीशः हिन्दुलाऽनुसारेण तदुपरि विचारमपि करोति स्म। तत्र हिन्दु पदं विहाय तत्स्थाने आर्यपदं प्रयुज्य "वयमार्याःआर्यधर्मशास्त्रानुसारेण साऽस्मदीया भवेदिति लेखने आर्यादिनाम्ना कस्यापि ला विशेषस्याभावात्तदुपरि न्यायाधीशो दृष्टिमेव न निक्षिपति स्म। एवं यत्किञ्चिदावश्यकं प्रार्थनापत्रं (दरखास्तु) राजकीयकार्यालये प्रेषिणीयं चेत् हिन्दुपदमेव प्रयोक्तव्यमासीत् न त्वार्यपदम्। एवं क्रमेण हिन्दुपदस्य प्रचारो जातः। यदा जना हिन्दुपदवाच्या जातास्तदारभ्य तषां देशभाषयोः स्थाने हिन्दी हिन्दुस्थानशब्दौ प्रयुज्येते। यत्तु केचित् "पञ्चखाना सप्तमीरा नवशाहा महाबलाः। हिन्दुधर्म-प्रलप्तारो जायन्ते चक्रवर्तिनः। हीनं प्रदूषयत्येव हिन्दुरित्युच्यते प्रिये" इति वाक्यं मेरुतन्त्र ( ३३ प्र ) स्थत्वेनोदाहृत्य हिन्दुशब्दं प्रमापयन्ति। तदप्यत्यन्ततुच्छम्। यत उपलभ्यमान मेरुतन्त्रे तद्वाक्यं कुत्रापि नोपलभ्यते न वा तदन्यप्रामाणिकग्रन्थेष्वपि।यदि केनचित् हिन्दुशब्द समर्थनदुराग्रहवशात् क्वचित्प्रामणिकग्रन्थे तादृशं वाक्यं प्रदर्शयिष्यते तदा भाविनीं वृत्तिमाश्रित्य तस्योपपत्तिर्वक्तव्या। तद्यथा पूर्वमार्या एव कलौ वेदशास्त्रादिपरित्यागेन हिन्दुशब्देन परस्परं व्यवहरिष्यन्ते। तेषां धर्मश्च हिन्दुधर्म इति तस्य प्रलोप्तारो म्लेच्छा राजानो भविष्यन्तीति। उक्तं च भविष्यपुराणे "देवार्चनं देवभाषा नष्टा प्राप्ते कलौ युगे। ब्रजभाषा महाराष्ट्री यावनी च गुरुण्डिका" तासां चतुर्लक्षविधा भाषाश्चान्यास्तथैव च। पानीयं च स्मृतं पानी बुभुक्षा भूख उच्यते॥ जानुस्थाने जैनुशब्दः सप्तसिन्धुस्तथैव च।

सप्तहिन्दु र्यावनी च पुनर्ज्ञेया गुरुण्डिका ॥ रविवारे च सण्डे च फल्गुने चैव फर्वरी । षष्टिश्च सिक्स्टी ज्ञेया तदुदाहारमीदृशम् । म्लेच्छ भाषा कृता तेन वेदवाक्यपराङ्मुखा । कलेश्च वृद्धये ब्राह्मीं भाषां कृत्वाऽपशब्दगाम् ॥ म्लेच्छ राज्यं भारते च तद्द्वीपेषु स्मृतं तथा। तच्छुत्वा मुनयः सर्वे रोदनं चक्रिरे बहु" प्रतिसर्गपं. ५/३१–३८) इति । तत्र पानी सप्त हिन्दुशब्दादयः पुराणगोचरा अपि न ते प्रामणिकाः भविष्यन्ति । एवं हिन्दु हिन्दुस्तानदशाब्दा अपि न मेरुतन्त्रादिगोचरत्वमात्रेण प्रामाणिकाः भवेयुः । यथा आफगनीस्तान बेलोचीस्तान पाकिस्तानादिशब्दा विदेशीयैः प्रवर्तिता स्तथा तत्सादृश्येन दृश्यमानाः हिन्दुस्तानादिशब्दा अपि निन्दाद्योतनार्थमार्येषु तद्विरोधिभिः प्रयुक्ता इत्येव वक्तव्यम् । यत्तु श्रीधरस्वामिना वृहस्पत्यागमस्थत्वेनेदं पद्यमुदाहृतम्" हिमालयात्समारभ्य यावदिन्दुसरोरुहम् । तं देवनिर्मितं देशं हिन्दुस्तानं प्रचक्षते इति । एतदपि कलौ यवनादि पाखण्डजन बाहुल्ये सतीत्येव मन्तव्यम् । प्राचीनकाले देवनिर्मितस्य तस्य ब्रह्मावर्तमिति नामासीत् । तदुक्तं मनुस्मृतौ "सरस्वतीदृषद्वत्यो र्देवनद्योर्यदन्तरम् । तं देवनिर्मितं देशं ब्रह्मावर्तं प्रचक्षते"(२।१७) इति । वृहस्पतिनापिजनान् वञ्चयितुं चार्वाकसिद्धान्तः प्रचारित इत्यपि श्रूयते । तत्रस्थोऽयं हीनं दूषयतीत्यादि श्लोको भवेदित्यप्रामाणिक एव सः । हिन्दुस्थानशब्दोऽप्युत्तरभारतस्यैव नाम स्याद्यत्र हिन्दी मातृभाषात्वेन वर्तते न तु सर्वस्य भारतस्य । अतो न सर्वे भारतीया हिन्दुशब्दवाच्याःस्युः । यत्तु स्वतन्त्रतासङ्ग्रामवीरेण सावरकारेण "आसेतुसिन्धुपर्यन्ता यस्य भारतभूमिका । पितृभूः पुण्यभूमिश्च स च हिन्दुरिति स्मृतः इति, एतदपि हिन्दु-शब्दप्रचारानन्तरं निर्मितत्वेनाप्रमाणमेव । एतेन "हिन्दू" हिन्दुश्च पुंसि द्वौ दुष्टानां च विधर्षणे । रूपशालिनि दैत्यारौ "इत्यद्भुतकोशोक्तं "हिन्दु हि नारायणादि देवताभक्तः" इति कविकोशोक्तं "प्रामाण्यबुद्धिर्वेदेषु नियमानामनेकता । उपास्यानामनियमो हिन्दुधर्मस्य लक्षण" मिति तिलकमहोदयोक्तं च समाहितं भवति एतेषामत्यर्वाचीनत्वेनाप्रामाणिकत्वात्। तस्मादेतद्देशीयानां भारत भारतीयार्यान्यतमशब्द एव समुचितःप्रामाणिकश्च । अत्र प्रमाणं च "उत्तरेण समुद्रस्य हिमाद्रेश्चैव दक्षिणे । वर्षं तद्भारतं नाम भारती यत्र सन्ततिः" ( ब्रह्म पु'१९।१२ ) "उत्तरं यत्समुद्रस्य हिमवद्दक्षिणं च यत् । वर्षं तद्भारतं नाम यत्रेयं भारती प्रजा" ( भीष्म पं. ९ ) भरणात्प्रजननाच्चैव मनुर्भरत उच्यते ( मात्स्ये ११४।५५ ) इति च । मनोर्भरतशब्दवाच्यत्वे तदीया मानवा भारतशब्देन वक्तुमुचिता भवन्ति । न चैतद्देशीयानां भारतभारतीयान्यतरनामकत्वे मुसल्मानानामप्येतद्देशवासित्वेन तन्नामत्वापत्तिरिति वाच्यम् । देशस्य हिन्दुस्ताननामत्वेऽपि तत्रस्थानां तेषां हिन्दुशब्दाभिधेयत्वापत्तेः समानत्वात्। अपि च वेदे" भरत्येष हि देवेभ्यो हव्यं भरति तस्मादाह भारतोऽग्निरिति ( काण्वशत'२।४।४।२ ) इति "भारते त्याहैष हि देवेभ्यो हव्यं भरत इति (तै० स० २।५।९) अत्राग्नेर्भारत नामत्वे सायं प्रातस्तत्पूजका एव भारता भवेयुर्नान्ये। अत



एव" तस्माद्युध्यस्व भारतेत्यादिकं बहुधा तत्र तत्र प्रयुज्यते । एवमार्यशब्दोऽप्येतद्देशीयानामुचितं नाम वर्तते । नन्वेतेषामार्यनामत्वे त्रैवर्णिकानामेवार्यत्वेन श्रुतावुल्लेखात् शूद्राणां तन्नाम न स्यात् । त थाहि "न हि देवाः सर्वेणेव संवदन्त आर्येणेव ब्राह्मणेन वा क्षत्रियेण वा वैश्येन वा" ( काण्वशत. ४।९।९।६ इति । हिन्दु शब्दाङ्गीकारेच तेन सर्वेषां ग्रहणं स्यादिति चेन्न । प्राधान्याच्छत्रिन्यायेनार्यं शब्दस्यापि सर्वसङ्ग्राहकत्वात् । अपिचान्येऽपि येऽद्विजाः ( अत्रैवर्णिकाः ) ते आर्याःकर्तव्या भवन्ति । तदुक्तम् "इन्द्रं वर्धन्तो अप्तुरः कृण्वन्तो विश्वमार्यम् (ऋ०७।९।३०) इति । तदर्थश्च इन्द्रं वर्धन्त अप्तुरः उदकस्य प्रेरकाः विश्वांसर्वं जगत् आर्यं द्विजं त्रैवर्णिकं कृण्वन्तः कुर्वन्तः "अभ्यर्षन्तीत्युत्तरेणान्वयः । एवं सर्वेषामार्यत्वसिद्धौ तत्पदप्रयोगस्तेषामुचित एव । यत्तु सायणेनात्र" विश्वं सोमं आर्यं भन्द्रं कृण्वन्त इत्युक्तं तदत्यन्तमप्रसिद्धम् । "सोमा ऋतस्य धारया" इति पूर्ववाक्यस्थसोमास्यात्रासम्बद्धत्वत् । सर्वेषामार्यं-शब्दवाच्यत्वादेव सुप्रसिद्ध काशीविश्वनाथमन्दिरे "आर्यधर्मेतराणां प्रवेशो निषिद्ध इति सर्वैः पण्डितैरालोच्य लिखितम् । आर्यः समीचीनो वैदिको धर्मो येषां ते आर्यधर्माणः तदितरेषां यवनादीनां प्रवेशो निषिद्ध इत्यर्थं । अत्रार्येतराणामिति लघुशब्दं विहाय आर्यधर्मेतराणामिति महाशब्दप्रयोगे तात्पर्यमपीदमेव यदार्य सन्ताना एव न केवलमत्र प्रवेष्टु मर्हन्ति किन्त्वनार्यसन्ताना ये विदेशीयास्तेऽपि आर्यधर्माणश्चेदस्मिन् प्रवेशं लभन्त इति । एतेनार्यत्वमपि न जातिरिति सूचितं भवति ! आर्यावर्तशब्देनापि भारतीयानामार्यत्वव्यपदेशः सिद्धो भवति । आर्यैरावर्त्यते दर्शनार्थमिति व्युत्पत्या, आर्याणां आ समन्ताद्वर्तनं निवासो यस्मिन् देशे स आर्यावर्त इति व्युत्पत्या वा ऽयं भारतदेशः सर्वोऽप्यार्यावर्त इत्युच्यते । "हीनं प्रदूषयत्येव हिन्दुरित्युच्यते प्रिये" इति व्युत्पन्तिसिद्धहिन्दुब्दोऽपि शूद्रसङ्ग्राहको न भवति । यतः "हीनजातिस्त्रियं मोहादुद्वहन्तो द्विजातयः कुलान्येव नयन्त्याशु स सन्तानानि शूद्रताम्" इति मनुस्मृति ( ३।१६ ) श्लोके हीनजातिशब्देन शूद्रजातिरेवाभिप्रेता । पूर्वापरश्लोकयोःशूद्राविवाहप्रसङ्गस्यैव श्रुतत्वात् । यदा च शूद्रो हीनजातिस्तदा तेन स्वदूषणस्यासम्भवात् हीनदूषकत्व-रूपहिन्दुत्वं तत्र न स्यादेव । पूर्वं सनातनित्वाभिमानिन सर्वेऽपि हिन्दुशब्दं द्विषन्त आर्यशब्दमेव समर्थयन्ति स्म, किन्तु पश्चाद्यदाऽऽर्यसमाजस्य स्थापना जाता तत आरभ्य तदुपरि प्रद्वेषप्रदर्शनार्थं आर्यशब्दं परित्यज्य हिन्दुशब्दमेव ते समर्थयन्ति । तत्प्रद्वेषस्यापि मुख्यं कारणमिदमेव यदार्यसमाजेन पाखण्डजातिप्रथा नेष्यते । यद्यत्र तन्न स्यात्तदा मूर्तिपूजानिराकरणसद्भावेऽपि मीमांसकमतमिवार्यसमाजसिद्धान्तोऽपि तैः वैदिकत्वेनाङ्गीकृत एवाभविष्यत् । इमे शिक्खा इति, यद्यपि शिक्खत्वजैनत्वबौद्धत्वार्यसमाजित्वादयो धर्मा वस्तुतो न जातयः विज्ञैश्च तेषांजातित्वानङ्गीकारात् तथाप्यज्ञाः भ्रान्त्या तेषां जातित्व मङ्गीकृत्यैव व्यवहरन्तीति तदत्र प्रतिषेधार्थमनूदितम् । २१ पृ० प्रतिवर्णम-

सामान्यमिति, ( २६३पृ.द्र. )। तेषु श्लोके ष्वीश्वरकृतो बाह्यभेदो वर्णेषु नास्तीति प्रदर्शितम् । ३८ दीक्षा समय इति, "द्यहं नाश्नाति त्र्यहं नाश्नातीत्यादिना यदनशनरूपं तपः प्रोक्तं तद्यजमानस्यैवेति "तपश्च फलसिद्धित्वाल्लोकवत्" (जै०सू० ३।८।९) इत्यत्र निर्धारितम् । तेनानशनरूपेण तपसा क्षत्रियवैश्ययोः स्वकीयस्वाभाविकगुणा नश्यन्ति ब्राह्मणगुणाश्च शमदमादय आयान्ति। अतस्तौ ब्राह्मणौ दीक्षासमये भवतः । विश्वामित्रादयोऽपि ऋषयो बहुवत्सरकृतानशनपूर्वकतपसैव ब्राह्मण्यं ब्रह्मर्षित्वं च प्राप्तवन्तः। एवं दीक्षितक्षत्रियवैश्य-निष्ठब्राह्मण्यस्यापि तपोनिमित्तकत्वमेवेत्यत्रोक्तं भवति। ब्रह्मभूत्वेति, सादृश्यं नाम तद्भिन्नत्वे सति तद्गतभूयो धर्मवत्त्वम् । गोसदृशो गवय इत्यादौ गोनिष्ठा ये शृङ्गरोमसास्नादयो धर्माः तत्सदृशा एव शृङ्गादयो गवयेऽपि तिष्ठन्ति न तु त एवेत्यर्थः। प्रकृते ब्रह्मभूत्वेति वाक्यस्य यदि ब्राह्मणसादृश्यमात्रं क्षत्रिये विवक्षितं तदा ब्राह्मणस्य यानि यज्ञायुधानि तत्सदृशान्येव क्षत्रियेऽङ्गीकृतानि भवेयुर्न तु तान्येव । किन्त्वैतरेयब्राह्मणे तान्येवेत्युक्तम् । तथा श्रुत्युक्तं ब्राह्मणबन्धुबन्धुकत्वं ब्राह्मणछन्दस्छन्दस्कत्वादिकं च क्षत्रिये न स्यात्। तस्माच्छ्रुत्युक्ततदसिद्ध्यर्थं ब्रह्म भूत्वेत्यस्य ब्राह्मणो भूत्वेत्येवार्थो वक्तव्यः। अथ यद्यपः शूद्राणां स भक्ष ( ४१ ) इति। यज्ञे दीक्षितब्राह्मणादीनां सोमादिद्रव्यं भक्ष्यत्वेन विहितम्' एवं शूद्रस्यापि यज्ञे दीक्षितस्यापो भक्ष्यत्वेन विहिताः। एतेन शूद्रस्यापि यज्ञदीक्षा यज्ञाधिकारश्चार्थापत्तिप्रमाणेन सिध्यति। एवं दर्शपूर्णमासप्रकरणे "हविष्कृदेहीति त्रिरवघ्नन्ब्राह्वयतात्याह्वानं विधाय" हविष्कृदेहीत ब्राह्मणस्य हविष्कृदागहीति राजन्यस्य हविष्कृदाद्रवेति वैश्यस्य हविष्कृदाधावेति शूद्रस्य"( आप. श्रौतसू. १९।८ ) इति वर्णभेदेन पृथगाह्वानं विहितम्। एवमग्निचितः श्मशानगर्तोऽपि वर्णभेदेन पृथगेव विहितः। ( मूले ८३ द्र० ) अत्र शूद्रकर्तृकयागे पृथक् हविष्कृदाह्वानादिश्रवणेन तस्याप्यधिकारोऽबाधित एव। हविश्शब्दस्य यागवाचित्वमपि "स्यादिज्या गामी हविश्शब्द स्तल्लिङ्गसंयोगात् ( ६।४।२२ ) इत्यत्रोक्तम्। एवमधिकारे सिद्धेऽस्मन्मतशूद्रस्य मन्त्रोच्चारणसामर्थ्याभावादमन्त्रकं कर्म स करिष्यति । जातिवादिमते तस्य सर्वसामर्थ्यसंभवात्समन्त्रकमेव कर्म करिष्यति। "तस्माच्छूद्रो यज्ञेऽनवक्लृप्त इत्यग्निष्टोमप्रकरणस्थार्थवादसामर्थ्यादुभयमतेऽप्यग्निष्टोमः शूद्रेण वर्जनीयः स्यात्।साहचर्यमग्र इति(४५पृ०अग्रे५० + ५२ पृष्ठयोश्च:द्र०) तथैव (५० इति ४४ पृष्ठे "अपिचान्यदवो" त्यादिना ब्राह्मण्यब्रह्मवर्चसयोः सामानाधिकरण्यमुक्त्वा अत्र श्रीस्वामित्व क्षत्रियत्वयोः पशवन्नपुष्टित्व वैश्यत्वयोश्च सामानाधिकरण्यमुच्यते। एतेन ब्रह्मवर्चसादि कामना या श्रुत्युक्ता, सा ब्राह्मणत्वादिकामनैवेति सिद्धं भवति। "तपसा क्षत्रमुत्सृज्य यो लेभे ब्रह्मवर्चसम्" ( भाग.९।१६।२८ ) इत्यादावपि ब्राह्मण्यमेव ब्रह्मवर्चसशब्देन विवक्षितम्। "मा पुनर्बाह्मणमैतु (छा. ब्रा.) इत्यस्यार्थो गुणविष्णुभाष्ये "मा पुन ब्राह्मणं ब्राह्मण्यं छन्दो वा एतु आगच्छत्वित्युक्तः।



अत्रापि ब्राह्मणत्वकामना प्रसिद्धैव। ५२ पृ. ब्रह्मवर्चसं मह्यमित्यब्रवीद् बृहद्गिरिः। तस्मा एतेन बार्हद्गिरेण ( ब्रह्मसाम्ना ) ब्रह्मवर्चसं प्रायच्छत् ( इन्द्रः ) ( ताण्ड्ये. १३।४।७ ) इत्यत्रापि ब्राणत्वमेव इन्द्रयागादिप्रयोजकं ब्रह्मवर्चसशब्देनाभिधीयते। "यतः स विशेषार्थ" इति ५८, पञ्चमचतुर्थपञ्चमाधिकरणे "सोमेनयक्ष्यमाणोऽग्नीनादधीत नर्तुं सूक्ष्येत् ( पश्येत् ) न नक्षत्रमित्यत्र सोमकालस्यैव बाधोऽङ्गीकृतो न त्वाधानकालस्य। एतस्य यदहरेवैनं श्रद्धोपनमेत्तदहरेवादधीतेत्यनेनैव बाधितत्वादित्युक्तम्। अत आधानकालनियमाभावः स्वतन्त्र एव न तु सोमचिकीर्षा (६४पृ.) कालिकः। "ब्रह्मणै ब्राह्मणस्य स्वमिति, तदुक्तमत्रिसंहितायाम्" तस्माद्वेदेन शास्त्रेण ब्राह्मण्यं ब्राह्मणस्य तु। न चैकेनैव वेदेन भगवान्नत्रिरब्रवीत् ( ३५१ ) इति। अत एव "नमो ब्राह्मणेभ्य" इति वाक्य स्यार्थः सायणेन "ब्रह्मणा वेदेनानन्तेन चेष्टन्ते नित्यनैमित्तिकादीनि कर्माणि कुर्वन्तीति ब्राह्मणाः। यद्वा ब्रह्माधीयते विदन्ति वा ब्राह्मणा" इत्येव लिखितः। दर्शितव्युत्पत्तेस्त्रैवर्णिकसाधारणत्वेऽपि शमादिगुणविशिष्टः सोऽर्थो ब्राह्मणत्वादिप्रयोजक इति मन्तव्यम्। ७७पृ. स्मृतीनामवेदमूलत्वेनेति, संहितोपनिषद्ब्राह्मणे इत्थमुक्तम् "ज्ञानवान् न त्वेनामसते दद्यादिति अस्यार्थः सायणेनाभिहितः। ज्ञानवानाचार्योऽसते शिष्यायैनां विद्यां न दद्यादिति। तत्रैवाग्रे "अथैता वेदस्याष्टावुपनिषदो भवन्ति। वित्तिश्चोपस्तवश्च दमश्च श्रद्धा च सम्प्रश्नश्चानाकाशीकरणं च योगश्चाचार्यशुश्रूषा चेति। अस्य च भाष्यं, अथ पूर्वोक्तवेदाध्ययनप्राप्तये एताः प्रोच्यमाना अष्टसंख्याका उपनिषदोऽधिकारिविशेषणानि। तानि च वित्तिश्च विद्यतेऽनयेति वित्तिः प्रज्ञेत्यर्थः। प्रज्ञावानध्याप्यइत्याशयः। अथवा वित्तमेव वित्तिः आचार्यप्रार्थिता दक्षिणेत्यर्थः। आचार्यस्य स्तवनमुपस्तवः, दमश्च सावित्र्यादिमहानाम्न्यन्तै व्रतैः शरीरदमः, श्रद्धा चाध्ययनश्रद्धा, सम्प्रश्नश्चाधीतस्य संशयविच्छेदार्थं सम्यक् प्रश्नः अथवाऽधीतस्यार्थविज्ञानार्थं सम्प्रश्नः, यतोऽज्ञातार्थवेदाध्ययने महान् दोषःश्रुत्यैव दर्शितः। अनाकाशीकरणं च प्राप्ताया विद्याया असच्छिष्यायाप्रकाशीकरणम्। योगः प्राप्तया विद्यया सह सदैव स्थातव्यमित्याशयः, आचार्यशुश्रूषा चैति एते नियमाः ब्रह्मचारिणः प्रौढावस्थां दर्शयन्ति। एतादृशावस्था प्राप्त्यनन्तरमेवाध्ययनार्थ-मुपनयनमपि कर्तव्यमिति वेदेनैव ज्ञायते। अतोऽष्टवर्षं ब्राह्मणमुपनयीतेत्यादि स्मार्तविधयो न श्रुतिमूलाः, एवमाधानस्य कालविधयोऽपि बाधिता एवं यदा कदाचिदेनं श्रद्धोपनमेत्तदैवादधीतेतीच्छा कालस्य श्रुत्यैवोक्तत्वात्। वस्तुतो नोत्पन्ना इति भावः (८९पृ.) एवमेव "सोमाद्वै ब्राह्मणा जाताः सूर्याद्राजन्य वंशजाः। समुद्रात्सकला वैश्याः दक्षाच्छूद्रा बभूविरे" ( भविष्ये प.४।३।५ ) इत्यस्यापि जाता इत्ये त्यर्थो वर्णनीयः। उत्पत्तिपक्षे रूपावयवादिभेदाभावो बाधकः। अस्तु मुखाद्यङ्गेभ्यो वा सोमसूर्यादिभ्यो वा शतसंख्याकब्राह्मणराजन्यादीनामुत्पत्तिः। उक्तं चान्यत्र "ब्राह्मणनां शतं श्रेष्ठं मुखादेवासृजत्प्रभुः। बाहुभ्यां क्षत्रियशतं वैश्यानामूरुतः शतम्। पद्भ्यां शूद्रशतं

चैव केशवो भरतर्षभ" ( शान्तिप.२०७।३२ ) इति । तत्र मुखादितः सोमादितो वोत्पन्नस्य ब्राह्मणादिशतस्य मध्ये परस्परव्यावर्तकरूपभेदः एकगर्भोत्पन्नभ्रातृणामिवासीन्न वा, नास्ति चेत् ज्येष्ठत्वकनिष्ठत्वादिव्यवहारो न स्यात् । तादृशव्यवहारोपयोगार्थमेवहि मनुष्यादिप्रणिषु प्रतिव्यक्ति रूपभेदो देवेन निर्मितः । एवमेतदनुपपत्तिवारणार्थमादौ शतसंख्याकब्राह्मणादयः प्रतिव्यक्ति रूपभेदेनैव सृष्टाः, स एव भेद इदानीमपि व्यवहारार्थमनुवर्तते तेष्विति वक्तव्यम् । तथा च ब्राह्मणादि शतेऽपि व्यवहारार्थं रूपभेदं सृजता परमेश्वरेण चतुर्वर्णेषु परस्परव्यावर्तकरूपभेदः कुतो न सृष्टः । आदौ स भेदः सृष्टश्चेदिदानीमनुवर्तेत किन्तु प्रकृते नास्ति तदनुवृत्तिः । एतदेव चोत्पत्तिपक्षे बाधकम् । रूपावयवादिभेदाभवेऽपि विज्ञा मुखाद्यङ्गजन्यवंशपरम्पराज्ञानेनैव वर्णान् ज्ञातुं प्रभवन्तीत्यभिप्रायेणेश्वरस्तेषु तद्भेदं नारचयदिति यदि मन्यसे तदाऽजाविगवादिष्वप्यवयवभेदः श्वात्रादिषु च प्रतिव्यक्ति नियतरूपभेदो न स्यात् । अजाव्यादीनामपि तव मते वर्णवद्ब्रह्ममुखादित उत्पत्त्यङ्गीकारात् । ऋत्विजामप्युत्पत्तिरिति ९८पृ. तदुक्तं मात्स्ये तत्र "ये च यज्ञकरा विप्रास्ते चर्त्विज इति स्मृताः । अस्मादेव पुरा भूता यज्ञेभ्यः श्रूयतां तथा 'ब्रह्माणं प्रथमं वक्त्रादुद्गातारंच सागरम् । होतारमपि चाध्वर्युं बाहुभ्यामसृजत्प्रभुः । अच्छावाकं तथोरुभ्यां नेष्टारं चैव पार्थिव । ग्रावस्तुतं तु पादाभ्यामुन्नेतारंच याजुषम्" ( अ० १६६ ) इति, अत्र ऋत्विजां मुखाद्युत्पत्तिप्रदर्शनेऽपि यथा ते जन्मतो न भवन्ति तथा वर्णानां तव मते मुखाद्युत्पन्नत्वेऽपि नते जन्म सिद्धा । मुखाद्युत्पत्तिकथने तेषां मुख्यत्वादिकं सूचितं भवतीति तथोक्तं न तु वस्तुतस्तथाविधोत्पत्तिरस्तीति।(२९०द्र०) सृष्टिनाशादि कमिति(१८१।द्र०) तन्त्रवार्तिके मुखाद्युत्पत्तिर्नष्टैव तदुक्तम् । "यद्यपि च तथा वस्तु ( मुखोत्पन्नाग्निब्राह्मणादिरूपं) नास्ति तथाप्यर्थवादान्तरे तथोक्तत्वादिह तच्छब्दनिमित्तता प्रतिपत्स्यते ( १-४-१२ ) इति, मुखादिजन्यत्वबोधकवाक्यस्यार्थान्तरपरत्वकथने सर्वं समञ्जसं भवति ।तस्मादादौ मनुष्योत्पत्तिरेवासीन्नतु वर्णोत्पत्तिः । जातित्वाभावादेवेति, १३४पृ. योगित्वस्यापि जातित्वाभावादेव योगिषूत्पन्नस्य योगानुष्टानादेव योगित्वसिद्धिर्नतु कुलपरम्परातः, एवं ब्राह्मणादियोनिषूत्पन्नस्यापि ब्राह्मण्यं तत्प्रयोजकात्मगुणैरेव भवति नान्यथा । ( २४४पृ०द्र० ) न्यायेन रचतानीति १३७ "मुखबाहूरुपादेभ्यः पुरुषस्याश्रमैःसह । चत्वारो जज्ञिरे वर्णा गुणैर्विप्रादयः पृथक्" ( भाग ११.५.२ ) इत्यत्रापि श्रुत्युक्तमुखाद्युत्पत्तेरनुवादमात्रम् । अत्राश्रमैः सहेति कथनेन वर्णोत्पत्तिरप्याश्रमोत्पत्तिवदर्थवाद एवेति ज्ञायते । गुणैर्विप्रादयः पृथगित्यनेन शमादिगुणानामेव वर्णविभाजकत्वं न तु मुखाद्युत्पत्तेरिति तथा विधोत्पत्तिवादिनाऽप्यगङ्गीकार्यम् । आश्रमा स्तत्तत्संस्कारैः पृथग्भवन्ति वर्णाश्च स्वाभाविकात्मगुणैरिति तयो र्वर्णाश्रमयोर्भेदः । चत्वारोऽप्यश्रमाः प्रतिपुरुषं क्रमशो भवन्ति वयोऽवस्थादिभेदेन । वर्णाश्च कुत्रचिद् व्यक्तिविशेषे परिवर्तिता भवन्ति कुत्रचिच्च न परिवर्तिता अपि । यतो



ब्राह्मणत्वादिवर्णप्रयोजका गुणाः कुत्रचित्परिवर्तन्ते कुत्रचिच्च बाल्यावस्थातो वार्धक्यपर्यन्तं स्थिरा अपि भवन्ति । अतस्तद्विभाज्यवर्णोऽपि कुत्र चित्स्थिरः कुत्रचिदस्थिरोऽपि गृहस्थाश्रमे भवति । "अत एव नापितादिति १४५, (२६२पृ.द्र.) नरेषु जातिभेदः प्रत्यक्षवेदाध्ययनादिक्रियाभिरपि न ज्ञायत इति तत्रोक्तं भवति । वेदाध्ययनादिभिर्जातिभेदज्ञानाभावेऽपि शमादिगुणैः शास्त्रीयब्राह्मणत्वादिज्ञानं भवत्येव । "स्त्र्यपराधात्कर्तुश्च पुत्रदर्शन" मित्यादिसूत्राणामर्थः (१४९ १९४ पृ.द्र.)"वर्णास्तेचाश्रमा" इति १५३,अत एवोक्तं भविष्ये "स होवाच प्रधानोऽसौ वेदधर्मः सनातनः । अष्टौ श्रेण्यो हि तस्यैव ब्रह्मणो व्यक्तरूपिणः । शूद्रो वैश्यस्तथा क्षत्री ब्राह्मणो ब्रह्मचर्यकृत् । गृही वन्यो यतिश्चैव क्रमाच्छ्रेष्ठाः प्रकीर्तिताः । ( प्रति१०।३० ) इति । तत्र वर्णा आत्मगुणैराश्रमाश्च संस्कारै र्भवन्तीति संस्कारस्य च ज्ञातविषत्वात् को भवानिति प्रष्टुं अहं वटुर्गृहस्थो वेति प्रतिवक्तुं च शक्यते । वर्णविषये च किंवर्णो भवानिति प्रष्टुं अहं ब्राह्मण इत्यादिना च प्रतिवक्तुं न शक्यते । तेषामात्मगुणप्रयुक्तत्वादात्मगुणानां साकल्येनाप्रत्यक्षत्वात्, प्रत्यक्षाणामपि सुखादिभिन्नानामप्रकाश्यत्वाच्च । अत एव "त्वं सज्जनो दुर्जनो वेति न पृच्छ्यते नाप्यहं सज्जनो दुर्जन इति च प्रत्युच्यते । सज्जनत्वादेरप्यात्मगुणप्रयुक्तत्वात्, तदपि वर्णवत्क्वचित्स्थिरं क्वचिदस्थिरं च । "ते च वर्णा गृहस्थेषु" इति १५५, अत एवोक्तमाङ्गिरसस्मृतौ "गुहाश्रमेषु धर्मेषु वर्णानामानुपूर्वशः। प्रायश्चित्तविधिं दृष्ट्वाअङ्गिरा मुनिरब्रवीदिति । तत्रापि पुरुषेष्विति, चतुर्वर्णजस्त्रीणां हनने प्रायश्चि-त्तमेकविधं (मनु. ११.१३९) "प्रथमेऽहनि चाण्डालीत्यादि रजस्वलाधर्माः पातिव्रत्य धर्मादिकं च सर्वासामेकविधम् । अतस्तासु वर्ण भेदो नास्ति यद्यत्र वर्णभेदस्तदा ब्राह्मणादिहनने प्रायश्चित्तभेदवदत्रापि स स्यात् । ब्राह्मणभोजनादि प्रसङ्गे (श्राद्धादौ) स्त्रीणां तद्भोक्तृत्वेनग्रहणं च नास्ति । अतस्सर्वासां स्त्रीणामेकैव जातिः स्त्रीत्वाख्या । तदन्यत्र च मनुष्यत्वमिति १५६, "वपायां हुतायां यजमानः ततः पूर्वं दीक्षित एव ( ऐ०ब्रा० ) इत्यादिकमपि तत्र मानम्

१६० पृ. केन हेतुनेति, अग्रे क्षत्रियादिलक्षणमुक्तं तत्रैव । तथाहि" क्षत्रजं सेवते कर्म वेदाध्ययनसङ्गतः । दानादानरतिर्यस्तु स वै क्षत्रिय उच्यते" वणिज्या पशुरक्षा च कृष्या दानरतिः शुचिः । वेदाध्ययन सम्पन्नः स वैश्य इति संज्ञितः ॥ सर्वभक्षरतिर्नित्यं सर्वकर्मकरोऽशुचिः । त्यक्तवेदस्त्वनाचारः स वै शूद्र इति स्मृतः ॥ इति । एतत्पूर्वश्लेकोक्त सत्याहादिकमिव क्षत्रियोचितयुद्धप्रजारक्षणादिकं च यः स्वतो वृत्यर्थं शास्त्रगुर्वादिप्रेरणां विनैव बालक इव खेलनं, स एव क्षत्रियः । राजसूयाश्वमेधादिकर्मप्रसङ्गे स क्षत्रियत्वेन ज्ञेयः । वेदाध्ययनशक्तिमत्वमत्राप्यावश्यकम् । एवं वाणिज्यपशुरक्षादिकं यो वृत्यर्थं स्वतः करोति वेदाध्ययनशक्तिमांश्च स वैश्यस्तोमादि प्रसङ्गे वैश्यत्वेन ज्ञेयः । तदन्यत्र लौकिककर्मसु वर्णानामुपयोगाभावात् । सर्वं भक्षरतिः ॥ अज्ञानाद्विधिनिषेधरहितः । त्यक्तवेदत्व मप्यध्ययनसामर्थ्याभावात् । अशुचित्वमनाचा-

त्वमप्यस्य स्वाभाविकम्। तयोरविधेयत्वात्। अत्र सर्वत्र सहजवर्तमानगुणैरेव ब्राह्मणादिलक्षणं स्पष्टमुक्तम्। एवं कथनेऽपि कस्यचिद्रागद्वेषादिमूलको वर्णजातिविभ्रमो भवितुमर्हतीति तद्वारणायोच्यते"शूद्रे चैतद्भवेल्लक्ष्मेत्यादिना। गीतायां क्षत्रियादिलक्षणं च प्रतिदिनं तत्पारायणं कुर्वतामतिरोहितमेव॥ श्रीमद्भागवते (१७.१) क्षत्रियादिलक्षणं च "शौर्यं वीर्यं धृतिस्तेजस्त्याग आत्मजयः क्षमा। ब्रह्मण्यता प्रसादश्च रक्षा च क्षत्रलक्षणम्॥ देवगुर्वच्युते भक्तिस्त्रिवर्गपरिपोषणम्। आस्तिक्यमुद्यमो नित्यं नैपुण्यं वैश्यलक्षणम्॥ शूद्रस्य सन्नतिः शौचं सेवा स्वामिन्यमायया। अमन्त्रयज्ञो ह्यस्तेयं सत्यं गोविप्ररक्षणम्॥ अत्र लक्षणमित्यध्याहार्यम्। रागादिनिबन्धनवर्णजाति भ्रमं वारयितुमत्राप्युक्तं "यस्य यल्लक्षणमि त्यादिना। भागवतैकादशसप्तदशाध्याये चेमानि लक्षणानि प्रकृतिशब्देनोक्तानि। सर्वत्रैषु लक्षणेषु क्वाचित्कभेदसत्वेऽपि गुणसाम्यमस्त्येव। शूद्राः सदसद्भेदेन द्विविधा वर्तन्ते। तत्र गीतायां भागवतसप्तमस्कन्धे च सच्छूद्रस्य तदन्यत्रासच्छूद्रस्य च लक्षणमुक्तं भवति। अध्ययनशक्तिहीनत्वस्य द्विविधशूद्रतुल्यत्वेऽपि सच्छूद्रश्शौचास्तेयसत्यवचनादिकं वृद्धवचनबलात्पालयति न त्वसच्छूद्रः (१०५.२४३.२४६ पृ० द्र०) ननु ब्राह्मणत्वादिकं प्रति शमदमादिगुणानां समवाय्यादिकारणत्वत्रये कतमं कारणत्वमिष्यते। न त्वाद्यः, गुणानां समवायिकारणत्वासंभवात्। नापि द्वितीयः। आत्मगुणानामसमवायिकारणत्वानङ्गीकारात्। नापि तृतीयः, निमित्त-कारणनिवृत्तावपि तत्कार्यवर्णस्यास्तित्वप्रसङ्गाच्च। नह्येतदिष्यते गुणतो वर्णवादिभिरितिचेदुच्यते। एतत्त्विधकार्यकारणभावो न्यायमते एव न तु वैदिकमते। वैदिके सर्वकारण त्वमेकस्यैव ब्रह्मणः। एतत्कारणसत्वेऽपि कार्यस्यैव जगतः कदाचिन्निवृत्तिरिष्यते। न्यायमतेऽप्यनित्यद्रव्यनिष्ठनिमित्तकारणत्वस्यैव क्वचिन्निवृत्तावपि कार्यसद्भावः। कालदिगीश्वरादयस्तन्मते कार्यमात्रं प्रति निमित्तकारणान्येव तथापि न तन्निवृत्तिः। इच्छाद्यात्मगुणानां प्रवृत्यादिकं प्रति यन्निमित्तकारणत्वं तैरिष्यते तत्कारणसमकालिकत्वमेव कार्यस्येष्यते। चिकीर्षया कर्मणि प्रवर्तते पुरुषः। तच्चिकीर्षापगमे च सामि कृतमपि कर्म परित्यजति। ननु स्वर्गादिफलकामनानिवृत्तावपि प्रारब्धं कर्म क्रियत एवेति चेन्न। तत्र देवताभ्यो वा एष आवृश्च्यते यो यक्ष्ये "इत्युक्त्वा न यजते, वैधातवीयेन यजेत" इति मीमांसाषष्ठद्वितीयतृतीयाधिकरणे निन्दाप्रायश्चित्तश्रवणेन तत्र तथासत्वेऽपि लौकिककर्मसु त्तदभावस्य तदुत्तराधिकरणे निर्धारितत्वात्। शमादिगुणानां ब्राह्मणत्वादिकं प्रति निमित्तकारणत्वं व्यञ्जकत्वं वा भवतु तद्विद्यमानानामेव। यथा वैराग्यादीनां संन्यासादिकं प्रति, सज्जनत्वदुर्जनत्वादिकं प्रति च तत्प्रयोजकगुणानां विद्यमानानामेव तत्कारणत्वं तथेति प्रकृते बोद्धव्यम्। "स्वभावादेव संदृश्या वर्तमानाः प्रवृत्तय (शान्ति पं. १७९) इति न्यायेन प्राग्जन्मगुण सद्भावोऽपि वर्तमान तत्सजातीयगुणैरेवानुमेयो भवति। स्वभावादेवेत्यत्र स्वभावः प्राक्तनसंस्कारो न तु जन्म। प्रागुक्तज्योतिश्शा (२४२५) स्त्रानुसारेण "सत्वात्सञ्जायते ज्ञानं रजसो लोभ एव च। प्रमादमोहौ तमसो भवतोऽज्ञानमेव च। (गी०१४) त्यनेन च शमादीनां सत्वादिकार्यत्वमेव ज्ञायते न तु सत्वादिमतः कर्तव्यंकर्मत्वम्

यद्यदुक्तं येन येन जन्मतो वर्णसाधने। तत्सर्वस्योत्तरंचात्र गन्थ एवोपलभ्यते॥
श्रीमन्माधवचैतन्यभारतीस्वामिनिर्मितम्। परिशिष्टं जात्युपाधिविवेकेस्याच्छिवार्चनम्॥

समाप्तं चेदं परिशिष्टम्।

# एतद्ग्रन्थकार-परिचय

इस ग्रन्थ के प्रणेता **श्रीस्वामी माधवचैतन्य भारती** जी श्री व्यासाश्रम (आन्ध्रा) में संस्कृत में माध्यमिक विद्या प्राप्त करके श्री तिरुपति ( बालाजी ) में वेदान्त शिरोमणि की उपाधि सन् १९४५ में लिये थे। बाद में इण्टर तक अंग्रेजी पढ़ कर वे काशी में आये और श्रीदक्षिणामूर्ति मठ ( मिश्रपोखरा ) में बहुत साल तक, सब शास्त्रों का अध्ययन किये और ( B. H. U. से ) न्याय वैशेषिक शास्त्री और मीमांसाचार्य की उपाधि तथा ६० में वा० सं० विश्वविद्यालय ० नवीन न्यायाचार्य की उपाधि प्राप्त किये थे। उन परीक्षाओं में सर्व प्रथम स्थान मिलने से स्वामी जी को सुवर्ण पतक (Golden Medal) भी दिया गया था। बाद में वे शब्दशक्ति पर अनुसन्धान ( Research ) करके १९६५ में विद्यावारिधि ( P. H. D. ) की उपाधि भी पाये थे। इसी बीच में वे संस्कृत-राष्ट्रभाषा प्रचार के लिये सब प्रान्तों में गये और वहाँ की जनता के अभिप्रायों से वे यह निर्णय किये कि जाति प्रथा ही संस्कृत के ह्रास का मुख्य कारण है। राष्ट्र के कुछ प्रमुख नेता भी यही समझते थे कि संस्कृत से ही जाति मत भेद आये हैं जिनसे राष्ट्र परतन्त्र हो गया था। कुछ जातिवादी भी समझते हैं कि संस्कृत की व्यापक वृद्धि ( राष्ट्रभाषा ) होगी तो जन्म सिद्ध जातिमर्यादायें नष्ट हो जायंगी। इस प्रकार संस्कृत की वृद्धि म जाति प्रथा प्रबल बाधक सिद्ध हो गयी जिस का विस्तृत वर्णन, श्री स्वामी जी ने अपनी सं० सा० विज्ञापनात्रिशती में, कर चुके हैं। जातिवाद की जड कितना मजबूत है समझने के लिए वे इस मन्दिर में आकर स्वामीजी सब वेद धर्मशास्त्र और पुराणादि को शास्त्रीय दृष्टि से परिशीलन किये और अन्त में उन्होंने निर्णय किया कि यह जन्म-सिद्ध चातुर्वर्ण्य वाद, जो मनुष्यों में अनन्तजाति भेद भ्रम का हेतु बन गया था, सर्व प्रमाण विरुद्ध है, तो भी नीच और कठिन कामों में जनता को व्यवस्था से निर्विवाद प्रवृत्त करवाने के वास्ते, बुद्ध के एक हजार साल के पहले ही ये चार वर्ण जन्मसिद्ध चार जाति के रूप में माने गये थे और उसमें लोगों का विश्वास बढ़ाने के लिये तदनुकूल रचनायें बनाकर प्रचीन धर्म-शास्त्रों में जोडी गयी थी। बाद में कुमारिल भट्टादि शास्त्रकार भी उसे झूठा समझते हुये भी उसका समर्थन कर दिये थे। काम करवाने के लिए ऐसी नीति भी लोक वेदसिद्ध ही है, वे काम आज कल नहीं और इससे बहुत अनर्थ भी देखे जाते हैं। अतः इसका खण्डन करना अब आवश्यक हो गया है। इस ग्रन्थ में स्वामी जी बहुत लिखे थे किन्तु उस को पूरा छपवाने के लिये बाहरी सहायता नहीं मिली। अतः उसको संग्रह करके २८ सौ श्लोक, तदावश्यक विवरण के साथ वे स्वयं छपवाये हैं। आवश्यक भोजनादि के निमित्त स्वामी जी पराश्रित न होने के लिए पूर्वाश्रम के मातापिता, जिन के नाम पहले पृष्ठ के नीचे दिये गये हैं, उनको कुछ पैसा दिये थे किन्तु स्वामी जी बहुत साल से भिगाये हुए काँचे ( अपक्व ) गेहूँ आदि से जीवन बिताते हुए उसे बचाकर उसी पैसा से इसका मुद्रण करवाये हैं।

**धर्मवीरशास्त्री, व्याकरणदर्शनाचार्य**